Vol XXXI 1909

# काशीविद्यासुधानिधिः

# THE PANDIT

## A MONTHLY PUBLICATION

OF THE

## BENARES COLLEGE,

DEVOTED TO

## SANSKRIT LITERATURE.

NEW SERIES.



PRINTED BY A C CHAKRAVARTY AT THE MAHAMANDAL SHASTRA PRAKASAK SAMITI PRESS,

AND

PUBLISHED BY ALOPI PRASAD FOR E J LAZARUS & CO. BENARES CANT.

 [*Price Rs. 9/- per annum*

# INDEX OF VOLUME XXXI, NEW SERIES




All literary matters, correspondence etc.
To be addressed to

*The Publishers,*
E J LAZARUS & Co,
MEDICAL HALL PRESS,
*Benares Cantonment*

कर्माणि वक्रास्तमनोदयक्रान्तिसाम्यच्छायायुतिग्रहणशृङ्गोन्नमनतिथ्यादीनि च साध्यानि ॥ ३२॥

इति श्रीकृष्णदैवज्ञात्मजगणकनृसिंहकृतौ कालमानाध्यायः ।

**मरीचिः**—अथ न्यूनाधिकव्यवच्छेदार्थं मानोपसंहारं ग्रहसाधनोपजीव्यत्वेनार्थान्तरत्वं चोपजातिकयाऽऽह एवमिति । एवं पूर्वोक्तेन । पृथक् भिन्नम् । काले कलनात्मके महाकल्पान्तावच्छिन्ने मानुषमानादिसावनान्तान्यष्ट पूर्वार्धोक्तानि । ब्राह्मम् । चः समुच्चये । नवमं प्रमाणम् । यथा धान्यराशिर्द्रोणाढकादिमानैर्मीयते तथा महाकल्पावच्छिन्नः कालराशिर्नवमानैः पृथक् पृथक् मीयत इति कालसंख्याज्ञानार्थमृषिभिर्नव मानान्युक्तानि ।

तथा च व्यासः ।

"ब्राह्मं दैवं तथा पित्र्यं मानुषं च गुरोस्तथा ।
सौरं च सावनं चान्द्रमार्क्षं मानानि वै नव"—इति ॥

एतेन

"पैतामहं दिव्यमथासुरं च पित्र्यं तथा मानुषमानमन्यत् ।
सौरार्क्षहैमाशवसावनानि जैवं तथेदं दश कीर्त्तितानि" ॥

इति श्रीपत्युक्तमासुरमानं दशमं निरस्तम् । देवाहोरात्रं सम दैत्याहोरात्रेण देवासुरमानस्यैकत्वात् । अन्यथा भूस्थाना सूर्योदयभेदेन सावनभेदान्मानानन्त्यस्य दुर्वारत्वापत्तेः । ग्रहा इति । मनुजैर्ग्रहाः सूर्यादयः । चकारात् । तत्समवेतवक्रास्तमनोदयक्रान्तिसाम्यच्छायायुतिग्रहणशृङ्गोन्नमनतिथ्यादीनि कर्माणि स्वमानात् मनुजमानात् सौरचान्द्रसावननाक्षत्रेभ्य इति यावत् । साध्याः । यतस्ते स्वसाध्याः । तथा च ग्रहसाधनोपजीव्याहर्गणे मनुष्यमानोपयोगात् तन्निरूपणप्रसङ्गेनान्यमाननिरूपणमपि प्रकृतोपयुक्तत्वेन नार्थान्तरमिति भावः ।

तथा च श्रीपतिः ।

"सौरचान्द्रमससावनमानैः सार्क्षकैर्ग्रहगतेरवबोधः ।
एभिरत्र मनुजव्यवहारो दृश्यते च पृथगेव चतुर्भिः" इति ॥ ३२ ॥

नन्वत्र त्रुट्यादिप्रलयान्तकालसौरादिमानयोः सम्मिश्रनिरूपणात् कस्य प्राधान्यमतः फक्किकयाऽध्यायसमाप्तिसूचकमाह इति श्रीसिद्धान्तशिरोमणौ कालमानाध्याय इति । सिद्धान्तशिरोमणौ ग्रन्थे कालमानयोरध्यायो निरूपणम् । इति समाप्तमित्यर्थः । तथा च विनिगमनाविरहाद्द्वयोरेव प्राधान्यमिति भावः ।

---

अथेदानीं ग्रहाणां मन्दोच्चाना चलोच्चानां ग्रहपातानां च भगणान् श्लोकषट्केनाह ।

अर्कशुक्रबुधपर्यया विधे-
रह्नि कोटिगुणिता रदाब्धयः ।
एत एव शनिजीवभूभुवां
कीर्त्तिताश्च[1] गणकैश्चलोच्चजाः ॥ १ ॥
खाभ्रखाभ्रगगनामरेन्द्रिय-
क्ष्माधराद्रिविषया हिमद्युतेः ।
युग्मयुग्मशरनागलोचन-
व्यालषण्नवयमाश्विनोऽसृजः ॥ २ ॥
सिन्धुसिन्धुरनगाषृगोऽङ्कषट्-
त्र्यङ्कसप्तशशिनो ज्ञशीघ्रजाः ।
पञ्चपञ्चयुगषट्कलोचन-
द्व्यब्धिषड्गुणमिता गुरोर्मताः ॥ ३ ॥
द्विनन्दवेदाङ्कगजाग्निलोचन-
द्विशून्यशैलाः सितशीघ्रपर्ययाः ।
भुजङ्गनन्दद्विनगाङ्कबाणषट्-
कृतेन्दवः सूर्यसुतस्य पर्ययाः ॥ ४ ॥
खाषृाब्धयोऽषृात्तगजेषुदिग्द्विप-
द्विपाब्धयो द्व्यङ्कयमा रदाग्नयः ।

---

१ 'कीर्त्तिताः सुगणकै' - रिति नृसिंहसम्मतः पाठः ।

शरेष्विभाङ्ग्यत्त्वरसाः कुसागराः
स्युः पूर्वगत्या तरणेर्मृदूच्चजाः ॥ ५ ॥
गजाष्टिभर्गत्रिरदाश्विनः कुभृ-
द्रसाश्विनः कुद्विशराः क्रमत्त्वः ।
त्रिनन्दनागा युगकुञ्जरेषवो
निशाकराद्यस्तगपातपर्ययाः ॥ ६ ॥

वा. भा -ग्रहाणां पूर्वगत्या गच्छतां कल्प एतावन्तो भगणा भवन्ति । तथा मन्दोच्चानां चलोच्चानां च प्राग्गत्या एतावन्तः पर्यया भवन्ति । तथा पातानां पश्चिमगत्या एतावन्तो भवन्ति ।

अत्रोपपत्तिः । सा तु तत्तद्भाषा[1]कुशलेन तत्तत्क्षेत्रसंस्थानज्ञेन श्रुतगोलेनैव श्रोतुं शक्यते नान्येन । ग्रहमन्दशीघ्रोच्चपाताः स्वस्वमार्गेषु गच्छन्त एतावतः पर्ययान् कल्पे कुर्वन्तीत्यत्रागम एव प्रमाणम् । स चागमो महता कालेन लेखकाध्यापकाध्येतृदोषैर्बहुधा जातस्तदा कतमस्य प्रामाण्यम् । अथ यद्येवमुच्यते गणितस्कन्ध उपपत्तिमानेवागमः प्रमाणम् । उपपत्त्या ये सिध्यन्ति भगणास्त ग्राह्याः । तदपि न । यतोऽतिप्राज्ञेन पुरुषेणोपपत्तिर्ज्ञातुमेव शक्यते । न तया तेषां भगणानामियत्ता कर्तुं शक्यते । पुरुषायुषाल्पत्वात् । उपपत्तौ तु ग्रहः प्रत्यहं यन्त्रेण वेध्यः । भगणान्तं यावत् । एवं शनैश्चरस्य तावद्वर्षाणां त्रिंशता भगणः पूर्यते । मन्दोच्चानां तु वर्षशतैरनेकैः । अतो नायमर्थः पुरुषसाध्य इति । अत एवातिप्राज्ञा गणकाः साम्प्रतोपलब्ध्यनुसारिणं प्रौढगणकस्वीकृत कमप्यागममङ्गीकृत्य ग्रहगणितं आत्मनो गणितगोलयोर्[2]निरतिशयं कौशलं दर्शयितुं तथाऽन्यैर्भ्रान्तिज्ञानेनान्यथोदितानर्थांश्च निराकर्तुमन्यान् ग्रन्थान् रचयन्ति । ग्रहगणितं इतिकर्तव्यतायामस्माभिः कौशलं दर्शनीयं भवत्वागमो योऽपि कोऽप्ययमाशयस्तेषाम् । यथाऽत्र

१ तत्तद्भाषाकुशलेन तत्तदुपपाद्यविषयसम्बन्धिपरिभाषाभिज्ञेनेति ।
२ 'गोलयोरतिकौशलम्'-इति वासनावार्त्तिकसम्मतः पाठः ।

ग्रन्थे ब्रह्मगुप्तस्वीकृतागमोऽङ्गीकृत इति । तर्हि तिष्ठतु तावदुपपत्त्या भगणानामियत्तासाधनम् । अथ यद्युपपत्तिरुच्यते नहिं इतरेतराश्रयदोषशङ्कया वक्तुमशक्या । तथाऽपि संक्षिप्तामुपपत्तिं वक्ष्यामः । इतरेतराश्रयदोषोऽत्र दोषाभासः । उपपत्तिभेदानां यौगद्येन वक्तुमशक्यत्वात् ।

अथोच्यते । अर्कशुक्रबुधपर्यया विधेरित्यादि । यावन्ति कल्पे वर्षाणि तावन्त एव सूर्यभगणा इत्युपपन्नम् । यतो भगणभोगकालो हि वर्षमुक्तम् । बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित् पृष्ठतस्तस्यानुचराविव सदा व्रजन्तौ दृश्येते । अतस्तयोरपि रविभगणतुल्या भगणा इत्युपपन्नम् । चलोच्चभगणोपपत्तिमग्रे वक्ष्यामः ।

अथ समायां भूमावभीष्टकर्कटकेन त्रिज्यामिताङ्कैरङ्कितेन वृत्त दिगङ्कितं भगणांशैश्चाङ्कितं कृत्वा तत्र प्राचीचिह्नाद्दक्षिणतो नातिदूरे प्रदेश उत्तरेऽयने वृत्तमध्यस्थितेन कीलेन रवेरुदयो वेध्यः । ततोऽनन्तरं वर्षमेकं रव्युदया गणनीयाः । ते च पञ्चषष्ट्यधिकशतत्रयतुल्या भवन्ति । तत्रान्तिमोदयः पूर्वोदयस्थानादासन्नो दक्षिणत एव भवति तयोरन्तरं विगणय्य ग्राह्यम् । ततोऽन्यस्मिन् दिने पुनरुदयो वेध्यः । स तु पूर्वचिह्नादुत्तरत एव भवति । तदप्युत्तरमन्तरं ग्राह्यम् । ततोऽनुपातः । यद्यन्तरद्वितयकलाभिरैक्यीकृताभिः षष्टिघटिका लभ्यन्ते तदा दक्षिणेनान्तरेण किमिति । अत्र लभ्यन्ते पञ्चदश घटिकास्त्रिंशत् पलानि सार्धानि द्वाविंशतिर्विपलानि १५ । ३० । २२ । ३० । आभिर्घटीभिः सहितानि पञ्चषष्ट्यधिकशतत्रयतुल्यानि सावनदिनान्येकस्मिन् रव्यब्दे भवन्ति ३६५ । १५ । ३० । २२ । ३० । ततोऽनुपातः । यद्येकेन वर्षेणैतावन्ति कुदिनानि तदा कल्पवर्षैः किमिति । एवं ये लभ्यन्ते ते सावनदिवसा भवन्ति कल्पे । अथ तैरेव रवेर्वर्षान्तःपातिभिः कुदिनैश्चक्रकला लभ्यन्ते तदैकेन किमिति । फल मध्यमा रविगतिरित्युपपन्नम् ।

---

१ तुल्यासमयान्तरे तुल्यग्राचापान्तरस्यानुपपन्नत्वाद्व्यवहारार्थमेवायमनुपात उपयुज्यत इति बुद्धिमद्भिरनुसधेयम् ।

अथ चन्द्रभगणोपपत्तिः । तत्रादौ तावद्ग्रहवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्यम् । तत्र खगोलस्यान्तर्भगोल आधारवृत्तद्वयस्योपरि विषुवद्वृत्तम् । तत्र च यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च बद्ध्वा कदम्बद्वयकीलकयोः प्रोतमन्यच्चलं ग्रहवेधवलयम् । तच्च भगणांशाङ्कितं कार्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यचिह्नगतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते यो मीनान्तस्तं रेवतीताराया निवेश्य मध्यगतयैव दृष्ट्या चन्द्रं विलोक्य तद्वेधवलयं चन्द्रोपरि निवेश्यम् । एवं कृते सति वेधवृत्तस्य क्रान्तिवृत्तस्य च यः संपातस्तस्य मीनान्तस्य च यावदन्तरं तस्मिन् काले तावान् स्फुटचन्द्रो वेदितव्यः । क्रान्तिवृत्तस्य चन्द्रबिम्बमध्यस्य च वेधवृत्ते यावदन्तरं तावांस्तस्य विक्षेपः । ततो यावतीषु रात्रिगतघटिकासु वेधः कृतस्तावतीष्वेव पुनर्द्वितीयदिने कर्त्तव्यः । एवं द्वितीयदिने स्फुटचन्द्रं ज्ञात्वा तयोर्यदन्तरं सा तद्दिने स्फुटा गतिः । अथ तौ चन्द्रौ 'स्फुटग्रहं मध्यखगं प्रकल्प्य' इत्यादिना मध्यमौ कृत्वा तयोरन्तरं सा मध्यमा चन्द्रगतिः । तयाऽनुपातः । यद्येकेन दिनेनैतावती चन्द्रगतिस्तदा कुदिनैः किमित्येवं चन्द्रभगणा उत्पद्यन्ते ।

तथा चाह श्रीमान् ब्रह्मगुप्तः ।

"ज्ञातं कृत्वा मध्यं भूयोऽन्यदिने तदन्तरं भुक्तिः ।
त्रैराशिकेन भुक्त्या कल्पग्रहमण्डलानयनम्"[१] ॥

एवमन्येषामपि भगणोपपत्तिः ।

अथ चन्द्रोच्चस्य । एवं प्रत्यहं चन्द्रवेधं कृत्वा स्फुटगतयो विलोक्याः । यस्मिन् दिने गतेः परमाल्पत्वं दृष्टं तत्र दिने मध्यम एव स्फुटचन्द्रो भवति । तदेवोच्चस्थानम् । यत उच्चसमे ग्रहे फलाभावो गतेश्च परमाल्पत्वम् । ततश्च तस्माद्दिनादारभ्यान्यस्मिंश्चन्द्रपर्यये प्रत्यहं चन्द्रवेधात् तथैवोच्चस्थानं ज्ञेयम् । तच्च पूर्वस्थानादग्रत एव भवति । यत् तयोरन्तरं तज्ज्ञात्वाऽनुपातः क्रियते । यद्येतावद्भिरन्तरदिनैरिदमुच्चयोर-

१ ब्राह्मस्फुटसिद्धान्ते शङ्कुच्छायादिज्ञानाध्याये १२ श्लो ।

न्तरं लभ्यते तदैकेन किमिति । फलं तुङ्गगतिः । तयाऽनुपातात् कल्पभगणाः ।

अथ चन्द्रपातभगणोपपत्तिः । एवं प्रत्यहं चन्द्रवेधाद्दक्षिणविक्षेपे क्षीयमाणे यस्मिन् दिने विक्षेपाभावो दृष्टः क्रान्तिवृत्ते तत् स्थानं विज्ञयित्वा तत्र यावान् विधुः स भगणाच्छुद्धः पातः स्यादिति ज्ञेयम् । पुनरन्यस्मिन्नपि पर्यये दक्षिणविक्षेपाभावस्थान ज्ञेयम् । क्रान्तिवृत्ते तत् स्थान पूर्वस्थानात् पश्चिमत एव भवति । अतो ज्ञाता पातस्य विलोमा गतिः । सा चानुपातात् । यद्येतत्कालान्तरदिनैरेतावत् पातयोरन्तरं लभ्यते तदैकेन किमिति । फलं पातगतिः । तया प्राग्वत् कल्पभगणाः ।

अथ रवितुङ्गोपपत्तिः । मिथुनस्थे रवौ कस्मिंश्चिद्दिने रेवतीतारकोदयाद्यावतीभिर्घटिकाभी रविरुदितस्तावतीभिर्मीनान्ताल्लग्नं साध्यम् । यल्लग्नं स तदा स्फुटो रविर्ज्ञेयः । एवमन्यस्मिन् दिनेऽपि । तयोः स्फुटार्कयोरन्तरं स्फुटा गतिः । एव प्रत्यहं स्फुटगतयो ज्ञातव्याः । यस्मिन् दिने गतेः परमाल्पत्वं तद्दिने यावान् रविस्तावदेव रवेरुच्च भवति । तस्योच्चस्य चलनं वर्षशतेनापि नोपलक्ष्यते । किन्त्वाचार्यैश्चन्द्रमन्दोच्चवदनुमानात् कल्पिता गतिः । सा चैवम् । यैर्भगणैः साम्प्रताहर्गणाद्वर्षगणाद्वा एतावदुच्च भवति ते भगणा युक्त्या कुट्टकेन वा कल्पिताः ।

अथान्येषां शीघ्रोच्चोपपत्तिः । तत्र एत एव शनिजीवभूभुवामित्यादि । उच्चो ह्याकर्षको भवति । तेन स्वकक्षामण्डले भ्रमन् ग्रहः स्वाभिमुखमाकृष्यते । तेनाकृष्टः सन् कक्षामण्डले मध्यग्रहादग्रतः पृष्ठतो वा यावताऽन्तरेण दृश्यते तावत् तस्य फलं मान्द शैघ्र वा । अहो उच्चो नाम प्रदेशविशेषस्तेन कथमाकृष्यत इति तदुच्यते ।

यथोक्त सूर्यसिद्धान्ते ।

"अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः ।
शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः ॥

तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः ।
प्राक् पश्चादपकृष्यन्ते यथासन्न स्वदिङ्मुखम्"[1] ॥

इत्यादि । एवमत्रोच्चस्य देवताविशेषत्वेनाङ्गीकृतत्वाददोषः । एतदुक्तं भवति । शनेर्जीवात् कुजाद्वा यदा रविरग्रे वर्त्तते तदा मध्यग्रहात् स्फुटग्रहोऽग्रतो दृश्यते । यदा तु पृष्ठगतोऽर्कस्तदा मध्यात् स्फुटग्रहः पृष्ठतो दृश्यते । अतस्तेषां त्रयाणां रविसमं शीघ्रोच्च धीरैः कल्पितम् । अतो रविभगणतुल्याः शीघ्रोच्चभगणा इत्युपपन्नम् ।

अथ मन्दोच्चोपपत्तिः । तत्र वेधेन स्फुटग्रहं ज्ञात्वा तं मन्दस्फुटं प्रकल्प्य ततः शीघ्रफलमानीय तत् तस्मिन् स्फुटे विलोमं कृत्वाऽसकृन्मन्दस्फुटो ज्ञेयः । एवं प्रत्यहं मन्दस्फुटमुपलक्ष्य स मन्दस्फुटो धनमन्दफले चीयमाणे यस्मिन् दिने मध्यमतुल्यो भवति तदा तत्तुल्यमेव मन्दोच्च ज्ञेयम् । ततस्तस्माद्रविमन्दोच्चवद्भगणाः कल्प्याः । एवं सर्वेषाम् ।

अथ बुधशुक्रयोः शीघ्रोच्चोपपत्तिः । तत्र रविशुक्रयोः पूर्वस्या दिशि चक्रयन्त्रवेधेनान्तरभागा ज्ञयाः । ते[illegible] स्फुटयोरन्तरांशा जातास्तैः स्फुटार्काद्विशोधितैः स्फुटः शुक्रो भवति । ततः शुक्रस्य मन्दफलमानीय तत् स्फुटे शुक्रे धनर्णं व्यस्त कार्यम् । रविश्च मध्यमः कार्यः । तयोर्यदन्तर तच्छीघ्रफलमृण धन च ज्ञेयम् । एवं प्रतिदिनवेधेन तच्छीघ्रफलं परममृणं ज्ञातव्यम् । तत् तादृक् फलमर्कात् तिर्यक्स्थितेनोच्चनाकृष्टस्य भवति । तच्च तिर्यक्स्थत्व त्रिभान्तरितस्य स्यात् । अतस्त्रिभोनेन स्फुटशुक्रेण तुल्यं शीघ्रोच्च ज्ञेयम् । एवं पुनरन्यस्मिन् पर्यये प्राच्यामेवान्यच्छीघ्रोच्च ज्ञात्वाऽनुपातः क्रियते । यद्येतत्कालान्तरदिनैस्तयोरुच्चयोरन्तर लभ्यते तदैकेन किमिति । फल तुङ्गगतिः । प्राग्वत् तया भगणाः । एव बुधस्यापि ।

अथ भौमादीना वेधेन प्राग्वद्दक्षिणविक्षेपाभावस्थाने यावान् मन्दस्फुटो ग्रहश्चक्रशुद्धस्तावान् पातः । बुधशुक्रयोस्तु तदा मन्दफलव्यस्त-

१ स्पष्टाधिकारे १–२ श्लो० ।

संस्कृतं यावच्छीघ्रोच्चं चक्रशुद्ध तावान् पातो ज्ञेयः । ततः प्राग्वद्भगण-कल्पना ॥ १–६ ॥

**वा.वा**–अथेष्टकालिकग्रहसाधनोपयोगितया भगणादिज्ञानस्यावश्यकत्वादिदानीं ग्रहसाधकानुपातफलभूतान्मन्दोच्चशीघ्रोच्चपातग्रहभगणानाह अर्कशुक्रबुधपर्यया इति ।

अत्रोपपत्तिः । भगणोत्पादने युक्तिः । युक्तिज्ञाने कस्याधिकारस्तत्राह । सा तु तत्तद्भाषाकुशलेन तत्तत्क्षेत्रसंस्थानज्ञेन श्रुतगोलेनैव ज्ञातुं शक्यते नान्येन । एतावन्त एव ग्रहपर्यया इत्यत्र किं प्रमाणमित्यत आह । ग्रहमन्दोच्चपाताः स्वस्वमार्गे गच्छन्त एतावतः पर्ययान् कल्पे कुर्वन्तीत्यत्रागमः प्रमाणम् । कलात्मिकगतेः प्रत्यक्षोपलब्धभिन्नत्वाद्योजनात्मिकगतितुल्यत्वस्वीकाराद्ग्रहभेदयोगे ग्रहयोरूर्ध्वाधरत्वानुभवाच्च ग्रहकक्षाणां भेदस्य स्पष्टत्वात् स्वस्वमार्गेषु गच्छन्त इत्युक्तम् । यद्यपि यैव ग्रहकक्षा सैव तन्मन्दशीघ्रोच्चापातानामित्यस्ति तथाऽपि मन्दशीघ्रोच्चसाधनोपायाः कल्पिताः । कक्षास्तदभिप्रायेणोक्ताः । ग्रहमन्दपाता इति । मन्दपदं चलोपलक्षकम् । यन्त्रवेधादिनाऽपि ग्रहकलाद्यवयवोपलम्भासम्भवाच्च प्रत्यक्षेण भगणज्ञानम् । प्रत्यक्षमूलत्वाच्चानुमानादिकमपि भगणानामियत्ताया मूलम् । तस्मात् पितामहोपदिष्टवाक्यागमः प्रमाणमित्युक्तम् । को नामान्यः पितामहादाप्ततमः स्यात् । ब्रह्मोक्तागमोऽपि शाकल्यविष्णुधर्मोत्तरयोः कथं भिन्नो दृश्यत इति तत्कारणमाह । स चागमो लेखकाध्यायकाध्येतृदोषैर्बहुधा जातः । लेखकदोषो यथा यमाङ्गा इत्यत्र यमागा इत्यनुस्वाररहित्यादिलिखनम् । अध्यापकदोषो यथा कुधराग्नय इत्यत्र सप्ताग्नय इति विवक्षितार्थे शशाङ्कचन्द्राग्नय इति व्याख्याकरणं करणापाटवादि च । अध्येतृदोषोऽपि यमाश्विचन्द्रा इत्यत्र यमाश्वचन्द्रा इति श्रवणादि ।

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह"[1] ।

इत्यादिभीत्या सावधानतया यथा वेदमध्यापयन्ति पठन्ति च न

१ महाभाष्ये प्रथमाह्निके व्याकरणप्रयोजनव्याख्यावसरे द्रष्टव्यमिदम् ।

तथा सिद्धान्तानध्यापयन्ति न पठन्ति चेति सम्भवति पाठकाध्येतृदोषो-ऽत्रेति भावः । यद्वा 'वस्तुनि द्वैरूप्यासम्भवात् कथमागमभेदस्तत्रोत्तरं स चागमो लेखकेति । ब्रह्मणा नारदं प्रति कथितं तच्छाकल्येन लिखितं शास्त्रं कालान्तरे किञ्चित् सान्तरं दृष्ट्वा नियतबीजयुतमेव पुनस्तैरुक्त-मिति दोषेण बहुधा जातः । तदा कतमस्य प्रामाण्यमिति प्रश्नस्त-स्योत्तरं वक्ष्यते भवत्वागमो योऽपि कोऽपीति । कतमस्य प्रामाण्यमि-त्यत्र तावत् समाधानमुद्भाव्य दूषयति । अथ यद्येवमुच्यते गणितस्कन्धे उपपत्तिमानागमः प्रामाणम् । धर्मानुष्ठानोपयोगितालक्षणं प्रामाण्य-मुच्यते । उपपत्तिर्नाम युक्तिः। तत्सहितो यो यदागमः स तदा प्रमाण-मिति धर्मानुष्ठानोपयोगीत्युक्तम् । यस्तर्केणानुसधत्ते स धर्मं वेद नेतर इत्युक्तेः । उपपत्तिमानेवागमः प्रमाणमित्यस्याभिप्रायमाह । उपपत्त्या ये भगणाः सिद्ध्यन्ति त एव ग्राह्याः। अयमुपपत्तिमानागम इति तदा स्या-द्यदि भगणानामियत्तोपपत्त्या स्यात् सा तु कर्त्तुं न शक्यत इति दूष-यति। तदपि न । यतोऽतिप्राज्ञेन पुरुषेणोपपत्तिर्ज्ञातुमेव शक्यते न तया तेषां भगणानामियत्ता कर्त्तुं शक्यते। तत्र हेतुमाह । पुरुषस्यायुषाल्प-त्वात् । हेतु विवृणोति । उपपत्तौ तु यन्त्रेण प्रत्यहं ग्रहो वेध्यो भग-णान्त यावत् । एवं शनैश्चरस्य तावद्वर्षाणां त्रिंशता भगणः पूर्यते। मन्दो-च्चानां तु वर्षशतैरनेकैः । यैर्वर्षैर्मन्दोच्चपातानामेका विकला वर्धते तान्याहुः ।

"सप्तभिः स्मरहरैः खभूमिभिः सागरैरिषुभिरीक्षणर्तुभिः ।
वत्सरैर्दिनकराद्यथाक्रमं मन्दतुङ्गविकला विवर्धते ॥
वत्सरैर्दिनकरै रसोन्मितैः कृष्णवर्त्मविषयैर्गुणैः शरैः ।
मेदिनीतनयतो यथाक्रमं प्रोक्तपातविकला विवर्धते" ॥

अतो नायमर्थः पुरुषसाध्य इति । कस्मात् पुनर्ग्रन्थरचनायां यतन्ते कृतिनः । भगणेयत्ताप्रधानत्वाच्छास्त्रस्येत्याशङ्क्य पुरुषायुषाल्प-तया यद्यपि भगणानामियत्ता कर्त्तुं न शक्यते तथाऽप्यन्यान्यपि प्रयो-

ज्ञानानि विद्यन्त इति प्रयोजनवद्ग्रन्थकरणमित्याह । अत एवातिप्राज्ञगणकाः साम्प्रतोपलब्ध्यनुसारिणं प्रौढगणकस्वीकृतं क्रमप्यागममङ्गीकृत्य ग्रहसाधने आत्मनो गणितगोलयोरतिकौशलं दर्शयितुं तथाऽन्यैर्भ्रान्तिज्ञानेनान्यथोदितानर्थां श्च निराकर्त्तुमन्यान् ग्रन्थान् रचयन्ति । पितामहसौरपराशरादिसिद्धान्तोक्तग्रहभगणैः ससाधिता ग्रहा दृक्तुल्यतां सर्वदैव न यान्त्यत उक्तं साम्प्रतोपलब्ध्यनुसारिणमिति । अयमिदानीं पक्षः संवदतीति दृग्गणितसाम्यसम्पादनकुशलेन सांवत्सराचार्येणैव वक्तुं शक्यते । अत उक्तं प्रौढगणकस्वीकृतमिति । अतीन्द्रियार्थविज्ञानेन पुरुषबुद्धिप्रभवा कल्पना न प्रभवतीत्यागममङ्गीकृत्येत्युक्तम् ।

"किं तेनापि सुवर्णेन कर्णघातं करोति यत् ।
तथा किं तेन शास्त्रेण यत्र प्रत्यक्षतः स्फुटम्" ॥

इत्यागमाविशेषात् क्रमपीत्युक्तम् । तत् तदेव व्यनक्ति ग्रहगणितेत्यादिना । अयमाशयस्तेषामित्यन्तेन तत्र दृष्टान्तमाह । यथाऽत्र ग्रन्थे ब्रह्मगुप्तस्वीकृतागमोऽङ्गीकृत इति । आगम एव साम्प्रतोपलब्ध्यनुसारी प्रमाणं नास्ति । भगणेयत्तासाधनमुपपत्त्येत्युपसंहरति । तर्हि तिष्ठतु तावदुपपत्त्या भगणानामियत्तासाधनम् । अस्तु वा भगणानामियत्तासाधनं नोपपत्त्या तथाऽपि युक्तिर्वोच्यतामित्यत्र नोदयति । अथ यद्युपपत्तिरुच्यते तर्हीतरेतराश्रयदोषशङ्कया वक्तुमप्यशक्या ।

"स्यात् संस्कृतो मन्दफलेन मध्यो मन्दस्फुटोऽस्माच्चलकेन्द्रपूर्वम् ।
विधाय शैघ्र्येण फलेन चैव खेटः स्फुटः स्यात् ..............." ॥

तथा च

"स्फुटग्रहं मध्यखगं प्रकल्प्य कृत्वा फले मन्दचले यथोक्ते ।
ताभ्यां मुहुर्व्यस्तधनर्णकाभ्यां सुसंस्कृतो मध्यखगो भवेत् सः" ॥

इति स्पष्टज्ञाने मध्यमज्ञानं मध्यज्ञाने स्पष्टग्रहज्ञानमित्यन्योन्याश्रयदोषः । यथेतरेतराश्रयदोषो न स्यात् तथोपपत्तिं वक्ष्याम इत्याह ।

तथाऽपि संक्षिप्तामुपपत्तिं वक्ष्यामः । कथमत्रान्योन्याश्रयनिरास इत्यत्राह । इतरेतराश्रयदोषोऽत्र दोषाभासः । गणितकर्मणा सिद्धस्पष्टाद्यदि मध्यज्ञानं तदेतरेतराश्रयदोषः स्यात् । अत्र यन्त्रवेधोपलब्धस्पष्टान्मध्यज्ञानेनान्योन्याश्रय इत्यभिप्रायेणोक्त दोषाभास इति । दोषवदाभासत इति वस्तुतो नान्योन्याश्रय इत्यर्थः । संक्षेपेणोपपत्तिकथने हेतुमाह । उपपत्तिभेदानां यौगपद्येन वक्तुमशक्यत्वात् । भिद्यन्त इति भेदाः प्रकाराः । ते तु शब्दस्य क्रमिकत्वाद्युगपद्वक्तुमशक्याः । य एव प्रकारः प्रथममुच्यते स एव कार्यायालं किमनन्तरोक्त्या तस्मादुक्त संक्षिप्तामिति । अथोच्यते । अर्कशुक्रबुधपर्यया इति । कल्पे यावन्ति वर्षाणि तावन्तोऽर्कभगणा इति । 'रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टम्'-इत्युक्तेः । बुधशुक्रौ तु रवेरासन्नत्वात् कदाचिदग्रतः कदाचित् पृष्ठतस्तस्यानुचराविव व्रजन्तौ दृश्येते तस्मात् तयोरपि भगणा रविभगणतुल्या इति । कुजगुरुशनीनानां मध्यमानामग्रस्थे मध्यमार्के मन्दस्पष्टात् स्पष्टग्रहोऽग्रतो दृश्यते पृष्ठस्थे पश्चाद्दृश्यत इति । अत एव 'शनिजीवभूभुवा कीर्त्तिताः सुगणकैश्चलोच्चजाः'—इत्युक्तम् । ननु चलोच्चतुल्यत्वे ग्रहस्यातिबाहुल्यफलाभावविम्बाल्पत्वान्युपलभ्यन्ते तत्र कथं यस्मिन्नग्रस्थेऽग्रतः पृष्ठस्थे पृष्ठतो मध्यात् स्पष्टो दृश्यत इत्यनेन फलाभावमात्रं कार्यं स्वकारणचलोच्चज्ञापकमुक्त भाष्यकृता । यद्यपि कार्यत्रयमध्ये किमपि वक्तव्यमित्युक्त तथाऽपि कार्यद्वयोपन्यासानादरोऽभिप्रायान्तरमाक्षिपतीति शून्यहृदयत्वमापद्येत । अत्रोच्यते । यद्यपि गतिबाहुल्य चलोच्चतुल्यताज्ञापकमस्ति तथाऽपि नेदं प्रागवधारित यदोच्चतुल्यत्व ग्रहस्य तदा गतिभूयस्त्वमिति । मन्दोच्चतुल्यतायां गतेः परमाल्पत्वदर्शनात् । तस्माद्गतिबाहुल्यदर्शनं चलोच्चतुल्यत्वे किञ्चित्करम् । विम्बाल्पत्वमप्यप्रयोजकम् । न केवलं विम्बाल्पत्वे चलोच्चतुल्यत्वं कारण सूर्यसान्निध्यस्यापि कारणान्तरस्य विद्यमानत्वात् । किञ्च सौरमते विम्बविष्कम्भाना त्रिज्यागुणिताना मन्दकर्णचलकर्णयोगार्धापरपर्यायस्पष्टकर्णभक्ताना स्पष्टत्वाभिधानाद्यदा युगपन्मन्दचलोच्चतुल्यत्व तदा विम्बाल्पत्वमिति केवल-

चनोच्चस्य विम्बाल्पत्वे पाक्षिकी कारणतेति सम्यगुक्तम् । यत्तुल्ये ग्रहे फलाभावस्तदुच्चमिति ।

एकस्मिन् सावनाहे कियती रविगतिरिति ज्ञानार्थं सौरवर्षान्तःपातिरविसावनज्ञानोपायस्तावदुच्यते । समायां भूमावभीष्टकर्कटेन त्रिज्यामिताङ्कैरङ्कितेन वृत्त दिगङ्कित्त भगणकलाङ्कितं च कृत्वा तन्मध्यकीले सूक्ष्माग्रद्वयवर्ती केन्द्रादुभयतो नातिदूरे प्रदेशे तुर्यवत् कृतवेधकर्णद्वयशालिनीं सूक्ष्मशलाका मध्यच्छिद्रवर्ती निवेश्य रवेरुदयो वेध्यः । यस्मिन् दिने दक्षिणक्रान्त्यभावो भविता तस्मिन्ननेहसि प्राचीचिह्नाद्दक्षिणतो नातिदूरे प्रदेशे उत्तरेऽयने रविविम्बार्धेऽभ्युदिते तथा शलाका चालनीया यथा युगपत् कर्णरध्रान्तोऽर्कतेजः प्रविशेत् । एवं कृते शलाकाग्र यत्र परिधौ स्पृशति तत्पूर्वोदयस्थानमित्युच्यते । ततो वर्षमेक रव्युदया गणनीयाः । ते च पञ्चषष्ट्यधिकेन शतत्रयेण तुल्यां भवन्ति । तत्रान्तिमोदयः पूर्वोदयस्थानादासन्नो दक्षिणत एव भवति । तयोरन्तरं विगणय्य ग्राह्यम् । ततोऽप्यन्यस्मिन् दिने पुनरुदयो वेध्यः । स तु पूर्वचिह्नादुत्तरत एव भवति । तदप्युत्तरमन्तरं ग्राह्यम् । ततोऽनुपातः । यद्यन्तरकलाभिरेकीकृताभिः षष्टिघटिकास्तदा दक्षिणान्तरेण किमिति या लभ्यन्ते घटिकास्ताभिर्युक्तानि पञ्चषष्ट्यधिकशतत्रयतुल्यानि सावनानि सायनार्कस्य भगणभोगकाले भवन्ति । ततो वर्षमध्ये यावानयनांशविप्रकर्षस्तत्कालमानीय तेषु संस्कार्य[1] तानि निरयनांशार्कभगणभोगकाले सावनानि भवन्ति । रेवतीयोगतारासंयोगादन्यरेवतीयोगतारासम्बन्धो यावता कालेन भवति तावान् कालो भगणभोगकाल इत्युच्यते । 'पौष्णान्ते भगणः स्मृतः' इति सौरश्रवणात् । यवनास्तु दक्षिणक्रान्त्यभा-

१ यदि वार्षिकायनांशविप्रकर्षसंस्कृतानि ३६५ । १५ । ३० । २२ । ३० एतानि सावनानि स्वाकृत्य तैरेवानुपातेन कल्पकुदिनान्यानीयन्ते तदा कल्पान्तेऽयनांशविप्रकर्षस्य धनर्णयोस्तुल्यत्वादभावे कथं 'भूदिनानि शरवेदभूपगोसप्तसप्ततिथयोऽयुताहताः' इति वक्ष्यमाणानि कल्पसावनदिनानि उपपद्यन्तेऽतो नृसिंहोक्तिरसाध्वीति० निपुणा विभावयन्तु ।

वस्थानमेव मेषादि मन्यन्ते तत्रास्मन्मते सावनानि ३६५ । १५ । ३० । २२ । ३० । एतान्येव पौलिशेनोक्तानि । सौरमते सावनानि ३६५ । १५ । ३१ । ३० । २४ । एवं रोमकमतादिष्वन्यादृशानि । ततोऽनुपातः । यद्येकेन वर्षेणैतावन्ति तदा कल्पवर्षैः किमिति कल्पसावनानि भवन्ति । अथ तैरेव वर्षान्तःपातिभिः सावनैश्चक्रकला तुल्या गतिस्तदैकेन किमिति रविगतिः । नैवमुदयवेधेन भौमादीनां सावनानि साधयितुं शक्यन्ते । तेषामुदयस्य दृक्कर्मवशेनान्यादृशत्वात् ।

अत एवाहुः ।

"वक्रवक्रखचरैकपर्यये पूर्ववद्दिनगणं समानयेत् ।

तन्महत्त्वलघुतैक्यखण्डकं तेन कल्पभगणाँश्च साधयेत्"—इति ॥

अथ चन्द्रादिभगणोपपत्तिः । तत्रादौ ग्रहवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्यम् । तत्र खगोलस्यान्तर्भगोले आधारवृत्तद्वयस्योपरि विषुवद्वृत्तं तत्र यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं च कृत्वा कदम्बद्वयकीलयोः प्रोतमन्यच्चलं ग्रहवेधवलयं तच्च भगणांशाङ्कितं कार्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा गोलस्थमीनान्तं रेवतीताराया निवेश्य गोलमध्यस्थदृष्ट्या ग्रहोऽवलोकनीयः । ततो वेधवलयं ग्रहोपरि निवेशनीयम् । तद्वेधवृत्तं यत्र क्रान्तिवृत्ते लगति तस्य मीनान्तस्य यदन्तरं स तस्मिन् काले स्पष्टो ग्रहो ज्ञेयः । वेधवृत्ते क्रान्तिवृत्तवेधवृत्तसम्पाताद्ग्रहपर्यन्तं यदन्तरं सोऽस्फुटशरो वेद्यः । एवमन्वहं स्पष्टग्रहोऽवलोकनीयः । पूर्वं यस्मिन्नेव काले दृष्टस्तस्मिन्नेव काले द्वितीयदिवसेऽपि वेध्यः । ततः 'स्फुटग्रहं मध्यखगं प्रकल्प्य' इत्यनेनाद्यतनश्वस्तनमध्यमौ ज्ञेयौ । तयोरन्तरं मध्यमा गतिः । तया त्रैराशिकेन कल्पभगणाः साध्याः । एवमिदं ग्रहभगणसाधनं ब्रह्मगुप्तेनाप्युक्तत्वान्नास्माकमसम्बद्धाभिधायित्वमापादयतीत्याह । 'तथा च श्रीमान् ब्रह्मगुप्तः । ज्ञातं कृत्वा मित्यादि' ।

मन्दतुङ्गचलतुङ्गभगणज्ञाने किल ग्रहभगणज्ञानमुक्तम् । पुनर्मन्दचलोच्चभगणाज्ञानम् । किमत्र वक्तव्यम् । उक्तमेवास्माभिः सौरभाष्ये । तद्यथा तत्र तावद्ग्रहच्छाया लक्षणीया । सा चैवम् ।

"पश्येज्जलादौ प्रतिबिम्बितं वा खेटं दृगौच्च्य गणयेच्च लम्बम् ।
तल्लम्बपातप्रतिबिम्बमध्य दृगौच्च्यहृत् सूर्यहतं प्रभा स्यात्" ॥

इति छाया भवति । तस्या दिनगतं साध्य तद्भूपृष्ठस्थक्षितिजादूर्ध्वं भवति । गणितविधिनाऽपि दिनगतमानयेत् । तद्भूगर्भस्थक्षितिजादूर्ध्वं भवति । तासां नाडीनामन्तरं कृत्वाऽनुपातः कार्यः । यद्यनेनान्तरेण भूव्यासार्धयोजनानि लभ्यन्ते तदा षष्टिघटीभिः किमिति स्पष्टा ग्रहकक्षा भवति । चन्द्रादिकक्षासु परिधिषण्णवत्यंशस्य धनुर्ज्यातुल्यत्वस्वीकारात् ।

शाकल्ये ।

"परिधेः षण्णवत्यंशो दण्डवद्यः समः स तत्" ।

इत्युक्तेर्द्युयातान्तरघटीभिर्भूव्यासार्धयोजनानि लभ्यन्ते तदा षष्टिघटीभिः किमित्यनुपातो युक्तः । ततः कक्षापरिधेर्व्यासार्धं साध्य स योजनकर्णो भवति । परमाधिकाल्पयोजनकर्णयोर्योगार्धं मध्यमकर्णं । यद्वा चन्द्रकक्षा स्पष्टां ज्ञात्वा स्पष्टगत्येयं तदा मध्यगत्या केति चन्द्रमध्यकक्षा स्यात् । सा चन्द्रभगणगुणा स्वस्वभगणभक्ता स्वस्य मध्यकक्षा स्यात् । तस्या व्यासार्धं मध्यमयोजनकर्णो भवति । ग्रहरेवतीसयोगादन्यसयोगोपलक्षितकालेन भगणज्ञानं सुलभम् । स तु—

"लिप्ताग्रहिघ्नस्त्रिगुणेन भक्तः स्पष्टो भवेद्योजनकर्ण एवम्" ।

इति जातः । तस्मात् स्पष्टयोजनकर्णस्त्रिज्यागुणो मध्यमयोजनकर्णभक्तश्चलकर्णो भवति ।

"ग्रहस्य कक्षा चलकर्णनिघ्नी स्फुटा भवेद्व्यासदलेन भक्ता ।
तद्व्यासखण्डान्तरितः कुमध्यात् स भ्राम्यते हि प्रवहानिलेन" ॥

इत्युक्तेः । एवमिष्टदिवसे चलकर्णः साध्यः । एवमन्वह शरा वेद्याः । यत्र दक्षिणशराभावस्तत्र यावान् ग्रहः स भगणशुद्धः पातो ज्ञेयः । एव-

मसकृत् पातगतिर्ज्ञेया । तया पातभगणज्ञानं चन्द्रादीनाम् । सपातमन्दस्पष्टदोर्ज्याया: शीघ्रकर्णतुल्यत्वे यावान् शर उपलभ्यते तावान् शर इत्युच्यते । असौ सपातमन्दस्पष्टदोर्ज्यागुण इष्टशीघ्रकर्णभक्त इष्टशरो भवति । तस्माद्वेधसिद्धशरोऽभिमतस्त्विष्टशीघ्रकर्णगुणस्त्रिज्याभक्तो यावान् संपद्यते स एव शरो वेद्यः । एवमन्वहमेतादृशः शरो वेद्यः । एवमीदृशः शरो यदा परमो भवति स एव पठितशरस्तत्र सपातमन्दस्पष्टदोर्ज्या त्रिज्यातुल्या । एवं पठितशरं ज्ञात्वा वेधेनेष्टशरं च ज्ञात्वेष्टसपातमन्दस्पष्टदोर्ज्याज्ञानोपायः । वेधसिद्धेष्टशरः कक्षाप्रकारावगतचलकर्णगुणः पठितशरभक्तः सपातमन्दस्पष्टदोर्ज्या स्यात् । तस्या धनुः सपातमन्दस्पष्टः स्यात् । पातोनो मन्दस्पष्टः स्यात् । एवं प्रत्यहं मन्दस्पष्टो वेद्यः । यत्र मन्दस्पष्टगतेरल्पत्वं तद्दिने यावान् मध्यमस्तत्तुल्यमुच्चं ज्ञेयम् । एवं कालान्तरेणोच्चगतिः । यदा शीघ्रकर्णः परमस्तदा यावान् ग्रह उपलभ्यते वेधेन तत्तुल्यमेव शीघ्रोच्चं वेद्यम् । परमशीघ्रकर्णस्य त्रिज्यायाश्चान्तरं शीघ्रान्त्यफलज्या ततः प्रात्यहिकशीघ्रफलज्ञानं सुगमम् । परमाधिकपरमाल्पमन्दस्पष्टगत्योर्योगार्धं मध्यमगतिः । गतिर्नामाद्यतनश्वस्तनग्रहयोरन्तरं प्रसिद्धम् । तया मध्यमगत्या कल्पादितो मध्यमज्ञानम् । तस्य मध्यमस्य मन्दस्पष्टस्य यदन्तरं तन्मन्दफलं तदपि परमं ज्ञात्वा प्रात्यहिकमन्दफलसाधनं च सुगमम् । बुधशुक्रयोस्तु परमाधिकपरमाल्पशीघ्रकर्णावगतशीघ्रोच्चगतितोऽभीष्टशीघ्रोच्चं ज्ञेयम् । शराभावे शीघ्रोच्चं चक्रशुद्धं पातः स्यात् । वेधसिद्धेष्टशरावगतभौमादिसपातमन्दस्पष्टधनुर्वत् सिद्धे धनुषि शीघ्रोच्चगतो संस्कार्यम् । बुधशुक्रयोर्मन्दफलं सुधिया वेद्यम् । इदं मनसि सम्प्रधार्य 'स्फुटग्रहं मध्यखगं प्रकल्प्य' इति ग्रहमध्यगतिज्ञानमुक्तं भाष्यकृता । स्पष्टे विलोममन्दफलसंस्कारेण शीघ्रोच्चज्ञानमुक्तम् । विलोमशीघ्रफलसंस्कृतस्पष्टान्मन्दोच्चज्ञानमुक्तम् । इतरेतराश्रयदोषस्तु दोषाभास इति प्रागप्यभिहितमिति ध्येयम् । यद्वा युगपदेव कूपोद्धृतपुरुषवन्मन्दोच्चशीघ्रोच्चग्रहभगणाभि-

ज्ञस्तं प्रति भगणज्ञानमाचार्येण नोपपद्यते। किन्तु मन्दोच्चभगणग्रह-भगणाभिज्ञं प्रति चलोच्चभगणज्ञानं चलोच्चभगणग्रहभगणज्ञानाभिज्ञं प्रति मन्दोच्चभगणज्ञानं मन्दोच्चभगणचलोच्चभगणज्ञानचणं प्रति ग्रहज्ञानोपायः प्रतिपाद्यत इति न किञ्चिद्विरुद्धम्। यत् तु पूर्वमुक्तं यत्र परमश्चलकर्णस्तत्र यावान् ग्रहस्तावदुच्चम्। परमकर्णत्रिज्ययोश्चान्तरम-न्त्यफलज्येति। तत्र परमाल्पकर्णो नीचतुल्यत्वे। ततोऽन्त्यफलज्याज्ञान-मिति योज्यम्। यस्माच्छीघ्रोच्चतुल्ये किल परमकर्णस्तत्र ताराग्रहाणामस्त-गतत्वात् तेषां छायोपलम्भासम्भवः। कथं पुनर्मन्दस्पष्टतुल्ये शीघ्रोच्चे-ऽस्तमयः। उच्यते। कुजगुरुशनीनां मध्यमार्कश्चलोच्चम्। यदा च स्पष्टग्रहार्कविवरं स्वस्वकालांशाल्पं तदाऽस्तमनम्। तत्र शीघ्रोच्चतुल्ये मन्दस्पष्टे मन्दस्पष्टग्रहस्पष्टार्कयोरन्तरं परमं परमार्कमन्दफलतुल्यमेव स्यात्। ननु बुधशुक्रयोः शीघ्रनीचतुल्यत्वे मन्दस्पष्टस्यैव स्पष्टत्वान्मध्य-योश्च तयोर्मध्यमार्कतुल्यत्वादस्तमयो दुर्निवारः स्यात्। तत्रोच्यते। यदा च मध्यमयोस्तुल्यत्वेन शुक्रार्कयोः स्पष्टयोरपि कदाचित् तुल्यता स्यात् तदा बिम्बैक्यार्धाच्छरस्य न्यूनतायां जातायां रवेरधःस्थितत्वेन परमास्तकाले बुधशुक्रयोरादर्शादौ दर्शनं भविष्यतीति न किञ्चिद्बाध-कम्। ननु को नाम मध्यः कश्च मन्दस्पष्टः किं च तयोः स्पष्टादन्य-थात्वे कारणम्। यद्यतात्त्विकता तयोस्तर्ह्यलं तच्चिन्तया। अतात्त्वि-कसाधितस्य कथं याथार्थ्यमिति चेत्। उच्यते श्रूयतामवधानेन। नक्ष-त्राणां ग्रहाणां च पूर्वस्यामुदयदर्शनात् पश्चिमायां नित्यमस्तमनदर्शनात् पश्चिमगतौ किञ्चित्कारणेन भाव्यम्। अश्विनीस्थस्य ग्रहस्य भरण्या-दिसयोगदर्शनाद्ग्रहाणां पूर्वगतिरप्यस्ति। तत्रापि कारणेन भाव्यमिति कारणानि कल्पयन्ति। तत्र यवनाः 'ग्रहाणां सप्ताकाशास्तदुपरि भचक्राकाशस्तदुपर्यप्याकाशोऽस्ति। स च नाक्षत्रघटीषष्ट्या नियतपश्चि-मगत्यैकवारं भ्रमति। तद्भ्रमणेनैव परवशाः। शन्यादिकक्षास्थानीयाः सजीवाः सावयवाः परस्परसंलग्ना आकाशाः पश्चिमाभिमुखं परिभ्रमन्ति।

शेष्वात्मबुद्धिं द्रढयितुं, येऽन्नं ब्रह्मोपासत इत्यादिनान्नाद्यवच्छिन्नब्रह्मोपासना विधत्त इति भगवत्पादव्याख्यैव प्रख्यातबहुगुणेति ॥

उपास्तिश्रवणात्तेषु ब्रह्मदृष्ट्यभिप्रायं ब्रह्मपदं न तु ब्रह्मत्वपरमिति सदृष्टान्तमाह । तन्न यथेति । किञ्च तेषां ब्रह्मत्वेऽन्यान्तरपदयोरानर्थक्यं स्यादित्याह । किञ्चेति । स्वरूपेणैकत्वेऽपि तत्तदुपाधिविशिष्टत्वाकारेण नानात्वमित्याशङ्क्याऽऽह । न चेति । विशिष्टानामपि ब्रह्मत्वमुताब्रह्मत्वम् । द्वितीये मदिष्टसिद्धिः । आद्येऽपि किं तेषां वस्तुतो भेद उताभेदो भेदाभेदो वा । न सर्वथापीत्याह । रूपान्तरेति । एवं परपक्षे तैत्तिरीयकश्रुतेरसामञ्जस्यमुक्त्वा स्वपक्षे सामञ्जस्यमाह । तस्मादिति । मन्त्रे, "[1]सत्यं ज्ञानमि"ति सङ्ग्रहवाक्ये । आरम्भणाधिकरणन्यायेनेति । "[2]तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यधिकरणेनोक्तेन सतो वा असतो वा भिन्नस्य वाऽभिन्नस्य कार्यस्योत्पत्तेरयोगात् "[3]वाचारम्भणं विकार" इत्यादिशब्दैः स्वतःसत्त्वनिषेधात् कारणसत्तयैव सद्वत्प्रतीयमानं कार्यमनिर्वचनीयमतो न वस्तुतः कार्यकारणभेद इति न्यायेन प्रतिपाद्येत्यर्थः । सर्गवाक्येनैवानन्त्यसिद्धेः "[4]स वा एष पुरुष" इत्यादिकिमर्थमित्याशङ्क्य प्रतिज्ञान्तरोपपादकत्वेनोपयोगमाह । गुहाप्रवेशेनेति । बुद्धिर्गुणशब्दार्थः । शाखाचन्द्र-

१ तैत्तिरीयोपनिषदि २ प्र० । १ खं० । १ कं० ।
२ वेदान्तसूत्रम । अ० २ । पा० १ । सू० १४ ।
३ छान्दोग्योपनिषदि ६ प्र । १ खं० । १ कं० ।
४ बृहदारण्यकोपनिषदि ४ प्र० । ४ ब्रा० । २२ कं० ।

न्यायेनेति । चन्द्रलेखामपश्यन्तं प्रति शाखाग्रं पश्येति तदुपलक्षणं शाखाग्रमुपदिश्य पश्चाद्यथा तत्स्वरूपमुपदिश्यते तद्वदित्यर्थः । अन्नमयादिषु ब्रह्मशब्दप्रयोगस्याभिप्रायमाह । बाह्यात्मबुद्धीति ॥

बृहदारण्यकश्रुतिरप्यहङ्कारानात्मत्वे प्रमाणमित्याह । तथा योऽयमिति ।

(अहङ्कारादीनामनात्मत्वम्)

तथा "[1]योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति प्राणान्तःकरणाख्याहङ्कारक्षणिकविज्ञानातीतमनवच्छिन्नज्योतिरात्मकं जीवस्वरूपं दर्शयति । सूत्रकारोऽप्यहमनुभवविषयातिरिक्तं जीवस्य ब्रह्माख्यं रूपं न षष्ठप्रपाठके प्रतिपाद्यमुपक्रमादेरहमनुभवगोचरमात्रनिष्ठत्वादित्याशङ्क्य सुषुप्त्युत्क्रान्तिकालयोः "[2]प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद, [3]प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" इत्यादिना संसारिणः पारमार्थिकब्रह्माख्यस्वरूपान्तरनिर्देशात् "[4]योऽयं विज्ञानमय" इत्याद्य-

१ बृहदारण्यकोपनिषदि ४ प्र० ३ । ब्रा० । ८ कं० ।

२ बृहदारण्यकोपनिषदि ४ प्र० । ३ ब्रा० । २१ कं० ।

३ बृहदारण्यकोपनिषदि ४ प्र० । ३ ब्रा० । ७ कं० ।

४ मुण्डकोपनिषदि ३ मुं० । १ खं० । १ कं० ।

सङ्गोदासीनजीवस्वरूपपरमित्याह। सुषुप्त्युत्क्रा-न्त्योर्भेदेनेति। एवं "[1]तयोरन्यः पिप्पलं स्वाद्व-त्त्यनश्नन्नन्यो अभिचाकशीति" इत्यभोक्तारं जीवं दर्शयति। नन्वयं मन्त्रः परमात्मन एवानशनं दर्शयति जीवस्य तु पिप्पलं स्वाद्वत्तीति भोक्तृ-त्वमेव दर्शयतीति चेत्। न एवं सति "[2]ब्रह्मवेद ब्रह्मैव भवति" इति वाक्यशेषावगतस्य विदुषो ब्रह्मभावस्योपक्रमगतैकविज्ञानात्सर्वविज्ञानप्र-तिज्ञानस्य च बाधप्रसङ्गात्। भोक्तृभोक्त्रोरभे-दायोगात्॥

हृद्यन्तर्ज्योतिरिति जडान्तःकरणात्मकाहङ्कारत-द्वृत्त्यज्ञानेभ्यो भेदः प्रतीयते, पुरुष इति क्षणिकविज्ञानात् सर्वासु पूर्षु शेत इति पुरुषशब्दार्थत्वात्। अत एवानव-च्छिन्नमस्याः श्रुतेरुक्तमर्थं भगवान् बादरायण आचार्योऽपि न्यायपुरःसरं निर्णयामासेत्याह। सूत्रकारोऽपीति। षष्ठप्र-पाठके षष्ठाध्याये। उपक्रमादेरिति "[3]स वा अयं पुरुषो जायमान" इत्यादिना जन्ममरणावस्थात्रयादेरुपन्यासा-दित्यर्थः। सुषुप्तिकाले प्राज्ञेन परमेश्वरेणात्मना स्वस्वरूपे-ण सम्परिष्वक्तो भेदबुध्यभावमात्रेणैक्यं गत उत्क्रान्ति-काले प्राज्ञेनात्मनान्वारूढ अधिष्ठित उत्सर्जनं हिक्कादि-

---

१ मुण्डकोपनिषदि ३ मुं० । २ खं० । ८ कं० ।
२ मुण्डकोपनिषदि १ मुं० । १ खं० । ३ कं० ।
३ मुण्डकोपनिषदि १ मुं० । १ खं० । १ कं० ।

शब्दं कुर्वन्यातीत्यर्थः । अत्रात्मनेति विशेषणात्प्राज्ञस्य जीवरूपेण सम्परिष्वक्तस्याहमनुभवे प्रकाशमानस्यैवात्मपदार्थत्वादिति भावः। जीवरूपस्य भोक्तृव्यतिरेके आथर्वणश्रुतिमपि प्रमाणयति। एवं तयोरिति। अनश्नन्नन्य इत्यस्य परमात्मविषयत्वं शङ्कते। नन्वयं मन्त्र इति। भिन्नजीवेश्वरपरत्वेन व्याख्यानं पूर्वापरवाक्यविरुद्धमिति दूषयति। न, एवं सतीति। उपक्रमगतेति। "[1]कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुतेरित्यर्थः।

अनश्नन्वाक्यस्य जीवविषयत्वेऽन्यस्य भोक्तुरभावादशनवाक्यमनर्थकं स्यादिति चोदयति। कथं तर्हीति।

(जीवो न भोक्तास्वरूपतः) कथं तर्हि पिप्पलं स्वाद्वत्तीति श्रुतिरिति चेत्। सा हि ब्रह्मस्वरूपस्य सतो जीवस्य बुद्ध्युपाधिकृतं भोक्तृत्वमनुभवसिद्धमनुवदति केवलस्वरूपेण तस्यैवाभोक्तृत्वं दर्शयितुं न तु भोक्तृत्वपरा। अत एवायं मन्त्रो पैङ्गिरहस्यब्राह्मणेनास्मदुक्ताभिप्रायेण व्याख्यातः। तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं, अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्यो ऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञाविति। ननु तत्रापि सत्त्वशब्दो जीवं क्षेत्रज्ञशब्दश्च परमात्मानमभिदधातीति चेत्। न तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा क्षेत्रज्ञ इति ब्राह्मणेन सत्त्वक्षेत्रज्ञ-

१ मुण्डकोपनिषदि। १ मु०। १ ख०। १ कं०।

पदयोरन्तःकरणशरीरपरतया व्याख्यातत्वात् । येनेति यच्छब्दवाच्यस्य तदित्यत्र तच्छब्देनाभिधानाज्जीवस्यैव स्वप्नोपद्रष्टृत्वात् ।

( जीवक्षेत्रज्ञौ न भिन्नौ ) एवं पाञ्चरात्रे परमात्मसंहितायाम् ।

परक्षेत्रज्ञयोरैक्यमात्मनः श्रुतिचोदितम् ।
क्षेत्रज्ञस्य बहुत्वं हि देहभेदात्प्रतीयते ॥
एकस्यैव तु बिम्बस्य दर्पणेषु तथा भिदा ।
भूतपञ्चकसङ्घातः क्षेत्रं तत्र व्यवस्थितः ॥
जीवो यस्तं विदुः प्राज्ञाः क्षेत्रज्ञं परसंज्ञितम् ।
इति परव्यावृत्तजीवं क्षेत्रज्ञं दर्शयति ॥

स्फटिकलौहित्यवदौपाधिकं जीवस्य भोक्तृत्वं तदर्थं इति परिहरति। सा हीति । यत एतस्य भोक्तृत्वमनीश्वरत्वं वान्यतः सिद्धत्वान्न श्रुतिगम्यमत एवायं मन्त्रो ब्राह्मणवाक्येनाज्ञातजीवपरमार्थस्वरूपपरतया व्याख्यात इत्याह। अत एवेति। ज्ञश्चिद्रूपः। पर्यवसितमन्त्रार्थं श्रुतिः संक्षिप्य दर्शयति। ताविति। इदं व्याख्यानं जीवेशभेदपक्षेऽपि न विरुध्यत इति चोदयति। ननु तत्रापीति। एतच्चोद्यं श्रुत्यैव निरस्तमित्याह। न तदेतदिति। नन्वत्रापि यः स्वप्नं पश्यति तत्सत्त्वं य उपद्रष्टा स क्षेत्रज्ञ इति जीवेशावेवोक्ताविति तत्राह । येनेति । यत्तदोरेकार्थत्वात्करणे च यच्छब्दप्रयोगात्तदेव तच्छब्दसमानाधिकरणसत्त्वशब्दार्थः। उपद्रष्टृत्यत्रापि स्वप्नस्य सन्निहितत्वात्तद्द्रष्टा जीव एव क्षेत्रज्ञ-

पदेनोच्यते शारीरत्वं च तस्यैव संभवति "[1]शारीर आत्मा" "[2]प्राज्ञेनात्मना" इत्यत्र जीवस्यैव शारीरत्वेन प्रसिद्धेरित्यर्थः। वस्तुतो ब्रह्माभिन्न एव क्षेत्रज्ञपदार्थ इत्युक्तमागमसम्मत्या द्रढयति। एवं पाञ्चरात्रे इति। आत्मन इति। स्वकीयशाखागतश्रुत्युक्तमित्यर्थः। अथवा परक्षेत्रज्ञयोरात्मनः स्वरूपस्यैक्यमित्येवं योजना आत्मनोरिति पाठेऽस्तिचेत् सुबोधः। श्रुत्युक्तं सदृष्टान्तमुपपादयति। क्षेत्रज्ञस्येति। परसंज्ञितमिति। वस्तुतः पराभिन्नमित्यर्थः। परव्यावृत्तमिति। औपाधिकेभेदेन भिन्नमित्यर्थः॥

अशनवाक्यमन्तःकरणविषयमित्युक्तं तदाक्षिपति। नन्विति।

(चेतनस्याभोक्तृत्वम्) ननु कथमचेतनस्यान्तःकरणस्य भोक्तृत्वमिति चेत्। न, नहीयं श्रुतिरचेतनस्य भोक्तृत्वं वदति, तथा सत्युभयपरत्वेन वाक्यभेदप्रसङ्गात्। अपि तु चेतनस्याभोक्तृत्वमेव प्रतिपादयन्ती चैतन्यसमानाधिकरणभोक्तृत्वप्रतीतिस्तर्हि कथमित्याशङ्क्य चैतन्याभोक्तृत्वप्रमित्यर्थमेव चिच्छायाग्राह्यन्तःकरणगतमनुवदति। तथाच [3]द्वा सुपर्णेति मन्त्रेण जीवः परमात्मभावाभिप्रायेणाभोक्तेति प्रतिपाद्यते। एवं तत्र तत्र परमात्मन

१ बृहदारण्यकोपनिषदि ४ प्र० । ३ ब्रा० । ३५ कं० ।
२ बृहदारण्यकोपनिषदि ४ प्र० । ३ ब्रा० । ३४ कं० ।
३ छान्दोग्योपनिषदि ५ प्र० । खं० । ७ कं० ।

एव बुद्धावनुप्रवेशश्श्रुतिरपि जीवो वस्तुतः कर्त्ता ऽभोक्तेति मते प्रमाणम् । न चान्तर्यामिरूपेणा-नुप्रवेशो न तु जीवरूपेणेति वाच्यम् । अनुप्रवि-ष्टस्य "[1]स एष इह" इत्यादौ तत्र तत्र भोक्तृ-त्वश्रवणात् । "[2]अनेन जीवेन" इत्यनुप्रविष्टे जीवशब्दश्रवणाच्चेति ॥

अचैतन्यस्यापि चैतन्यतादात्म्याद्भोगपरिणाम इति वक्तुं श्रुत्यभिप्रायं तावदाह । न हीयमिति । उभयपरत्वे-नेति । सत्त्वस्य भोक्तृत्वं क्षेत्रज्ञस्य तदभाव इत्यर्थद्वयपर-त्वेनेत्यर्थः । जीवो वस्तुतो ऽभोक्तैव तस्मिन्प्रतीयमानो भोगः स्फटिकलौहित्यवदौपाधिकः । उपाधिश्च क इत्या-काङ्क्षायां चित्प्रतिबिम्बाश्रयतया लब्धचेतनभावो दुःखा-दिपरिणाम्यन्तःकरणमेवेति तयोरन्य इति श्रुतिरनुवद-तीत्याह । अपि त्विति । मन्त्रार्थमुपपादितमुपसंहरति । तथा चेति । किं च सर्वशाखास्वपि "[3]स एष इह प्रविष्ट आनखाग्रेभ्यः" "[4]तत्सृष्ट्वा तदेवानुप्राविशत्" "[5]अनेन जीवेनात्मनानुप्रविश्य" "[6]सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्यदास्ते" "[7]स एष भूतानीन्द्रि-याणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते" "[8]माययैव तस्मादद्वय एवायमात्मा"

---

१-३ बृहदारण्यकोपनिषदि १ प्र० । ४ ब्रा० । ७ कं० ।
२-५ तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम् । ५ प्र० । ३ खं० । २ कं० ।
४ तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम् । ६ प्र० । १ क० ।
६ तैत्तिरीयपुरुषसूक्तम् । मं० । ७ नृसिंहोत्तरतापनीयोपनिषदि । ९ कं० ।
८ नृसिंहोत्तरतापनीयोपनिषदि । ९ कं० ।

"[1]पुरश्चक्रे चतुष्पादः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" "[2]रूपं रूपं प्रति रूपो बभूव" इत्यादिकाः श्रुतय उक्तार्थे मानमित्याह । एवं तत्रेति । प्रवेशश्रुतेरन्यथोपपत्तिमाशङ्क्याह । न चेत्यादिना । भोक्तृत्वश्रवणादिति । "[3]पश्यन् शृण्वन्मन्वान" इति श्रुतेरित्यर्थः ॥

एवं श्रुतितोऽहङ्कारात्मनोर्भेदं प्रसाध्येदानीं न्यायतः साधयितुमुपक्रमते । इदानीमिति ।

(अहङ्कारातिरिक्तात्मानुमानम्) **इदानीं युक्तितोऽप्यहङ्कारातिरिक्तश्चित्स्वभाव आत्मा निरूप्यते । अहङ्कारो, नात्मा, दृश्यत्वात्, तस्मिन्प्रतीयमानेऽप्यप्रतीयमानत्वाद्वा । घटवत् ॥**

तत्र विवरणाचार्य्योऽनुमानं प्रयुङ्क्ते अहङ्कारो नात्मेति । आत्मा तच्छब्दार्थः ॥

अत्र पक्ष एव तावद्दुर्निरूप इत्याह पूर्ववादी । स्यादेतदिति ।

(पक्षासिद्धिप्रदर्शनं पूर्ववादिनः) **स्यादेतदहङ्कारो यद्यन्तःकरणं तदा सिद्धसाधनम् । अथ तदतिरिक्तोऽहमिति व्यवहारविषय स्तदाबाधः । अन्तःकरणातिरिक्ताहमितिव्यवहारविषयस्य चैतन्यस्य तव मत आ-**

१ बृहदारण्य कोपनिषदि ४ प्र० । ५ ब्रा० । १७ कं० ।

२ बृहदारण्यकोपनिषदि ४ प्र० । ५ ब्रा० । १९ कं० ।

३ बृहदारण्यकोपनिषदि । ३ प्र० । ४ ब्रा० । ७ कं० । वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वान इति श्रुतौ पाठः ।

त्मत्वात् । देहोऽपि तद्व्यवहारविषय इति चेत्तर्हि सिद्धसाधनम् । अथाहमिति पदार्थो ऽहङ्कारः । न, तस्यापि भवन्मते उभयात्मकत्वेन बाधात् । न चान्तःकरणमेवाहम्पदार्थः । भागत्यागलक्षणाभ्युपगमविरोधात् । चेतनवाचिनो ऽहंशब्दस्य केवलान्तःकरणवाचकत्वायोगात् । तथात्वे वा सिद्धसाधनत्वात् । न चाहमिति ज्ञानविषयः सः । चैतन्यस्याप्यहमिति वृत्तिविषयत्वात् । तदतिरिक्तज्ञानस्य परम्प्रत्यसिद्धेः । नापि ज्ञानाद्याश्रयः पक्षः । त्वदभिमतात्मनो वृत्तिज्ञानाश्रयत्वाच्चैतन्यानाश्रयत्वात् । नापि तदुपादानं पक्षः । सर्वोपादानचिद्रूपब्रह्मणोऽपि तत्त्वात् । परिणामित्वस्य परं प्रत्यसिद्धेः । तत्समवायित्वस्य सिद्धान्तेऽन्तःकरणेऽप्यभावात् । ज्ञानाद्युपादानस्यान्यत्वेन बाधाच्च ॥

अत्र पक्षीकृताहङ्कारः किमन्तःकरणं, तदतिरिक्तो ऽहमिति व्यवहारविषयो वा, अहमिति पदार्थो वा, अहमिति ज्ञानविषयो वा, ज्ञानाद्याश्रयो वा, ज्ञानोपादानं वा, ज्ञानपरिणाम वा, ज्ञानसमवायी वेति विकल्पं मनसि निधायाद्यमनूद्य दूषयति । अहङ्कारो यदीति । द्वितीयं निराकरोति । अथ तदतिरिक्तेति । बाधमेवोपपादयति । अन्तःकरणेति । देहस्यापि तादृशत्वेन पक्षत्वेन बाध इति

शङ्कते । देहो ऽपीति । तर्ह्यन्यद्दूषणमित्याह । तर्हीति । तृतीयमनूद्यांशतो बाधेन दूषयति । अथाहमिति । उभयात्मकत्वेनेति । चिदचिदात्मकत्वेनेत्यर्थः । अचिदंश एव तदर्थ इत्याशङ्क्याह । न चेति । भागत्यागेति । अहंब्रह्मास्मीति वाक्ये ऽहमर्थस्य ब्रह्माभेदविरुद्धमचिदंशं परित्यज्य चिदंशेऽहंपदं न लक्ष्यत इत्यभ्युपगमविरोधः स्यादित्यर्थः केवलान्तःकरणवाचित्वं व्युत्पत्तिविरुद्धं चेत्याह । चेतनवाचिन इति । अङ्गीकृत्याप्याह । तथात्वे वेति । चतुर्थं दूषयति । न चाहमिति । सः पक्षः । ज्ञानपदेन किं जन्यज्ञानं विवक्षितमुताजन्यम्, आद्ये बाध इत्याह । चैतन्यस्यापीति । द्वितीये पञ्चासिद्धिरित्याह । तदतिरिक्तेति । पञ्चमं दूषयति । नापीति । अत्रापि ज्ञानं जन्यमजन्यं वेति विकल्प्य क्रमेण दूषयति । त्वदभिमतेति । षष्ठं दूषयति । नापि तदुपादानमिति । सप्तमाष्टमावन्यतरासिद्ध्या दूषयति । परिणामित्वस्येत्यादिना । उत्तरकल्पचतुष्टये दूषणान्तरमाह । ज्ञानाद्युपादानस्येति ॥

साध्येऽपि किमनात्मत्वमात्मत्वाभाववत्वमात्मत्ववदन्यत्वं वा । उभयत्रापि किमात्मत्वं जातिः, ज्ञानाद्याश्रयत्वं वा, ज्ञानत्वं वेति विकल्प्य, सर्वथाप्ययुक्तमित्याह । साध्यमपीति ।

(साध्यासिद्धिप्रदर्शनम्) **साध्यमप्यात्मत्वाभाव आत्मान्यत्वं वा न सम्भवत्यात्मत्वजातेः सिद्धान्ते ऽभावात् । ज्ञानाद्याश्रयत्वमात्मत्वं चेत्तदभावसाधने बाधः । ज्ञानत्वं चेत्सिद्धसाधनम् ।**

(हेत्वसिद्धिः) दृश्यत्वमपि दर्शनविषयत्वं वा, वृत्तिविषयत्वं वा, स्वव्यवहारे चैतन्यापेक्षत्वं वा, न सम्भवति । ब्रह्मणि व्यभिचारात् । ब्रह्मणः प्रकाशविषयत्वाभावे व्यवहारविषयत्वासम्भवात् । नापि स्वव्यवहारे स्वातिरिक्तज्ञानापेक्षत्वम् । ब्रह्मव्यवहारे ऽपि तदतिरिक्तवृत्तिज्ञानापेक्षणात् । न च चैतन्यं ज्ञानशब्दार्थः । ब्रह्मव्यवहारस्यापि तद्भिन्नजीवचैतन्यवृत्तिचैतन्यापेक्षणात् । न च वस्तुतो ऽतिरिक्तत्वं विवक्षितमिति वाच्यम् । सिद्धान्ते तदभावात् । द्वितीये ऽपि हेतावप्रतीयमानत्वमसिद्धम् । अहमिति प्रतीयमानत्वात् । न च सुषुप्तावहङ्कारो न प्रतीयत इति वाच्यम् । सुखमहमस्वाप्समिति तत्परामर्शदर्शनेन तदापि तत्प्रतीतेः । न चाहङ्कारस्य तदाश्रयाभेदात्तथानुभवो न तु स परामर्शविषय इति वाच्यम् । निर्विषयपरामर्शायोगात् । अहङ्कारांशज्ञाने ऽपि परामर्शत्वानुभवाच्च ॥

प्रथमं हेतुं विकल्प्य दूषयति । दृश्यत्वमपीति । ननु ब्रह्मणः स्वप्रकाशस्वरूपस्य दर्शनविषयत्वाभावान्नायंहेतो-

स्तत्र व्यभिचार इत्यत आह । ब्रह्मणं इति । व्यवहारस्य स्वसमानविषयप्रकाशजन्यत्वनियमादित्यर्थः । प्रकारान्तरेण दृश्यत्वनिरुक्तिमाशङ्क्य दूषयति । नापीति । किमत्र ज्ञानपदेन वृत्तिर्विवक्षिता उत तदतिरिक्तं चैतन्यम्, आद्ये व्यभिचारमाह । ब्रह्मव्यवहारेऽपीति । द्वितीयमपि व्यभिचारेण दूषयति । न च चैतन्यमिति । जीवचैतन्येति । प्रमातृतया जीवचैतन्यस्य प्रमाणतया वृत्त्यभिव्यक्तचैतन्यस्य चापेक्षणादित्यर्थः । ननु ज्ञानस्य स्वातिरिक्तत्वं वास्तवं विवक्षितम् । प्रमातृप्रमाणचैतन्ययोर्ब्रह्मापेक्षया न वास्तवातिरिक्तत्वमिति न व्यभिचार इत्याशङ्क्य तव मते वास्तवभेदस्य कुत्राप्यभावादसिद्धिः स्यादिति दूषयति । न च वस्तुत इति । तस्मिन्प्रतीयमानत्वादिति हेतौ किं सर्वदाप्रतीयमानत्वं विवक्षितमुत कदाचित् । आद्ये ऽसिद्धिमाह । द्वितीये ऽपीति । द्वितीयं दूषयति । न चेति । सौषुप्तिकाहङ्कारस्य परामर्शेनेन तदा तदनुभवो वाच्यः । तथा चात्रापि पक्षे हेतुरसिद्ध इत्याह । सुखमहमिति । नन्वस्य परामर्शस्य नाहङ्कारो विषयो येन सुषुप्तौ तदनुभवः कल्प्येत, किन्तु तस्य परामर्शस्याश्रयभूतचिदात्माभेदारोपादहमंशे परामर्शो ऽनुभव एव । तथा च सुषुप्तावप्रतीयमानत्त्वान्नासिद्धिरित्यत आह । न चाहङ्कारस्येति । अत्र सुखस्वापयोर्विशेषणतया भानादहमर्थस्य विशेष्यत्वेनाविषयत्वे निर्विषयकपरामर्श एव न स्यादित्याह । निर्विषयेति । यदुक्तमहमंशे परामर्शो ऽनुभव एवेति तत्तदंशे ऽपि स्मृतित्वानुभवो विरुद्ध इत्याह । अहङ्कारांशेति ॥

ननु परामर्शविषयात्मचैतन्याभेदारोपादहङ्कारे परामृश्यमानत्वभ्रमस्तथा च न विरोध इत्यत्राह । न च परामृश्यमानेति ।

(अहङ्कारे परामृश्यमानत्वभ्रमनिरासः ।) न च परामृश्यमानात्माभेदारोपादहङ्कारस्य तथात्वमिति वाच्यम् । तद्भेदासिद्धेः पूर्वं तदभेदानुभवस्य भ्रमत्वासिद्धेः । एतेन सुषुप्तावहमर्थप्रकाशे स्मर्य्यते ह्यस्तन इवाहङ्कार इति निरस्तम् । स्मर्यमाणत्वात् । सुखमहमस्वाप्समिति परामर्शस्य तद्विषयत्वात् । अहमित्यभिमन्यमान एवासमिति परामर्शः स्यादिति चेत् । न, अहमर्थप्रकाशे तदभिमानपरामर्शापादनस्य व्यधिकरणत्वात् । किं च सुषुप्तावहङ्कारोऽस्ति न वा । आद्ये न तदा तदननुभवः । तस्य भवन्मते केवलसाक्षिवेद्यत्वात् । द्वितीये तस्य स्मर्त्तृत्वानुपपत्तिः । अन्यानुभूतेऽन्यस्यस्मरणायोगात् । चैतन्याभेदमात्रस्यातिप्रसक्तत्वात् । अहमर्थस्य सुषुप्तावभावेऽहं निर्दुःखः स्यामिति सुषुप्त्यर्थिप्रवृत्त्ययोगात् । योऽहं सुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञानविरोधात् । अहङ्कारव्यक्तिभेदात् कृतहानाकृताभ्यागमश्च । कर्त्तुरन्यत्वाद्भोक्तुरभिन्नचैतन्यस्य कर्त्तृत्वाद्यभावात् । अहङ्करोमीत्येव प्रतीत्याहमर्थान्यात्मनि कर्त्तृत्वाद्ययोगाच्च । न च जाग्रत्येव कदाचिदप्रतीयमानत्वान्नासिद्धिः । तथाप्यात्मनि प्रतीयमाने तदप्रतीतेरसिद्धेः ।

प्रकाशाभावस्याविद्याविषयत्वस्य वा अप्रकाशमानत्वस्यासिद्धेश्च। किं चाहमर्थस्यानात्मत्वेऽहं करोमि जानामीति प्रतीत्यनुपपत्तिः। कर्तृत्वादेरात्मधर्मत्वात्। अहं मुक्तः स्यामिति प्रवृत्त्यनुपपत्तेश्च। अहमर्थस्यान्तःकरणगर्भितत्वे मम मन इतिप्रतीत्ययोगाच्च। मम मनःस्फुरति मनोऽस्तीति ज्ञानादहमिति ज्ञानस्यावैषम्यप्रसङ्गाच्च। ज्ञानानाश्रयत्वं चोपाधिः। अहमर्थ आत्मा ज्ञानाश्रयत्वादिभ्य ईश्वरात्मवद्व्यतिरेकेण घटवद्वेति सत्प्रतिपक्षत्वाच्चेति॥

अहङ्कारात्मभेदस्यासिद्धत्वेन परामृश्यमानात्माभेदस्यारोपितत्वमसिद्धमित्याह। नद्भेदासिद्धेरिति। सुषुप्तावहमर्थप्रतीतेः साधितत्वादाचार्योक्तबाधकतर्को ऽपि निरस्त इत्याह। एतेनेति। ह्यस्तन इति। पूर्वदिनवर्तीत्यर्थः। तर्हि ह्यस्तनवदभिमानो ऽपि परामृश्येतेति शङ्कते। अहमितीति। अभिमानस्याननुभवान्न तत्परामर्श इत्यभिप्रेत्याह। न, अहमर्थेति। किं च सुषुप्तावहमर्थस्यावश्यकत्वात्तस्य केवलसाक्षिवेद्यत्वाच्च तदनुभव आवश्यक इत्याह। किं च सुषुप्ताविति। स्मरणस्याहङ्कारधर्मत्वादनुभवकाले तदभावे तस्य स्मर्तृत्वानुपपत्तिरित्याह। द्वितीय इति। आत्मानुभवबलात्तदुपपत्तिमाशङ्क्याह। अन्यानुभूतेति। अनुभवितृचैतन्यतादात्म्यात्तदुपपत्तिमाशङ्क्यातिप्रसङ्गमाह। चैतन्येति। दुःखिन एव हि दुःखाभावः पुरुषार्थस्ततश्च दुःख्यह-

ङ्कार एव सुषुप्तौ तदभाववत्तया वक्तव्य इत्याह । अहं निर्दुःख इति । किं च सुषुप्तकालीनाहङ्कारेणेदानींतनस्यैक्यानुभवान्न तदा तदभाव इत्याह । यो ऽहं सुप्त इति । किं च सुषुप्तावहङ्कारनाशे तत्कृतकर्मणामानर्थक्यमन्यस्योत्पन्नस्याकस्माद्भोगश्च स्यादित्याह । कृतहानेति । नन्वनादिचैतन्यस्यानुगतत्वान्नोक्तदोष इत्याशङ्क्य तस्य कूटस्थत्वेन कर्तृत्वाद्यनुपपत्तिरित्याह । अभिन्नेति । चैतन्यमात्रस्य कर्तृत्वाद्यभिधानमनुभवविरुद्धं । चेत्याह । अहं करोमीति । एवं सुषुप्तावहङ्कारस्य सत्त्वात् प्रतीयमानत्वाच्च विशेष्यासिद्धो हेतुरित्युक्तमिदानीं जाग्रत्येव घटादिज्ञानसमये तदप्रतीतेनासिद्धिरित्याशङ्क्य तवमते तदापि तस्य केवलसाक्षिवेद्यत्वाद्विशेष्यासिद्धिः, मम मते तु विशेषणासिद्धिरित्यभिप्रेत्याह । न च जाग्रत्येवेति । किं च किमिदमप्रकाशमानत्वं प्रकाशाभाववत्त्वमविद्याविषयत्वं वा, नोभयथापि, तत्प्रकाशकस्य साक्षिणो नित्यत्वाज्जडस्याविद्याविषयत्वायोगाच्चेत्याह । प्रकाशमानस्येति । अनुमानस्य प्रत्यक्षविरोधमप्याह । किं चेति । प्रतिकूलतर्कविरोधं चाह । अहं मुक्तः स्यामिति । अनात्ममुक्त्यर्थं प्रवृत्त्ययोगादित्यर्थः । किं चाहमर्थस्यानात्मत्वमात्रमत्राभिप्रेतमुतान्तः करणरूपत्वमपि । आद्ये दूषणमुक्तम् । द्वितीये मनसस्ततो भेदग्रहविरोधो ऽपीत्याह । अहमर्थस्येति । अहङ्कारमनसोरभेदे तदुभयविषयप्रतीत्योर्वैलक्षण्यं न स्यादित्याह । मम मत इति । व्याप्यत्वासिद्धश्चायमित्याह । ज्ञानानाश्रयत्वं चेति । प्रतिप्रयोगपराहतिं चाह । अहमर्थ इति । ईश्वरस्य ज्ञानाश्रयत्वमसिद्धमित्यत आह । व्यतिरेकेणेति ॥

उक्तदोषगणपरिहारम्प्रतिजानीते । अत्रेति ।

(वादिमत-निरासः) **अत्रोच्यते । अहमनुभवविषयो ऽन्तः करणधर्मातिरिक्ताहमिति ज्ञानविषयो वा, स्वप्रकाशान्यो वा, न स्वद्रष्टा स्वव्यतिरिक्तद्रष्टृको वा, दृश्यत्वात् स्वप्रकाशत्वानधिकरणत्वाद्वा । घटादिवत् ।**

अहमनुभवो ऽहमिति व्यवहारहेतुप्रकाशः स चा स्मन्मते वृत्युपहितं चैतन्यं परमते ऽहङ्कारधर्मस्तद्विषयः पक्षः । स चास्मन्मते जडांश एव परमते देहाद्यतिरिक्तस्तदभिमतात्मैवेति न बाधो न वा सिद्धसाधनम् । न च पराभिमतात्मत्वेन सिद्धसाधनम् । पक्षतावच्छेदकधर्मावच्छेदेन साध्यसिद्धेरनुमानफलत्वमतोंऽशतः सिद्धसाधनस्यादोषत्वात् । मतान्तरे तु विषयपदस्यविशेष्यपरत्वान्न सिद्धसाधनम् । वृत्तिविशिष्टचैतन्यं ज्ञानपदार्थ इति मतेन पक्षान्तरमाह । अन्तःकरणेति । ज्ञानविषय इत्युक्ते घटादेः पक्षतास्यात्तद्व्यावृत्तये ऽहमित्यहमिति वृत्तिज्ञानविषयचिदात्मव्यावृत्तये ऽन्तःकरणाधर्मातिरिक्तेति ज्ञानविशेषणम् । गुरुमतानुसारिणं प्रति पक्षान्तरमाह । स्वप्रकाशेति । स्वशब्दः, समभिव्याहृतपरः स्वव्यवहारजनकप्रकाशाश्रयो नेत्यर्थः । साध्यमाह । न स्वद्रष्टेति । प्रकाशाश्रयो नेत्येतावत्युक्ते प्रदीपादिप्रकाशानाश्रयत्वेन सिद्धसाधनं स्यात्तन्निवृत्तये [1]स्वव्यवहारजनकेति । स्वव्यव-

१ स्वप्रकाशान्यो वेति मूले पाठः ।

**आयुधाच्छ च ॥ ४ । ४ । १४ ॥**

चाट्ठन् । आयुधेन जीवति आयुधीयः । आयुधिकः ॥

**हरत्युत्सङ्गादिभ्यः ॥ ४ । ४ । १५ ॥**

उत्सङ्गेन हरति औत्सङ्गिकः ॥

**भस्त्रादिभ्यः ष्ठन् ॥ ४ । ४ । १६ ॥**

भस्त्रया हरति भस्त्रिकः । षित्वान्ङीष् । भस्त्रिकी ॥

**विभाषा विवधात् ॥ ४ । ४ । १७ ॥**

विवधेन हरति विवधिकः । पक्षे ठक् । वैवधिकः । एकदेशविकृतस्यानन्यत्वाद्वीवधादपि ष्ठन् । वीवधिकः । वीवधिकी । विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तते ॥

**अण् कुटिलिकायाः ॥ ४ । ४ । १८ ॥**

कुटिलिका व्याधानां गतिविशेषः । कर्मारोपकरणभूतं लोहं च । कुटिलिकया हरति मृगान् अङ्गारान् वा कौटिलिको व्याधः कर्मारश्च ॥

**निर्वृत्ते ऽक्षद्यूतादिभ्यः ॥ ४ । ४ । १९ ॥**

अक्षद्यूतेन निर्वृत्त आक्षद्यूतिकं वैरम् ॥

**क्त्रेर्मम् नित्यम् ॥ ४ । ४ । २० ॥**

क्त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम् ॥ कृत्या निर्वृत्तं कृत्रिमम् । पक्त्रिमम् । नित्यग्रहणं योगविभागेन स्वातन्त्र्येण प्रयोगं वारयितुमिति तृतीये ड्वितःक्त्रिरित्यत्र निरूपितम् ॥ भावप्रत्ययान्तादिमप्वक्तव्यः ॥ * ॥ पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् ॥

**अपमित्ययाचिताभ्यां कक्कनौ ॥ ४ । ४ २१ ॥**

यथासंख्यम् । अपमित्येति ल्यबन्तमव्ययम् । अपमित्य निर्वृत्तमापमित्यकम् । याचितेन निर्वृत्तं याचितकम् ॥

**संसृष्टे ॥ ४ । ४ । २२ ॥**

दध्ना संसृष्टं दाधिकम् ॥

**चूर्णादिनिः ॥ ४ । ४ । २३ ॥**

चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ॥

**लवणाल्लुक् ॥ ४ । ४ । २४ ॥**

लवणेन संसृष्टो लवणः सूपः । लवणं शाकम् ॥

**मुद्गादण् ॥ ४ । ४ । २५ ॥**

मौद्ग ओदनः ॥

**व्यञ्जनैरुपसिक्ते ॥ ४ । ४ । २६ ॥**

दध्ना उपसिक्तं दाधिकम् ॥

**ओजःसहोम्भसा वर्त्तते ॥ ४ । ४ । २७ ॥**

औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ॥

**तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ ४ । ४ । २८ ॥**

द्वितीयान्तादस्माद्वर्तते इत्यस्मिन्नर्थे ठक् स्यात् ॥ क्रियाविशेषणत्वात् द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः ॥ प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः ॥

**परिमुखञ्च ॥ ४ । ४ । २९ ॥**

परिमुख वर्तते पारिमुखिकः । चात्पारिपार्श्विकः ॥

**प्रयच्छति गर्ह्यम् ॥ ४ । ४ । ३० ॥**

द्विगुणार्थं द्विगुणं तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।

वृद्धेर्वृधुषिभावो वक्तव्यः ॥ * ॥ वार्द्धुषिकः ॥

**कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ४ । ४ । ३१ ॥**

गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छत्यर्थे ॥ कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं । तत्प्रयच्छति कुसीदिकः । कुसीदिकी । एकादशार्थत्वादेकादश । ते च ते वस्तुनो दश चेति विग्रहेऽकारः समासान्त इहैव सूत्रे निपात्यते । दशैकादशिकी । दशैकादशान्प्रयच्छति इत्युत्तमर्ण एवेहापि तद्धितार्थः ॥

**उञ्छति ॥ ४ । ४ । ३२ ॥**

बदराण्युञ्छति बादरिकः ।

**रक्षति ॥ ४ । ४ । ३३ ॥**

समाजं रक्षति सामाजिकः ॥

**शब्ददर्दुरं करोति ॥ ४ । ४ । ३४ ॥**

शब्दं करोति शाब्दिकः । दार्दुरिकः ॥

**पक्षिमत्स्यमृगान्हन्ति ॥ ४ । ४ । ३५ ॥**

स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः ॥

**परिपन्थं च तिष्ठति ॥ ४ । ४ । ३६ ॥**

अस्मात् द्वितीयान्तात्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात् ॥ पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चोरः । परिपन्थं हन्ति पारिपन्थिकः ॥

**माथोत्तरपदपदव्यनुपदं धावति । ४ । ४ । ३७ ॥**

दण्डाकारो माथः पन्थाः दण्डमाथः । दण्डमाथं धावति दाण्डमाथिकः । पादविकः । आनुपदिकः ॥

**आक्रन्दाट्ठञ् च । ४ । ४ । ३८ ॥**

अस्माट्ठञ् स्याच्चाट्ठक् धावत्यर्थे ॥ आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः ॥

**पदोत्तरपदं गृह्णाति । ४ । ४ । ३९ ॥**

पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ॥

**प्रतिकण्ठार्थललामञ्च । ४ । ४ । ४० ॥**

एभ्यो गृह्णात्यर्थे ठक् ॥ प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

**धर्मं चरति । ४ । ४ । ४१ ॥**

धार्मिकः ॥ अधर्माच्चेति वक्तव्यम् ॥ * ॥ आधर्मिकः ।

**प्रतिपथमेति ठञ्च । ४ । ४ । ४२ ॥**

चाट्ठक् । प्रतिपथमेति प्रातिपथिकः ।

**समवायान्समवैति । ४ । ४ । ४३ ॥**

समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात्समवैतीत्यर्थे ॥ सामवायिकः । सामूहिकः ॥

**परिषदो ण्यः । ४ । ४ । ४४ ॥**

परिषदं समवैति पारिषद्यः ॥

**सेनाया वा । ४ । ४ । ४५ ॥**

ण्यः स्यात् पक्षे ठक् ॥ सैन्याः । सैनिकाः ।

**संज्ञायां ललाटकुक्कुट्यौ पश्यति । ४ । ४ । ४६ ॥**

ललाटं पश्यन्ति लालाटिकः सेवकः । दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठन इत्यर्थः । कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । कौक्कुटिको भिक्षुः । स हि पादविक्षेपपर्याप्तदेशपर्य्यंतमेव चक्षुः संयम्य गच्छति ॥

**तस्य धर्म्यम् । ४ । ४ । ४७ ॥**

आपणस्य धर्म्यं आपणिकम् ।

**अण् महिष्यादिभ्यः । ४ । ४ । ४८ ॥**

महिष्या धर्म्यं माहिषम् । याजमानम् ।

**ऋतो ऽञ् । ४ । ४ । ४९ ॥**

यातुर्धर्म्यं यात्रम् ॥ नराच्चेति वक्तव्यम् ॥ * ॥ नरस्य धर्म्या नारी ॥ विशसितुरिड्लोपश्चाञ्च वक्तव्यः । विशसितुर्धर्म्यं वैशस्त्रम् ॥ विभाजयितुर्णिलोपश्चाञ्च वाच्यः ॥ * ॥ विभाजयितुर्धर्म्यं वैभाजित्रम् ।

**अवक्रयः । ४ । ४ । ५० ॥**

षष्ठ्यन्ताट्ठक् स्यादवक्रयेऽर्थे ॥ आपणस्यावक्रय आपणिकः । राजग्राह्यं द्रव्यमवक्रयः ॥

**तदस्य पण्यम् । ४ । ४ । ५१ ॥**

अपूपाः पण्यमस्य आपूपिकः ॥

**लवणाट्ठञ् । ४ । ४ । ५२ ॥**

लावणिकः ।

**किसरादिभ्यः ष्ठन् । ४ । ४ । ५३ ॥**

किसरं पण्यमस्य किसरिकः । षित्वान्ङीष् । किसरिकी ।

किसर उशीर नलद इत्यादि किसरादयः सर्वे सुगन्धिद्रव्यविशेष-वाचिन. ॥

**शलालुनो ऽन्यतरस्याम् । ४ । ४ । ५४ ॥**

ष्ठन् पक्षे ठक् ॥ शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालुः सुगन्धिद्रव्यविशेषः ॥

**शिल्पम् । ४ । ४ । ५५ ॥**

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । मृदङ्गवादने प्रकृतेर्लक्षणा । मुख्यार्थवृत्तेस्त्वनभिधानान्न ॥

**मड्डुकझर्झरादणन्यतरस्याम् । ४ । ४ । ५६ ॥**

मड्डुकवादनं शिल्पमस्य माड्डुकः । माड्डुकिकः झार्झरः । झार्झरिकः ॥

**प्रहरणम् । ४ । ४ । ५७ ॥**

तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः ॥

**परश्वधाट्ठञ्च । ४ । ४ । ५८ ॥**

चाट्ठक् । पारश्वधिकः ॥

**शक्तियष्ट्योरीकक् । ४ । ४ । ५९ ॥**

शाक्तीकः । याष्टीकः ॥

**अस्ति नास्ति दिष्टं मतिः । ४ । ४ । ६० ॥**

तदस्येत्येव ॥ अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः ॥

**शीलम् । ४ । ४ । ६१ ॥**

अपूपभक्षणं शीलमस्य आपूपिकः ॥

**छत्रादिभ्यो णः । ४ । ४ । ६२ ॥**

गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्य छात्रः ॥

**कर्माध्ययने वृत्तम् । ४ । ४ । ६३ ॥**

प्रथमान्तात्षष्ठ्यर्थे ठक् स्यादध्ययने वृत्ता या क्रिया स चेत्प्रथमान्तस्यार्थः ॥ ऐकान्यिकः । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः । एकमन्यदिति विग्रहे तद्धितार्थेति समासः ॥

**बह्वच्पूर्वपदाट्ठच् । ४ । ४ । ६४ ॥**

प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । द्वादशापपाठा अस्य जाता इत्यर्थः ॥

**हितं भक्षाः । ४ । ४ । ६५ ॥**

तदस्मा इतीहापकृष्यते ॥ प्रकृतिश्च तदीयभक्षणे लाक्षणिकी । अपूपभक्षणं हितमस्मै आपूपिकः ॥

**तदस्मै दीयते नियुक्तम् । ४ । ४ । ६६ ॥**

नियुक्तं नियोगो अव्यभिचारः ॥ अग्रभोजनं नियतं दीयतेऽस्मै आग्रभोजनिकः ॥

**श्राणामांसौदनाट्टिठन् । ४ । ४ । ६७ ॥**

इकार उच्चारणार्थः । श्राणा नियुक्तं दीयतेऽस्मै श्राणिकः । श्राणिकी । मांसौदनग्रहणं संघातविगृहीतार्थम् । मांसौदनिकः । मांसिकः । औदनिकः ॥

**भक्तादणन्यतरस्याम् । ४ । ४ । ६८ ॥**

पक्षे ठक् ॥ भक्तमस्मै नियुक्तं दीयते भाक्तः । भाक्तिकः ॥

**तत्र नियुक्तः । ४ । ४ । ६९ ॥**

आकरे नियुक्त आकरिकः ॥

**अगारान्ताट्ठन् । ४ । ४ । ७० ॥**

देवागारे नियुक्तो देवागारिकः ॥

**अध्यायिन्यदेशकालात् । ४ । ४ । ७१ ॥**

निषिद्धदेशकालवाचकाट्ठक् स्यादध्येतरि ॥ श्मशानेऽधीते श्माशानिकः । चतुर्दश्यामधीते चातुर्दशिकः ॥

**कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति । ४ । ४ । ७२ ॥**

तत्रेत्येव ॥ वंशकठिने व्यवहरति वांशकठिनिकः । वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनः । तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः ॥

**निकटे वसति । ४ । ४ । ७३ ॥**

नैकटिको भिक्षुः ॥

**आवसथात् ष्ठल् । ४ । ४ । ७४ ॥**

आवसथे वसति आवसथिकः ॥ षित्वान्ङीष् । आवसथिकी । ठकोऽवधिः समाप्तः ॥

**प्राग्घिताद्यत् । ४ । ४ । ७५ ॥**

तस्मै हितमित्यतः प्राक् यदधिक्रियते ॥

**तद्वहति रथयुगप्रासङ्गम् । ४ । ४ । ७६ ॥**

रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ।

**धुरो यड्ढकौ । ४ । ४ । ७७ ॥**

न भकुर्छुरामिति न दीर्घः । धुर्यः । धौरेयः ॥

**खः सर्वधुरात् । ४ । ४ । ७८ ॥**

सर्वधुरं वहति सर्वधुरीणः ॥

**एकधुराल्लुक् च। ४। ४। ७९॥**

एकधुरीणः। एकधुरः॥

**शकटादण्। ४। ४। ८०॥**

शकटं वहति शाकटो गौः॥

**हलसीराट्ठक्। ४। ४। ८१॥**

हलं वहति हालिकः। सैरिकः।

**संज्ञायां जन्याः। ४। ४। ८२॥**

जनीशब्दादित्यर्थः॥ रूढ्यर्थं वचनम्। जनी वधूस्तां वहति प्रापयति जन्या। जामातुर्वयस्या॥

**विध्यत्यधनुषा। ४। ४। ८३॥**

द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः करणम्॥ पादौ विध्यन्ति पद्याः शर्कराः॥

**धनगणं लब्धा। ४। ४। ८४॥**

तृन्नन्तमेतत्। धनं लब्धा धन्यः। गणं लब्धा गण्यः॥

**अन्नाण्णः। ४। ४। ८५॥**

अन्नं लब्धा आन्नः॥

**वशं गतः। ४। ४। ८६॥**

वश्यः परेच्छानुसारी॥

**पदमस्मिन् दृश्यम्। ४। ४। ८७॥**

पद्यः कर्दमः। नातिशुष्क इत्यर्थः॥

**मूलमस्याबर्हि। ४। ४। ८८॥**

आबर्हणमाबर्हः उत्पाटनं तदस्यास्तीत्याबर्हि। मूलमाबर्हि येषान्ते मूल्याः मुद्गाः॥

**संज्ञायां धेनुष्या । ४ । ४ । ८९ ॥**

धेनुशब्दस्य षुगागमो यत्प्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम् ॥ धेनुष्या बन्धके स्थिता । ऋणप्रत्यर्पणपर्यन्तं या धेनुर्दोहनार्थं उत्तमर्णाय दीयते तस्याः सञ्ज्ञेयम् । अन्तोदात्तश्चायम् । यति तु तित्स्वरः स्यात् ।

**गृहपतिना संयुक्ते ञ्यः । ४ । ४ । ९० ॥**

गृहपतिर्यजमानस्तेन संयुक्तो गार्हपत्योऽग्निः । संज्ञायामित्यनुवृत्तेर्दक्षिणाग्न्यादौ न ॥

**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । ४ । ४ । ९१ ॥**

नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्य मूल्यम् । आनाम्यमभिभवनीयम् । घटादीनामुत्पत्त्यर्थं यत् द्रव्यं तन्मूलं तेन लाभाख्य द्रव्यमभिभूयते शेषीक्रियते । स च लाभाख्यो भाग एव । लोके तु यावता द्रव्येण घटादिकं विक्रीयते तत्र समुदाये निरूढोऽयम् । पोरदुपधादिति यति प्राप्ते आनाम्यमिति निपातनाण्ण्यत् । मूलेन समो मूल्यः पटः ॥ सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् । संज्ञायामित्यनुवृत्तेर्वयसा तुल्ये शत्रौ न ॥

**धर्मपथ्यर्थन्यायादनपेते । ४ । ४ । ९२ ॥**

धर्मादनपेतं धर्म्यम् । पथ्यम् । शास्त्रीयात्पथोऽनपेतमित्यर्थः । अर्थ्यम् । न्याय्यम् । संज्ञायामित्यनुवृत्तेर्नेह । पथोऽनपेतश्चोरः । मार्गादनपेत इत्यर्थः ॥

**छन्दसो निर्मिते । ४ । ४ । ९३ ॥**

छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः ॥

**उरसो ऽण् च । ४ । ४ । ९४ ॥**

चाद्यत् । संज्ञायामित्येव । उरसा निर्मितः पुत्र औरसः । उरस्यः ॥

**हृदयस्य प्रियः । ४ । ४ । ९५ ॥**

हृद्यो देशः । हृदयस्य हृल्लेखयदण्लासेष्विति हृदादेशः ॥

**बन्धने चर्षौ । ४ । ४ । ९६ ॥**

हृदयशब्दात्षष्ठ्यन्ताद्बन्धने यत्स्याद्वेदेऽभिधेये ॥ हृदयस्य बन्धनो हृद्यो वशीकरणमन्त्रः ॥

**मतजनहलात्करणजल्पकर्षेषु । ४ । ४ । ९७ ॥**

मतं ज्ञानं तस्य करणं भावः साधनं वा मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः ॥

**तत्र साधुः । ४ । ४ । ९८ ॥**

अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः ॥

**प्रतिजनादिभ्यः खञ् । ४ । ४ । ९९ ॥**

प्रतिजनं साधुः प्रातिजनीनः । सांयुगीनः । सार्वजनीनः । वैश्वजनीनः ॥

**भक्ताण्णः । ४ । ४ । १०० ॥**

भक्ते साधवो भाक्ताः शालयः ॥

**परिषदो ण्यः । ४ । ४ । १०१ ॥**

पारिषद्यः । परिषद इति योगविभागाण्णोऽपि । पारिषदः ।

कथादिभ्यष्ठक् । ४ । ४ । १०२ ॥

कथायां साधुः काथिकः ॥

गुडादिभ्यष्ठञ् । ४ । ४ । १०३ ॥

गुडे साधुर्गौडिक इक्षुः । साक्तुको यवः ॥

पथ्यतिथिवसतिस्वपतेर्ढञ् । ४ । ४ । १२४

पथि साधु पाथेयम् । आतिथेयः । वसनं वसतिस्तत्र साधुः वासतेयी रात्रिः । स्वापतेयं धनम् ॥

सभाया यः । ४ । ४ । १०५ ॥

सभ्यः ॥

ढश्छन्दसि । ४ । ४ । १०६ ॥

सभेयो युवा ॥

समानतीर्थे वासी । ४ । ४ । १०७ ॥

साधुरिति निवृत्तम् । वसतीति वासी । समाने तीर्थे गुरौ वसतीति सतीर्थ्यः ।

समानोदरे शयित ओ चोदात्तः । ४ । ४ । १०८ ॥

समाने उदरे शयितः स्थितः समानोदर्यो भ्राता । तित्स्वरापवाद ओकारस्योदात्तः ॥

सोदराद्यः । ४ । ४ । १०९ ॥

ओ चोदात्त इति नानुवर्त्तते । तेन प्रत्ययस्वरः । सोदर्यः अर्थः प्राग्वत् ॥

भवे छन्दसि । ४ । ४ । ११० ॥

सप्तम्यन्ताद्भवार्थे यत् । मेध्याय च विद्युत्याय च । यथायथं शैषिकाणां घादीनामणादीनाञ्चापवादोऽयं यत् । पक्षे- तेऽपि

भवन्ति । सर्वविधीनां छन्दसि वैकल्पिकत्वात् । तद्यथा । मुञ्जवान्नाम पर्वतः । तत्र भवं: मौञ्जवतः । सोमस्येव मौञ्जवतस्य भक्षः । आ चतुर्थसमाप्तेश्छन्दोऽधिकारः ॥

**पाथोनदीभ्यां ड्यण् । ४ । ४ । १११ ॥**

तमुत्वा पाथ्यो वृषा । चनो दधीत नाद्यो गिरो मे । पाथसि भवः पाथ्यः । नद्यां भवः नाद्यः ॥

**वेशन्तहिमवद्भ्यामण् । ४ । ४ । ११२ ॥**

भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा ।

**स्रोतसो विभाषा ड्यड्ड्यौ । ४ । ४ । ११३ ॥**

पक्षे यत् । ड्यत्ड्ययोस्तु स्वरे भेदः ॥ स्रोतसि भवः स्रोत्यः । स्रोतस्यः ।

**सगर्भसयूथसनुताद्यन् । ४ । ४ । ११४ ॥**

अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । योनः सनुत्य उत वा जिघत्नुः । नुतिर्नुतम् । नपुंसके भावे क्तः । सगर्भादयस्त्रयोऽपि कर्मधारयाः । समानस्य छन्दसीति सः । ततो भवार्थे यन् । यतोऽपवादः ॥

**तुग्राद् घन् । ४ । ४ । ११५ ॥**

भवेऽर्थे । पक्षे यदपि छान्दसत्वात् । आवः शमं वृषभं तुग्र्यास्विति बह्वृचाः । तुग्रियास्विति शाखान्तरे । धनाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति वृत्तिः ॥

**अग्राद्यत् । ४ । ४ । ११६ ॥**

**घच्छौ च । ४ । ४ । ११७ ॥**

चाद्यन् । अग्रे भवोऽग्र्यः । अग्रियः । अग्रीयः ॥

**समुद्राभ्राद्घः । ४ । ४ । ११८ ॥**

समुद्रिया अप्सरसो मनीषिणाम् । नानदतोऽभ्रियस्येव घोषाः ॥

**बर्हिषि दत्तम् । ४ । ४ । ११९ ॥**

बर्हिष्येषु निधिषु ॥

**दूतस्य भागकर्मणी । ४ । ४ । १२० ॥**

भागोंऽशः । दूत्यम् ।

**रक्षोयातूनां हननी । ४ । ४ । १२१ ॥**

या तेऽग्ने रक्षस्या तनूः । यातव्या ॥

**रेवतीजगतीहविष्याभ्यः प्रशस्ये । ४ । ४ । १२२ ॥**

बाहुलकाद्भावे क्यप् । प्रशंसने यत्स्यात् । रेवत्यादीनां प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् ।

**असुरस्य स्वम् । ४ । ४ । १२३ ॥**

असुर्यं देवेभिर्धायि विश्वम् ।

**मायायामण् । ४ । ४ । १२४ ॥**

आसुरी माया ॥

**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः । ४ । ४ । १२५ ॥**

वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः । ऋतव्याः ।

**अश्विमानण् । ४ । ४ । १२६ ॥**

आश्विनीरुपदधाति । अश्वशब्दादतइनिठनावितीनिः । तदन्तान्मतुप् । ततोऽणि कृते मतोश्च लुकि कृते इनण्यनपत्ये इति प्रकृतिभावः ॥

**वयस्यासु मूर्ध्नो मतुप् । ४ । ४ । १२७ ॥**

तद्वानासामिति सूत्र सर्वमनुवर्तते । मतोरिति पदमावर्त्य पञ्चम्यन्तं बोध्यम् । मन्तुबन्तो यो मूर्धशब्दस्ततो मतुप् स्यात् प्रथमस्य मतोर्लुक् च ॥ वयस्वानुपधानो मन्त्र आसामिष्टकानां तासु वयःशब्दवन् मन्त्रोपधेयास्विष्टकास्वित्यर्थः । यस्मिन्मन्त्रे मूर्द्धवयः-शब्दौ स्तस्तेनोपधेयासु । मूर्धन्वतीरुपदधातीति प्रयोगः । अनो नुट् ॥

**मत्वर्थे मासतन्वोः । ४ । ४ । १२८ ॥**

नभोऽभ्रं तदस्मिन्नस्तीति नभस्यो मासः । ओजस्या तनूः । मासतन्वोः किम् । मधुमता यागेण चरन्ति ॥ अनन्तरार्थे चेति वक्तव्यम् ॥ * ॥ मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः ॥ लुगकारेकाररशब्दाश्च प्रत्यया वक्तव्याः ॥ * ॥ मधुः । तपः । नभः । मधुतपोनभांसि विद्यन्तेऽस्मिन्निति यतो लुक् । अन्त्ययोः क्लीबत्व छान्दसम् । अकार । इडन्नं साऽस्मिन्नस्ति इषः । ऊर्गस्मिन्नस्ति ऊर्जः । इकार । शोचनं शुक् आतपाधिक्येन देहशोषः । साऽस्मिन्नस्ति शुचिः । रशब्द । शुक्रः । अयस्मयादित्वाज्ज-श्त्वं न ॥

**मधोर्ञ च । ४ । ४ । १२९ ॥**

मत्वर्थे । मधव्यः । माधवः ।

**ओजसोऽहनि यत्खौ । ४ । ४ । १३० ॥**

मत्वर्थे इत्येव । ओजस्यमहः । ओजसीनं वा ॥

**वेशोयशआदेर्भगाद्यल्खौ । ४ । ४ । १३१ ॥**

यथासंख्यं नेष्यते । मत्वर्थे इत्येव । वेशो बलं तदेव भाग

इति कर्मधारयः । वेशोभग्यः । वेशोभगीनः । यशोभग्यः । यशोभगीनः ॥

**पूर्वैः कृतमिनयौ च । ४ । ४ । १३२ ॥**

पूर्वशब्दात्तृतीयाबहुवचनान्तात्कृतमित्यर्थे इन इति य इति च प्रत्ययः स्यात् ॥ गम्भीरेभिः पथिभिः पूर्विणेभिः । पूर्वैः कृतपूर्विणास्तैरित्यर्थः । ये ते पन्था सवितः पूर्व्यासः । पूर्वैः कृता इत्यर्थः ॥

**अद्भिः संस्कृतम् । ४ । ४ । १३३ ॥**

यस्येदमप्यं हविः ।

**सहस्रेण संमितौ घः । ४ । ४ । १३४ ॥**

सहस्रियासो अपां नोर्मयः । सहस्रेण तुल्या इत्यर्थः ॥

**मतौ च । ४ । ४ । १३५ ॥**

सहस्रशब्दान्मत्वर्थे घः स्यात् । सहस्रमस्यास्तीति सहस्रयः ॥

**सोममर्हति यः । ४ । ४ । १३६ ॥**

सोम्यो ब्राह्मणः । यज्ञार्ह इत्यर्थः ॥

**मये च । ४ । ४ । १३७ ॥**

सोमशब्दात् यः स्यान्मयडर्थे ॥ आगतविकारावयवप्रकृता मयडर्थाः । सोम्यं मधु । सोममयमित्यर्थः ॥

**मधोः । ४ । ४ । १३८ ॥**

य इति निवृत्तम् । मधुशब्दान्मयडर्थे यत्स्यात् । मधव्यः मधुमय इत्यर्थः ॥

**वसोः समूहे च । ४ । ४ । १३९ ॥**

कुटिलमतिभिः क्लृप्ता बाह्यैः कुदृष्टिभिरप्यसौ
कथकपरिषद्धौरेयाणामपि क्षणकर्कशा ।
प्रलपनगुणीभूतालोकप्रकाशनपत्रला
युवतिहृदयक्रूरा युक्तिर्युनक्त्यमितं भयम् ॥ २० ॥

शिष्यः—भगवन् मय्यतिस्नेहेन नूनमियमतिशङ्का ।

त्वदादर्शितसर्वार्थे त्वन्निदेशे व्यवस्थिते ।
कथङ्कथकमानी स्यात्कश्चिदन्यो मयि स्थिते ॥ २१ ॥

गुरुः—भद्र, इदमपि पुनर्मन्वीथाः

शिष्यः—अनुगृह्णन्तु भगवन्तः

गुरुः—संक्षिप्तं विस्तृतं वा सरलसमुचितं सावधानप्रियं वा
प्राधान्येन प्रणीतं परफणितिपरिष्कारवृत्त्या स्थितं वा ।

कुटिलेति—कुटिला मति येषा तैः बाह्यैः कुदृष्टिभिरपि क्लृप्ता कथकाना वाव दूकानां परिषदो धौरेयाणा धूर्वहाणा क्षणकर्कशा अनेन क्षणान्तर एव तस्या युक्त्याभासत्व प्रतीत स्यादिति सूच्यते । प्रलपनं निरर्थकः प्रलाप. तस्य गुणभूतमङ्गभूतं यदलोक तस्य प्रकाशनेन पत्रला पत्रवती विस्तृतेत्यर्थः युवतीनां हृदयमिव क्रूरं यथोक्तम् ।

किं क्रूरं स्त्रीहृदय ततोऽपि किं क्रूरमगनाहृदयं ।
क्रूरात्क्रूरतरं किं पतिसुतधनहीनमङ्गनाहृदयं ॥

इति । एवभूता युक्तिः अमितम्भयं युनक्ति योजयति जनयतीत्यर्थ. ॥ २० ॥

अतिस्नेहकृतेयमतिशङ्केति कथमित्यत आह ।

त्वयेति—आदर्शितः आसमन्तात् दर्शितस्सन्मार्गः सतां पन्थाः यस्मै तस्मिन् त्वन्निदेशे त्वदाज्ञाया व्यवस्थिते मयि स्थिते सति अन्य. कश्चित् कथकमानी कथकतया भिमानी कथं स्यान्न स्यादेवेत्यर्थ ॥ २१ ॥

पञ्चषा. प्रबन्धाः प्राबन्धिपतेति पूर्व प्रस्तुतानां स्वप्रबन्धानां वेदान्तैककण्ठ्य वदति ।

संक्षिप्तमिति—सक्षिप्तं सगृहीतं विस्तृत वास्तु सरलसमुचितं सरलानां समुचितं सावधानाना प्रिय वास्तु प्राधान्येन प्रधानतया प्रणीतं वा परस्य फणितीनां परिष्कारवृत्त्या परिष्कारोऽलङ्कारः व्याख्या । व्याख्या हि पुरुषमलङ्कार इव मूलमल ङ्करोति । तद्वृत्त्या तत्तद्रीत्येत्यर्थः तया स्थितं वास्तु । शिक्षा शासनं तस्या यत्सौकय

शिक्षासौकर्यतुष्टिप्रचितगुरुजनानुग्रहेद्धं सुधीभि-
श्श्रद्धेयन्नाथजुष्टश्रुतियुवतिशिरोभूषणं भाषणन्नः ॥ २२ ॥

शिष्यः—किमुच्यते, उपनिषदुपघ्नभूतानि खलु भगवतो भाषितानि तथाहि

अनुदिनमनपायस्नेहदत्तावसेकै
स्सुमतिभिरनुभाव्यश्शोभनायान्दशायां ।
शरणमुपगतानां प्रीणनार्थं भवद्भि
र्भवकलुषनिशीथे भावितोभाष्यदीपः ॥ २३ ॥

अपि च ।

असत्तामुच्छेत्तुं प्रकटयितुमीशप्रसदनं
तमः क्षेप्तुं तत्वप्रमितिसुखमुच्छृङ्खलयितुं ।

---

सुकरत्वं तेन तुष्टिस्तोषस्तया प्रचितः अभिवृद्धः गुरुजनस्य यो अनुग्रहः तेनेद्धं समृद्धं सुधीभिः शोभनबुद्धिभि श्रद्धेयं विश्वसनीय नाथेन प्रतिपाद्येन भगवता जुष्टाया-श्रुतियुवतेः शिरसो भूषणं नः अस्माकं भाषणम् ॥ २२ ॥

अत्र यतीन्द्रवेषो गुरुः भगवान्श्रामानुजार्यः । शिष्यवेषो वादश्च भगवान्वेदान्ताचार्यः । तत्प्रणीता प्रबन्धाश्च वेदान्तसारादयः तत्र सङ्क्षिप्तमित्यादिशब्दवाच्याः वेदान्तसारश्रीभाष्यदीपवेदार्थसंग्रहगद्यत्रयगीताभाष्यरूपाः प्रबन्धा इति भाव्यम् ॥

उपनिषदा उपघ्नभूतानि आश्रयभूतानि । तदेव प्रतिपादयति ।

अनुदिनमिति—अनुदिनं दिनेदिने अनपायः अपायो निर्वाणं तद्रहितः अनेने तरदीपव्यावृत्तिः स्नेहेन प्रमाणतैलेन च दत्तः अवसेकः सेचनं यैस्तैः सुमतिभि. अनुभाव्यः शरणमुपगतानां शरणागतानां गृहगताना च तत्वसन्दर्शनार्थं तत्वाना चिदचिदीश्वराणा ज्ञानार्थं च भवकलुष ससारजनितदोष तदेव निशीथं मध्यरात्र तस्मिन शोभनाया समीचीनाया दशाया समये वर्त्ती भाष्यमेव दीपः भावितः आरोपित इत्यर्थ ॥ २३ ॥

पुनरपि भाष्यस्य सकृत्पठनमपि नानाविधातिशयहेतुरिति तदेव स्तौति ।

असत्तामिति—असत्ता भगवत्स्वरूपाद्यज्ञानहेतुकमसत्व । ब्रह्मस्वरूपज्ञानाज्ञानाभ्यां हि सत्वासत्वे भवतः । श्रूयते हि ।

असन्नेव सभवति । असतब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति ।

नामुच्छेत्तु ईशस्य परमात्मनः प्रसदनं प्रसादः ।

अमार्गादाहर्तुं पथि च पदमाधातुमिह न-
स्त्वदादिष्टं शास्त्रं प्रभवति सकृद्भावितमपि ॥ २४ ॥
तथापि पारिप्लवमतिरहमिह किमप्यधिगतप्रमुषितं पृच्छामि ।

गुरुः—किन्तत्

शिष्यः—

आदिश्य स्वयमन्यथा नियमयन्नाप्तः कथं कल्पितः

गुरुः—अहो नुखलु सूक्ष्मार्थानुयोगकुशलता ।

शिष्यः—

सामग्रीवशदुर्निवारवृजिने शिष्टानिवृत्तिः कथं ।

---

एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपाकाप्युपजायते ॥

इत्यादिपूक्तं कृपाविशेषमित्यर्थः । स खल्वेवमाह ।

तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसां ॥ इति ।

तत्प्रजनयितुं तमः अज्ञानजन्यमान्ध्य तत्वेप्सुमुत्सारयितुं तत्वाना चिदचिदीश्वरस्वरूपाणा प्रमित्या याथात्म्यानुभवेन यत्सुखं तदुच्छ्रखलयितुं निर्गलं कर्तुं अमार्गात् विरुद्धमार्गात् संसारवर्धकात् स्वाधिकारानुरूपात देवतान्तरभजनादिरूपादित्यर्थः आहर्तुं आकर्षयितुं पथि सन्मार्गे पदमाधातु निवेशयितुं च त्वया आदिष्ट उपदिष्ट शास्त्रं श्रीभाष्यरूपं शासनाच्छास्त्रं सकृद्भावित चिन्तितमपि प्रभवति शक्नोति ॥ २४ ॥

तथापि श्रीभाष्यस्यैवविधवैभवत्वेपि पारिप्लवा चञ्चला परितः प्लवत इति पारिप्लवा मतिर्यस्य स तथा । अधिगतप्रमुषित पूर्वं ज्ञातमिदानी विस्मृतम् ।

आदिश्येति—अहरहस्सन्ध्यामुपासीत ।

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियं ।
प्रिय च नानृतं ब्रूयादेवं धर्मस्सनातनः ॥

इत्यादिभिः शास्त्रैः कृत्याकृत्ये स्वयमुपदिश्यान्यथाविहितमकर्तुं निषिद्धं कर्तुं च नियमयन्नन्तर्यामितया प्रेरयन्भगवान्कथमाप्तः कल्पितः महर्षिभिरिति शेषः । आप्तत्वे ह्यादेशानुगुणमेव प्रेरणं कार्यमिति भावः । सामग्रीवशादारम्भकपापरूपवशाकारणवशात् दुर्निवारे वारयितुमशक्ये वृजिने दुरिते निवृत्तिः एव न कुर्यादिति निवारणं कथं शिष्टा अनुशिष्टा आरम्भकपापस्य प्राबल्यात् स्वकार्यदुरितजनकत्वमनिवार्य्यमित्याशयः । स्वेच्छया स्वशब्दोऽत्र भगवत्परः भाविनस्य उत्पादितस्य दुष्कृतस्य च दण्डः

गुरुः-तदपि सूक्ष्मात्सूक्ष्मतरमनुयुज्यते ।

शिष्यः-

स्वेच्छाभावितदुष्कृतस्य च कथं दण्डस्स्वयं पातितः

गुरुः-

त्रिष्वप्यत्र न काचिदस्तिविहृतिः कर्मोपधौसावधौ॥२५॥

शिष्यः-(सहर्षं) परिमितगहनगम्भीरमिदं पटुमतिनिर्धारणीयं भाषित

शिक्षा स्वयस्वेनैव कथं पातित प्रापितः स्वेच्छयैव दुरितमुत्पाद्य तच्छिक्षार्थं नरकादि प्राप्तिं च कथं करोतीति हृदयं । एवं शिष्येणोक्तस्य प्रश्नत्रयस्यैकमेवोत्तरमाह त्रिष्विति-। कर्मोपधौ कर्मरूपोपधौ सावधौ उत्तरावधि सहिते सति अत्र त्रिष्वपि प्रश्नेषु काचिदपि विहतिरनुपपत्तिर्नास्ति । इदमत्राकूतं भगवान्नारायणः सृष्टिकाले करचरणादिविधुरान्प्रवृत्तिनिवृत्त्यक्षमान्जीवानालोक्य दयमानमानसस्तदनुजिघृक्षया करणकलेबरप्रदानसमकालमेव तेषां कर्तृत्वादि शक्तिं शास्त्रमपि ददाति । तेच तद्दत्तया तया स्वस्व पूर्व कर्मानुगुणं ज्ञानचिकीर्षाप्रयतनानिभजन्ते । तेषु च ये पूर्वसुकृतवशाद्दैवप्रकृतिमासाद्य तदानुगुण्येन वर्तन्ते तानेव एव साधुकर्म कारयति त यमेभ्यो लोकेभ्यः उन्निनीषतीत्युक्तप्रकारेण सत्कर्मनिष्टान्करोति । येतु प्राक्तनदुरितवशादासुरी प्रकृतिं गत्वा तदनुगुणं वर्तन्ते तानेव एवासाधुकर्म कारयति तं यमधोनिनीषतीत्युक्तरीत्या पाप कर्माभिरतान्करोति । अतः आप्तस्याप्युपदेष्टुरीश्वरस्य तत्तत्कर्मानुगुणानुमति दानपूर्वकमन्यथानियमनं नानुपपन्नं पुण्यपापरूप तत्तदारम्भककर्मोपाधेरुत्तरावधि साहित्यमेव तत्रहेतुः । आरम्भककर्मणामपि स्वस्वकार्योत्पत्तिसमकालमेव विनाशात् । दृश्यते हि घटध्वंसक्षण एव मुद्गराभिघातस्य विनाशः । अतः आद्यप्रश्ने नानुपपत्तिः द्वितीये आरम्भकाणामपि केषांचित्कर्मणां प्रायश्चित्तादिना विनाशसम्भवात् तत्सजातीय कर्मान्तरनिवृत्त्यनुशासनमुचितमिति नविहतिः तृतीयेपि स्वेच्छानामादौ कृतोपेक्षा तन्मात्रेणैव स्वैरकृतस्य दुरितस्यानुभवैकनाश्यत्वात्तत्फलादि प्रापणाय नरकादिप्रापणं न्याय्यमिति नानुपपत्तिः इति । एतत्सर्वमभिप्रेत्योक्तमभियुक्तैः (श्री वरदाचार्य)।

आदावीश्वरदत्तयैवपुरुष स्वातन्त्र्यशक्त्यास्वयं
तत्तज्ज्ञान चिकीर्षणप्रयतनान्युत्पादयन्वर्तते ।
तत्रोपेक्ष्य तथानुमत्य विदधत्तन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति ततस्सर्वस्यपुंसोहरिः ॥ २५ ॥

इति ।

परिमितत्वादेव गहनं दुरवगाहं गम्भीरं बहुविधतात्पर्यं सभासदः सभायां वर्त्तमानान् इदमेव युष्मत्प्रबन्धवैभवमेव श्रावयामि

भगवतः । इदमेव सभासदःश्रावयामि ।

इदं प्रथमसम्भवत्कुमतिजालकूलङ्कषा
मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तय-
श्चिरन्तनसरस्वती चिकुरबन्धसैरन्ध्रिकाः ॥२६॥

अपि च ।

चिन्ताशेषदुरर्थदन्तुरवचः कन्धाशतग्रन्थिला
स्सिद्धान्तानसमिन्धते यतिवरग्रन्थानुसन्धायिनि ।
मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः
किंकुल्याङ्कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥ २७ ॥

---

इदमिति– ॥ इद प्रथमतया सम्भवन्तः नूतनतयोत्पाद्यमानाः येकुमतया तेषां जालं तस्य कूलंकषाः उच्छेदका मृषामतं ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनां मतं तदेव विषानलः तेनज्वलितानां दह्यमानानां जीवानां जीवातवः जीवनौषधभूता· चिरन्तना अनादि सिद्धा सरस्वती वेद ।

अनादिनिधनाह्येषा वागुत्सृष्टास्स्वयंभुवा ।
आदौ वेदमयी दिव्यायतस्सर्वाः प्रसूतयः ॥

इतिस्मृतेः । तस्याश्चिकुरबन्धे कुन्तलबन्धने उपनिषदां ब्रह्मैकपरताप्रतिपादनेत्यर्थः । सैरन्ध्रिकाः प्रसाधिकाः यतिपुरन्दरस्य यतीश्वरस्योक्तय. प्रबन्धाः अक्षरं क्षरणं शैथिल्य तद्रहितं अमृतं सुधा मोक्ष च क्षरन्ति प्रसुवते ॥ २६ ॥

एतत्प्रबन्धेषु परिचयवतामग्रे सिद्धान्तान्तराणि नस्फुरन्तीत्याह

चिन्तेति– ॥ यतिवरस्य ग्रन्थाननुसन्धत्त इति यतिवर ग्रन्थानुसन्धायी तस्मिन् चिन्ताशेषाः चिन्तामात्रशेषा ये दुरर्थाः दुष्टार्थाः तैः दन्तुराणि विषमाणि यानि वचांसि तेषां कन्धाशतैः शकलशतैः ग्रन्थिलाः ग्रन्तिमन्तः सिद्धान्ताः नसमिन्धतेन वर्धन्ते यतिवरग्रन्थानुसन्धायिनः इतरसिद्धान्तान्नबहुमन्यत इत्यर्थः । उक्तमर्थं दृष्टान्तेन दृडयति मुक्तेति– । मुक्ताना मौक्तिकाना शुक्तिभि. विशुद्धाया सिद्धतटिनी म न्दाकिनी तया चूडाल चूडावत् चूडापद शिर· यस्य स तथोक्तः खण्डपरशु शंभुः मण्डूकाना भेकानां मञ्जूषिका पेटिकामिव स्थानभूता क्षुद्रसारिणी कलयेत किं वीक्षेत किं नवीक्षतेत्यर्थः । विबुधतरङ्गिणी क्षुद्रसारिण्योर्यदन्तर तदन्तरं यतीन्द्रकृतान्तेतरमतयोरप्यस्तीति भावः ॥ २७ ॥

भगवन्नपरिमितबहुमतावष्टब्धे जगति परिमितमेतद्भवन्मतमिति पारिषदपार्श्ववर्त्तिनः केचित्प्रलपन्ति । प्रतिवदामितावदेतान् । (परिवृत्यावलोक्य)

भोभो देवानां प्रियाः ।

कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर
ग्रहिलमनसः पश्यन्त्यल्पां यतीश्वरभारतीं ।
विकटमुरभिद्वक्षःपीठी परिष्करणोचितः
कुलगिरि तुलारोहेभावी कियानिव कौस्तुभः॥२८॥

अपि च ।

स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं
कुमतिफणितिक्षोभक्षीभाः क्षिपन्तु भजन्तुवा ।
रसपरिमलश्लाघा घोषस्फुटत्पुटभेदनं
लवणवणिजः कर्पूरार्घं किमत्यभिमन्वते ॥ २९ ॥

---

देवाना प्रियाः छागा तद्वन्मूढाइत्यर्थः ।

कुमतीति– ॥ कुमतिभिः कुत्सितबुद्धिभिः विहितानां ग्रन्थानां ग्रन्थिर्मन्ति प्रभूतानि च यानि मतान्तराणि तेषुग्रहिलानि साभिलाषानि मनासि येषां ते तथोक्ताः यतीश्वरभारती यतीन्द्रमतं अल्पा पश्यन्तु । तावतास्यनहैन्यसिद्धिरिति भावः । तदेव दृष्टान्तेनोपपादयति विकटेति–। विकटा विशाला मुरभिदो यावक्षः पीठी तस्याः परिष्करणे अलङ्कारे उचितः योग्यः कौस्तुभः कुलगिरिणासह तुलारोहे कियानिवभावी गरिमणानतुल्योभवति । तथापि मधुमथनवक्षस्थलालङ्कृतियोग्यतारूपमाहात्म्य शालीहि कौस्तुभः तथेदमपि यतीन्द्रमतं परिमितमपि सर्वातिशायीति भावः ॥ २८ ॥

अस्यमतान्तरस्थैः परिग्रहे त्यागे च गुणदोषौनास्य इत्याह अपि चेति–।

स्थविरेति–। स्थविराः वृद्धाः पुरातनाः । अनेन नित्यत्व पौरुषेयत्वं च ते चते निगमस्तोमाश्च निगमाना स्तोमाः राशयः । अनेन आनन्त्य सूच्यते ।

अनन्ता वै वेदा इति श्रुतेः वेदानामानन्त्य । तेषां स्थेया संशयविषयनिश्चायिकां यतीश्वरपद्धति यतीन्द्रमार्ग तत्प्रवर्तितं मतं कुमतीना फणितिभिः य क्षोभः कालुष्य तेन क्षोभा मत्ताः मूढाइति यावत् क्षिपन्तु त्यजन्तु भजन्तुवा । तत्कृतौ त्याग स्वीकारावकिञ्चित्करावित हृदयं । तेषा मेतन्मतगौरवाज्ञानं स्वाभाविकमित्येतद्दृष्टान्तेन दृढयति रसेति–।

(कर्णन्दत्वा) किं ब्रूथ । नवीनमेतद्भवतो मतमिति ।

(सहस्तास्फालनं, विहस्य)

किञ्चित्केनापि दृष्टं प्रतिहतविषयन्त्वेन तत्तेनतैस्तै
र्द्वं चोपादायिषातां द्वितयमपिसदित्यप्रमत्तोनवक्ता ।
इत्थं सत्येकभक्तैरितरपरिहृतौ नव्यवस्थानसिद्धिः
प्रत्येतव्यन्तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा ॥३०॥

किंच ।

तदात्वे नूतनं सर्वमायत्याञ्चपुरातनं ।
नदोषायै तदुभयन्नगुणाय च कल्पते ॥ ३१ ॥

---

रसपरिमलयोः श्लाघया प्रशंसया योघोष' कोलाहलः । अयं रसस्सर्वातिशायी असौपरिमलस्सर्वोत्तरइति तयो. प्रशंसया यो नागरिकाणा घोष. । तेन स्फुटद्विदीर्यत् पुटभेदनं पत्तनं यस्यतं कर्पूरार्घ कर्पूरमूल्य लवणवणिज लवणविक्रेतारः किमित्यभि मन्वतेन किञ्चिदपि जानन्तीत्यर्थ ॥ २९ ॥

ते यत्किञ्चिद्वदन्तीति कृत्वा तदाकर्णनाय कर्णं दत्वा तदेवानुवदति किं ब्रूथेति–

किञ्चिदिति–॥ केनापि पुरुषेण किञ्चित्प्रमेयं यत्र कुत्राप्युपाधौ दृष्टं ज्ञातं भवति तत्तेनैव पुरुषेण तत्रैव प्रतिहतविषयं बाधितस्वरूपं भवति येवादिनः यत्किञ्चि-द्वदन्ति ते च तैस्तैस्ततोपि कुशलैः प्रतिहतविषयाः दृष्टाः केनचित्किञ्चित्प्रतिपच' अन्येन वान्यत्तद्द्वेचोपादायिषातां स्वीकृतेभवतां उभयमपि सदितिवक्ता अप्रमत्तो न प्रमत्त एवैवं वदतीत्यर्थः । इत्थ सति एकभक्ते. एकस्मिन् प्रीतेर्हेतौ इतरपरिहृतौ इतरस्य परित्यागे व्यवस्थानस्य व्यवस्थायास्सिद्धिर्न । एकस्मिन्प्रीत्या इतरपरित्यागे स्वीकृते वा परित्यागोस्त्विति व्यवस्थाया असिद्धिः । तत्तस्मात्कारणात् पटुतरमतिभिः अर्थ्यं अर्था दनपेतं यथार्थमित्यर्थः प्रत्येतव्य परमार्थतया विश्वसनीयं तत्प्राक्तन पुरातनं वास्तु नूतन वास्तु ॥ ३० ॥

पुनरपि नवीनत्वानवीनत्वयोस्सर्वसाधारण्येन गुणदोषाप्रयोजकत्वमाह ।

तदात्व इति–॥ तदात्वे तदनीमुत्पत्तिसमये सर्वं नूतनं आयत्यामुत्तरकाले सर्वं पुरातनं च भवति एतदुभयं नूतनं पुरातनं च दोषाय न कल्पते समर्थनं न भवति गुणाय च न कल्पते ॥ ३१ ॥

गुरुः–किमेतैः किम्पचानैः । अपरे पुनरर्थसंस्पर्शिदोषवादिनः ।
प्रतिक्षिप्यन्ताम्

शिष्यः–भगवन्, निरस्तनिखिलदोषगन्धे भवन्मते कथमर्थसंस्पर्शिनो
दोषाः स्वप्नेऽपि केनचिदुद्भाव्येरन् ।
इह हि ।

**श्रुतिश्रेणीचूडापदबहुमते तावकमते**
**स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः ।**
**स्वहस्तेनोत्क्षिप्तैस्स खलु निजगात्रेषु बहुलं**
**गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥ ३२ ॥**

किञ्च । अभञ्जनीयः खल्वयमशेषैरपि भगवत्सिद्धान्तः । इह किल मोघप्रलापा एव मूढाः प्रतिवावदूकाः ।

**निमीलयतु लोचने न हि तिरस्कृतो भास्कर**
**श्श्रवस्स्थगयतु स्थिरं परभृतः किमुध्वांक्षति ।**

---

किंपचानैः क्षुद्रैः किरातैः किं निरस्तैरनिरस्तैर्वा किं फलमिति भाव ।

एवं प्रबन्धसंस्पर्शिदोषवादिनः प्रत्युक्ताः । अथार्थसंस्पर्शिदोषवादिनः प्रतिक्षिप्यन्त इति विवेकः गुरुस्तदेवाहापरे पुनरिति–।

निरस्तदोष इति विशेषणं साभिप्रायं कथमुद्भाव्येरन् नोद्भाव्येरन्नेव ॥

**श्रुतीति–॥** श्रुतीना श्रेणयः तासां चूडापदे शिरोभि. वेदान्तैः बहुमते पूजिते लक्ष्मणमते यतीन्द्रमतस्य वेदान्तबहुमतत्वं स्वाभिप्रायप्रकाशनादिनिध्येयं । स्वपक्षस्थान् स्वमतानुबन्धिभि दोषान् वितथमतिः व्यर्थबुद्धिर्य आरोपयतिस्सः स्वहस्तेनोत्क्षिप्तैः उद्धृतैः निजगात्रेषु बहुलं यथा तथा गलद्भिः पतद्भिः जम्बालैः पङ्कैः गगनतलमालिंपति खलु अशेषैर्मतान्तरस्थैरिति शेषः ॥ ३२ ॥

अभञ्जनीयः भक्तुमयोग्यः । मोघः प्रलापोयेषा तेतथोक्ताः । प्रतिवावदूकाः प्रतिकथकाः ।

**निमीलयत्विति–॥** लोचने निमीलयतु तेन भास्करः तिरस्कृतो न भवति श्रवः श्रोत्रं स्थिरं दृढं स्थगयतु निरुद्धं करोतु तेन परभृतः कोकिलः ध्वाङ्क्षति किमु काकवदाचरति किं काकोनभवतीत्यर्थः । कोकिलकूजितमसहमानो बालिशः मूर्खः स्वयं भ्रमतु तेन क्षितिर्नबंभ्रमीति खलु नभः आकाश मुष्टिभि कदर्थयतु क्लिष्टं करोतु तेन तत्क्षुभ्यते कि कथय न क्षुभ्यत एव । अय भावः यथा भास्करप्रभामसह

स्वयंभ्रमतु बालिशो नखलु बम्भ्रमीति क्षितिः
कदर्थयतु मुष्टिभिः कथय किन्नभः क्षुभ्यते ॥ ३३ ॥

गुरुः—सूनृतमेव सौम्यभाषसे । अद्यखलुसर्वप्रतिकथकसमापनप्रवृत्तस्य ते सभापतिं सभ्यञ्चविमृशामि । (ध्यानमभिनयति)

राजा—सेनापते अयमिहास्मदुपसर्पणावसरः

सेना—मह्यपि रोचते महाराजस्य मनीषितं (उभावुपसर्पतः)

शिष्यः—सन्निहितः खलुभगवन् सभापतिस्सेनापतिसहायः ।

गुरुः—(परिवृत्यावलोक्य) (सहर्षबहुमानं)

उदितस्सहसा स एष काले
व्यवसायातपसेवितो विवेकः ।
विनिवर्तयति स्वयं प्रजानां
विचिकित्सारजनीं विलुप्तबोधाम् ॥ ३४ ॥

अयं च ।

विवेकस्य गुणश्रेयान्व्यवसायश्चमूपतिः ।
स्वपक्षे तिष्ठमानेभ्यस्सूरिभिस्सहतिष्ठते ॥ ३५ ॥

राजा—(सविनय) उचितमुपचरति विवेक इहससेनापतिर्भगवन्तः

गुरु—महाराज सर्वत्र कुशलीभूयाः ।

---

मानेन नेत्रेनिमीलिते सति सतिरस्कृतो न भवति, कोकिलकूजितमसहमानेन श्रोत्रे पिहिते यथा पिकः काको न भवति, भूमेस्थैर्यमसहमानेन स्वय भ्रमतायथा यथा भूमिर्न भ्रमति नभसो विभुत्वमसहमानेन तच्छ्रियत्नीकरणाय मुष्टोन्यातयता यथा तन्नक्षुभ्य ते, तथा यतीन्द्रमतमसहमानैः यानि दूषणानि प्रतिपाद्यन्ते न तैरस्यक्षितिरिति ॥ ३३ ॥

सूनृतं साधुसत्यं च सर्वेषां प्रतिकथकाना समापने प्रवृत्तस्य सभास्तारं ।

उदितइति—॥ काले प्राप्तावसरे सहसा उदितः आगत. उदय प्राप्त व्यवसाय एवातपः तेन सेवितः य· पूर्वं विस्मृश्यध्यातः एष समापवर्ती विवेक. विलुप्तबोधा प्रणष्टप्रबोधां विचिकित्सा सशय सैव रजनी तां विनिवर्त्तयति । अत्र विवेक इति पुंल्लिङ्गनिर्देशात्तद्धर्माभिधानाच्च सूर्यः प्रतीयते ॥ ३४ ॥

विवेकस्येति—॥ विवेकस्य चमूपति· व्यवसायः गुणश्रेयान गुणे श्रेष्ट स्वपक्षे व्यवसायपक्षे तिष्टमानेभ्य आत्मान प्रकाश्य तिष्टत्भ्योस्मत्भ्य स्वयमागत्यतिष्टते आत्मान प्रकाशयन् तिष्टतीत्यर्थः आत्मप्रकाशनार्थत्वेन उभयत्रात्मनेपद । प्रकाशन स्येयाख्ययोश्चेत्यनुशासनात् ॥ ३५ ॥

उचितं योग्य यथा भवति तथा उपचरति अहमुपचरामीत्यर्थ ।

कुशलं मङ्गलं तदस्यास्तीति कुशलोसर्वत्रसुहृदमात्यकोश बलादिषु ।

अपि च ।

शाक्यौलूक्याक्षपादक्षपणककपिलामर्त्यवन्द्यप्रधानै
रन्यै राम्नायचर्चाकवचधृतिकनद्गोमुखद्वीपिभिश्च ।
बह्वीयः क्षोभितापि श्रुतिरिह बहुधाजायमानेनगोप्त्रा
काले कालेभिगुप्ता कलहमतितरत्यक्षतारक्षतात्त्वां॥३६॥

राजा–भगवन्, अद्यखलुभवदवलोकनादेव सम्मुखीकृतसकलमङ्गलाना
मस्माकमधिकोयमाशीर्वादः

शाक्येति–॥ शाक्या बौद्धाः औलूक्याः काणादाः । कदाचित् पशुपतिरुलूको भूत्वा कणादायमुनयेवैशेषिक मतमुपदिष्टवानिति प्रसिद्धिः ।

तन्मतनिष्टाः औलूक्याः अक्षपादनामा कश्चित् मुनिर्न्यायमतं प्रवर्त्तितवान् तन्मतनिष्टा. आक्षपादाः क्षपणकाः जैनाः कपिलः साख्यमतप्रवर्त्ता अमर्त्यवन्द्यो बृहस्पति सचलोकायतमतमुत्पादितवान् एते प्रधानाः येषा तेतथोक्ताः तैः । आम्नायाना चर्चामीमासा सैव कवचः तस्यधृति धारणा तेन कनन्तः विलसन्तः ये गोमुख द्वीपिन. गवा मुखानीव मुखानि येषा द्वीपिनां व्याघ्राणां ते गोमुखद्वीपिनः तैश्चान्यै. । बह्वीयः बहुतरं क्षोभितापि इहलोके बहुधाजायमानेन मत्स्यकूर्मादिरूपै बहुधावतारता गोप्त्रा विष्णुना तस्यैव किलसाधुपरित्राणादुष्कृद्विनाशधर्मसस्थापनार्थं बहुधा जायमानत्व श्रुतिस्मृतिषु प्रतीयते ।

अजायमानो बहुधा विजायते ।

परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितोसौ ।
काणादशाक्यपाषण्डैस्त्रयीधर्मोविलोपितः ।
त्रिदण्डधारिणापूर्वं विष्णुनारक्षितात्रयी ।

इत्यादिकासु । कालेकाले धर्मक्षया धर्मवृद्धिकालेषु । गीत ह्येतत्भगवता ।

यदायदाहि धर्मस्यग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ॥ इति ।

अभिगुप्ता अभिरक्षिता अत एव कलह बाह्यकुदृष्टिकल्पितं अतितरन्ती अतीत्यवर्त्तमाना अक्षता कैश्चिदप्यखण्डिता श्रुतिस्त्वा रक्षतात् अवतु ॥ ३६ ॥

सन्मुखीकृतानि अभिमुखीकृतानि सकलानि मङ्गलानियेषा तेषामस्माकं अयमाशीर्वादोधिकः । आशीर्वादेन मङ्गलसिद्धिः खलु साभवदवलोकनादेव सिद्धास्माकमतोय मधिक इति भावः ।

गुरुः—राजन्, विमर्शकाले सुचरितवशात् सेनापतिसेवितस्सन्निहितोसि । तदादिश्यतामयमन्तेवासी समीहितसमर्थनाय सदसस्पतिना महाराजेन

राजा—अत्रभवदभिप्रेतमादिशामि ।

( शिष्यमवलोक्य )

सौम्यब्रह्मन्, सम्यगुपसन्नोसि सर्वविदं भगवन्तं ।

इह च ।

स्वयञ्चाप्यन्तसिद्धान्तो विभाति गुरुरेषते ।
प्रभुः प्रवदतां योभूत् सवादस्त्वं मतोमम ॥ ३७ ॥

इदन्त्विह भवता प्रथममवधातव्य ।

शिष्यः—आज्ञापयतु महाराजः ।

राजा—सत्वस्थान्निभृतः प्रसादय सतां वृत्तिं व्यवस्थापय
तस्य ब्रह्मविदागसस्तृणमिव त्रैवर्गिकान्भावय ।

---

विमर्शकाले विचारणावसरे । अन्तेवासी शिष्यः ममेति शेषः समीहितमिष्टं तत्समर्थनायतन्निवृत्तये भवदभिप्रेतमिति । सत्वस्थानित्यादिना वक्ष्यमाण मभिप्रेतं । सम्यगुपसन्नोसीत्यनेन तद्विज्ञानार्थं सगुरुमेवाभिगच्छेदित्यादौ श्रुतः शिष्यगुणा प्रत्यभिज्ञायन्ते ।

प्रवदतां प्रकर्षेणवदतां प्रभुः श्रेष्टः ॥ ३७ ॥

सत्वेति—॥ सत्वेसत्वगुणेतिष्टन्तीति सत्वस्थाः तान् । निभृत निश्चलः सविनय इत्यर्थः प्रसादय तेषा प्रसादस्त्वयि यथास्यात्तथा कुरु प्रसादहेतुश्च प्रणिपातादिः । तदुक्त ।

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्वदर्शिनः ॥ इति ।

सतां भगवत्ज्ञानवतां वृत्ति आचार व्यवस्थापय । तदाचरणेन व्यवस्थितां कुरु-अनेन सदाचार एवानुष्ठेयः नान्यदिति ज्ञायते । श्रूयते हि ।

यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि । नोइतराणि इति सदाचारव्यवस्थापनं नाम स्वानुष्ठानेन परेषामप्यनुष्टानापादनं अयं शिष्ट एवमाचरति हि एवमेवास्माभिरप्याचरितव्यमिति परेषा बुद्धिर्जायते ततस्तथैवानुष्टानं च ततस्तद्वृत्तिर्व्यवस्थिताभवति श्रेष्टैरा चरितमेव तदितरे सर्वेप्याचरन्तीति भगवदेव गीतं ॥

**नित्येशेषिणि निक्षपन्निजभरं सर्वं सहे श्रीसखे**
**धर्मधारय चातकस्य कुशलिन्धाराधरैकान्तिनः॥६८॥**

यद्यदाचरति श्रेष्टस्तत्तदेवेतरेजनाः।
सयत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते॥ इति।

ब्रह्मविदागसः ब्रह्मविद्विषयादपराधात त्रस्य विभेहि सर्वेभ्यो हि पापेभ्यस्तस्यैव क्रूरत्वात् ततो भेतव्यमितिभावः। तस्यक्रौर्यं चनानाविधं प्रथमं तावल्लोकनिन्दाहेतुत्वंब्रह्मविद्यापराधं कुर्वाणं निन्दन्तीह सर्वे पापिष्टोयमस्मिन्महानुभावे क्रिमर्थमपराध्यतीति नरकावहत्वमन्यत्स्मर्यते हि नरकहेतुत्व ब्रह्मविदपचारस्य।

हरिकीर्त्तिं विनैवान्यत् ब्राह्मणेन नरोत्तम।
भाषागानं नगातव्यं तस्मात्पापं त्वयाकृतं॥

इत्यादिषु तस्यानारब्धानामनभ्युपगतप्रारब्धखण्डानां च दुहितानां स्वस्मिन्सं क्रमहेतुत्वमपरं श्रूयते हि। तस्यपुत्रादायमुपयन्ति सुहृदस्साधुकृत्या द्विषन्तापापकृत्यामिति। ब्रह्मप्राप्तौविलंबहेतुत्व च परं यदाहभगवान्बादरायणः।

एवं मुक्तिफलानियमस्तदवस्थावधृते स्तदवस्थावधृतेः। इति।

भाषितं चात्र भगवता रामानुजाचार्येण।

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेवकाला नियमः। तस्यापि पूर्ववत् प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावधृतेः। अत्रापि तस्यहेतो स्समानत्वादित्यर्थः॥ सर्वेभ्यः कर्मभ्योमुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात् प्रतिबन्धासभव इत्यधिकाशङ्का। तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां सम्भवात् प्रतिबन्धसम्भ इति परिहारः। इति।

त्रैवर्गिकान् त्रयाणां धर्मार्थकामाना वर्गस्त्रवर्गः त्रयोवर्गास्त्रवर्गमिति वा तत्सम्बन्धिन त्रैवर्गिका. तान्त्रैवर्गिकान् त्यजेन्धर्मानित्युक्तरीत्या तत्साधनभूतान्धर्मानितिवा तृणमिव भावय तदनुपादेयतां मत्वा तेषूपेक्षा कुर्वित्यर्थः। नित्ये सर्वदावर्त्तमाने शेषिणि स्वामिनि शेषेस्तोति शेषी परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं सशेषः परश्शेषीतिहितयोर्लक्षणं ततश्च स्वेतरसमस्तचिदचिद्वस्तुजातं स्वातिशयाधानेच्छयोपादानस्य भगवत एव शेषित्वमिति सिद्धं। तदुक्तमभियुक्तैः

उपादत्तेसत्ता स्थितिनियमनाद्यैश्चिदचितौस्वमुद्दिश्यश्रीमान्।

इति। नित्येशे इत्येति शेषित्वस्य स्वाभाविकत्व द्योत्यते।

सेना—ब्रह्मन्, अवधारितं हिं भवता महाराजस्य वचनं

शिष्यः—किमन्यदवधार्यं

**परिचिनु निगमान्तभारतीं परिहरबाह्यजनेन सङ्गमं।**
**परिचरनियमेनसज्जनान्परिभवमोहमुखान्विरोधिनः॥३९॥**

सकलेतरशेषित्वं भगवत एव स्वाभाविकं। श्रूयतेहि।

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतं।
प्रधानक्षेत्रभूपतिगुणेशः क्षरात्मानावीशते देव एक।

इत्यादिषु। स्मर्यते च।

परं पराणां परमः परमात्मात्मसंस्थितः।
मत्त. परतरं नान्यत् किंचिदस्ति धनंजय॥
ममाश्रयोनकश्चित्तु सर्वेषामाश्रयोह्यहं।

इत्यादिषु। सर्वं सहे आश्रितापराधान् अविज्ञातेत्युक्तप्रकारेणानवलोकयति आश्रितापराधानवेक्षमाणामतिदयालोभगवत एवसकिलेवमाह।

मित्रभावेन संप्राप्त नत्यजेय कथंचन।
देषो यद्यपि तस्य स्यात्सतामेतदगर्हितं॥ इति।

उक्तानां नित्यत्वादीनां हेतुरुच्यते श्रीसखे इति। श्रीपतित्व मेवहि सर्वातिशयत्वहेतु

अप्रमेयं हि तत्तेजो यस्य साजनकात्मजा।

इत्युक्तेः। निजभरमात्मरक्षाभरं निक्षिपनिक्षिपन्निदधानः आत्मसमर्पणरूपं प्रपदनं कुर्वन् धाराधरे मेघे एक अद्वितीय अन्तः निश्चयोस्यास्तीति धाराधरे कान्ती तस्य मम मेघ एव रक्षकः तदेकप्रवणस्य चातकस्य धर्मं तदेकान्त्यं सततं धारय उद्वह। अत्र

शरैस्तु संकुलां कृत्वा लङ्कां परबलार्दनः।
मानयेद्यदि काकुत्स्थस्तत्तस्य सदृशंभवे॥

इत्यादिकमनुसन्धेय। अत्र नित्य इत्यादि विशेषणचतुष्टयेनाश्रयणसैा कर्यापत दर्कं शरण्यगुणचतुष्टय स्पष्टीकृत यथा प्रपत्तव्यस्यनित्यत्वं प्रपत्तुस्समाश्रयणरुच्युत्पत्तिसमकालमाश्रयणहेतुः शेषित्व च प्राप्यतयाश्रयणहेतुः सर्वसहत्वं चापराधसहत याश्रयणहेतुः श्रीसखत्वं च पुरुषकारसाहित्येनाश्रयणहेतुः॥ ३८॥

सेनापतिः शिष्यप्रत्याह ब्रह्मन्निति॥

किमन्यदवधार्यं अन्यदप्यवधार्यमस्तिकिमित्यर्थ।

**परिचिन्विति—॥** निगमान्तभारती वेदान्तवाणी परिचिनु पुनः पुनरावर्त्तय बाह्यः वेदबाह्यः सचासैाजनश्च तेन इदं कुदृष्टीनामप्युपलक्षण संगमं सहासिका संभाषण सन्दर्शनादिरूपं परिहर परित्यज। तदुक्तं।

गुरुः-आयुष्मन्नवहितमनाश्शृणु

शिष्यः-महानयं प्रसादः

राजा-ब्रह्मन् ।

**प्रमाणपथविभ्रष्टप्रधानार्थविमर्दनैः ।**
**स्थालीपुलाकनीत्यैव निवर्त्याः प्रतिवादिनः ॥ ४० ॥**

न खल्वखिलमपि निघृष्यते सुवर्णखण्डो वर्णनिष्कर्षाय

शिष्यः-यदादिशति महाराजः । तदहं सन्धुक्षयामि कथासमरसन्नाहाय कौतस्कुतान् । (किञ्चिदुच्चैः)

**जयति सकलविद्यावाहिनी जन्मशैलो**
**जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।**
**निखिलकुमतिमायाशर्वरी बालसूर्यो**
**निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ ४१ ॥**

---

पाषण्डिनो विकर्मस्थान् बैलालवृतिकांश्शठान् ।
हेतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ इति ।

सज्जनान् नियमेन शास्त्रोक्तेन परिचरपूजय । अत्र नियमः प्रणिपातपरिप्रश्नाभिवादनादिरूपो विवक्षितः । मोहमुखान महामोहप्रमुखान्विरोधिनः प्रतिपक्षान् परिभव ॥ ३९ ॥

प्रमाणेति-॥ प्रमाणपथात्प्रमाणमार्गात् विभ्रष्टाः ये प्रधानार्थाः तत्तन्मत निष्ठैः प्रधानतयास्वीकृताः तेषां विमर्दनैः प्रतिक्षेपैः स्थालीपुलाकनीत्यैव स्थाल्या पच्यमानेष्वन्नेषु पुलाकमन्नमेकमादाय परीक्ष्यान्येषा सर्वेषा यथा पक्वतां जानाति तथैवेत्यर्थ ॥ ४० ॥

ननु प्रधानार्थविमर्दनमात्रे कथं ते निरस्ताभवन्तीत्यत्राह-**न खल्विति ।**

वर्णस्य निष्कर्षायाखिलोपि सवर्णखण्डोननिघृष्यते खलु ।

कौतस्कुतान्-कुतः कुतइति युक्तिवादिनः समरसन्नाहाय समरे वादाहवे सन्नाहः उद्योग तस्मै सन्धुक्षयामिवर्धयामीत्यर्थ ।

जयतीति-॥ सकलाश्चताः विद्याश्च सकलविद्याः ता एव वाहिन्यः नद्यः तासा जन्मशैलः सह्यादिवदुत्पत्तिस्थानं जनिपथः संसारमार्गः तस्मिन् परिवृत्तिः पुनः पनर्यातायातं तेन श्रान्ताना दुःखिताना विश्रान्तिशाखी विश्रमोचिततरुः शाखीत्यनेन बहुशाखत्वं तत एवनिबिडछायत्व च सूच्यते । निखिलाना कुमतीना बाह्यकुदृष्टीना माया वञ्चन सैवशर्वरी रात्रिः तस्याः बालसूर्यः तरुणातरणिः नाश इत्यर्थः । निगमा एव जलधयः तेषा वेलाः कल्लोलाः तासा पूर्णचन्द्रः राकासुधांशुः । यथा राकाचन्द्र सागरकल्लोलानामुल्लासहेतुः तथायमपि निगमानां नानाविधं बाह्यकुदृष्टिकल्पितं व्यसनमपनीय भगवत्परताप्रतिपादनेनाभिवृद्धिहेतुरिति भाव । एवं भूतो यतीन्द्रोजयति सर्वातिशाया वर्तत इत्यर्थ ॥ ४१ ॥

नेपथ्ये

तर्कव्याकृतितन्त्रशिक्षितधियः पक्षेषु बाह्येष्वपि
प्रत्यक्षीकृतपौरुषा वयममी मध्ये सभं ब्रूमहे ।
वादाटोपमुपेयुषः प्रतिभटानासेतुहेमाचलं
तूलायापि तृणाय वा न च तुषच्छेदाय मन्यामहे ॥ ४२ ॥

सेना—आर्य श्रूयते किल प्रतिभटवादिना प्रगल्भवादः

शिष्यः—(सक्रोधं) अलमतिगर्वेण

यतीश्वरसरस्वती सुरभिताशयानां सतां
वहामि चरणांबुजं प्रणतिशालिना मौलिना ।
तदन्यमतदुर्मदज्वलितचेतसां वादिनां
शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ ४३ ॥

राजा—भगवन्, अभङ्गुरस्वामिभक्तेरवसरोपपन्न
हनूमत इवेदमार्यस्य विकत्थन ।

---

एतदसहमानाः प्रतिकथका वदन्ति ।

तर्केति—॥ तर्कशब्देनान्वीक्षिकीविद्या व्याकृतिर्व्याकरणं शब्दानुशासनं तन्त्र मीमांसा तैश्शिक्षिताधीर्येषा ते तथोक्ताः बाह्येषु एतद्व्यतिरिक्तेषु पक्षेष्वपि प्रत्यक्षीकृतं साक्षात्कृतं पौरुषपाण्डित्य येषा ते तथा अमी अत्रवर्तमाना. वय मध्येसभ सभाया मध्ये ब्रूमहे वदामः । अनेन प्रतिज्ञानार्थं निर्वाणोस्माक सामर्थ्यम स्तीतिद्योत्यते । आसेतु हेमाचलं सेतुः श्रीरामसेतु· हेमाचलः मेरुः तयोर्मध्यभूमावि त्यर्थः वादे आटोपं गर्वमुपेयुषः प्रतिभटान् प्रतिकथकान् तूलाय तृणाय तुषच्छेदाय फलीकरणाय च नमन्यामहे । अत्यन्तलघीयसामपि तूलादीनां सदृशान्न मन्यामह इत्यर्थः ॥ ४२ ॥

प्रतिभटभूतावादिनः प्रतिभटवादिनः तेषां प्रगल्भवादः धृष्टं वचनं ।

यतीश्वरेति—॥ यतीश्वरसरस्वतीभिः तत्प्रणीतप्रबन्धैरित्यर्थः सुरभितः आशयो हृदय येषा ते तथा तेषां सता चरणाबुज चरणशब्देन प्राप्यत्व अबुज शब्देन भोग्यत्व च सूच्यते प्रणतिशालिना प्रणामशोभिना मौलिना मूर्ध्ना वहनमेव ह्युचितं तस्मादन्ये तदन्ये तेषा यन्मतं तस्मिन्योदुर्मद· दुष्टमदः मदस्यदूषत्वं नाम असन्मत जन्यत्वे तेन ज्वलितं दग्धं चेतो येषा तेषां वादिना शिरस्सु मया निहितं अदक्षिण वामं पद दृश्यतां लक्ष्यतां ॥ ४३ ॥

अभंगुरा दृडा स्वामिनि भक्ति· यस्य तस्य अवसरोपपन्नं समयोचितं विकत्थनं श्लाघावचनं हनूमत इवेत्यत्र **नरावणसहस्रं मे युद्धे प्रतिबलं भवेदित्यादिक**

गुरुः-( स्वगत ) क इवाभिप्राय इह विकत्थनमुद्घाटयतो विवेकस्य।

( प्रकाशं )

**श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः ।**
**वल्गितं वावदूकस्य कृतिनः किन्नशोभते ॥ ४४ ॥**

शिष्यः-( सविनयभय ) ( स्वगत ) अतर्कितोपनतमात्मश्लाघनदोष-मपमार्ष्टुमभिष्टवानि देशिकान् तद्दर्शन च ।

( प्रकाश )

**हृद्याहृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-**
**क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणापंक्तिरस्मद्गुरूणां ।**
**दिक्सौधाबद्धजैत्रध्वजपट पवनस्फातिनिर्धूतत्त-**
**त्सिद्धान्तस्तोम तूलस्तबकविगमनव्यक्तसद्वर्त्तनीका॥४५॥**

---

मभिप्रेतं । विकत्थनमुत्घाटयतः विकत्थनमिति वदतो विवेकस्य कइवाभिप्रायः विरुद्ध कत्थनमिति वा विशिष्टं कत्थनमिति वा नज्ञायत इत्यर्थः ।

श्रुतीनां-॥ श्रुतीना यस्सिद्धान्तः तस्मिन् शूरस्यानिवर्त्तने तद्विरुद्धान् श्रुति सिद्धान्तविरुद्धान् बाह्यान् कुदृष्टीश्च निरुन्धतः निवारयत. कृतिनः समर्थस्य वाव दूकस्य किं किवा वल्गितं व्याहृतं नशोभते सर्वं शोभत एवेत्यर्थः ॥ ४४ ॥

गुरुसन्निधावेतत् प्रमादादुक्तमिति शिष्यस्य विनयभये सञ्जाते अतर्कितोपनतं पूर्वमतर्कितमपोदमनवधानात् उपनतमात्मनस्वस्य श्लाघनेन जातं दोष प्रमार्ष्टुमप हर्तुमभिष्टवानि तद्विषयस्तोत्रं करवाणि । तत्रप्रथम तावद्देशिकानभिष्टौति ॥

हृद्येति-॥ हृद्याज्ञानानुष्टानसंगत्या हृदयंगमा हृत् हृदयं तस्मिन्यत्पद्म तदेवसिंहासनं तस्मिन्रसिकः प्रीतिमान्योहयग्रीव तन्मूर्त्तिर्भगवान् तस्य हेषोर्मिणा हेषापरं पराणा घोषेण क्षिप्ताप्रत्यर्थिनां दृप्ति· प्रतिकथकाना दर्पो यस्यास्सा तथा बहवः गुणाः शमदमार्जवादयो यस्यास्सा बहुगुणा । दिशएव सौधानि प्रासादाः तेष्वासमन्तात् बद्धाना जैत्रद्धजाना पटववनानां पटचलन जन्याना मरुतां स्फात्या आधिक्येन निर्धूताः दूरोत्सारिताः तत्तत्सिद्धान्त स्तोमा एवतूलस्तबकाः सिद्धान्त स्तोमाना तूलस्तबकत्वरूपणादत्यन्तलालवं व्यज्यते । तेषा विगमनेनापायेन व्यक्ता विशदासद्वर्त्तिनो सन्मार्गः यस्यास्सा तथोक्ता एवं भूता अस्मत्गुरूणा पंक्ति र्जयति सर्वोत्कर्षेण वर्तते ॥ ४५ ॥

अथ तद्दर्शन स्तौति—

ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।
पुनात्यविधवा नारी तमादाय मृता तु या ॥ इति ।

भजन्त्वजिनसूत्रभृध्धृतकमण्डलुं स्वच्छया
त्रिवृद्रशनया वृत्त विधृतदण्डकौपीनकम् ।
बलिं छलयितुं मुधा कलितपञ्चषाब्दकमं
महः किमपि मोहनं कपटवामनं पावनम् ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतश्चतुर्थोऽध्यायः प्रकीर्णकसुतादिविर्णयाय ॥ १ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां चतुर्थोऽध्यायः ।

॥ श्रीगणेशायनमः ॥

वामेनोत्क्षिप्य गोवर्द्धनमभिसुरभिन्यस्तदृष्टिः करेण
प्रत्यालम्ब्यावनम्रीभवदिव सहसा दक्षिणेन स्वमध्यम् ।
प्रावाराबद्धशुद्धासुकरपरिकरस्तत्क्षणेनाम्बुजाक्षः
पायादायासखिन्नः पतिरतिसदयश्रीधरः श्रीधरो वः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
संस्कारसिद्धमभिधातुमिहाहिताग्ने-
रारभ्यते विवरणं किल पञ्चमेऽपि ॥ २ ॥

चतुर्थेऽपि प्रकीर्णकपातकप्रायश्चित्तप्रसक्तानुप्रसक्त्या पुत्रभेदादिसहगमनान्तनिरूपणेन बुद्धिस्थमाहिताग्निसंस्कारं प्रपञ्चयितुं पञ्चमाध्यायमारभते तत्र प्रकीर्णकप्रायश्चित्तप्रकरणाविच्छेदाय तदेव तावदाह ।

**वृकश्वानशृगालाद्यैर्दष्टो यस्तु द्विजोत्तमः ।**
**स्नात्वा जपेत्स गायत्रीं पवित्रां वेदमातरम् ॥ १ ॥**

वृक आरण्यः श्वा कुक्कुरः शृगालो जम्बुकः । आदिशब्देन वानरवराहादीनां ग्रहणम् । एतैर्दष्टो द्विजोत्तमो ब्राह्मणः स्नानानन्तरमष्टोत्तरशतवार गायत्रीं जपेत् । तदाहोशनाः । दंष्ट्रिभिर्दष्टो गायत्र्यष्टशतं चेति । यत्तु श्वशृगालमहिषाजाविकसूकररासभनकुलमार्जारमूषिकासर्वकाकपुरुषदष्टानामापोहिष्ठादिभिः स्नानं प्राणायामत्रयं चेति सुमन्तुस्मरणात्तन्नाभेरधः प्रदेशे ईषद्दंशविषयं नाभेरूर्ध्वं सम्यग्दंशे तु मूलोक्तमेव द्विगुणादिकल्पनीयम् । तथा चाङ्गिराः ।

नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणमिति ॥

गायत्र्याः पावित्र्यातिशयद्योतनाय विशिनष्टि वेदमातरमिति

वेदानां माता "गायत्री छन्दसां मातेति" स्मरणात् । वेदा मातरो यस्याः सेति वा ।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

इति मनुस्मरणात् । एतश्च गृहस्थविषयं परिशेषाद्गम्यते स्नातकादेरन्ये विशेषाभिधानात् ।

एवं ब्राह्मणस्य प्रायश्चित्तमुक्त्वा क्षत्रियादीनां तदाह ।

**गवां शृङ्गोदकैः स्नानान्महानद्यास्तु सङ्गमे ।**
**समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ २ ॥**

गवां शृङ्गोदकस्नानं नाम गायत्र्या शतवाराभिमन्त्रितेन गोशृङ्गपूरितेनोदकेन स्नानं तस्मात्, तदाह हारीतः । गोशृङ्गेन शत स्नानं गायत्र्येति । समुद्रगे महानद्यौ, अनयोः सङ्गमे निकटवर्त्तिनि स्नानात्सन्निहितस्य समुद्रस्य दर्शनाद्वा श्वादिदष्टक्षत्रियादिः शुचिर्भवेद् वा शब्दो व्यवस्थितविकल्पार्थः । यद्यप्यत्र क्षत्रियादिपदं न श्रूयते तथाऽपि पूर्वत्र ब्राह्मणस्य प्रायश्चित्ताभिधानादवशिष्टानां स्थानप्रमाणेन क्षत्रियादिविषयत्व पर्यवस्यति चातुर्वर्ण्यधर्मप्रवचनस्य प्रतिज्ञातत्वात् । एतदसम्भवे हारीतोक्तम् ।

श्वानो वा क्रोष्टुको वापि नारी वा यदि वा नरः ।
आखुर्नकुलमार्जारौ वानरग्राम्यसूकराः ॥
एतैर्दष्टे द्विजस्याङ्गे प्रायश्चित्त कथं भवेत् ।
स्नानं कुर्यात्सचैल तु विप्राणामनुशासनात् ॥
प्राची र्गाभस्तु तिसृभिः कारयेन्मार्जनं द्विजः ।
प्राणायामत्रय कुर्याद्दृष्टाद्गोस्तरण नरः ॥
सह द्विजैस्तु भुक्तेन शुध्यते नात्र सशयः ।

इति द्रष्टव्यम् । शुद्रस्य तु

शुद्राणां चोपवासेन शुद्धिर्दानेन वा पुनः ।
गां च दत्वा वृष चैकं ब्राह्मणाय विशुध्यति ॥

इतिबृहदङ्गिरसोक्तं ज्ञेयम् ।

स्नातकस्य विशेषमाह ।

**वेदविद्याव्रतस्नातः शुना दष्टो द्विजो यदि ।**
**स हिरण्योदकैः स्नात्वा घृतं प्राश्य विशुध्यति ॥ ३ ॥**

वेदविद्याश्चतुर्दश पुराणाद्याः समाप्य स्नातो व्रतानि महानाम्न्यादीनि सौम्यप्रजापत्यादीनि वा समाप्य स्नातः उभयं वा समाप्य स्नातो द्विजस्त्रैवर्णिकः श्वादिदष्टश्चेद्धिरण्यसंसृष्टैरुदकैः स्नात्वा घृतं प्राश्य विशुध्यति । एतदसम्भवे बौधायन आह

वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः ।
शतपर्यायमावर्त्त्य गायत्रीं शुद्धिमाप्नुयादिति ॥
ब्राह्मण इति त्रैवर्णिकोपलक्षणम् ।
ब्रह्मचारिणो विशेषमाह ।

**सव्रतस्तु शुना दष्टो यस्त्रिरात्रमुपावसेत् ।**
**घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥ ४ ॥**

सव्रतो ब्रह्मचारी यदि श्वादिभिर्दष्टस्स त्रिरात्रमुपोष्य चतुर्थेऽहनि घृतकुशोदकं च पीत्वा व्रतशेषं समापयेत्समावर्त्तयेत् । एतदसम्भवे बौधायनोक्तम्

सव्रतस्तु शुना दष्टस्त्रिरात्रमुपवासयेत् ।
सघृतं यावकं पीत्वा व्रतशेषं समापयेत् ॥

इति द्रष्टव्यम् ।

उक्तप्रायश्चितान्तकर्तव्यमाह ।

**अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः ।**
**प्रणिपत्य भवेत्पूतो विप्रैश्चक्षुर्निरीक्षितः ॥ ५ ॥**

अव्रतो गृहस्थादिर्दष्टः पूर्वोक्तप्रायश्चित्ताचरणानन्तरं ब्राह्मणान् प्रणिपत्य तैर्विप्रैश्चक्षुर्भिर्निरीक्षितः पूतो भवति ।

ब्राह्मणासम्भवे दर्शनं स्वयमेव कार्यम् । तदाहाङ्गिराः ।

अव्रती सव्रती चापि शुना दष्टस्तु यो द्विजः ।
दग्ध्वाग्नीन् हूयमानांस्तु सद्य एव शुचिर्भवेत् ॥ इति ।

इदं स्वतन्त्र प्रायश्चित्तान्तरमिति न शङ्कनीयम् । अन्यानर्थक्यन्यायेन पूर्वोक्तप्रायश्चित्तानर्थक्यप्रसङ्गात् । तस्मात्प्रकरणात्पूर्वोक्तप्रायश्चित्तानामुत्तराङ्गमिति ।

दंशाभावे श्वादिघ्राणाद्युपघाते विशेषमाह ।

**शुना घ्रातावलीढस्य नखैर्विलिखितस्य च ।**
**अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलनम् ॥ ६ ॥**

यस्तु श्वादिभिर्दष्टो न किं तु केवलं नासिकया घ्रातो जिह्वया वावलीढो नखैर्वा विलिखितः स सर्वोऽपि तं देशं प्रक्षाल्य वन्हिना पर्यग्नीकृत्य शुद्धः स्यात् ।

स्त्रीणां विशेषमाह ।

**ब्राह्मणी तु शुना दष्टा जम्बूकेन वृकेन वा ।**
**उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ७ ॥**

श्वादिदष्टा ब्राह्मणी रात्रावुदितान् सोमभौमादीन् ग्रहानश्विन्यादीनि नक्षत्राणि चावलोक्य शुद्धा भवति कृच्छ्रादिव्रतस्यायाः विशेषोऽन्यत्र दर्शितः ।

त्रिरात्रमेवोपवसेच्छुना दष्टा तु सव्रता ।
सघृतं यावकं भुक्त्वा व्रतशेषं समापयेत् ॥ इति ।
रजस्वलायां विशेषमाह पुलस्त्यः ।
रजस्वला यदा दष्टा शुना जम्बूकरासभैः ।
पञ्चरात्र निराहारा पञ्चगव्येन शुध्यति ॥
ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं स्मृतम् ॥
चतुर्गुणं मूर्ध्नि दष्टेऽन्यत्रसोमस्तुतिर्भवेत् ॥ इति ।

अन्यत्रारजस्वलावस्थायां सोमस्तुतिर्भवेत् तच्च मूलेऽप्युपलक्षितमेवेति ।

कृष्णपक्षादौ सोमदर्शनासम्भवे किं कार्यमित्यत आह ।

**कृष्णपक्षे यदा सोमो न दृश्येत कदा च न ।**
**यां दिशं व्रजते सोमस्तां दिशं चावलोकयेत् ॥ ८ ॥**

कृष्णपक्षे कदा च न दुर्दिनादौ च यदा सोमो न दृश्यते कदाचन यां दिशं व्रजते तदा यस्यां दिशि सोमः सम्भाव्यते प्राच्यां प्रतीच्यां वा तां दिशमवलोकयेत् । सोमदर्शनं पञ्चगव्यप्राशनस्याप्युपलक्षणम् । अत एवाङ्गिराः ।

ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ।
यदा न दृश्यते सोमः प्रायश्चित्तं कथं भवेत् ॥
यां दिशं तु गतः सोमस्तां दिशं चावलोकयेत् ।
सोममार्गेण सा पूता पञ्चगव्येन शुध्यतीति ॥
सोमदर्शनाद्वा शुद्धिस्तदाह बौधायनः ।
ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् ॥
समुद्रदर्शनाद्वापि शुना दष्टा शुचिर्भवेत् ।

उक्तप्रायश्चित्ताचरणानन्तरं ब्राह्मणप्रणिपाततन्निरीक्षणाभ्यां शुद्धिरित्युक्तम् । ब्राह्मणासन्निधाने तु कथमित्यत आह ।

**असद्ब्राह्मणके ग्रामे शुना दष्टो द्विजोत्तमः ।**
**वृषं प्रदक्षिणीकृत्य सद्यः स्नात्वा शुचिर्भवेत् ॥ ९ ॥**

यस्मिन् ग्रामे ब्राह्मणा न सन्ति तत्र श्वादिदष्टो ब्राह्मणः स्नानानन्तरं वृषभं प्रदक्षिणीकृत्य शुद्धः स्यात् । नन्विदं श्वादिदंशे प्रायश्चित्तमनुपपन्नं तस्य विधिप्रतिषेधातिक्रमरूपत्वाभावेन प्रत्यवायाजनकत्वात् । तदभावे च तद्विनाशकप्रायश्चित्तमनर्थकमिति चेत् । सत्यम् । प्रायश्चित्तविधानान्यथानुपपत्त्या प्रत्यवायसद्भावे कल्पनीये ऐहिकतदभावनिश्चये जन्मान्तरीयकारणजन्यप्रत्यवायसद्भवकल्पनादिति नानुपपत्तिः ।

एवं नवभिः श्लोकैः श्वादिदंशप्रायश्चित्तमभिधायाधुना दुर्मृतस्याहिताग्नेः संस्कारमाह ।

चण्डालेन श्वपाकेन गोभिर्विप्रो हतो यदि ।
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ॥ १० ॥

ब्राह्मण्यां शूद्राज्जातश्चाण्डालः ।

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥

इति योगिस्मरणात् । क्षत्तायामुग्राज्जातः श्वपाकः "उग्रात्तु जातः क्षत्तायां श्वपाक इति कीर्तित इति मनुस्मरणात् । ताभ्यां गोभिर्वा यद्वाहिताग्निर्विप्रो हतः मृतः प्राणैर्वियुक्तः यदि वा विशेषविषादिना आत्मनैव हतो मृतस्तदोभयथापि सपिण्डः कश्चित् विप्रो लौकिकेनाग्निना मन्त्रैर्विवर्जितं दहेत् ।

नन्वेतादृशस्य दहनं पूर्वाध्यायादौ निषिद्धमिति कथमिहोच्यत इत्यत आह ।

स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्वथा ।
प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात् ॥ ११ ॥

पूर्वोक्त चण्डालादिहतमात्महतं वा सपिण्डेष्वेवान्यतमो विप्रः स्पृष्ट्वा वोढ्वा दग्ध्वा च पश्चाद्विप्रानुशासनाद्विप्राज्ञया सर्वथा प्राजात्यं चरेत् ।

अनेन पश्चात्सर्वथेतिपदद्वयप्रयोगेण बुद्धिपूर्वकं निषेधातिक्रमेण दाहादिकं कृत्वा प्रायश्चित्तं कार्यमिति गम्यते न तु प्रमादिके तत्कारणप्रायश्चित्तमनेनोच्यत इति । तथा च दग्ध्वास्थीनि पुनर्दहेदिति नित्यवत् पूर्वदाहानुविधानमपि नोपपद्येत । न च चतुर्थाध्यायादौ दुर्मृतवहनादिप्रायश्चित्तविधानादेतस्य पुनरुक्तत्वं वाच्यम् । एतस्याहिताग्निविषयत्वकल्पनात् । प्राजापत्याचरणानन्तरं किं कार्यमित्यत आह ।

दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेद् द्विजः ।
स्वेनाग्निना स्वमन्त्रेण पृथगेतत्पुनर्दहेत् ॥ १२ ॥

उक्तरीत्या दुर्मृतमात्महतं च दग्ध्वा तदीयान्यस्थीनि पुनर्दह्य गृहीत्वा क्षीरेण प्रक्षाल्य द्विजो विप्रादिः स्वेन श्रौतेन स्मार्तेन वाग्निना स्वमन्त्रेण स्वकल्पोक्तमन्त्रकलापेन पृथक् कालान्तरे संवत्सरान्ते पुनर्दहेत् । तदेतत्सर्वमाह हारीतः ।

ब्राह्मणाद्वधसम्प्राप्तो चण्डलास्य करेण वा ।
आत्मना शस्त्रपाते च शूद्रवद्दाहयेद्विजम् ॥
प्राजापत्यं चरेत्पश्चात्सपिण्डेषु वसन्नुमान् ।
तद्भस्मास्थि गृहीत्वैव विप्राणामनुशासनात् ॥
क्षीरप्रक्षालनं कुर्यात्तदस्थि प्रेतवद्गृहे ।
पुनर्दहेत मन्त्रैश्च यथाविधि समाचरेत् ॥
एवमेव विधिं कुर्यान्मरणे गर्हितस्य चेति ।
संवत्सरात्तदित्युक्त षट्त्रिंशन्मते ।
गोब्राह्मणहताना च पतितानां तथैव च ।
ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्द्ध्वदेहिकम् ॥
तच्च नारायणबलिपूर्वकं कार्यमित्याह छागलेयः ।
नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ इति ।
नारायणबलिस्वरूपं च वैष्णवेऽभिहितम् ।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्चयेद्देवं यमं वैवस्वतं तथा ॥
दश पिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद् द्वौ संयतो दक्षिणामुखः ॥
विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।
नामगोत्रग्रहं गन्धपुष्पैरभ्यर्चनं तथा ॥
धूपदीपप्रदान च भक्ष्यभोज्यं ततः परम् ।
निमन्त्रयेत विप्रान् वै पञ्च सप्त नवापि वा ॥
विद्यातपःसमृद्धान्वै कुलोत्पन्नान् समाहितः ।
अपरेऽहनि सम्प्राप्ते मध्यान्हे समुपोषितः ॥

विष्णोरभ्यर्चनं कृत्वा विप्रांस्तानुपवेशयेत् ।
उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् ॥
मनो निवेश्य विष्णौ तु सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत्प्रोक्तं दैवपूर्वन्तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥
पञ्च पिण्डान् प्रदद्याद् द्वै दैवरूपमनुस्मरन् ।
प्रथमं विष्णवे दद्याद् ब्रह्मणे च शिवाय च ॥
यमाय सानुचराय चतुर्थं पिण्डमुत्सृजेत् ।
मृतसंकीर्तमनसा गोत्रपूर्वमतः परम् ॥
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत् क्षिपेत् ।
विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् ॥
एकं प्रेतवृतं विप्रं हिरण्येन समर्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततस्तिलाम्भो विप्रास्तु हस्तैर्दर्भसमन्वितैः ।
क्षिपेयुर्गोत्रपूर्वं तु नाम बुद्धौ निवेश्य च ॥
हविर्गन्धतिलाम्भस्तु तस्मै दद्युः समाहितः ।
मित्रभृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणेति ॥
सर्पदंशे मनुना विशेषोऽभिहितो भविष्यत्पुराणे ।
सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव च ।
गा व्यासाय तथा दत्वा विधिवत्पुण्यमाप्नुयात् ॥ इति ।

ननु दुर्वृत्तानां लौकिकाग्निना दाहोऽनुपपन्नः । तद्देहस्य गङ्गादौ प्रतिपत्तिस्मरणात् । तथा च स्मृत्यन्तरम् ।

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितमिति ॥
तथा स्वाग्निना पुनर्दाहोऽप्यनुपपन्नः ।
वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ॥

पात्राणि च दहेदग्नौ यजमाने तथा मृते ।

इत्यनेन तदग्नीनां प्रतिपत्तिविधानादिति चेद् बाढम् । मूलोक्तकल्पादनयोः कल्पान्तरविधायकत्वेनानुपपत्तिपरिहारात् । तर्हि कल्पान्तरेऽप्यौर्ध्वदैहिकस्य देहाग्न्योः प्रतिपादितत्वेन न दाहसम्भव इति चेत् सत्यम् । देहाग्निप्रतिपत्त्या दाहलोपेन तदुत्तरकालीनोदकादिक्रियायास्त्वचेष्टत्वात् । अत एव त्रिकाण्डमण्डनः अग्नौ सति स्यादथदेहक्लृप्तिरथास्थि चेदग्निरपेक्षणीय अस्थ्यग्न्यभावे त्वशरीरस्य मरणादि न अथ देहास्थ्यभावे पलाशवृन्तादिभिर्देहः कल्पनीयः । देहास्थिसद्भावे प्रेताधानादिना विच्छिन्नोऽप्यग्निराहरणीयः । प्रतिपत्त्यादिना देहास्थ्नोरग्नेश्चाभावे तूदकक्रियामारभ्यैवौर्ध्वदैहिकं कार्यम् । उभयप्रतिपत्त्या दाहस्य लुप्तत्वात् । अत एव गौतमोऽपि । तस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्तस्मिन्नुदकादीनि सर्वाणि प्रेतकार्याणि इत्युदकादीनीत्येवोक्तवान्न तु दाहादीनीति ।

नच दाहाभावे शरीरसंस्काराभावादुत्तरक्रियास्वप्यनधिकार इति वाच्यम् । सन्यासिने निखननस्येवात्र गङ्गादितोये प्रक्षेपस्यैव तत्संस्कारत्वात् । नचोर्ध्वं संवत्सरात् कुर्यात् सर्वमेवौर्ध्वदैहिकमिति सर्वत्वश्रुतिविरोधः शङ्कनीयः । सर्वत्वमाधिकारिकमिति न्यायेन दाहातिरिक्तस्यैवाधिकृतस्य सर्वशब्देन परामर्शादित्यलमतिविस्तरेण ।

एवं सार्धश्लोकत्रयेण दुर्मृतस्याहिताग्नेः संस्कारोऽभिहित इदानीं प्रोषितस्य देहक्लृप्ति सार्द्धदशभि श्लोकैराह ।

**आहिताग्निर्द्विजः कश्चित्प्रवसन्कालचोदितः ॥**
**देहनाशमनुप्राप्तस्तस्याग्निर्वर्तते गृहे ॥ १३ ॥**
**प्रेताग्निहोत्रसंस्कारः श्रूयतां ऋषिपुङ्गवाः ।**

आहिताग्निः श्रौताग्निमान् द्विजस्त्रैवर्णिकः कालेन चोदितो वशीकृतः प्रवसन् देशान्तरस्थ एव देहनाशं मरणं प्राप्तस्तस्य चाग्निर्गार्हपत्यादिर्गृहे वर्तते मृताग्निहोत्रादिविधिना पाल्यमानः तिष्ठति च

तदा प्रेतस्याहिताग्नेर्गृहे विद्यमानस्याग्निहोत्रस्याग्नित्रयस्य च संस्कारस्स भो व्यासप्रमुखा ऋषिपुङ्गवाः श्रूयताम् । प्रायश्चित्तप्रस्तावे आहिताग्निसंस्कारस्यासङ्गतिपरिहाराय पुनरवधानदानं मरणादिशब्देनैवार्थसिद्धौ देहनाशशब्दोऽस्थ्याद्यलाभसूचनाय तदभाव एव पालाशप्रतिकृतिविधानात् । अत एव छन्दोगपरिशिष्टे ।

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेत्तूर्णया ऽऽच्छाद्य पात्रन्यासादिपूर्ववत् ॥
अस्थ्नामभावे पर्णानि सकलान्युक्तयावृत्तेति ।

प्रतिज्ञातं प्रेतसंस्कारमाह ।

**कृष्णाजिनं समास्तीर्य कुशैस्तु पुरुषाकृतिम् ॥ १४ ॥**

कृष्णमृगस्याजिने स्वास्तीर्य कुशैः पूरुषस्याकारं कुर्यात् । कुशपुत्रकदाहेन तस्य स्यादवधारणमिति लिङ्गात् ।

कुशाभावे द्रव्यान्तरमाह ।

**कार्या प्रतिकृतिस्तस्य पलाशानां च पत्रतः ।**
**षट्शतानि शतान्यानि पालाश्यः समिधस्तथा ॥ १५ ॥**
**चत्वारिंशच्छिरे दद्याच्छन्तं कण्ठे तु विन्यसेत् ।**

कुशाभावे तस्मिन्नेव कृष्णाजिने षट्शतानि शतं चेत्येवं तानि सप्तशतानि पलाशानां पलाशपत्राणां सार्वविभक्तिकः सित्तसिल् । यथोक्तविभागेन विन्यसेत् पलाशवृन्ताना कुशसमानकार्यत्वेन च शब्दस्य वा शब्दार्थतया विकल्पाभिधानात्पर्यायान्तरमेतच्च "एवं पर्णशरं दग्ध्वेति लिङ्गात् । विभागे संख्यामाह । शिरे शिरसि चत्वारिंशत् कण्ठे च शतं दद्यादिति अङ्गान्तरेष्वपि तामाह ।

**बाहुभ्यां च शतं दद्यादङ्गुलीषु दशैव तु ॥ १६ ॥**
**दद्यादष्टौ वृषणयोः पञ्च मेण्ढ्रे तु विन्यसेत् ।**
**एकविंशतिमूरुभ्यां द्विशतं जानुजङ्घयोः ॥ १७ ॥**

पादाङ्गुष्ठेषु दद्यात्षट् यज्ञपात्रं ततो न्यसेत् ।

बाहुद्वयेशतं शतमिति शतद्वयं पादद्वयेऽप्येवं पादाङ्गुलीषु पञ्च पञ्चेत्येवं दश कराङ्गुलिषु प्रत्येकमेवं दश जघने शतमुदरे शतद्वयं, वृषणयोः प्रत्येकं चत्वारि चत्वारीत्येवमष्टौ ऊरुषु दश "विभागेन समं स्यादश्रुतत्वादिति भावः । जानु च जङ्घा च तद्वये प्रत्येकं शतमेवं शतद्वयं पादाङ्गुष्ठेषु पञ्च मुखे पलाशै र्देहाकृतिं निर्माय तदुपरि यज्ञपात्राणि विन्यसेत् ।

तमेवं यज्ञपात्रविन्यासमाह ।

शाम्यां शिश्ने विनिक्षिप्य अरणीं मुष्कयोरपि ॥ १८ ॥
जुहूं च दक्षिणे हस्ते वामे उपभृतं न्यसेत् ।
पृष्ठे चोलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत् ॥ १९ ॥
उरसि क्षिप्य दृशदं तण्डुलाज्यतिलान्मुखे ।
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षुषोः ॥ २० ॥
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेत् ।

अग्निहोत्रोपकरणमशेषं तत्र निक्षिपेत् ॥ २२ ॥
असौ स्वर्गाय लोकाय स्वाहेत्येकाहुतिं सकृत् ।
दद्यात्पुत्रोऽथ वा भ्राताप्यन्यो वापि च बान्धवः॥२३॥
यथा दहनसंस्कारस्तथा कार्यो विचक्षणैः ।

शिश्ने शम्यां मुष्कयोरण्डकोशयोररणिं दक्षिणेतरयोर्हस्तयोर्जुहूपभृतावुलूखलमुसले पृष्ठे उरसि दृशदं मुखे तण्डुलाज्यतिलान् श्रोत्रे प्रोक्षणीं चक्षुषोः स्थालीं कर्णाक्षिघ्राणमुखेषु हिरण्यशकलमेवं स्वकर्मानुसारेणाशेषमग्निहोत्रोपकरणं स्रुक्स्रुवशूर्पचमसादि तत्र तत्र निक्षिप्यासावित्याज्याहुतिं शरदेहे हुत्वा पुत्रास्त्रिवर्त्ताः स्वशाखोक्तरीत्या जुहुयुरिति । ये तु

देशान्तरगते विप्रे विपन्ने कालपर्ययात् ।
शरीरनाशे कल्पः स्यादाहिताग्नेर्विशेषतः ॥

कृष्णाजिनमुपास्तीर्य पुरुषाकृतिमेव च ।
त्रिणि षष्ठशतं वृन्तान् पलाशास्तु समाहितः ॥
अशीत्यर्द्धं शिरे दद्याद् ग्रीवायां दश चैव हि ।
बाहुभ्यां च शतं दद्यादङ्गुल्योर्दश एव च ॥
उरसि त्रिशतं दद्याज्जठरे विंशतिं तथा ।
ऊरुभ्यां तु शतं दद्यात्त्रिशतं जानुजङ्घयोः ॥
पादाङ्गुल्योर्दश दद्यादेतत्प्रेतस्य लक्षणम् ।

तथा ।

नारिकेलं शिरस्येव कपाले ताम्रभाजनम् ।
चक्षुषोर्मौक्तिकं दद्यादोष्ठे दद्यात्प्रवालकम् ॥
दन्तेषु दाडिमीबीजं केशेषु चमर तथा ।
कस्तूरिका च ग्रीवया कर्णयोः शिंबिकां तथा ॥
नखे कपर्दकान् दद्याच्छिश्ने च कदलीफलम् ।
वृन्ताकं मुष्कयोर्दद्याद्रक्ते चेङ्गुलकं तथा ॥
वीर्ये च पारदं दद्याद्धरितालं मनः शिलाम् ।
मज्जायां वृक्कयोश्चैव जम्बीरफलमेव च ॥
उर्णासूत्रेण सवेष्ट्य यवपिष्टेन लेपयेत् ।
नामगोत्रं समुच्चार्य वस्त्रेणाच्छादयेदपि ॥
पुनः प्राणेति मन्त्रेण प्राणान्सवेश्य तत्तथा ।
एवं पर्णशरं कृत्वा देहे च विधिपूर्वकम् ॥

इत्यादयो हारिताद्यभिहिताः संख्याविनियोगविशेषास्तेऽपि शाखाभेदेन युगभेदेन वा व्यवस्थापनीयाः । यद्यप्यत्राहिताग्निमुपक्रम्यायं विधिराम्नातस्तथाप्यय भवति अनाहिताग्नेरपि ।

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः ।
तदभावे पलाशानां पत्रैः कार्यः पुमानपि ॥

इति ब्रह्मपुराणात् । यदि पर्णशरदाहे क्रियमाणे तदस्थीनि लभ्यन्ते तदार्धदग्धकाष्ठानि निर्मन्थ्यतेनाग्निना तान्यपि दहेत् समाप्ते तु दाहेऽर्धदग्धकाष्ठाभावे तानि जले प्रक्षिपेत् । तदाह ब्रह्मपुराणे ।

अथ पर्णशरे दग्धे पात्रन्यासे कृते सति ।
गतेष्वग्निषु तद्देहो यद्यर्द्धं लभ्यते क्वचित् ॥
तदार्द्धदग्धकाष्ठानि तानि निर्मथ्य तं दहेत् ।
यद्यर्द्धदग्धकाष्ठं तु तदीयं च न लभ्यते ॥
तदा तदस्थिखण्डं तु निक्षेप्तव्यं महाजले । इति ।

तत्र विधेरन्वयव्यतिरेकाभ्यां फलमाह ।

**ईदृशं तु विधिं कृत्वा ब्रह्मलोके गतिः स्मृता ॥२४॥**
**दहन्ति ये द्विजास्ते तु ते यान्ति परमां गतिम् ।**
**अन्यथा कुर्वते कर्म त्वात्मबुध्या प्रचोदिताः ॥ २५ ॥**
**भवन्त्यल्पायुषस्ते वै पतन्ति नरकेऽशुचौ ।**

यस्याहिताग्नेरीदृशं विधिं कुर्यात्तस्य ब्रह्मलोकगतिः स्मृता पूर्वैः । ये तु तमाहिताग्निमुक्तरीत्या दहन्ति तेऽपि परां गतिं यान्ति आत्मबुध्यान्यथाकारिणामल्पायुर्नरकपातश्चेति

नेत्रे निद्रेवजिह्वां रस इव मधुरः प्रेममूर्च्छेव चेतः
श्रोत्रे चञ्चद्विपंचीनिनद इव नृणां भक्तिसक्तिभाजम् ।
दृष्टः संकीर्त्तितो वा हृदि तु कथमपि ध्यात आकर्णितो वा
तत्तत्सम्पर्कमात्रादमलयतितरां तं हृषीकेशमीडे ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते खलु चाहिताग्ने-
रध्याय एष विवृतः किलपञ्चमोऽपि ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां पञ्चमोऽध्यायः ॥ शुभमस्तु ।



श्रीगणेशाय नमः ।

संवर्तोद्वेलदुग्धांबुधिबहलरयप्रोच्छलद्ब्रवगच्छत्
क्षीरायव्यस्तवीचीचलदमलपदः शेषभोगभ्रमेण ।
व्यामीलन्नेत्रयुग्मः श्लथवपुरुदयद्योगनिद्रावगाढो
— क्षीणः पद्माकटाक्षैः प्रथयतु भगवान् पद्मनाभः श्रियं नः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
व्याख्यायते हि मलिनीकरणादिशुद्धिं
वक्तु पराशरकृताविह षष्ठ एषः ॥ २ ॥

चतुर्थपञ्चमाभ्यां प्रकीर्णकप्रायश्चित्तं तत्प्रसङ्गागतं चान्यदपि निरूपितम् । इदानीं मलिनीकरणसङ्कलीकरणयोः स्वरूपमाह । मनुः—

कृमिकीटवयोहत्या मद्यानुगतभोजनम्
फलैधः कुसुमस्तेयमधैर्यं च मलावहम् ।
खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा
सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य चेति ॥

उपपातकस्वरूपपरिशिष्टं वक्ष्यामः । तदेवमध्यायार्थं तावद्वक्तुं प्रतिजानीते ।

**अतः परं प्रवक्ष्यामि प्राणिहत्त्यासु निष्कृतिम् ।**
**पराशरेण पूर्वोक्तामन्वर्थेऽपि च विस्तृताम् ॥ १ ॥**

अतः परं प्रकीर्णकप्रायश्चित्ताभिधानानन्तरं प्राणिनां हत्यासु बहुवचनेन मलिनीकरणसङ्करीकरणोपातकरूपत्वेन बहुविधासु पराशरेण पूर्वस्मिन् युगे कलियुगोक्तामभिहितामन्वर्थे सूक्ष्मेऽप्यर्थे सङ्करापात्रकृत्यासु मासः शोधनमैन्दवः । मलिनीकरणीयेषु पतः स्याद्यावकस्त्र्यहमित्याद्येकोपाधिना प्रायश्चित्ताभिधानसंभवेऽपि विस्तृतां प्रतिपदोक्तां निष्कृतिं प्रायश्चित्तरूपां वक्ष्यामि ।

तत्र मलिनीकरणे प्रायश्चित्तमाह ।

**क्रौञ्चसारसहंसांश्च चक्रवाकं च कुक्कुटम् ।**
**जालपादं च शरभं हत्वाऽहोरात्रतः शुचिः ॥ २ ॥**

क्रौञ्चः क्रुङ् सारसो लक्ष्मणः हंसचक्रवाककुक्कुटाः प्रसिद्धाः । अजालपादा अपि हंसाः सन्तीति पृथगुपात्तः । शरभः एतान् हत्वा अहोरात्रत एकोपवासेन हन्ता शुचिर्भवति । चकारात्तित्तिरिशुकसारिकादीनामपि समुच्चयः, तथा च संवर्तः ।

चक्रवाकं तथा क्रौञ्चं तित्तिरं शुकसारिकां ।
श्येनं गृध्रमुलूकं च तथा पारावतान्यपि ॥
टिटिभं जालपादं च मद्गुं कुक्कुटमेव वा ।
एवं पक्षिषु सर्वेषु दिनमेकमभोजनमिति ॥

एतेन मन्वाद्युक्त गोदानमप्रत्यादिष्टम् । बलाकादिषु विशेषमाह

**बलाकाटिट्टिभौ वापि शुकपारावतावपि ।**
**अटोनबकघाती च शुध्यते नक्तभोजनात् ॥ ३ ॥**

बलाका प्रसिद्धा । टिट्टिभस्तच्छब्दानुकारी शुकः कपोतः परावतः एतान्हत्वेति पूर्वेणानुषज्यते अटीनः शरारी बकः प्रसिद्धस्तौ हन्ति इति तद्घाती च दिवाभोजनपरिहारेण नक्तभोजनाच्छुध्यति । यत्तु पूर्वोक्तसंवर्त्तवाक्येनोपवासश्रवणं तत्कामकारादिविषयं "विहितं यदकामाना कामात्तद्द्विगुणं भवेदि"तिवचनात् । उपवासस्य भोजनद्वयपरिहारात्मकत्वेन दिवा भोजनाभावसक्तनक्तभोजनाद्द्विगुणत्वात् । यत्तु तेनैवोक्तम् ।

हंस बकं बलाकां च श्वाविधं बर्हिणस्तथा ।
सारसं चाषभासांश्च हत्वा त्रीन्दिवसान् क्षिपेत् ॥

इति तदत्यन्ताभ्यासविषयम् ।

किञ्च

**वृककाककपोतानां सारीतित्तिरिघातकः ।**
**अन्तर्जल उभे सन्ध्ये प्राणायामेन शुध्यति ॥ ४ ॥**

तच्च पदार्थोपस्थितिजननद्वारा इतरथा पदज्ञानेऽसति प्रकारान्तरेण पदार्थोपस्थितौ शाब्दबोधापत्तेः । तज्जनकत्वं च पदज्ञानस्यैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वेनापरसम्बन्धिस्मृतिजनकत्व । पदस्य सम्बन्धित्वज्ञानाधीन तत्सम्बन्धित्वज्ञानं न येन केनचित्सम्बन्धेन अन्यथा समवायेन वस्तुपदोपस्थापितस्य गगनस्य शाब्दबोधापत्तिः । किं तु वृत्त्या वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धस्तथा च शक्तिलक्षणान्यतरसम्बन्धेन पदार्थोपस्थितिद्वारा शाब्दबोधजनकत्वं पदज्ञाने सिद्धम् । तत्र शक्तिं प्रतिपादयितुं भूमिकामारचयति नन्वित्यादिना ॥ इयं शाब्दबोधसहकारीभूतशक्तिग्रहविषयिणी पदनिरूपितार्थनिष्ठा । ननु शक्तिस्तव मते ऽस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा तादृशज्ञान तादृशकृतिर्वेति विनिगमनाविरहेण तादृशज्ञानेच्छाकृतीनां त्रयाणां कारणतेति लाघवात्पदार्थान्तरं स्वीकृत्य ज्ञानस्य कारणत्वकल्पने एक एव कार्यकारणभाव इति मीमांसकमतमाह अभिधेति । सङ्केतग्राह्य अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतग्राह्य आवश्यकत्वात् तवाभिमतशक्तिग्राहकत्वेन सङ्केतस्यावश्यकत्वात् । नन्वभिहितमेव विनिगमनाविरहात्सङ्केतरूपा न शक्तिरिति पदार्थान्तरं कल्पनीयमत आह । मानाभावादिति । तवापि शक्तिग्राहकसङ्केतस्यापि ज्ञानादिना विनिगमनाविरहः अतिरिक्तपदार्थकल्पन चेति महद्गौरवमिति भावः ॥ किं च तवमते ईश्वरानङ्गीकारेण चैत्रादेस्तादृशीच्छा वाच्या । तथा च चैत्रेच्छा मैत्रेच्छा वा तज्ज्ञान कृतिर्वेति विनिगमनाविरहेण चैत्रादेरनन्तत्वेन चानन्तकार्यकारणभावापत्तेः ।

स च सङ्केतोऽस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारिकेच्छा । हन्तैवं पामरादिसङ्केतिता अपि शब्दा अभिधायिका स्युरिति चेन्न । नहि सङ्केतमात्रमभिधा किन्त्वीश्वरसङ्केतः न चापभाषिते सोऽस्ति मानाभावात् कथन्तर्हि ततोऽन्वयबोध इति चेत्

शक्तिभ्रमादिति गृहाण। कथन्तर्हि पामरादीनामीश्वरमविदुषां मीमांसकादीनां चार्थप्रत्ययः शब्दादिति चेदुच्यते न तावदीश्वरसङ्केतत्वेन तद्ग्रहः कारणं किन्तु सङ्केतत्वेन। अस्ति च तेषामपि तथा ज्ञानं आधुनिकसङ्केतितानां चैत्रादिशब्दानां का गतिरिति चेत् द्वादशे ऽहनि पिता नाम कुर्यादिति सामान्यतस्तस्यापीश्वरसङ्केतितत्वादिति गृहाण।

अस्मादिति॥ न च विनिगमनाविरहेण शक्तेरस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकज्ञानेच्छाकृतीना शाब्दबोधहेतुत्वप्रसङ्ग इति वाच्यम्। ईश्वरज्ञानकृत्योर्निखिलविषयकत्वस्वीकारेऽपि निखिलघटत्वादिप्रकारितायाअस्वीकारेणेच्छाया घटत्वादिप्रकारिकायाः शक्तित्वे एकत्र पक्षपातिनियुक्तिरूपाया विनिगमनायाः सत्त्वात्। न च ज्ञानेच्छाकृतीना समानप्रकारकत्वनियमेन ज्ञानकृत्योस्तादृशप्रकारिताऽवश्य वाच्येति वाच्यम्। जन्यस्थले तादृशनियमस्वीकारात्। तत्र हि यत्प्रकारकं ज्ञान तत्प्रकारिकेच्छा जायते एवं तत्प्रकारिकैव कृतिरिति। नित्येच्छा तु न ज्ञानजन्यत्वेन सिद्धा अपि तु धर्मिग्राहकप्रमाणेनेति। न चेच्छायामेव प्रकारिताख्यविषयितायां किं मानमिति वाच्यम्। वेदजन्यशाब्दबोधे तात्पर्यज्ञानस्य हेतुत्व निखिललोकसिद्ध तत्र तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्व। प्रकृते ज्योतिष्टोमपदात् ज्योतिष्टोमरूपोऽर्थो बोद्धव्य इति विश्वनाथेच्छारूप सा चेच्छा विशिष्यज्योतिष्टोमादिप्रकारकैवेति। एवं ईदृशेच्छायाः सङ्केतत्वे ईश्वरसत्त्वः। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा रूपसङ्केतः अपभाषिते पामराद्यभिहिते। स ईश्वरसङ्केतः तर्हि अपभाषिते ईश्वरासङ्केतसत्वे। ततः अपभाषितशब्दात्। शक्तिभ्रमादिति। गागरीशब्दादौ घटादिशक्तिभ्रमादिति भावः। ननु भवतु पामरादिसङ्केतितशब्दादीश्वरस्वीकर्त्तॄणा विदुषां शक्तिभ्रमः परन्तु पामराणामीश्वरमवि-

दुषां कथं शक्तिभ्रम इत्याह कथमिति । तर्हि ईश्वरसङ्केतस्य शक्तित्व पामराणामिति । पामरैर्मीमांसकैश्च कथमीदृशः सङ्केतो ज्ञातव्य इति भावः । तद्ग्रहः सङ्केतग्रहः किन्त्वित्यादि तथा च वस्तुगत्या ईश्वरसङ्केत उपेक्षित इति भावः । तेषां पामराणां मीमांसकानां चापामरैस्तादृशसङ्केतत्वेन ज्ञातुं शक्यत एव परन्तु वक्तुं न शक्यते । यथा स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपा व्याप्तिर्गृह्यत एव परन्तु वक्तुं न शक्यते कथमन्यथा तेषामनुमितिः चन्द्रशेखरविद्वेषिणा तु सङ्केतत्वेन ज्ञानं कारणमिति भावः । तेषां पामराणां मीमांसकानां सङ्केतत्वेनज्ञानं । सामान्यतः पिता पुत्रस्य नामकुर्यादिति सामन्यतः । अत्र जगदभिवन्द्य श्रीरामकृष्णभट्टाचार्यचक्रवर्त्तिनः । पितानाम कुर्यादित्यत्र पितृपदेन निखिलाः पितर उपस्थाप्यन्ते । चैत्रमैत्रादिपदसमभिव्याहाराच्चैत्रमैत्रादिपितर एव बोध्यन्ते । अन्यथा पितृभ्यो दद्यादित्यत्र चैत्रपितृसम्प्रदानकदानाप्रतीतेश्चैत्रादेः श्राद्धादौ प्रवृत्तिर्न स्यात् तथा च चैत्रपित्रे चैत्रो दद्यान्मैत्रपित्रे मैत्रो दद्यादिति बोधः । प्रकृते पिता चैत्रपिता चैत्र इति नाम कुर्यात् मैत्रपिता मैत्र इति नाम कुर्यात् इत्यादिविशिष्टेच्छा वाच्या तथा चाधुनिकचैत्रादिशब्दा अपि विश्वनाथसङ्केतिता भवन्त्येवेत्याहुः ।

**स्यादेतत् । सोयं सङ्केतः कथं ग्राह्यः । उपमानादिति चेन्न । तस्य वाक्यार्थज्ञानमूलकत्वात् तस्य च शक्तिग्रहमूलकत्वादुच्यते । प्रथमतः शक्ति ग्रहो व्यवहारात्तथा हि घटमानयेति केनचिदुक्तः कश्चन तदर्थं प्रतीत्य घटमानयति तच्चोपलभमानो वालस्तया क्रियया तस्य प्रयत्नमनुमिनोति तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानमनुमिनोति स्वप्रयत्ने तेन तथा निश्चयात् । ततस्तद्धेतुत्वाकाङ्क्षायामुपस्थित-**

त्वाच्छब्दमेव कल्पयति तदनन्तरं घटादिपदानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटधीजनकमिति कल्पयति क्लृप्ते च तस्मिन्नतिप्रसङ्गभङ्गाय तज्जनना-नुकूलं सङ्केतरूपं सम्बन्धं कल्पयतीति किमनुपपन्नं तदनन्तरं क्वचिद्व्यवहारात्क्वचिदुपमानात्क्वचिच्छ-ब्दात्क्वचिद्व्याकरणकोषादिति सङ्क्षेपः

कथं ग्राह्यः प्रथमतः कस्माद्ग्राह्य इत्यर्थः। अन्यथोपमानादित्य-त्र प्रकारान्तरेणाप्तवाक्यादिनाऽतिदेशवाक्यार्थज्ञानमूलशक्तिग्रहसम्भवा-दनवस्थादिरूपदूषणासङ्गतेः। तस्य उपमानस्य वाक्यार्थज्ञानमूलकत्वात् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थज्ञानकारणकत्वात् तस्य वाक्या र्थज्ञानस्य शक्तिग्रहमूलकत्वादिति। गवयपदादीनां शक्तिग्रहेत्वतिदेश-वाक्यार्थज्ञानं कारणं तत्र वाक्यस्य पदघटितत्वेन तेषु पदेषु शक्तिग्रहो-ऽपेक्षितः तच्छक्तिग्रहोऽप्युपमानादेव वाच्यस्तत्राप्यतिदेशवाक्यार्थज्ञानं कार-णमित्यनवस्थेत्यर्थः। केनचित् प्रयोजकवृद्धेन। कश्चन प्रयोज्यवृद्धः। तदर्थं घटानयनादिरूपमर्थं। तच्च घटानयनं च तस्य प्रयोज्यवृद्धस्य। अनुमिनोति। अयं घटानयनविषयकप्रयत्नवान् घटानयनक्रियावत्त्वात् इति। तेन बालेन। तथा निश्चयात् ज्ञानजन्यत्वनिश्चयात् ततः प्रयोज्यवृद्धेर्ज्ञानानुमानानन्तरं। तद्धेतुत्वाकाङ्क्षायां घटानयनज्ञाने हेतुत्वा-काङ्क्षायां शब्दमेव कल्पयति शब्दमेव तद्धेतुत्वेन कल्पयति। तदनन्तरं शब्दस्य सामान्यतो हेतुत्वकल्पनानन्तरं। प्रत्येकं विशिष्य। आवापोद्वापा-भ्यामिति घटमानयेत्युक्ते घटमानयति ततो घटं नय पटमानयेत्युक्ते घटं नयति पटमानयतीत्यानयननयनरूपाभ्यामावापोद्वापाभ्यां प्रत्येकं घट-पदं घटज्ञानजनकं आनयनपदमानयनज्ञानजनकमिति कल्पयतीत्यर्थः। तस्मिन् शब्दस्य ज्ञानजनकत्वे अतिप्रसङ्गभगाय घटपदादाकाशबोधः स्यादित्यतिप्रसङ्गभङ्गायेत्यर्थः तदनन्तरं व्यवहारात्प्रथमतः शक्तिग्रहान-

न्तरं । व्यवहारात् । प्रयोज्यप्रयोजकवृद्धस्थले व्यवहारात् । उपमानात् गवयपदस्थले गवयो गवयपदवाच्य इत्युपमित्यात्मकशक्तिग्रह उपमनात्। शब्दाद्यथा कोकिलःपिकपदवाच्य इत्यादिवाक्यरूपशब्दात्पिकप। व्याकरणाद्यथा। भूधातोः सत्तात्वविशिष्टे शक्तिः । कोशाद्यथा अमरानिर्जरादेवा इत्यादावमरपदस्य देवत्वविशिष्टे शक्तिः आदिपदग्राह्यं वाक्यशेषादि वाक्यशेषाद्यथा यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरं । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्याकारकवाक्यशेषात्स्वर्गपदादिशक्तिग्रहः । अत्र दुःखासम्भिन्नत्वमेककालावच्छेदेनैकात्मवर्त्तित्वसम्बन्धेन दुःखाभावविशिष्टत्व तच्चास्मदादेरपि कदाचिदस्तीत्यतो न च ग्रस्तमिति विच्छेदशून्यमित्यर्थः । कदाचिद्विच्छेदशून्यसुखधारास्मदादेरप्यस्तीत्यतोऽभिलाषोपनीतमिति शरीरावच्छेदेन फलोपहितेच्छागोचर इत्यर्थः '। न च तस्यापि पातादिदुःखसम्भिन्नत्वादसम्भव इति वाच्यम् । तद्भिन्नदुःखासम्भिन्नत्वस्य विवक्षितत्वात् । न च तथापि चक्रवर्त्तिसुखे गतमिति वाच्यम् । एकजन्मावच्छेदेन दुःखासम्भिन्नत्वस्य विवक्षितत्वात् तथा च पातादिभीतिजन्यदुःखभिन्नदुःखावच्छेदकावृत्तिजातिमच्छरीरावच्छेद्यसुखत्व स्वर्गत्वमिति पर्यवसितं । स्वर्गिशरीरमात्रवर्त्तिनी तादृशजातिः सैव शक्यतावच्छेदिका शक्यतावच्छेदकप्रकारेण शक्तेर्बोधजननादिति । यथा वा यवमयश्चरुर्भवतीत्यत्र यवपदस्य कङ्गौ म्लेच्छाना प्रयोगः। आर्याणा च दीर्घशूकविशेषे प्रयोगस्तत्र यत्रान्या उपधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति वाक्यशेषात् । यथा वा वसन्ते सर्वसस्यानां जायते पत्रशातन मोदमानाश्च तिष्ठन्ति यवाः कणिश शालिन इति । वाक्यशेषान्निर्णीयते । शक्तिभ्रमात्कङ्गौ प्रयोगः । विवरणाद्यथा पचति पाकं करोति इतियत्नार्थककरोतिना सर्वाख्यातविवरणादाख्यतस्य यत्ने शक्तिर्गृह्यते । प्रसिद्धपदसान्निध्याद्यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ सहकारादिप्रसिद्धपदसान्निध्यादेव तादृशव्यक्तिविशेषे पिकपदवाच्य इति शक्तिग्रहः सङ्ग्रहश्च "शक्तिग्रहं व्याकरणोपमानकोशाप्तवा-

क्यात् व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा"इति ।

**स्यादेतत् द्वयोर्व्यवहारं पश्यता सङ्केतो ग्राह्य-स्तयोरेव कथं सङ्केतग्रहः अन्ययोर्व्यवहारादिति चेन्न अनवस्थापत्तेः अनादित्वादियमिष्टैवेति चेन्न सर्गादौ तदसम्भवात् सर्गादिरेवासिद्ध इति चेन्न कार्यद्रव्या-नधिकरणकार्याधिकरणकालस्य खण्डप्रलयतया प्रल-यस्यागमसिद्धत्वादुच्यते**

अनवस्थेति । अन्ययोः सङ्केतग्रहः । इतरयोर्व्यवहारादित्येवमन-वस्थेत्यर्थः । अनादिसिद्धानवस्था न दोषावहेत्याह अनादित्वादिति । इयं अनवस्था तदभावात् प्रयोज्यवृद्धप्रयोजकवृद्धयोरभावत् । कार्यद्रव्येति महाप्रलयेऽतिव्याप्तिवारणाय । कार्याधिकरणेति । तच्च भावकार्याधिकर-णपरं तेन महाप्रलये ध्वंसादेर्वृत्तित्वेऽपि न क्षतिः । तथा च कालकपा-लान्यावृत्तिघटप्रागभावः । कार्यद्रव्यानधिकरणकार्याधिकरणवृत्तिः । अ-भावत्वादाकाशवृत्त्यभाववदिति वृत्तप्रलयसिद्धिः । तथा घटध्वंसं पक्षीकृ-त्यागामिप्रलयोऽपि साधनीयः । एककालीनाः सर्वे परमाणवः कार्यद्रव्या-भाववन्तः आरम्भकत्वात् । विनष्टद्व्यणुकारम्भकपरमाणुवदिति । जगत्स-न्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात्प्रदीपसन्ततिवदित्यनुमानात्प्रलयसिद्धि-रिति सूचितम् । नन्विदमप्रयोजकमत आह आगमेति आगमसिद्धत्वात् । धाता यथा पूर्वमकल्पयदित्यादिप्रलयबोधकागमसिद्धत्वात् ।

**सर्गादौ भगवानीश्वरः शरीरद्वयं परिगृह्य-तथा व्यवहरति । ततस्तद्व्यवहाराद्बालः पूर्ववत्सङ्केतं गृह्णातीति किमनुपपन्नम् । ईश्वर एव किं मानमिति चेत्सर्गादावन्यथा व्यवहारानुपपत्तिरेव । ननु पूर्वस-**

र्गसिद्धसर्वज्ञत्वान्मन्वादय एव व्यवहारप्रवृत्तिहेतवः सन्त्विति चेन्न । तेषां सर्वज्ञत्वे मानाभावात् व्यवहारान्यथानुपपत्तिरेव मानमिति चेन्न पूर्वसर्गे व्यवहारस्यैवमप्यनुपपत्तेः तत्राप्येकः कल्प्यतामिति चेन्न । प्रतिसर्गंभूयसां तथा कल्पनायां गौरवात् अस्त्वेक एव सर्वत्रमूलमिति चेत्स एवास्माकं भगवानीश्वर इति दिक् ।

तथा च सर्गादौ प्रयोज्यवृद्धप्रयोजकवृद्धयोरभावात् व्यवहाराभावेन शक्तिग्रहाभावे पर्यवसिते समाधत्ते सर्गादावित्यनेन तथा व्यवहरतीति प्रयोजकवृद्धप्रयोज्यवृद्धौ भूयेश्वरो घटमानयेति वाक्यं प्रयोज्य वृद्ध प्रति वदति स एव घटमानयति । अत्रागमत्व किमिति प्रसङ्गाद्विचार्यते न तावन्महाजनानां वेदाकारानुगतव्यवहाराद्वेदत्व जातिविशेषः । चैत्राद्यनुमापकशब्दवृत्तिजात्या साङ्कर्यात् । नापि मुख्यवेदप्रयोगविषयत्वं मुख्यार्थाज्ञानात् । नापि शखासमुदायत्व तस्य वेदनिरूप्यत्वात् । नापि स्वतन्त्रपुरुषप्रणीतत्वं । अस्मर्यमाणकर्त्तृकत्वेन तस्य स्वतन्त्रपुरुषप्रणीतत्वाभावात् । तथा च वेदः अपौरुषेयः अस्मर्यमाणकर्त्तृकत्वादाकाशवत् । अत्र वेदः पौरुषेयो वाक्यत्वात् भारतादिवदित्यनुमानाद्वेदस्य पौरुषेयत्व सिद्ध वेदजनकेश्वरसिद्धिः । "तस्मात्तपस्तेपुनश्चत्वारो वेदा अजायन्त ऋचः सामानि जंज्ञिरे इत्यादि श्रुतेः"। "प्रतिमन्वन्तरे चैषा श्रुतिरन्याभिधीयत"इति स्मरणाच्च । न च स्वयम्भुरेव भगवान्वेदो गीतस्त्वया पुरा । शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारका इत्यनेन विरोध इति वाच्यम् तस्य श्रुतिविरोधेनान्यपरत्वात् वेदस्यास्मदाद्यननुभूतत्वेन स्वयम्भुत्वात् । अत्र वेदत्व शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्व । अस्यार्थः । शब्दस्तदुप-

जीवि च यत्प्रमाणं तदतिरिक्तं यत्प्रमाणं तज्जन्या या प्रमितिः। तद्विषयार्थैक भिन्नत्वेसति शब्दस्य यद्वाक्यार्थज्ञान तज्जन्यो न भवति यः स प्रमाणशब्द त्यर्थः। अत्र सत्यन्त घटमानयेत्यादिवाक्येऽतिव्याप्तिवारणाय शब्दोपाजीव्यनुमानजन्यप्रमाविषयत्वाद्वेदार्थस्येति लक्षणमसभवि स्यात्तद्वारणाय तदुपजीवीति। शब्दवेदगोचरप्रमायाः शब्दतदुपजीविप्रमाणातिरिक्तमनोयोगादिजन्यत्वादसम्भव इति द्वितीयप्रमाणपदं। सर्वेषां प्रमाणानामदृष्टद्वारा परम्परया शब्दोपजीवनात्तदतिरिक्तप्रमाणाप्रसिध्याऽसम्भवः स्यादतः प्रथम प्रमाणपद शब्दोपजीविता यस्य प्रमाणस्य स्वप्रमाणताव्यवस्थितौ शब्दोपजीविप्रमाणशब्देन तादृशप्रमाणमुक्त चक्षुरादिप्रमाणं च न तथा वेदार्थस्य वेदाभिज्ञस्वप्नरूपभ्रमविषयत्वात् तद्धर्म्यंशे प्रमाकरणमनोरूपप्रमाणजन्यज्ञानविषयत्वाद्वेदार्थस्य लक्षणेऽसम्भवः स्यादतः प्रमितीति प्रमितित्वं सर्वांशे विवक्षितं स्वप्ने तथात्वाभावात्। नन्विदमीश्वरसिद्धौ सम्भवति स एव नास्तीत्याह ईश्वर इति। क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यत्र क्षित्यादिकमकर्तृकं शरीराजन्यत्वादिति सत्प्रतिपक्षक्लेशं प्रतिसन्धाय प्रकारान्तरेणेश्वरं साधयति सर्गादाविति। यद्वा सर्गादौ व्यवहारसाधक ईश्वर इत्युक्त तत्रेश्वरे प्रमाणाभावे व्यवहारं कथमिति पर्यवसिते व्यवहारजनकत्वेनेश्वरसाधनमेवोचितमिति तज्जनकत्वेनेश्वरः साधयति। सर्गादाविति। पूर्वसर्गसिद्धेति। तथा च पूर्वसर्गे गृहीतसङ्केतानां मन्वादीनामस्मिन्सर्गे व्यवहारजनकत्वमिति भावः। प्रवृत्तिहेतवः आतिप्रयोज्यवृद्धस्यानयनादौ प्रवृत्तिहेतवः। मानं सर्वज्ञत्वे प्रमाण। पूर्वसर्गेति। मन्वादीनां सर्वज्ञत्वेक्लृप्तेपि यद्व्यवहारं दृष्ट्वा मन्वादीना सङ्केतग्रहो जातस्तद्व्यवहारस्यानुपपत्तिरिति भावः। तथा कल्पनायां प्रवृत्तिहेतुत्वकल्पनायां सर्वत्र जगति। एवं विश्वस्य गोप्ता भुवनस्य कर्त्ता विश्वतश्चक्षुरुतविश्वतो मुखं विश्वतोवाहुरुतविश्वतस्यात्। सं वाहूभ्यां धमति सम्पतत्रैर्घावाभूमीजनयन्देव एक इत्यादिश्रुतयोपीश्वरसाधिका इति। अथ प्रयोजनाभावात्कथमीश्वरस्य सर्गादौ

शरीरद्वयपरिग्रहः । न च परदुःखप्रहारणेच्छारूपकरुणैव प्रयोजनमिति वाच्यम् वैषम्यानुपपत्तेः एवं च स्वर्गिणमेवसृजेन्न नारकिणमिति धर्माधर्मादिपरतन्त्रत्वाद्धर्माधर्मानुरूपं फलमिति वाच्यम् । मीमांसकमतप्रवेशात् । तथा च कर्मनिमित्तमेव वैलक्षण्यमस्तु कीटादिज्ञानवता किमीश्वरेणेति चेत् अत्रोच्यते । कार्यत्वावच्छिन्नं प्रति अन्वयव्यतिरेकाभ्यां ज्ञानादिनां हेतुत्वं तच्च सर्गादौ नास्मदादीनामिति तदाश्रयत्वेनेश्वरसिद्धिः । न चैवं ज्ञानादीनां हेतुत्वकल्पने कृतं कर्मणां हेतुत्वकल्पनेनेति वाच्यम् ईश्वरज्ञानादीनां नित्यत्वादेकदा सर्गप्रलयौ स्यातां तथा च तत्तच्छुभाशुभकर्मजन्यादृष्टादिसहिता एव ज्ञानादयस्तत्तत्कार्यजनका इति । इत्थं च सर्गासाधारणक्रमिकादृष्टादिकारणकलापकालिकेश्वरचिकीर्षायास्तादृशप्रलयासारणक्रमिकादृष्टादिसामग्रीकालीनतादृशजिहीर्षायाः सर्वदा विरहान्न दोषः । अत्रेदं प्रतिभाति । खण्डघटः अस्मदादिकृतिभिन्नकृतिजन्यः घटत्वादाद्यघटवदित्यनुमानादस्मदादिकृतिभिन्ना कृतिः सिद्धा सा च गुणत्वाद्द्रव्याश्रितेति तदाश्रयस्त्वीश्वर एव अनयैव च रीत्या ज्ञानेच्छाजन्यत्वं साध्यं । तथा च कार्यमात्रं प्रतीश्वरज्ञानादिकं कारणमिति ज्ञानादीनां सर्वविषयकत्वमिति । ननूपादानप्रत्यक्षविधयेश्वरज्ञानस्य हेतुत्वात्कार्योपादानमात्रस्य विषयत्वेपि तस्य नित्यगुणादिविषयकत्वे मानाभाव इति चेन्न । गुणाद्यविषयकज्ञानस्य शशशृङ्गायमाणत्वात् नित्यविषयकज्ञाने तद्गुणादिविषयकत्वस्वीकारात् । न चेश्वरज्ञाने विषयतानन्त्य मिति वाच्यम् । विषयतायां विषयभेदनियमास्वीकारात् विषयभेदं विनापि कारणभेदाद्विषयताभेदस्वीकारात् । यथा विषयभेदं विनापि परामर्षादिकारणभेदादनुमित्यादौ विषयिताभेद इति । तर्हि निर्विषयकत्वमेव कुतो नेति चेन्न । कार्यकारणभावानुरोधात्सविषयकत्वस्वीकारात् । तथा हीश्वरज्ञानमुपादानप्रत्यक्षविधाया हेतुरिति तत्तदुपादानविषयकत्वमेव वाच्यम् । तस्य सर्वज्ञत्वे "यः सर्वज्ञः सर्वविदिति श्रुतेरेव"भारः ।

एवं च यत्प्रकारक ज्ञानं तत्प्रकारिकैवेच्छा यत्प्रकारिकेच्छा तत्प्रकारिका कृतिरिति नियमादिच्छा कृत्योः सविषयकत्वमिति तत्र ज्ञानादित्रये ईश्वरे च लाघवादेकत्वं नित्यत्वं च सिध्यति न तु नानात्वमनित्यत्वं च गौरवात्। नचास्मदादीनामेव तादृशज्ञानादिकमस्तु किमीश्वरस्वीकारेणेति वाच्यम्। अस्मज्ज्ञानस्य भ्रमात्मकत्वात्। सर्गादावस्मदादिज्ञानाद्यसम्भवाच्च। किं च चैत्रादिभेदेन विनिगमनाविरहादनेकात्मनि तादृशज्ञानादित्रयसम्बन्धकल्पने गौरवात्तेषामाश्रयत्वेनैक एव कल्प्यते स एवेश्वर इति। तस्य भगवतो जगदगोचरत्वाभावात्सर्वेषां नित्यज्ञात्मकमेव ज्ञानमिति। अत एव यः सर्वज्ञः सर्वविदित्यादि श्रुतिसिद्धसार्वज्ञ्यमपि सङ्गच्छते। अत्र पीलुपाकवादिनो वैशेषिकाः पीलौ परमाणौ पाकस्तथा च तेजः संयोगवशाद्घटादीनां द्व्यणुकपर्यन्तानां विनाशः। ततः पूर्वरूपविनाशपाकजरूपोत्पादौ ततः पुनर्द्व्यणुकादिक्रमेण घटान्तरोत्पत्तिः पाकजरूपं परमाणावेव द्व्यणुकादौ तु रूपजरूपमेव। न चावयविन्येव पाकजरूपोत्पत्तिर्लाघवात्। नत्ववयवेषु द्व्यणुकपर्यन्तविनाशकल्पने गौरवादिति वाच्यम्। अवयविन्येव पुनस्तेजसोऽतिशयितवेगवशादुत्पत्तिकल्पने पुनस्तेष्ववयवेषु पाकोत्पत्त्यसम्भवाद् इति तत्र कृतित्वेन कार्यत्वेन कार्यकारणभावानुरोधात्पाकस्थले कस्यचित्कृतिर्वाच्या यस्य कृतिः स ईश्वर इतीश्वरसिद्धिरित्याहुः। तदपरे न क्षमन्ते तादृशझटितिवह्निवेगातिशयक्रमेण विनाशोत्पत्तिस्वीकारे गौरवात्॥ पाकपूर्वस्थितरेव एष इत्युपलब्धिश्च स्याच्च तस्मादवयविन्येव पाकजरूपविनाशाविति। अत्र जरद्वैशेषिकाः। अवयविनि मणिसंयोगकाले दाहवारणाय संयोगसम्बन्धेन मणेः प्रतिबन्धकत्वं। तदारम्भकावयवादिषु परमाणुपर्यन्तेषु दाहवारणाय संयुक्तसमवायित्वादिना प्रतिबन्धकत्वं मणौ दाहवारणाय तादात्म्येन मणेः प्रतिबन्धकत्वमित्यनेकप्रतिबध्यप्रतिबन्धकभाव इति भवतां महद्गौरवं अस्मन्मते तु परमाणावेव दाह इति नैते प्रतिबध्यप्रतिबन्धकभावा इत्याहुः अत्र नैयायिकाः। रूपत्वावच्छिन्नं प्रति समवायेन द्रव्यस्य प्रतिबन्धक-

त्वमिति न परमाणुपर्यन्तावयवेषु दाहः । अन्त्यावयविनि मणौ च दाहवारणाय संयोगेन मणेः प्रतिबन्धकत्वमित्यनन्तप्रतिबध्यप्रतिबन्धक-भावकल्पनाभावः मणिसंयोगस्य मणावपि सत्त्वादिति सङ्क्षेपः । अथकया रीत्या वैशेषिकमते परमाणौ पाक इति चेत्तथा हि अग्निसंयोगात्परमाणौ कर्म ततः परमाण्वन्तरेण विभागस्ततो द्व्यणुकारम्भकसंयोगनाशस्ततो द्व्यणुकनाशस्ततः श्यामादिरूपविनाशस्ततो रक्तरूपोत्पत्तिरिति । अथ द्व्यणुकविनाशमारभ्यकतिभिः क्षणैर्द्व्यणुकमुत्पद्य रूपादिमद्भवतीति चेत् । अत्राचार्याः परमाणावग्निसंयोगात्कर्म ततः परमाण्वन्तरेण विभागस्ततो द्व्यणुकारम्भकसंयोगनाशस्ततो द्व्यणुकविनाशः परमाण्वाकाशविभागरूपो विभागजविभागश्चेत्येकः कालस्ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः परमाण्वाकाशसंयोगनाशश्चेत्येकः कालः । ततस्तृतीयक्षणे परमाणौ रक्तरूपोत्पत्तिः परमाणूत्तरदेशसंयोग इत्येकः कालः न च परमाणौ श्यामादिरूपविनाशक्षणे रक्तरूपोत्पत्तिक्षणे वा द्व्यणुकारम्भानुगुणकर्मास्त्विति वाच्यम् । कर्मवति कर्मानुत्पत्तेर्निर्गुणे कर्मानुत्पत्तेश्च तथा च वह्निसंयोगात्परमाणौ यत्कर्म तद्विनाशेसति गुणान्तरोत्पत्तौ च सति द्रव्यारम्भानुगुणक्रियेति । न च श्यामादिरूपनाशक्षणे रक्तरूपोत्पत्तिः कुतो नेति वाच्यम् । रूपान्तरे पूर्वरूपनाशस्य कारणत्वादिति चतुर्थे वह्निनोदनजन्यपरमाणौ कर्मनाशः । पञ्चमेऽदृष्टवदात्मसंयोगाद्द्व्यणुकारम्भानुगुणं परमाणौ कर्म षष्ठे परमाणुपूर्वदेशविभागः । सप्तमे परमाणुपूर्वदेशसंयोगनाशः अष्टमे परमाणौ द्व्यणुकारम्भकसंयोगः नवमे द्व्यणुकोत्पत्तिः दशमे रक्तरूपोत्पत्तिरिति दशक्षणाः । इयं च द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजननाङ्गीकारे सति सम्भवति तदनङ्गीकारे तु नवक्षणाः । तथा हि अग्निसंयोगात्परमाणौ कर्म ततः परमाणुद्वयविभागः ततो द्व्यणुकारम्भकपरमाणुद्वयसंयोगनाशस्ततो द्व्यणुकनाशः ततो द्व्यणुकनाशद्वितीयक्षणे परमाणौ श्यामादिरूपनाशः । तृतीये रक्तरूपाद्युत्पत्तिः कर्मनाशश्च चतुर्थे द्रव्यारम्भानुगुणं कर्म पञ्चमे विभागः

षष्ठे पूर्वसंयोगनाशः । सप्तमे द्व्यणुकारम्भकसंयोगः । अष्टमे द्व्यणुकोत्पत्तिः नवमे रक्तरूपोत्पत्तिरिति नवक्षणाः । अथ यदि द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागस्तदैकादशक्षणाः । तथा हि वह्निसंयोगात्पमाणौ कर्म ततः परमाणुद्वयविभागः । ततो द्व्यणुकारम्भकपरमाणुद्वयसयोगनाशः ततो द्व्यणुकनाशः द्व्यणुकनाशद्वितीयक्षणे परमाण्वाकाशविभागः । अयमेव च द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागः । तृतीये क्षणे परमाण्वाकाशसयोगनाशः । चतुर्थे क्षणे परमाणूत्तरदेशसयोगः । पञ्चमक्षणे परमाणुकर्मनाशः । षष्ठे क्षणे ऽदृष्टवदात्मसयोगाद्द्व्यारम्भानुगुणक्रिया सप्तमे क्षणे विभागः । अष्टमे क्षणे पूर्वसंयोगनाशः । नवमे क्षणे द्व्यणुकारम्भकसंयोगः । दशमे क्षणे द्व्यणुकोत्पत्तिः एकादशक्षणे रक्तरूपोत्पत्तिरित्येकादशक्षणाः । अत्र दशक्षणायामेकादशक्षणायां च द्व्यणुकनाशोत्तरमग्निसंयोगात्परमाणौ श्यामादिरूपनिवृत्तिस्तदुत्तरक्षणे रक्तरूपोत्पत्तिः । पाकजरूपनिवृत्तौ समवायसम्बन्धेन द्व्यणुकस्य प्रतिबन्धकत्वेन सति द्व्यणुके रूपनिवृत्त्यसम्भवात् । एकस्मादग्निसयोगात्परम्परया परमाण्वादिक्रियाक्रमेण द्व्यणुकनाशः । इतराग्निसंयोगाच्च श्यामादिरूपविनाशः अन्यस्माच्च रक्तरूपोत्पत्तिरिति । अथैकस्मादेवाग्निसंयोगाद्विनाशोत्पादौ स्यातामिति चेन्न । अग्निसयोगस्य तावत्कालमस्थिरत्वाद् उत्पादकस्य नाशकत्वे रूपनाशोत्तरमग्निनाशादग्निसंयोगनाशे परमाणौ बहुकालं नीरूपत्वापत्तेः । नाशकस्योत्पादकत्वे रूपोत्पादकाग्निसयोगनाशे रक्ततरत्व न स्यादिति ॥ अथ परमाण्वन्तरकर्मचिन्तनात्पञ्चक्षणाः तथा हि एकस्मिन्परमाणौ कर्म ततः परमाणुद्वयविभागः ततो द्व्यणुकारम्भकसयोगनाशपरमाण्वन्तरकर्मणी इत्येकः कालः । ततो द्व्यणुकनाशपरमाण्वन्तरकर्मजश्च विभाग इत्येकः कालः ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः । विभागात्पूर्वसयोगनाशश्चत्येकः कालः । ततस्तृतीयक्षणे द्व्यणुकारम्भकसंयोगः उत्तरदेशसयोग इत्येकः कालः । चतुर्थक्षणे द्व्यणुकोत्पत्तिः पञ्चमक्षणे रक्तोत्पत्तिरिति पञ्चक्षणाः । अथ द्रव्यनाशसमकालं परमाण्वन्तरे यदि कर्म तदा षट्क्षणाः तथा हि परमाणु-

कर्मणा परमाण्वन्तरविभागः । ततो द्व्यणुकारम्भकसंयोगनाशः । ततो द्व्यणुकनाशपरमाण्वन्तरे कर्म चेत्येकः कालः ततो द्व्यणुकनाशद्वितीयक्षणे श्यामारूपनाशः परमाण्वन्तरकर्मजश्च विभागः तृतीयक्षणे परमाणौ रक्तरूपोत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च चतुर्थे क्षणे परमाण्वन्तरे द्व्यणुकारम्भकसयोगः । पञ्चमे क्षणे द्व्यणुकोत्पत्तिः षष्ठक्षणे रक्तरूपोत्पत्तिरिति षट्क्षणाः । अथ यदि श्यामरूपनाशक्षणे परमाण्वन्तरे कर्म तदा सप्तक्षणाः तथा हि परमाणौ क्रिया ततः परमाण्वन्तरविभागः । ततो द्व्यणुकारम्भकसंयोगनाशः ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः परमाण्वन्तरे कर्म चेति तृतीये क्षणे परमाणौ रक्तरूपोत्पत्तिः परमाण्वन्तरे कर्मजविभागश्च चतुर्थे क्षणे परमाण्वन्तरपूर्वसयोगनाशः पञ्चमे क्षणे द्व्यणुकारम्भकसयोगः । षष्ठे क्षणे द्व्यणुको त्पत्तिः सप्तमे क्षणे रक्तरूपोत्पत्तिरिति सप्तक्षणाः । अथ यदि रक्तरूपोत्पत्तिसमकालं परमाण्वन्तरे कर्म तदाऽष्टक्षणाः तथा हि। परमाणौ कर्म ततः परमाण्वन्तरे विभागः तत आरम्भकसयोगनाशः । ततो द्व्यणुकनाशद्वितीयक्षणे श्यामादिरूपनाशः । ततस्तृतीयक्षणे परमाण्वन्तरे रक्तरूपोत्पत्तिः परमाण्वन्तरे कर्म च चतुर्थक्षणे कर्मजविभागः । पञ्चमे क्षणे परमाण्वन्तरपूर्वसयोगनाशः। षष्ठे क्षणे द्व्यणुकारम्भकसयोगः। सप्तमे क्षणे द्व्यणुकोत्पत्तिरष्टमे क्षणे रक्तरूपोत्पत्तिरित्यष्टक्षणा अलमतिविस्तरेण। परे तु नित्यज्ञानसुखवत्वबोधिका नित्य विज्ञानमानन्दब्रह्मेत्यादि श्रुतिरीश्वरसिद्धौ प्रमाण। न चात्र ब्रह्मणि नित्यविज्ञानानन्दयोरभेद एव बुध्यते समानविभक्तिकपदानामभेदबोधकत्व एव व्युत्पत्तेरिति चेन्न। ज्ञानसुखयोरभेदस्येश्वरे बाधितत्वाद् अन्यथा ज्ञानत्वसुखत्वाभ्यां जाति सङ्करप्रसङ्गात् तस्माद्विज्ञानपदस्य विज्ञानवति लक्षणा। आनन्दपदस्यानन्दवति लक्षणा एवञ्चानन्द ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्यत्रानन्दवदभिन्नं ब्रह्मणोरूपमित्यर्थः तच्च मोक्षे प्रारब्धातिरिक्तपापं मोक्षे प्रतिष्ठितं योगजधर्मात्स्मृतात्कृतं। यद्यपि योगजधर्मात्षोडशपदार्थतत्वज्ञानं मिथ्याज्ञानवि

वर्त्तकत्वेन मोक्षे प्रयोजकं तत्त्वमसि श्वेतकेतोस्तद्ब्रह्माहमस्मीत्यादिश्रुतिवलादभेदज्ञानं भवतु साक्षान्मोक्षे हेतुस्तथापि तत्त्वमसीत्यादिश्रुत्याऽभेदबोधो न सम्भवति। जहदजहल्लक्षणया वेदान्तिभिरपि शुद्धचैतन्यनिर्विकल्पकस्यैव हेतुत्वं स्वीकृतं। तथा नैयायिकैरपि जहदजहल्लक्षणया तत्तुल्योऽहमिति ज्ञानस्य हेतुत्व स्वीकृत। तुल्यत्व शरीराभिन्नत्वेनाविनाशित्वेन चेतनत्वविभुत्वादिनेति। तथा च यथा निर्विषभावनया भेषजादिप्रयोगमन्तरेणापि निर्विषो भवति तथैवाभेदभावनया तद्दुःखाभाववान्भवति। तत्वार्थस्तु परमात्मनः श्रुत्याद्युक्तासाधारणधर्मेणाप्रामाण्यशङ्काशून्यनिश्चयः। प्रारब्धातिरिक्तवर्त्तमानपापनाशको मोक्षे कारणमिति दिक्। अत एव नित्यविज्ञानमानन्दमित्यत्र न मत्वर्थीयाच्प्रत्ययविरोधः इत्थं च यः सर्वज्ञ इत्यपि सङ्गच्छते। नन्विदप्रसङ्गतं धर्माधर्माभ्यां सुखदुःखयोर्जायमानत्वाद्धर्मत्वेन सुखत्वेन कार्यकारणभाव इतीश्वरे धर्माभावाच्च सुखमिति। न च चन्द्रशेखरदर्शनजन्यधर्माद्वाजपेयजन्य सुखं स्यादिति वाजपेयजन्यविजातीयधर्मत्वेन विजातीयस्वर्गत्वेन हेतुहेतुमद्भावकल्पनावश्यकत्वे धर्मत्वेन सुखत्वेन कार्यकारणभावे मानाभाव इति वाच्यम्। यद्विशेषयोः कार्यकारणभावो ऽसतिबाधके तत्सामान्ययोरपीति व्याप्तेरेव मानत्वात्। वाजपेयजन्यविजातीयधर्मत्वेन विजातीयसुखत्वेनेति विशेषकार्यकारणभावे मानाभावाच्च नचोक्तातिप्रसङ्ग एव मानमिति वाच्यम्। वाजपेयादीनां स्वजन्यव्यापारसम्बन्धेन विजातीयस्वर्गं प्रति हेतुत्वकल्पनेऽतिप्रसङ्गाभावात्। न चोक्तश्रुतिवलादीश्वरे सुखसिद्धिरिति वाच्यम्। तत्रानन्दजनकत्वस्य दुःखाभाववत्वस्य वा बोधनादिति चेन्न। तद्विशेषयोरिति व्याप्तेरप्रयोजकत्वात् धर्मत्वेन सुखत्वेन कार्यकारणभावे मानाभावात्। अन्यथा कीर्त्तितवाजपेयादितश्चन्द्रशेखरदर्शनजन्यधर्मान्तरसहकृताद्वाजपेयजन्यसुखविशेषः स्यात्। तस्माद्विजातीयसुखत्वेन विजातीयधर्मत्वेन वाजपेयजन्यधर्मत्वेन वा कार्यकारणभावान्नित्यविज्ञानेत्यादिश्रुतिसिद्धनित्यसुखे बाधकविरहादीश्वरे नित्यसु-

खसिद्धिरिति सङ्क्षेपः । रामकृष्णभट्टाचार्यचरणास्तु कार्यं क्षित्यादिकमङ्कुरादिकं वा सकर्तृकं कार्यत्वादित्यनुमानेनेश्वरसिद्धिर्न तु प्रत्यक्षेणारूपिद्रव्यत्वेन बाह्येन्द्रियप्रत्यक्षविरहात् । न मानसप्रत्यक्षोपि परमात्मनः परमनोग्राह्यत्वाभावात् । न चात्र पक्षतावच्छेदक कृतिसाध्यत्वरूपं कार्यत्व हेत्वाभिन्नमिति वाच्यम् । प्रागभावप्रतियोगित्वस्य कार्यत्वस्य हेतुत्वात् । न च घटादौ सकर्तृकत्वसिध्यांशतः सिद्धसाधनमिति वाच्यम् पक्षतावच्छेदकावच्छेदेनसाध्यसिद्धेरुद्देश्यत्वात् । न च तथापि क्षितित्वस्य पक्षतावच्छेदकत्वे परमाणौ बाध इति वाच्यम् । जन्यक्षितित्वस्यैव पक्षतावच्छेदकत्वात् । यदि च परमते जन्यभिन्नक्षितेरप्रसिध्या व्यावर्त्याप्रसिद्धिरिति सूक्ष्ममीक्ष्यते तदाङ्कुरत्वेन जन्यकृत्यजन्यजन्यत्वेन वा पक्षत्वमस्तु । न चात्र शरीरजन्यत्वमुपाधिः । नचाङ्कुरादौ साध्यव्यापकत्वसन्देहान्नायमुपाधिरिति वाच्यम् । तस्य सन्दिग्धोपाधित्वस्य दुर्वारत्वात् । तथा च तदाहितव्यभिचारसन्देहात्कथमनुमानमिति वाच्यम् । अनुमितौ व्यभिचारसन्देहस्याविरोधित्वात् अन्यथा पक्षे पक्षसमे वा साध्यसन्देहस्य सत्त्वात्साध्याभाववद्वृत्तित्वादिरूपव्यभिचारसन्देहसम्भवादनुमानमात्रोच्छेदापत्तेरिति । कृतित्वेनकार्यत्वेनकार्यकारणभावस्य सत्त्वादनुकूललाघवतर्कस्य सत्त्वाच्चेति । अथ तथापि घटपटादौ कुलालकुविन्दादिजन्यत्वसिद्धौ नेश्वरसिद्धिरिति चेन्न । सर्गाद्यकालीनं द्व्यणुकं सकर्तृकं कार्यत्वादित्यनुमानसिद्धद्व्यणुके जीवाजन्यत्वाच्छिवसिद्धिः । न चैवं चेष्टात्वेन शरीरत्वेन हेतुहेतुमद्भावाच्छरीरं विना कथं चेष्टेति नित्य शिवशरीरं स्यादिति चेत् । न चैवमशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत इति श्रुतिविरोध इति वाच्यम् । एतच्छ्रुतेर्जन्यशरीराभावबोधकत्वात् अत्र वावेति सम्बोधनं प्रियाप्रिये सुखदुःखे । यद्वा मास्तु तस्य शरीर तथापि "पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुत्या चक्षुरादिकमन्तरेणापि यथा चाक्षुषादिबोधस्तथा विना शरीरमीश्वरे चेष्टादिकमिति । तदुक्तमाचार्यैः नित्यमपीश्वरज्ञानं शरीरमन्तरेणानिच्छन्तो जन्यमपि सुखज्ञान मुक्तिकाले स्वीकुर्वन्तस्त्वया-

विरोधोभयं त्रयमपि त्यक्तवन्तस्तौतातिताः । विनैव शरीरं मुक्तिकाले जन्यज्ञानाङ्गीकारादीश्वरे विना शरीरं नित्यज्ञानानङ्गीकाराच्च त्रपीकारणं विना कार्यमिति विरोधः । ईश्वरस्यानङ्गीकार इति भयं तथा च युक्त्या श्रुत्या च सिद्धो जगत्कार्त्तेत्याहुः । अत्र वदन्ति । एवं प्रसिद्धभगवता सह समानलोकता वैकुण्ठवासः सालोक्य एवं सारूप्य तुल्यरूपता चतुर्भुजादिशरीरं । सार्ष्टि अणिमाद्यैश्वर्यसाम्य सामीप्य भगवत्समीपावस्थितिः सायुज्य आत्यन्तिकी दुःखनिवृत्तिरिति इदं नैयायिकानामप्यविरुद्धं सालोक्य सारूप्यं सार्ष्टि सामीप्यमिति चतुर्विधमुक्तिमतां पुनरावृत्तिस्तदा न तासां तत्वज्ञानजन्यत्वं । यदि न पुनरावृत्तिस्तदा तेषां जीवन्मुक्तत्व । सायुज्यमुक्तौ तु न स च पुनरावर्त्तते इति नैयायिकसिद्धान्तः । अन्ये तु परमात्मनि जीवात्मलयो लिङ्गशरीरापगमरूपो मोक्षः । घ्राणरसनचक्षुःश्रोत्रत्वङ्मनांसि वाक्पाणिपादपायूपस्थानि प्राणापानव्यानोदानसमाना इति षोडशा च यवं लिङ्गशरीर । यद्दि च पृथिव्यप्तेजोवाय्वाकाशेति पञ्च महा भूतानि लिङ्गशरीरान्तर्गतानीत्युच्यते । तदा पञ्चप्राणास्ततो निकाशनीया इत्याहुः । केचित्तु एकविंशतिदुःखध्वंसो मोक्ष इति प्राचीननैयायिकमतं तत्रैकविंशतिदुःखानि षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुख दुःखं शरीरं च । तत्र शरीरवदात्मनोपि दुःखसाधनत्वादात्मापि हेयः तथा च जीवात्मलयो जीवात्मनाशो मोक्षः । न चानादेः कथनाशः प्रागभाववत्त चाशाम्युपगमादिति । तत्र आत्मनः समवायिकारणासमवायिकारणयोरभावात्तत्चाशमन्तरेण द्रव्यनाशासम्भवः । इतरथा नित्यद्रव्यमात्रनाशापत्तेः । ननु कर्त्तृत्वं प्रकृतेर्नपुरुषस्य पङ्कजपत्रवत्तस्य निर्लेपात् । तत्र कर्त्तृत्वप्रत्ययस्तु भ्रमः । तदुक्त भगवता "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वसः । अहङ्कारविमूढ़ात्मा कर्त्ताहमिति मन्यते" स च पुरुषश्चेतनः । आदिकारणं प्रकृतिरचेतना परिणामित्वात्ततो महदादिसर्गस्तथा चान्तःकरणं प्रकृतेः परिणामस्तदेव महतत्वं बुद्धिश्चोच्यते तत्सत्त्वासत्त्वाभ्यां पुरुषस्य च बन्धमोक्षौ । प्रकृतिपुरुषयोर्भेदाग्रहाद्यथा निःक्रियेपि पुरुषे कर्तृत्वाभिमा-

शन्याद्याकाशास्तु स्वशक्त्या पूर्वस्यां यान्ति । तत्र भचक्रादप्यूर्ध्वगस्याकाशस्य जवेन स्वशक्त्या पूर्वाभिमुखं गच्छत आघातेन तदन्तर्गतभचक्राकाशादयोऽपि पराशाभिमुखं गच्छन्तीति भावः । प्रवाहप्रातिलोम्येन गच्छन्तोऽपि पुरुषा नदीप्रवाहदिश्येव यान्ति तद्वदित्यर्थः । काचविमलमणिवन्निर्मले सचेतने सावयवे भूताद्यावेशवति स्वस्वाकाशेऽधिष्ठिता नक्षत्रग्रहा भूपृष्ठस्थैः सम्यगेव दृश्यन्ते । यथा रत्नघटमध्यस्थोऽपि दीपः प्रतिबन्धे दूरस्थैर्यथावस्थित एवावलोक्यते । खस्था गोलाकारा विशिष्टशक्तिमन्तो भूमिवन्निराधारा जीवविशेषा एवाकाशशब्देनोच्यन्ते । तैराकाशैरेव मण्यादिवत् स्वाधिष्ठितो निर्गतिकोऽपि ग्रह इतस्ततो नीयते । आकाशगतिरेव तत्स्थग्रहगतिरिति लोकैरुपचर्यते । कदलीपुष्पपुटवच्च तेषामाकाशानां संलग्नतेत्याहुः । एतान्याकाशानि मध्यकक्षास्थानीयानि । ईदृशमध्यकक्षापरिधावनवरतं मन्दनीचोच्चवृत्तमध्यो भ्रमति परं मध्यगत्या । मन्दनीचोच्चवृत्तपरिधौ चोच्चप्रदेशान्मन्दकेन्द्रगत्या ग्रहो भ्रमति रविश्चन्द्रश्च । भौमाद्यास्तु मन्दनीचोच्चवृत्तपरिधावप्यनवरतं भ्रमणशीलस्य शीघ्रनीचोच्चवृत्तमध्यस्य मन्दस्पष्टगत्या गच्छतः परिधौ स्वस्वशीघ्रकेन्द्रगत्या चलतुङ्गाद्भ्रमन्ति । तुङ्गप्रदेशो नाम भूगर्भाद्दूरतरः प्रदेशः स्वस्वनीचोच्चवृत्ते । नीचोच्चवृत्तं नामान्त्यफलज्यया कृत वृत्तम् । नीचोच्चवृत्तान्यपि गोलाकारा जीवविशेषा एवेत्याहुः । आर्यभटास्तु ग्रहाः पूर्वस्यां यान्ति । नक्षत्राणि तु स्थिराण्येव भूरेव नाक्षत्रदिनमध्ये पूर्वाभिमुखमेकवारं भ्रमति । तेनैव नक्षत्रग्रहाणामुदयास्तौ पूर्वपश्चिमयोर्घटतः । प्रवहानिलकल्पना व्यर्था ।

तथा च वृद्धार्यः ।

"अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगानि लङ्कायाम्"[१] ॥

इति स्पष्टगतावपि किञ्चित्कारणेन भाव्यम् । मध्यग्रहस्य स्पष्टग्रहसाम्यादर्शनात् । न च स्पष्टग्रहस्वरूपादन्यन्मध्यग्रहस्वरूपमाकाशे-

१ महार्यभटसिद्धान्ते ४ पादे १० श्लो. ।

ऽस्तीति वाच्यम् । अनुपलम्भात् । स्पष्टसूर्यस्वरूपादन्यन्मध्यमसूर्यविम्बमाकाशे यद्यभविष्यत् तर्हि तदप्युपलभ्येत । कादाचित्कस्याप्युपलम्भस्याभावान्नास्त्येव । अथ वक्तव्य यस्मिन् वृत्ते ग्रहो भ्रमति यस्मिंश्च वृत्तान्तरे विलोक्यते तद्वृत्तयोरेकस्यापि ग्रहविम्बस्य मेषादेः सकाशाद्भिन्नप्रदेशयोर्दृष्टत्वान्मध्यस्य भेदो घटत इति । तद्यदि द्वयोर्वृत्तयोर्मध्ये भूगर्भ एव स्वीक्रियते तदा मध्यस्पष्टयोः कलाद्यमन्तरं न स्यात् । एकत्र वृत्ते महत्यः कला अन्यत्र लघ्व्य इति मेषादेः सकाशाद्यासु कलासु महति वृत्ते पारमार्थिको ग्रहस्तास्वेव लघुवृत्तेऽपि स्यात् । दृश्यते च मध्यग्रहात् स्पष्टग्रहभिन्नत्व कलाद्यवयवेन । तस्मात् कलाद्यवयवान्तरान्यथाऽनुपपत्त्या यस्मिन् वृत्ते पारमार्थिको ग्रहो भ्रमति तस्य मध्य भूगर्भे नास्तीति कल्प्यते । कक्षामण्डलमध्यस्तु भूगर्भ एवेति भूस्थो द्रष्टा भवलयान्तः समन्तात् समान्तरेणावस्थिते स्वकक्षामण्डले ग्रहं पश्यति । चक्रयन्त्रादिवेधेन नक्षत्रग्रहयोरन्तरं लवादि यदुपलभ्यते तत् खलु नक्षत्रकक्षास्थनक्षत्रं प्रति भूगर्भान्नीयमानसूत्रस्य ग्रहकक्षाया यः सपातस्तस्य भूगर्भात् प्रतिमण्डस्थग्रहं प्रति नीयमानकर्णसूत्रस्य कक्षायां यः संपातस्तस्य चान्तरमिदमिति कक्षामण्डल एव ग्रहभानमुच्यते । प्रतिमण्डलस्थग्रहस्य ग्रहकक्षास्थनक्षत्रसूत्रस्यान्तरज्ञानं दुर्बोधमिति न प्रतिमण्डले द्रष्टा ग्रहं पश्यतीत्याशयः । स्पष्टगतिवासनायामाचार्योऽपि वक्ष्यति । 'भूमेर्मध्यं खलु भवलयस्यापि मध्य यतः स्यात्'–इत्यादि । यो मध्यमो भौमादिको ग्रहः स तु मन्दप्रतिमण्डले भ्रमति । भूगर्भात् त्रिज्याव्यासार्धेन कृतं यद्वृत्तं तत्कक्षावृत्तम् । तस्योर्ध्वाधररेखायामन्त्यफलज्याग्रे यत् त्रिज्यया कृत वृत्त तत् प्रतिमण्डलम् । तदपि मन्दशीघ्रभेदेन द्विविधम् । तत्र मन्दप्रतिमण्डले तुङ्गदेशान्मेषादिर्मन्दोच्चभुक्त्या प्रत्यहं पृष्ठतो गच्छति । तस्मान्मेषादेरनुलोमं मध्यगत्या मध्यमो भ्रमति । स मध्यमः कर्णगत्या यत्र कक्षावृत्ते दृश्यते तत्र कक्षावृत्ते मन्दस्पष्टः । चन्द्रकक्षावलयाद्बुधकक्षावलयं महत् । कक्षयोरूर्ध्वाधरान्तरेण बह्वन्तरितत्वात् । इदं कक्षावलयं शीघ्रकर्मणि चैकमेव

त्रिज्ययोरेकत्वात् । मन्दकर्मणि तु द्वितीयमपि कक्षावलयं स्वीक्रियते । मन्दफलानयने कर्णानुपातस्याङ्गत्वात् । भूगर्भान्मन्दकर्णतुल्यव्यासार्धेन यद्वृत्तमुत्पद्यते तत् किल द्वितीयं कक्षावलयम् । इदं प्रतिक्षणं चलं मन्दकर्णस्य चलत्वात् । अस्य कक्षावलयस्य मन्दप्रतिमण्डलस्य योगे सर्वदा मध्यमो ग्रहो भ्रमति । द्वयोः कक्षावलययोर्मेषादिचिह्नमेकत्रैव भवति वृत्तमध्यस्यैक्यात् । तस्माद्द्वितीयकक्षावृत्तमेषादेर्यस्मिन् राश्याद्यवयवे ग्रहस्तस्मिन्नेव प्रथमेऽपि कक्षावलये भवितुमर्हति । प्रतिमण्डलस्थमेषादिस्तु कक्षामण्डलस्थमेषादेरग्रतः पृष्ठतो वा भवति । तस्माद् द्वितीयकक्षावलयप्रतिमण्डलयोगस्थग्रहं प्रति भूगर्भान्नीयमानं यत् सूत्रं तदवधिकद्वितीयकक्षावृत्तस्थमेषादिचिह्नाद्याः कलास्ता एव स्पष्टग्रहलिप्ताः । यास्तु प्रतिमण्डलस्थमेषादेर्गण्यन्ते ता एव मध्यकलाः । तासां स्पष्टग्रहकलानामन्तरं मन्दफलकलाः कर्णानुपातं विनैव सिद्ध्यन्ति । अत एवं कल्प्यते द्वितीयकक्षावलयमन्दप्रतिमण्डलयोग एव मध्यमो भ्रमति तत्रैव स्पष्टोऽप्यवलोक्यते । तद्वृत्तयोर्मेषादिचिह्नस्यैव भिन्नत्वेन मध्यस्पष्टयोरंशाद्यवयवेनैव भेदः स्थानभेदस्तु नास्त्येव । यतो यावती मन्दप्रतिमण्डले ग्रहोच्चान्तरदोर्ज्या तावत्येव द्वितीयकक्षावलयेऽपि भवति । प्रथमकक्षावृत्त मन्दकर्णानयनार्थमुपयुज्यते । एवं यः सिद्धो मन्दस्पष्टः स शीघ्रप्रतिमण्डले तत्स्थमेषादेरनुलोमं भ्रमति । परन्तु मन्दस्पष्टगत्या प्रतिक्षणविलक्षणया तत्परिधौ गच्छतीति कल्प्यते। फलान्तरस्य दर्शनात् । यदि सूर्यचन्द्रयोरिवैकमेव फलमभविष्यत् तदा मन्दप्रतिमण्डल एव गमनमभविष्यत् । वस्तुतस्तु भौमाद्या मन्दस्पष्टगत्यैव वास्तवे शीघ्रप्रतिमण्डल एव भ्रमन्ति । शररूपा दक्षिणोत्तरगतिरुच्चादिस्थितिरपि शीघ्रप्रतिमण्डलस्थस्यैव ग्रहस्य दृश्यत इति । तस्य वास्तवत्वमुच्यते । तस्य यन्मन्दप्रतिमण्डले भ्रमणं तदवास्तवमपि मन्दफलानयनार्थत्वेनैव यथाकथञ्चित् कल्प्यते । तस्माद्भूगर्भात् शीघ्रप्रतिमण्डलस्थमन्दस्पष्टग्रहं प्रति नीयमान दृक्सूत्रं यत्र त्रिज्याव्यासार्धोत्थवृत्ते कक्षाख्ये यत्र

लगति तत्प्रदेशस्य कक्षास्थमेषादेर्यदन्तरं त स्पष्टग्रहकलाः। आसां शीघ्रप्रतिमण्डस्थमन्दस्पष्टकलानामन्तरं शीघ्रफलम्। अत्र शीघ्रकर्णाग्रे मन्दस्पष्टः। स्पष्टस्तु कर्णसूत्रसक्ते कक्षावृत्ते। शीघ्रफलानयने कर्णानुपातस्य दृष्टत्वात् कक्षावलयप्रतिमण्डलयोर्ग्रहोच्चान्तरदोर्ज्याभिन्नत्वात्। स्पष्टमन्दस्पष्टयोः स्थलभिन्नत्वेन मेषादिचिह्नयोरपि वृत्तद्वयेऽप्यन्तरितत्वादनुपातद्वयेन शीघ्रफलं साध्यते। यद्वा कक्षावृत्तपरिधौ मन्दनीचोच्चवृत्तमध्यं मध्यगत्या भ्रमति। तत्रोच्चप्रदेशाद्ग्रहो मन्दकेन्द्रगत्या गच्छति। यत्रासौ ग्रहः कर्णसूत्रेण कक्षापरिधौ दृश्यते तत्रैव रविचन्द्रौ स्पष्टौ। भौमाद्यस्तु मन्दस्पष्टस्तत्रैव शीघ्रनीचोच्चवृत्तमध्ये भ्रमति। मन्दस्पष्टगत्या तत्परिधौ शीघ्रकेन्द्रगत्यैवोच्चप्रदेशाद्ग्रहो भ्रमति। नीचोच्चवृत्तं नामान्त्यफलज्याकृतं वृत्तम्। यवनास्तु मन्दकर्णव्यासार्धेन कृतं यत् कक्षावलयं तत्परिधौ शीघ्रनीचोच्चवृत्तमध्य मन्यन्ते। एवं मध्यमन्दस्पष्टस्पष्टानां भेदः। इयं कल्पना गोले कियन्ति निबद्धानीत्यत्र मन्दनीचोच्चवृत्तानि सप्त शैघ्र्याणि पञ्च चेति वशिष्ठेन वदता कृतैवेति न मनुष्यबुद्धिप्रभवा। वृद्धार्यब्रह्मगुप्ताभ्यामपि चोक्तैव। ननु नीचोच्चवृत्तमध्यानामचेतनानां प्रतिमण्डलस्योच्चप्रदेशाधिष्ठितराश्याद्यवयवस्याचेतनस्य च कथं वलनमुच्यते। नैष दोषः। चेतनग्रहसंनिधानादीश्वरेच्छावशाद्वा।

"अचेतनाऽपि प्रकृतिः प्रगाढमात्मोपकण्ठे सकलं तनोति।
अचेतनं संचलतीव लोह स्वयं यथा भ्रामकसंनिधाने"॥

यद्वा मन्दशीघ्रोच्चपातानामेव देवतात्वस्वीकाराददोषः। आचार्यसंमतोऽय पक्षः। तत्तत्कालावच्छिन्नस्पष्टकक्षायामेव स्पष्टगत्या स्वच्छन्दगमनं वा। अथ चन्द्रः सर्वग्रहापेक्षया मन्दगतिरिति नित्योदयतारतम्यदर्शनादनुमाय ग्रहाणा स्वशक्त्या पूर्वगमनं नास्ति। या तु पूर्वगतिः सा पश्चिमगत्यनुनिष्पन्नैव। भूः स्थिरैवेति सौरतन्त्रविदो वर्णयन्ति।

यथा च सूर्यसिद्धान्ते।

"पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः।
जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः॥

प्राग्गतित्वम् ... ... ... ... ... 'इति"।

शाकल्येऽपि।

"इति पर्यटतां तेषां भाग्ये भानि तु तान् ग्रहान्।

अतीत्य तरसा साऽह्नि यत्प्रत्यक् प्राग्गतिश्च सा"॥

इति स्पष्टगतावपि कारणमुच्चदेवताद्याः प्रदेशविशेषाश्रिता आकर्षका उपग्रहसंज्ञा वर्त्तन्त इत्याहुः। उच्चो ह्याकर्षकविशेषोऽस्ति तेन स्वकक्षामण्डले भ्रमन् ग्रहो यावताऽन्तरेणापकृष्यते तादृक् तस्य मान्दं शीघ्रं वा फलमुत्पद्यते। तत्र मन्दोच्चवशेन मन्दफलं शीघ्रोच्चेन शीघ्रफलम्। भूगर्भाद्दूरतरस्थितयोच्चदेवतया वातरश्मिभिर्बद्धा यदा स्वाभिमुखमपकृष्यन्ते तदा ग्रहाः स्वकक्षामण्डलादूर्ध्वं दूरं गच्छन्ति। यदा च प्रशिथिलरश्मिभिराकृष्यन्ते तदा स्वीयकक्षामण्डलादधो गच्छन्ति। एवमुच्चदेवतया आकृष्टो ग्रहः प्रवहेण पराशाभिमुखं गच्छन्नपि यावन्नक्षत्रेण शीघ्रतरगतिना अतिक्रम्यते तावती तस्य स्पष्टा गतिः। वृद्धवशिष्ठमतनुसरता जिष्णुजेन नक्षत्राणां ग्रहाणां च पश्चिमगतिः प्रवहवशेन स्वशक्त्या च ग्रहाणां पूर्वैव गतिरित्युक्तम्।

"न यावनं पावनमस्ति यस्मादार्यं तथाऽर्याः खलु नाद्रियन्ते।

न गौरवात् सौरमतं श्रयन्ते वाशिष्ठमस्माल्लघु युक्तियुक्तम्"॥

अस्मिन्मते प्रवहवाय्वाधारं भचक्रं नियतगतिना प्रवहेणैव पराशाभिमुखं नीयते। यथा तेन वायुना गगने नीयमानं तृणादि वायुप्रवाहदिश्येवान्तरिक्षे याति वाय्वाधारत्वाच्च भूमौ न पतति तद्वद्भचक्रमपीत्यर्थः। वायोरन्तरिक्षगत्व तिर्यक्चलनं च सुप्रसिद्धम्। नियतपराशाभिमुखगमनमात्रं कल्पनीयम्।

तथा च वृद्धवशिष्ठः।

"पश्चिमदिग्गतिवायुप्रवहनिबद्धे भपञ्जरे शीघ्रम्।

भ्रमति सखचरे सत्यपि खेटा गतितः प्रयान्ति पूर्वदिशम्"—इति॥

१ मध्यमाधिकारे २५-२६ श्लो०।

यवनमते तूर्ध्वगस्य सजीवाकाशस्य मूर्त्तिमतोऽन्तरिक्षस्थितत्वं मूर्त्तिमदाधारं विनाऽनुपपद्यमानं मूर्त्तिमदाधारं कल्पयति। तस्याप्याधारकल्पनायामनवस्थाभयादूर्ध्वगस्याकाशस्यान्तरिक्षस्थितत्व शक्त्यैवेति मन्तव्यम्। तस्य नियतपराशाभिमुखगमनशक्तिकप्लनेति शक्तिद्वयम्। अक्लृप्तकल्पना च भवकाधारभूतस्याकाशस्य च काचमण्यादिवत् स्वच्छत्वकल्पनाऽपि गौरवमावहतीत्याद्या दोषा वर्त्तन्त इति परिहार्यो यावनः पन्थाः। किञ्च प्रत्यक्षलक्ष्या नक्षत्रगतिस्तदाधारभूतानामाकाशानामिति कल्पनाया गौरवमेव। आधाराणा योऽचलत्वलक्षणगुणः स एव ग्रहेष्वेव लाघवात् कल्पयितुं युज्यते। भूमेर्वेदृशी शक्तिरस्ति चुम्बकवल्लोहमणिवन्नक्षत्रग्रहाः समन्तात् तिष्ठन्ति ध्रुवयोश्चुम्बकवच्छक्तिर्वा यत् ग्रहनक्षत्रजातमन्तरिक्ष एव लोहमणिवदवतिष्ठेदिति शक्तिकप्लनारुचिश्चेदेवमेव कल्प्यताम्। सजीवाकाशकल्पना जघन्या नितरां गौरवादित्यास्तां तावत्। आर्यभटेन यद्भूभ्रमणमभ्युपगतं तत्र वराहोक्तोऽयं दोषः—

"यद्येवं श्येनाद्या न खात् पुनः स्वनिलयमुपेयुः"[१]।

"भूमेस्तु वेगजनितेन समीरणेन
केत्वादयोऽप्यपरदिग्गतयः सदा स्युः"-[२]इति।

यदि तु भूमेराकर्षणशक्तिरीदृशी कल्प्यते यस्माद्भूभागाच्छरादिकमुपरि क्षिप्यते तत् तु तस्मिन्नेव पततीति तदिदं मतं समीचिनमेवेति चतुर्दाचर्वेदार्येण स्वीकृतम्। भूभ्रमणवेगसंजातवायोर्भूवायुश्च प्रबल इति। ईदृशभूमिशक्तिकल्पना गौरवादेव वृद्धवशिष्ठमतं वृद्धार्येण स्वीकृतम्।

"उदयास्तमयनिमित्त नित्य प्रवहेण वायुना क्षिप्तः।
लङ्कासमपश्चिमगो भपञ्जरः सग्रहो भ्रमति"[३]॥

सौरे तु नक्षत्राणां ग्रहाणां च पराशाभिमुखगमने प्रवह एव कारणं वक्तव्यः।

---

१ पञ्चसिद्धान्तिकायां पैतामहसिद्धान्ते १३ अ० ६ श्लो०।

२ नेदं पद्यार्धं वराहकृतग्रन्थे समुपलभ्यते किन्तु श्रीपतिकृतमिति। तत्र च 'भूगोलवेगजनितेन' इति पा०।

३ महार्यभटसिद्धान्ते ४ पादे १० श्लो०।

"प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत्[1]" ।

इत्यनेन "व्योम्नि यान्त्यनिलाहताः[2]"इत्यादिना च प्रवहस्यैव कारणत्वाभिधानात् । तत्र यद्युच्येत प्रवहस्य सर्वास्वपि कक्षासु तुल्यैव प्रेरणेति तदा मिथो न्यूनाधिका पश्चिमगतिर्नोत्पद्यते । ग्रहाणां स्वशक्त्या पूर्वगत्यनङ्गीकारात् । अथ वक्तव्य प्रवहप्रेरणा तुल्यैव । यस्योपरि कक्षा तस्य विम्ब लघु यस्याधस्तात् तस्य बृहदिति लघु स्वल्पकालेन बृहन्महता कालेनापकृष्यते तस्मात् संज्ञाऽघटीति न्यूनाधिका गतिरिति तदप्ययुक्तम् । यस्योपरि कक्षा तस्य विम्बं लघ्विति नियमाभावात् । आग्रहशीलत्वमात्मनो गणितकर्मणाऽपि दूरीकरोत्वायुष्मान् । तस्माच्छून्याद्यधःकक्षासु वायुप्रेरणा मन्दा मन्दतरेति स्वीकार्यं सौरतन्त्रदत्तैः । स्वशक्त्या पूर्वगतिवादिनां मते यथा नाडीमण्डलगत्या पूर्वतो न गच्छति किन्तु क्रान्तिवृत्तगत्या तथैवात्र मते नाडीमण्डलगत्या पराशाभिमुखं न याति किन्तु तत्तत्क्षणावच्छिन्नाहोरात्रगत्या तत्तत्कक्षावच्छिन्नवायव्यंशेन स स ग्रहो नीयत इति द्युरात्रवृत्तक्रान्तिवृत्तयोरन्तररूपयाम्योत्तरगतौ न किञ्चिद्बाधकमस्ति । पूर्वं यस्मिन् प्रदेशे ग्रहस्तस्मिन् ग्रहं जित्वा गतवत्यपि योऽन्यः क्रान्तिमण्डलप्रदेशो ग्रहोपरि भवति तस्मिन्नेव ग्रह इति न किञ्चिद्विरुद्धम् । मण्डलान्तरत्वेन समन्तात् क्रान्तिवृत्तस्य स्थितत्वात् । एवं प्रवहवायुना पराशाभिमुखं नीयमाने यदोच्चदेवता पराशाभिमुखं नयति प्रशिथिलरश्मिना च ग्रहमाकर्षति तदा शुक्रादेस्तात्कालिकस्पष्टगतिर्द्विकलातुल्यशनिगतेर्न्यूनाऽपि भवति तदाऽपि शनिकक्षाधःस्थितत्वमेव शुक्रादिकक्षाणां भवन्तो मन्यन्ते तथैव नक्षत्रमतिक्रम्य गच्छतोऽपि ग्रहस्य नक्षत्रकक्षाधःस्थितत्वमेव वदाम इति सर्वं निरवद्यम् । अस्मिन्मते ग्रहनक्षत्रविम्बानां परिधिव्यासभिन्नत्वेऽपि गुरुत्वसाध्य स्वीकृत्य तत्तत्कक्षासु प्रवहप्रेरणावैषम्यं वदन्ति ।

१ सूर्यसिद्धान्ते स्पष्टाधिकारे ३१ श्लो० ।
२ सूर्यसिद्धान्ते स्पष्टाधिकारे ११ श्लो० ।

अन्ये तु प्रवहप्रेरणा सर्वकक्षास्वपि तुल्येति स्वीकृत्य ग्रहनक्षत्रविम्बानां परिधिव्यासभिन्नत्वेऽपि कक्षाधःक्रमेण विम्बगुरुत्वं लोहपित्तलपिण्डयोरिव चाचक्षन्ति । नक्षत्रात् तथैव स्वशक्त्यैव पराशाभिमुखं यातीत्यत्र पक्षेऽपि दोषाभावः । ब्रह्मगुप्तमतानुयायिनस्तु सर्वास्वपि कक्षासु प्रवहप्रेरणा-तुल्यत्वं च स्वीकृत्य नक्षत्रापेक्षया ग्रहस्य नित्योदयविलम्बे विरुद्धदिग्ज-नितग्रहगतिमन्तरेणानुपपद्यमानस्वशक्त्या ग्रहस्य पूर्वगतिं कल्पयन्ती-त्याहुः । तस्मान्मतत्रयमपि युक्तियुक्तम् ।

ननु वस्तुनिर्विकल्पासम्भवात् कथं परस्परविरुद्धस्य गतिकारण-प्रतिपादकशास्त्रस्य प्रामाण्यम् । उच्यते । ग्रहगतिप्रतिपादकं शास्त्रं तावत् प्रमाणं गतेः प्रत्यक्षोपलब्धत्वात् । तत्कारणं पुरुषबुद्धिप्रभवत्वा-दतात्त्विकं भवतु तथाऽपि न कोऽपि दोषः फलतो दोषाभावात् । तत्त्वज्ञानोपयोगिन्या जीवेश्वरादिविभागकल्पनाया अपि पुरुषबुद्धिप्रभव-त्वेन विकल्पस्य दृष्टत्वात् । गतिर्नाम प्रदेशान्तरसंचरणं ग्रहाणां तच्च शुभाशुभव्यञ्जकं दिग्देशकालज्ञानोपयोगि च । काले दिशि देशे च कर्म विधीयत इति ग्रहस्य प्रदेशान्तरसंचारज्ञानं प्रधानं फलवत्त्वात् । गतिकारणकल्पना तु पुरुषबुद्धिप्रभवाऽपि सौरादिशास्त्रेणानूद्यते गति-ज्ञानोपयोगित्वात् । फलवत्सन्निधावफलं तदङ्गमिति न्यायात् । यथा कल्पनया शिष्यजनमनः माधानं स्यात् तथा क्रियमाणायामपि कल्प-नाया न कश्चिद्दोषः । अत एव स्थूलवर्त्तुलभूपत्यरिग्रहादिना वर्णा-श्रमगतिं कुर्वाणा बहवो दृश्यन्ते । तथा चाह ब्रह्मगुप्तभाष्यकारश्चतुर्वेदा-चार्यः । 'यथा वैयाकरणाः प्रकृतिप्रत्ययागमलोपविकारैरसत्यरूपैः सत्यं शब्दसाधुत्वं प्रतिपादयन्ति यथा च भिषग्वरा उत्पलनालादिभिः शिरावे-धादीन् प्रतिपादयन्ति तथैव सांवत्सराः पक्षावलम्बमन्दशीघ्रप्रतिमण्ड-लादिभिर्ग्रहगतितत्त्वं भूमानादितत्त्वं च प्रतिपादयन्तीति मत्वा संतोष्ट-व्यमिति' ॥ १—६ ॥

इति भगणोपपत्तिः ।

**मरीचिः**—अथोद्देशक्रमेण ग्रहचारनिरूपणमारम्भमाणस्तदुपजीव्यभगणाद्यं प्रथमं निरूपयति । तत्र रव्यादिसप्तग्रहाणां तन्मन्दोच्चानां चन्द्रादिपातानां भौमादिशीघ्रोच्चानां च कल्पभगणान् श्लोकषट्केनाह अर्कशुक्रबुधपर्यया इति। विधेर्ब्रह्मणोऽह्नि दिवसे कल्प इत्यर्थः। एकदशशताद्यनुक्रमकोटिसङ्ख्यागुणिना रदाब्धयोऽर्कशुक्रबुधपर्ययाः । एतेषां मेषादिमीनान्तद्वादशराशिभोगमितयः सुगणकैः कीर्त्तिता इति प्रत्येकमन्वयः। एते प्रागुक्ततुल्याः । एवकारादन्ययोगव्यवच्छेदः । भौमगुरुशनीनां शीघ्रोच्चभगणाः। अङ्कस्थापनेनातिस्पष्टम् ४३२०००००० । त्रयस्त्रिंशत्कोटिमिताः पुराणे देवा उक्ताः प्राचीनैः। कोटित्यागेन देवपर्यायशब्दास्त्रयस्त्रिंशद्गृहीताः। बाह्येन्द्रियाणां पञ्चत्वादिन्द्रियपर्यायशब्देन पञ्च। क्ष्माधराद्रीत्यनेन सप्तसप्ततिसङ्ख्या न त्वेकादशयुतसप्तशती। विषयाणामिन्द्रियपर्यायत्वात् पञ्च । अङ्कस्थापनेन चन्द्रभगणाः ५७७५३३०००००। कामशराः पञ्च । अष्टौ दिग्गजा इति गजपर्यायेणाष्टौ । लोचने द्वे प्रसिद्धे । व्यालाः सर्पाः। एषामप्यष्टवाचकत्वात्। यमशब्देन यमलाभिधानाद्द्वयम्। एतेनान्तकपदादिना द्वियहणमाधुनिकोक्तं निरस्तम्। अङ्कस्थापनेन भौमभगणाः स्पष्टाः २२९६८२८५२२। सिन्धुः समुद्रः। सिन्धुरा गजाः। बुधशीघ्रोच्चजाताः पर्यायाः। अङ्कस्थापनेन बुधशीघ्रोच्चभगणाः १७९३६९९८९८४। अङ्कस्थापनेन गुरोर्भगणाः ३६४२२६४५५ । सुगणकैर्मता इति सम्बन्धः । अङ्कस्थापनेन शुक्रशीघ्रोच्चभगणाः७०२२३८९४९२। अङ्गानि वेदाङ्गानि षट् । शनेरङ्कस्थापनेन भगणाः १४६५६७२९८ । ग्रहाणां स्वशक्तिपूर्वगमनादेते कल्पे भोगाः। तरणेः सूर्यमारभ्य मृदूच्चजाः पूर्वगत्या भगणाः स्युः। अङ्कस्थापनेन व्याख्या स्पष्टा। सूर्यमन्दोच्चभगणाः ४८०। चन्द्रमन्दोच्चभगणाः ४८८१०५८५८। भौमस्य २९२ । बुधस्य ३३२। गुरोः ८५५ । षड्रसाः प्रसिद्धाः । शुक्रस्य ६५३। शनेः ४१ । कृतेषव इति पाठे शनेः ५४। एतत्पाठोक्तशनिमन्दोच्चभगणैरनुपातेन साम्प्रतं मतङ्गागियमा २२८ इति करणकुतूहलोक्तशनिमन्दोच्चस्य संवादाद्युक्तोऽयं पाठः । मूलं तु लघ्वार्यभटो-

ऋपराशरमतेन ५४ इति । क्षतशरा इति सिद्धान्तशेखरेऽपि । निशाकरा-च्चन्द्रमारभ्य चन्द्रादिषड्ग्रहाणां व्यस्तगपातपर्ययः । व्यस्तं ग्रहगतिवि-परीत गच्छन्तीति व्यस्तगास्ते च ते पाताश्च तेषां भगणाः पश्चिमगत्या पातमेषादेर्द्वादशाराशिभोगाः । षोडशाक्षरचरणश्लोकस्याष्टिसंज्ञत्वात् तत्पदेन षोडश । एकादश रुद्रा इति श्रुतेर्भगशब्देनैकादश । क्रमशब्देन वामनचरणास्त्रयः । ऋतवः षट् प्रसिद्धाः । अङ्कस्थापनेन स्पष्टाः पात-भगणाश्चन्द्रस्य २३२३१११६८ । भौमस्य २६७ । बुधस्य ५२१ । गुरोः ६३ । शुक्रस्य ८९३ । शनेः ५८४ । अत्र 'रो नराविह रथोद्धता लगौ'—इति लक्षणादाद्यत्रय रथोद्धताख्यम् । चतुर्थं वंशस्यम् । पञ्चमषष्ठपद्ये उपजा-त्याख्ये इति ।

एतेषां विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्ते कल्पे 'सप्तशून्यानि यमा-ग्निवेदाश्चार्कभगणपरिवर्त्ता भवन्ति ४३२0000000 । पञ्चशून्यानि गुणा-ग्निपञ्चसप्तागार्याश्चन्द्रमसः ५७७५३३00000 । भौमस्य द्वियमपञ्चा-ष्टयमाष्टर्त्तुनवयमयमलाः २२९६८२८५२२ । बुधस्याब्ध्यष्टनवाष्टनवनवरसा-ग्निनवसप्तचन्द्राः १७९३६९९८९८४ । जीवस्य पञ्चपञ्चाब्धिषड्द्विद्विक्र-तरसगुणाः ३६४२२६४५५ । शुक्रस्य यमनवाब्धिनवाष्टाग्नियमखगिरयः ७0२३८९४९२ । सौरस्याष्टनवयमगिरिरसेषुषण्मनवः १४६५६७२९८ । आदित्यमन्दस्य गगनाष्टाम्बुधयः ४८0 । चन्द्रमसोऽप्यष्टार्थवस्वर्थदि-ग्वस्वष्टवेदाः ४८८१0५८५८ । कुजमन्दस्य यमनवपक्षाः २९२ । बुधमन्दस्य द्वित्रिगुणाः ३३२ । जीवमन्दस्य शरेषुवसवः ८५५ । शुक्रमन्दस्य गुणपञ्च-रसाः ६५३ । सौरमन्दस्य शशिवेदाः ४१ । चन्द्रपातस्य वसुरसशशिरुद्रा-ग्निदशनयमलाः २३२३१११६८ । भौमपातस्य महीधरर्त्तुयमलाः २६७ । बुधपातस्य चन्द्रयमार्थमिताः ५२१ । जीवपातस्य गुणरसाः ६३ । शुक्रपा-तस्य त्रिनववसवः ८९३ । सौरपातस्य युगाष्टेषवः ५८४ । पश्चिमगत्येति मूलं प्रसिद्धम् । ननु सूर्यसोमवशिष्ठाद्युक्तप्रसिद्धभगणान् परिहृत्याबहुसंम-तभगणाङ्गीकारः कथं युक्त इति चेन्न । अबहुसमतभगणानीतग्रहाणां

प्रथमचरणेऽर्को भवति । अतः सूर्याक्रान्तनक्षत्रदर्शनेन पदनिर्णयादुक्त-माणप्रकारेण सूर्यो ज्ञेयो भाद्यः । ध्रुवोत्तविवेधान्नक्षांशज्ञानं प्रसिद्धम् । स सायन इत्ययनांशैर्हीनः स्फुटोऽर्कः स्यादिति । तदज्ञानाद-युक्तमपि सायानार्कस्य ज्ञानेन भगणसिद्धौ बाधाकाभावात् स्वल्पान्त-राच्च । एवं प्रत्यह तस्मिन् काले भाद्यः सूर्यो ज्ञेयः । अव्यवहिततद-न्तरं पूर्वदिने स्पष्टगतिरिति प्रकारेण स्पष्टगतयः प्रत्यहं ज्ञेयाः । एवं विलोक्यमाने यद्दिने गतेः परमाल्पत्वं दृष्ट तद्दिने यो भाद्योऽर्कस्तत्तु-ल्यमुच्चम् । तत्रार्ये ग्रहफलाभावस्य प्रतिपादनात् तद्दिने स्पष्टार्क एव मध्योऽर्कः । एवं पुनर्यदा गतेरल्पत्वं दृष्टं तद्दिवसेऽपि स्पष्टः सूर्यो मध्य इति तत्तुल्यमुच्चम् । उच्चग्रहयोरसमत्वे फलाभावोत्पादनस्याशक्य-त्वात् । उच्चद्वयस्यासमतादर्शनात् पूर्वोच्च द्द्वितीयोच्चस्याधिक्यदर्श-नाच्च तत्पूर्वगतिरस्तीति ज्ञातम् । तन्मानज्ञानं तु उच्चद्वयसंभूतकाला-न्तरसावनदिनैरुच्चान्तरतुल्या गतिस्तदैकसावनदिनेन केत्यनुपातेन । अत एकदिनेनेयं गतिस्तदा कल्पार्कसावनदिनैर्वक्ष्यमाणप्रकारज्ञातैः केत्यनुपातेन कल्पे सूर्यमन्दोच्चभगणज्ञानम् । एव प्रत्यहं सूर्यस्पष्टगति-ज्ञानात् परमाधिकन्यूनगतियोगार्धस्य मध्यगतित्वेन ज्ञानात् पूर्वानुपा-तेन कल्पे युगसहस्रसौरवर्षसमा भगणा उपपन्ना अत एव 'रवेश्च-क्रभोगोऽर्कवर्षं प्रदिष्टम्'—इत्युक्तं युक्तम् । यद्वा प्रत्यहं सूर्यज्ञानात् तुल्यार्क-दर्शनेन भगणपूरणज्ञानात् तदन्तरसावनदिनानि गणितेनैतानि ३६५ । १५ । ३० । २२ । ३० । एभिरेको भगणस्तदा कल्पकुदिनैः क इत्यनुपा-तेन कल्पसूर्यभगणाः ।

अथ चन्द्रस्य । तथैव याम्योदग्वृत्तस्थं चन्द्रं तुर्येण विध्वा नता ज्ञेयाः । ततो व्यस्ताक्षांशसंस्कारेण क्रान्त्यंशाः । ततो यासु रात्रिगत-घटिकासु चन्द्रो वेधितस्तद्वटीभिर्घटीयन्त्रज्ञाताभिर्मध्यलग्नं पूर्वज्ञात-सूर्यात् साध्यम् । तत्तुल्य एवायं दृक्संस्कृतश्चन्द्रः । 'मध्यलग्नमिति दक्षिणोत्तरे' इत्युक्तत्वात् । अस्मात् क्रान्तिः साध्या । अनया पूर्वक्रान्त्यंशा

यथायोग्यं संस्कृताः शरांशाः क्रान्तिसंस्कारयोग्याः । एवं प्रत्यहं विलोक्यमाने यदा दक्षिणशराभावस्तत्काले मध्यलग्नतुल्येन्दुर्द्वादशशुद्धः पातः । एवं पुनर्दक्षिणशराभावे पातः पूर्वपातादून इति पातस्य पश्चिमगतिरस्तीति मत्वा पातसम्भवकालान्तरदिनैरिदं पातान्तरं तदैकदिनेन किमित्यनुपातेन गतिस्ततोऽनुपातेन कल्पे पातभगणाः । एवं गोलयन्त्रेण चक्रयन्त्रेण वा तदुक्तप्रकारेण चन्द्रः स्पष्टोऽन्वहं तद्गतिः स्पष्टा वेद्या। शरश्च ताभ्यां पूर्वरीत्या कल्पे चन्द्रतदुच्चपातभगणाः साध्याः । यद्वा रेवतीस्थचन्द्रदर्शनात् पूर्वापरान्तराभावेन पुनस्तत्स्थदर्शनात् । तदन्तरदिनैश्चन्द्रस्यैको भगणस्तदैकदिनेन क इत्यनुपातेन ज्ञानं चन्द्रगतेः । पूर्वानुपातेन चन्द्रभगणाः कल्पे ।

अथ भौमादीनाम् । तत्र ग्रहवेधार्थं गोलबन्धोक्तविधिना विपुलं गोलयन्त्रं कार्यम् । तत्र खगोलस्यान्तर्भगोल आधारवृत्तस्योपरि विषुवद्वृत्तम् । तत्र च यथोक्त क्रान्तिवृत्त भगणांशाङ्कितं बद्धा कदम्बद्वयकीलयोः प्रोतमन्यच्चलं ग्रहवेधवृत्त तच्च भगणांशाङ्कित कार्यम् । ततस्तद्गोलयन्त्र सम्यग्ध्रुवाभिमुखयष्टिकं जलसमक्षितिजवलयं यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलमध्यचिह्नगतया दृष्ट्या रेवतीतारा विलोक्य क्रान्तिवृत्ते यो मीनान्तस्तं रेवतीतारायां निवेश्य मध्यगतयैव दृष्ट्या ग्रहं विलोक्य तद्वेधवलयं ग्रहोपरि निवेश्यम् । एवं कृते सति वेधवृत्तस्य क्रान्तिवृत्तस्य च सम्पाते मीनान्तः क्रान्तिवृत्ते भाद्यवयवेन यावदन्तरितस्तावान् स्पष्टो ग्रहो निरयणो ज्ञेयः । तत्सपातग्रहबिम्बयोर्वेधवृत्ते येऽन्तरांशास्ते शरांशा इति । एवं प्रत्यहं तत्काले एव ग्रहास्तथा शराश्च वेद्याः । यावद्ग्रहतुल्यरूपभगणपूर्त्तिकालः । चक्रयन्त्रेण वा प्रत्यहं तुल्यकाले "पैत्रर्क्षपुष्यान्तिमवारुणानामृक्षद्वय नेमिगत यथा स्यात्—" इति स्थिरीकृतेन "नेमिस्थदृष्ट्याऽक्षगतं प्रपश्यत् खेटं च धिष्ण्यस्य च योगताराम्"-इत्यादिवक्ष्यमाणप्रकारात् ग्रहा ज्ञेयाः । ततो वक्ष्यमाणप्रकारज्ञातशीघ्रोच्चमन्दोच्चाभ्या वक्ष्यमाण—"स्फुटग्रहं मध्यखगम्" इत्यादिना ग्रमध्यग्रहास्तेषु द्वयोरन्तरस्य मध्यगतित्वेन

ज्ञानात् कल्पभगणज्ञानं प्रागुक्तेन युक्तम् । एवं बुधशुक्रयोर्भगणा रविभगणतुल्याः ।

"शुक्रज्ञौ पृष्ठतश्चाग्रे सदाऽर्कानुसरौ यतः ।
ततोऽर्कभगणैस्तुल्याः कल्पे स्युर्भगणास्तयोः"॥

इति वेधेन दर्शनाच्च । शरज्ञाने पूर्वरीत्या भौमादीनां पातभगणाः कल्पे ।

अथैषां शीघ्रोच्चभगणोपपत्तिः । तत्र ग्रहोदयात् स्थापितघटीयन्त्रेणोचता घटिका भूपृष्ठस्य । तदैव ग्रहच्छायाधिकारोक्तप्रकारोक्तप्रकारेण छायासाधनादितो ह्युन्नतघटिकास्ता भूगर्भस्य । साजात्येन तदन्तरं कुच्छचलिप्ताविक्रमासवः । भूगर्भाद्पृष्ठस्य कर्णाच्छ्रितत्वेन क्षितिजभेदात् । तथा चान्तरासुभिरस्मद्दृग्ध्युयाताद्भूगर्भगद्युयातमधिकमेव ततो यद्यन्तरासुभिर्भूव्यासार्धयोजनानि ग्रहः क्रामति तदाऽहोरात्रासुभिः कानीत्यनुपातेन ग्रहकक्षा स्पष्टा योजनात्मिका । अस्या व्यासार्धं योजनकर्णः स्पष्टः । एवं प्रत्यहं स्पष्टयोजनकर्णज्ञानेन परमन्यूनाधिकस्पष्टयोजनकर्णयोगार्धं मध्यमयोजनकर्णो ज्ञातः । मध्ययोजनकर्णेन त्रिज्यामितः कलाकर्णस्तदेष्टयोजनकर्णेन क इत्यनुपातेन प्रत्येकं स्पष्टकक्षाव्यासार्धरूपशीघ्रकर्णः । एवं परमशीघ्रकर्णत्रिज्ययोरन्तरं परमशीघ्रफलज्या । अस्माश्चापं परमशीघ्रफलम् । यदा परमशीघ्रकर्णस्तदा फलाभावाद्ग्रहतुल्यमुच्चं ज्ञातम् । ततो यदा परमन्यूनकर्णशीघ्रकर्णस्तदाऽपि फलाभावाद्ग्रहतुल्य नीचम् । अनेन पूर्वोच्चात् षड्भान्तरितेन भाव्यमिति । तदधिकान्तरदर्शनादुच्चस्य गतिरस्तीति ज्ञातम् । तत उच्चनीचसंभवकालान्तरदिनैः षड्भादधिकान्तरमिदं तदैकदिनेन किमित्यनुपातेनोच्चगतिज्ञानम् । तन्महत्त्वदर्शनाच्छीघ्रोच्चमिति संज्ञा । ततः कल्पभगणाः । एवं गुरुभौमशनयः सूर्यादधिकास्तदा तन्मध्यग्रहेभ्यः स्पष्टग्रहा न्यूनाः । यदोनास्तदाऽधिका इति प्रत्यक्षवेधानुभवेन

"नीचारार्कभुवोऽर्कसन्निधिगताः स्युः शीघ्रगाश्चाणव–

स्तत्षड्भेऽनृजुगाः सदा च पृथवोऽस्मात् तच्चलोच्चं रविः"।

इत्युक्तत्वाच्च गुरुभौमशनीनां मध्यार्कतुल्यं शीघ्रोच्चं गतिसमत्वेन वा कल्पितम्। अतः सूर्यभगणतुल्यास्तच्छीघ्रोच्चभगणाः। एवं बुधशुक्रयोः शीघ्रोच्चकक्षास्थत्वेन भ्रमणस्योक्तत्वात् पूर्वरीत्या तद्युयातान्तरानुपातेन तच्छीघ्रोच्चकक्षा स्पष्टा तत्परमाधिकन्यूनयोगार्धस्य मध्यकक्षात्वेन ज्ञानात् तदुक्तकक्षा भगणा जाताः। अथ वेधितभादिग्रहाणां शीघ्रोच्चसमत्वेन शीघ्रफलाभावेऽपि तदा भगणद्वाराऽनुपातानीतमध्यग्रहसमः स्फुटो न जात इति शीघ्रफलमत्रास्तीति ज्ञातम्। तस्माद्वेधितस्पष्टग्रहादसकृत्साधितशीघ्रफलेन स्पष्टस्य व्यस्तसंस्कारान्मन्दस्पष्टो ज्ञातः। मन्दस्पष्टमध्यान्तरं मान्दफलमिति यत्रैव मन्दस्पष्टमध्यसमत्वेन फलाभावज्ञानात् तन्मन्दस्पष्टतुल्यमुच्चं तत्र कल्पितम्। एवं पुनर्दर्शनेन पूर्वरीत्या गतिर्ज्ञाता। तस्या अतिसूक्ष्मत्वेन मन्दोच्चमिति संज्ञा। ततोऽनुपातेन कल्पिता भगणाः। नन्वेवं कल्पे ग्रहाणां द्वादशराशिभोगसंख्याया भगणाभिधानात्। तदैकरूपत्वेन सूर्याद्युक्तभगणेभ्योऽन्यभगणकथनमयुक्तम्। आकाशस्य कक्षाणां कल्पकालस्य च नियतत्वात्। तस्मान्नियतभगणसंभवेनात्र मतान्तराप्रसक्तेः। आर्षग्रन्थे भगणैकत्वदर्शनात् कथमेव तदिति चेन्न। स्वस्वकाले ग्रहवेधादिप्रकारेण गतिज्ञानात् 'तदनुरोधाल्लाघवार्थं च कल्पे भगणाः कल्पिता न वास्तवाः। सूर्यादिभिश्च स्वकाले गत्यनुरोधाद्भगणा उक्ताः। वास्तवभगणेभ्यो ग्रहादिसंवाददर्शनेन तज्ज्ञानेऽपि तन्निबन्धनाभावेऽस्योचितत्वात्। अत एव सूर्यसिद्धान्ते 'कालभेदोऽत्र केवलः"[1]इति 'संसाध्य स्पष्टतरं बीजम्"[2]इत्यादि चोक्तम्। न च वास्तवभगणकथनेऽपि दृग्गोचरार्थं संसाध्येत्याद्युक्तं स्वकाले इति वाच्यम्। वराहसंहिताटीकायां भट्टोत्पलेनार्षभगणभेदस्य स्फुटोक्तेर्वास्तवभगण-

१ मध्यमाधिकारे ५ श्लो०।

२, नेदं सूर्यसिद्धान्तोक्तं पद्यं किन्तु रङ्गनाथकृतगूढप्रकाशिन्यां तट्टीकायामिदमुपलभ्यते।

ज्ञानात् कल्पभगणज्ञानं प्रागुक्तेन युक्तम् । एवं बुधशुक्रयोर्भगणा रविभगणतुल्याः ।

"शुक्रज्ञौ पृष्ठतश्चाग्रे सदाऽर्कानुसरौ यतः ।
ततोऽर्कभगणैस्तुल्याः कल्पे स्युर्भगणास्तयोः"॥

इति वेधेन दर्शनाच्च । शरज्ञाने पूर्वरीत्या भौमादीनां पातभगणाः कल्पे ।

अथैषां शीघ्रोच्चभगणोपपत्तिः । तत्र ग्रहोदयात् स्थापितघटीयन्त्रेणोन्नता घटिका भूपृष्ठस्य । तदेव ग्रहच्छायाधिकारोक्तप्रकारोक्तप्रकारेण छायासाधनादितो ज्ञुन्नतघटिकास्ता भूगर्भस्य । साजात्येन तदन्तरं कुच्चलिप्तातिक्रमासवः । भूगर्भाद्पृष्ठस्य क्ष्वोच्छितत्वेन क्षितिजभेदात् । तथा चान्तरासुभिरस्मद्दृग्युयातादभूगर्भगद्युयातमधिकमेव ततो यद्यन्तरासुभिर्भूव्यासार्धयोजनानि ग्रहः क्रामति तदाऽहोरात्रासुभिः कानीत्यनुपातेन ग्रहकक्षा स्पष्टा योजनात्मिका । अस्या व्यासार्धं योजनकर्णः स्पष्टः । एवं प्रत्यहं स्पष्टयोजनकर्णज्ञानेन परमन्यूनाधिकस्पष्टयोजनकर्णयोगार्धं मध्यमयोजनकर्णो ज्ञातः । मध्ययोजनकर्णेन त्रिज्यामितः कलाकर्णस्तदेष्टयोजनकर्णेन क इत्यनुपातेन प्रत्येकं स्पष्टकक्षाव्यासार्धरूपशीघ्रकर्णः । एवं परमशीघ्रकर्णत्रिज्ययोरन्तरं परमशीघ्रफलज्या । अस्माच्चापं परमशीघ्रफलम् । यदा परमशीघ्रकर्णस्तदा फलाभावाद्ग्रहतुल्यमुच्चं ज्ञातम् । ततो यदा परमन्यूनकर्णशीघ्रकर्णस्तदाऽपि फलाभावाद्ग्रहतुल्य नीचम् । अनेन पूर्वोच्चात् षड्भान्तरितेन भाव्यमिति । तदधिकान्तरदर्शनादुच्चस्य गतिरस्तीति ज्ञातम् । तत उच्चनीचसंभवकालान्तरदिनैः षड्भादधिकान्तरमिदं तदैकदिनेन किमित्यनुपातेनोच्चगतिज्ञानम् । तन्महत्त्वदर्शनाच्छीघ्रोच्चमिति संज्ञा । ततः कल्पभगणाः । एवं गुरुभौमशनयः सूर्यादधिकास्तदा तन्मध्यग्रहेभ्यः स्पष्टग्रहा न्यूनाः । यदोनास्तदाऽधिका इति प्रत्यक्षवेधानुभवेन

"जीवारार्कभुवोऽर्कसन्निधिगताः स्युः शीघ्रगाश्चाणव–

स्तत्षड्भेऽनृजुगाः सदा च पृथवोऽस्मात् तच्चलोच्चं रविः" ।

इत्युक्तत्वाच्च गुरुभौमशनीनां मध्यार्कतुल्य शीघ्रोच्चं गतिसमत्वेन वा कल्पितम् । अतः सूर्यभगणतुल्यास्तच्छीघ्रोच्चभगणाः । एवं बुधशुक्रयोः शीघ्रोच्चकक्षास्थत्वेन भ्रमणस्योक्तत्वात् पूर्वरीत्या तद्युयातान्तरानुपातेन तच्छीघ्रोच्चकक्षा स्पष्टा तत्परमाधिकन्यूनयोगार्धस्य मध्यकक्षात्वेन ज्ञानात् तद्भक्तखकक्षा भगणा जाताः । अथ वेधितभादिग्रहाणां शीघ्रोच्चसमत्वेन शीघ्रफलाभावेऽपि तदा भगणद्वाराऽनुपातानीतमध्यग्रहसमः स्फुटो न जात इति शीघ्रफलमत्रास्तीति ज्ञातम् । तस्माद्वेधितस्पष्टग्रहादसकृत्साधितशीघ्रफलेन स्पष्टस्य व्यस्तसंस्कारान्मन्दस्पष्टो ज्ञातः । मन्दस्पष्टमध्यान्तरं मान्दफलमिति यत्रैव मन्दस्पष्टमध्यसमत्वेन फलाभावज्ञानात् तन्मन्दस्पष्टतुल्यमुच्चं तत्र कल्पितम् । एवं पुनर्दर्शनेन पूर्वरीत्या गतिर्ज्ञाता । तस्या अतिसूक्ष्मत्वेन मन्दोच्चमिति संज्ञा । ततोऽनुपातेन कल्पिता भगणाः । नन्वेवं कल्पे ग्रहाणां द्वादशराशिभोगसंख्याया भगणाभिधानात् । तदैकरूपत्वेन सूर्याद्युक्तभगणेभ्योऽन्यभगणकथनमयुक्तम् । आकाशस्य कक्षाणां कल्पकालस्य च नियतत्वात् । तस्मान्नियतभगणसम्भवेनात्र मतान्तराप्रसक्तेः । आर्षग्रन्थे भगणैकत्वदर्शनात् कथमेव तदिति चेन्न । स्वस्वकाले ग्रहवेधादिप्रकारेण गतिज्ञानात् तदनुरोधाल्लाघवार्थं च कल्पे भगणाः कल्पिता न वास्तवाः । सूर्यादिभिश्च स्वकाले गत्यनुरोधाद्भगणा उक्ताः । वास्तवभगणेभ्यो ग्रहादिसंवादादर्शनेन तज्ज्ञानेऽपि तन्निबन्धनाभावेऽस्योचितत्वात् । अत एव सूर्यसिद्धान्ते 'कालभेदोऽत्र केवलः'[1]इति 'संसाध्य स्पष्टतरं बीजम्[2]'इत्यादि चोक्तम् । न च वास्तवभगणकथनेऽपि दृगोचरार्थं संसाध्येत्याद्युक्त स्वकाले इति वाच्यम् । वराहसंहिताटीकायां भट्टोत्पलेनार्षभगणभेदस्य स्फुटोक्तेर्वास्तवभगण-

१ मध्यमाधिकारे ५ श्लो॰ ।

२, नेदं सूर्यसिद्धान्तोक्त पद्यं किन्तु रङ्गनाथकृतगूढप्रकाशिन्यां तट्टीकायामिदमुपलभ्यते ।

कल्पने विनिर्गमनाविहरात् । अतो ब्रह्मगुप्तादिभिर्वेधादिना विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्तोक्तभगणानां स्वकाले प्रामाण्यग्रहात् सूर्याद्युक्तभगणान् विहाय तन्मतोक्तभगणा एवाङ्गीकृताः । अत एव च श्रीपतिना स्वकाले शन्युच्चभगणानेकचत्वारिंशन्मितान् मूलस्थान् परिहृत्य पराशरोक्तचतुष्पञ्चाशद्भगणाः कृतशरा इत्युक्ताः सिद्धान्तशेखरे तस्माद्वास्तवभगणानुक्तौ मतभेदो नायुक्त इति संक्षेपः ॥ १-६ ॥

अथ भभ्रमानाह ।

**खखेषुवेदषड्गुणाकृतीभभूतभूमयः ।**
**शताहता भपश्चिमभ्रमा भवन्ति काहनि ॥ ७ ॥**

**वा. भा.**—काहनि ब्रह्मदिन एतावन्तो भाना पश्चिमभ्रमा भवन्ति । अत्रोपपत्तिर्गोले सम भसूर्यावुदितावित्यादिना कथिता व्याख्याता च ॥७॥

**वा. वा.**—भभ्रमानाह । खखेषुवेदषड्गुणा इति । अत्र कस्य ब्रह्मणोऽहः काहः । 'राजाहःसखिभ्यष्टच्'-इति टच् । तस्मिन् काहे सप्तम्येकवचने वक्तव्ये यत् काहनीत्युक्तं वैभवेन तदयुक्तमिव प्रतिभाति । यद्वा कल्पप्रमाणकमहः काहः । नामैकदेशे नामग्रहणम् । कल्पपदेन चतुर्युगसहस्रसङ्ख्योच्यते । तस्माद्यथा ह्यहनि तथा काहनीति न कश्चिद्दोषः । यद्वा समासान्तविधेरनित्यत्वात् । काहनीत्युक्तमित्यादिगतिश्चिन्त्या । भस्य क्रान्तिवृत्तकृतचिह्नस्य प्रवहवशेनैव परिवर्त्तो भभ्रमः । कियन्तः कल्पे भपरिवर्त्ताः कथं च तेषां ज्ञानं तत्राह । अत्रोपपत्तिः । समं भसूर्यावुदितौ क्षितिजेत्यादिना रविभावनाहे रविमध्यगतिकलायुक्तो भस्यैको भ्रमः । ततोऽनुपातः । यद्येकस्मिन् सावने इयं तदा कल्पकुदिने किमिति जाताः खखेषुवेदषट्गुणा इति ॥ ७ ॥

**मरीचिः**—अथैतत्प्रसंगेन वक्ष्यमाणोपजीव्येन च कल्पभभ्रमान् प्रमाणिकयाऽऽह खखेषुवेदषड्गुणा इति । कस्य ब्रह्मणोऽहः काहस्तस्मिन् 'समासान्तविधेरनित्यत्वेन' 'राजाहःसखिभ्यष्टच्' इत्यस्य प्राप्तेः काहनि कल्पे

XXVI

प्रभातायां तु शर्वर्य्यां विश्वामित्रो[1] महामुनिः ।
अभ्यभाषत[2] काकुत्स्थं शयानं पर्णसंस्तरे ॥ १ ॥
[3]कौशल्यामातरुत्तिष्ठ[4] पूर्वसन्ध्या उपास्यताम् ।
पौर्वाह्णिकं विधिं कर्त्तुं तात कालो ऽयमागतः ॥ २ ॥
तस्यर्षेः परमोदारं वचः श्रुत्वा[5] तु राघवौ ।
स्नात्वा कृतोदकौ वीरौ जेपतु[6] र्जप्यमाह्णिकम् ॥ ३ ॥
[7]कृताह्णिकक्रियौ चापि विश्वामित्रं तपोनिधिम् ।
अभिवादयितुं तत्र सहितावुपतस्थतुः ॥ ४ ॥
[8]ततः प्रययतुश्चापि दिव्यां [9]त्रिपथगामिनीम् ।
गङ्गां देवनदीं द्रष्टुं सरय्वा अविदूरतः ॥ ५ ॥
[10]तस्यास्तीराश्रमपदमृषीणां पुण्यकर्म्मणाम् ।
रम्यं ददृशतुः पुण्यं तप्यता[11] मतुलं तपः ॥ ६ ॥

---

1 P has महातपा  2 B XXIII 1 काकुत्स्थौ शयानौ &c but V has काकुत्स्थं शयान &c  3 For this Sl B 2 कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते । उत्तिष्ठ नरशार्दूल कर्त्तव्य दैवमाह्णिक ॥  4 G 2 पूर्वा &c  5 B 3 नरोत्तमौ.  6 B. 3 परमजपं G 3 जाप्यमाह्णिक but P has जप्यमाह्णिकं  7 For this Sl B 4 कृताह्णिकौ महावीर्यौ विश्वामित्रं तपोधनं । अभि (a) वाद्यातिसहृष्टौ (b) गमनायाभितस्थतु. ॥ (a) V अभिवाद्याभि &c (b) गमनायोप &c  8- For this Sl B 5 तौ (a) प्रयान्तौ महावीर्यौ दिव्या त्रिपथग नदी । ददृशाते (b) ततस्तत्र सरय्वा संगमे शुभे ॥ (a) V प्रयातौ &c (b) S महावीर्यौ &c  9 G 5 त्रिपथगानदी, but P has त्रिपथ गामिनीं  10 For this Sl B 6 तत्राश्रमपद पुण्यमृषीणा भावितात्मना । बहुवर्षसहस्राणि (a) तप्यता परमं तपः । (a) V तपता &c  11 G 6. मुत्तमं &c

[1]दृष्ट्वा तदाश्रमपदं जातकौतूहलौ मुनिम् ।
पप्रच्छतुस्तदा तत्र तावुभौ रामलक्ष्मणौ ॥ ७ ॥
[2]कस्यायमाश्रमो ब्रह्मन् कश्चास्मिन् [3]कुलजो मुनिः ।
भगवन् श्रोतुमिच्छावः परं कौतूहलं हि नौ ॥ ८ ॥
[4]तयोस्तद्वचनं श्रुत्वा प्रहसन् मुनिरब्रवीत् ।
उभाभ्यां श्रूयतां राम यस्यायं [5]पुण्य आश्रमः ॥ ९ ॥
[6]कन्दर्पो मूर्त्तिमानासीत् काम इत्यभिविश्रुतः ।
स्थाणुं स इह तप्यन्तं पुरा किल महत्तपः ॥ १० ॥
[7]आवेष्टुमभ्ययात्तूर्णं कृतोद्वाहमुमापतिम् ।
[8]स बुद्धा तत्र रुद्रेण शप्तः किल महात्मना ॥ ११ ॥
[9]रोषशापाग्निनिर्दग्धं तच्छरीरं व्यशीर्यत ।
तस्याङ्गान्यपतन् राम सद्यः सर्वाण्यशेषतः ॥ १२ ॥
[10]अशरीरः कृतः काम एवं कोपान्महात्मना ।
अनङ्ग इति विख्यातस्ततः प्रभृति राघव ॥ १३ ॥

1 For this Sl B 7. तं दृष्ट्वा परमप्रीतौ राघवौ पुण्यमाश्रमं । ऊचतुस्तं महात्मानं विश्वामित्रमिदं वच ॥ 2 For this line B 8 कस्यायमाश्रमः पुण्यः कोऽन्वस्मिन् वसते पुमान् । 3 G 8 कुशलो &c but P has कुलजो &c. 4 For this Sl B 9. तयोस्तद्वचनं श्रुत्वा प्रहस्य मुनिपुङ्गव । अब्रवीच्छ्रूयतां रामयस्याय (a) पूर्व आश्रमः । (a) V and S. पूर्वं &c 5 G 9 पूर्वम् &c but P has पुण्य &c 6 For this Sl. B 10 कन्दर्पो मूर्त्तिमानासीत् काम इत्युच्यते बुधैः । तपस्यन्तमिह स्थाणुं नियमेन समाहितं । 7 For this Sl B 11. कृतोद्वाहंतु देवेशं गच्छन्त समरुद्गणं । धर्षयामासदुर्मेधा हुङ्कृतश्च महात्मना ॥ 8. G 11 बुद्ध्वा स &c. but P has स बुद्ध्वा &c. 9. For this Sl B 12. (a) अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन । व्यशीर्यन्त शरीरात् स्वात् सर्वगात्राणि दुर्मतेः ॥ (a) V. अवध्यातस्य रौद्रेण &c Before Sl 12 of our text G. 12 reads the line :—अथ शप्तस्य रुद्रेण तस्य वै रघुनन्दन । 10. For this,

[1]अनङ्ग इति देशोऽयं ख्यातः कामाङ्गनाशनात् ।
[2]तस्यायमाश्रमः पुण्यः कामस्य रघुनन्दन ॥ १४ ॥
तस्यायतनमत्रेदं तस्येमे परमर्षयः ।
तपोदमरताः सर्वे पुराणा ब्रह्मवादिनः ॥ १५ ॥
निवसन्त्यत्र निरतास्तपोनिर्धूतकल्मषाः ।
[3]इहाद्य रजनीमेकां वसामः शुभदर्शन ॥ १६ ॥
पुण्ययोः सरितोर्मध्ये तरिष्यामः परेऽहनि ।
[4]अभिगच्छाम च स्नात्वा शुचयः पुण्यमाश्रमम् ॥१७॥
इह कामाश्रमे राम सुखं वत्स्यामहे निशाम् ।
[5]तेषां संवदतामेवं तपोदीर्घेण चक्षुषा ॥ १८ ॥
विज्ञाय परमप्रीता मुनयो हर्षमागमन् ।
तेऽर्घ्यं पाद्यञ्च विधिवत् प्रयुज्य कुशिकात्मजे ॥ १९ ॥

---

and the following two lines —B 13 and 14 (a) तत्र गात्रं हतं तस्य निर्दग्धस्य महात्मनः । अशरीर कृतः कामः क्रोधाद्देवेश्वरेणह ॥ अनग इति विख्याता स्तदाप्रभृति राघव । स चांगविषयः श्रीमान् यत्रांगं स मुमोच ह ॥ (a) V तस्य गान्यपतन् राम &c. 1. P has the following alternative for this line on the margin स चांगविषय. श्रीमान् यत्रा गानि मुमोचह । 2 For this, and the following 3 lines B 15. तस्यायमाश्रमः पुण्यस्तस्येमेमुनय· पुरा । शिष्या धर्म्मपरावीर तेषां पापं नविद्यते ॥ 3. For this and the following line B 16. इहाद्य रजनीं राम वसेम शुभदर्शन । पुण्ययो. सरितोर्मध्ये अवस्तरिष्यामहे वयं ॥ 4 For this, and the following line B 17 अभिगच्छामहे सर्वे शुचयः पुण्य माश्रमं । इह वास परोऽस्माकं सुखं वत्स्यामहे निशाम् ॥ 5 For this, and the following 5 lines B 18–23 स्नाताश्च कृतजप्याश्च हुतहव्यानरोत्तम । तेषा सवदतां तत्र तपःदीर्घेण चक्षुषा ॥ विज्ञाय परमप्रीता मुनयो हर्षमागमन् । अर्घ्यं पाद्य तथातिथ्यं निवेद्य कुशिकात्मजो । रामलक्ष्मणयोः पश्चादकुर्वन्नतिथिक्रियां । सत्कारं

रामलक्ष्मणयोरेव[1]मकुर्वन्तातिथिक्रियाम् ।
सत्कारं परमं प्राप्य कथाभिरभिरम्यच ॥
न्यवसंस्ते महात्मानः कामाश्रमपदे सुखम् ॥ २० ॥

आदिकाण्डे कामाश्रमनिवासः ॥

---

XXVII

ततः प्रभाते विमले कृताह्निकमरिन्दमौ ।
विश्वामित्रं पुरस्कृत्य नद्यास्तीर[2]मुपेयतुः ॥ १ ॥
ते[3]च सर्वे महात्मानो मुनयः [4]सूर्यवर्चसः ।
उपस्थाप्य [5]शुभां नावं विश्वामित्रमथाब्रुवन् ॥ २ ॥
[6]आरोहतु भवान्नावं राजपुत्रपुरस्कृतः ।
अरिष्टं गच्छ पन्थानं [7]माते कालात्ययो [8]भवेत् ॥ ३ ॥
विश्वामित्रस्तथेत्युक्त्वा [9]तानृषीन् प्रतिपूज्य च ।
ततार [10]सरितं पुण्यां सरयूं विमलोदकाम् ॥ ४ ॥
[11]तत्र रामः सरिन्मध्ये पप्रच्छ मुनिपुङ्गवम् ।
वारिणो भिद्यत इव किं न्वयं बलवान् स्वनः ॥ ५ ॥

---

समनुप्राप्य कथाभिरभिरंजयन ॥ यथार्हमजपन् संध्यामुपयस्ते समाहिता । तत्र वासिभि (५)रानीतान्मुनिभि र्व्रतैः सह ॥ न्यवसत्सुखं तत्र कामाश्रमपदे तथा । कथाभिर भिरामाभिरभिरामौ नृपात्मजौ ॥ रमयामास धर्मात्मा कौशिको मुनिपुंगवः ॥ (५) S. रामाना &c 1 G. 20 . मकुर्वन्नतिथि &c. 2. B XXIV 1 .मुपागतौ 3. G 2 तु &c., but P has च &c 4 B 2 संशितव्रताः 5 V शिवां &c 6 P आरोह भगवन्नाव &c. 7. B 3 माभूत कालस्यपर्ययः 8 G 3 ह्यभूत् 9 P तापसान् &c. 10 B 4. सहितस्ताभ्यां सरितं सागरंगमाम । 11 For this Sl B 5-7 (a) तत्र शुश्राव वैशब्द तोयसंरंभवर्द्धित । मध्यमागम्य तोयस्य तस्य शब्दस्य निश्चयं ॥ ज्ञातुकामो

[1]इति रामवचः श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास भगवांस्तस्य शब्दस्य विस्तरम् ॥ ६ ॥
[2]कैलासशिखरे राम मनसा निर्म्मितं सरः ।
ब्रह्मणा प्रागिदं यस्मात्तदभून्मानसं सरः ॥ ७ ॥
[3]सरसो मानसात्तस्मादयोध्यामनुशोभना ।
नदी प्रसूता सरयूः पुण्या ब्रह्मसरश्च्युता ॥ ८ ॥
[4]जाह्नवीमभिवर्त्तिन्यास्तस्याः शब्दोऽयमीदृशः ।
वारिसङ्घर्षजो राम प्रणामं [5]प्रयतः कुरु ॥ ९ ॥
[6]चक्रतुस्तौ नमस्ताभ्यां नदीभ्यामथ राघवौ ।
तीरं[7]परं समासाद्य जग्मतुर्लघुविक्रमौ ॥ १० ॥
[8]अथानुपदमेवान्यद्वनं घोरमरिन्दमौ ।
दृष्ट्वा पप्रच्छतुर्भूयो मुनिं [9]तौ नृवरात्मजौ ॥ ११ ॥

---

महातेजा सह रामः कनीयसा । अथ रामः सरिन्मध्ये पप्रच्छ मुनिपुंगवं ॥ वारिणोर्भिद्यमानस्य किमयं तुमुलो ध्वनिः । (a) V तत. शुश्रुवतु. शब्द &c S तत्र शुश्रुवतुः &c 1 For this Sl B 7-8 राघवस्य वच श्रुत्वा कौतूहलसमन्वितं ॥ कथया मास धर्म्मात्मा तस्य शब्दस्य निश्चय। 2 B 8 9 कैलास पर्वत राम मनसा निर्म्मित (a) परं ॥ ब्रह्मणा नरशार्दूल तेनेदं मानसं सरः । (a) V सरः ॥ 3 B 9-10 तस्मात्सुस्राव सरसः सायोध्यामुपगूहते ॥ सरः प्रवृत्ता &c. 4. For this Sl B 10 11. तस्यायमतुलः शब्दो जाह्नवीमभिवर्त्तते ॥ वारिसंक्षोभजो राम प्रणामं नियतः कुरु । 5 P प्रणतः &c 6 For this Sl B 11 12 ताभ्या तु तावुभौ कृत्वा प्रणाममतिधार्म्मिकौ ॥ तीरं दक्षिणमासाद्य &c 7. G 10. दक्षिणमासाद्य &c but P has परं समासाद्य &c 3 For this Sl B 12-13 सवनं घोरसकाश दृष्ट्वा नरवरात्मजः ॥ अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगव । .9 G 11 दशरथात्मजौ, P नृववरात्मजौ.

[1]कस्येदं मेघसङ्काशं वनं घोरं प्रकाशते ।
[2]भृङ्गपक्षिगणाकीर्णं झिल्लिकागणनादितम् ॥ १२ ॥
[3]नानामृगगणैर्घोरैर्वाश्यमानै[4]र्निनादितम् ।
सिंहव्याघ्रवराहर्क्षखड्गिकुञ्जरसेवितम् ॥ १३ ॥
[5]धवाश्वकर्णकुटजपाटलाविल्वतिन्दुकैः ।
द्रुमैः कण्टकिभिश्चैव कीर्णं[6]किंन्विदमुच्यताम् ॥१४॥
[7]तावुवाच तयोर्वाक्यं [8]श्रुत्वेदं भगवा[9]न्मुनिः ।
श्रूयतामित्युपामन्त्र्य भ्रातरौ रामलक्ष्मणौ ॥ १५ ॥
[10]अयं जनपदः श्रीमान् पूर्वमासीन्महर्द्धिमान् ।
[11]मलजश्च करूषश्च देवनिर्म्माणनिर्म्मितौ ॥ १६ ॥
[12]सखायं नमुचिं हत्वा मलेन समभिप्लुतः ।
क्रोधाच्चैव सहस्राक्षो[13]मित्रध्रुग्भगवान् किल ॥ १७ ॥

1 For this Sl B 13 14 अहो वनमिद दुर्गं झिल्लिकागरम संयुतं । भैरवैः श्वापदैः कीर्णं (a) शकुन्तैर्दारुणारवैः (a) V. शकुनैर्दारुणास्वनैः । 2 G. 12. दुर्गं पक्षि &c. 3. For this Sl. B. 14-15. नानाप्रकारैः शकुनैर्वाश्यद्भिर्भैरवस्वनैः ॥ सिंहव्याघ्रवराहैश्च वारणैश्चापिशोभितं । 4 G 13 विनादितं, but P. has निनादितं. 5 For this Sl. B 15-16. धवाश्वकर्णककुभैर्विल्वतिंदुकपाटलैः ॥ संकीर्णं बदरीभिश्च किं (a) न्विदं दारुणं वनं । (a) S त्विदं &c V त्वेतद् &c. 6 G. 14. किमिदमुच्यते । but P. has किन्त्विदमुच्यते । 7 For this Sl. B. 16-17 तमुवाच महातेजा विश्वामित्रो महामुनिः ॥ श्रूयतां वत्स काकुत्स्थ यस्यैतद्दारुणं वनं । 8. P श्रुत्वेवं &c. 9. G 15 ऋषिः, but P has मुनिः. 10 For this Sl B 17-18. एतौ जनापदौ स्फीतौ पूर्वमास्तां नरोत्तम ॥ मलदाश्च करूषाश्च देवनिर्म्माणनिर्म्मितौ । 11. G. 16 मलजाश्च करूषाश्च देवनिर्म्माण (a). निर्म्मिताः ॥ (a) P has निर्म्मितौ । 12 For this Sl B 18-19. पुरा वृत्रवधे राम मलेन समभिप्लुतं ॥ क्षुधाचैव सहस्राक्षं ब्रह्महत्या समाविशत् । 13. P मित्रध्रुगभवत् किल ।

[1]तमिहस्नापयामासुर्देवाः [2]सर्षिगणाः पुरा ।
कलसैः पुण्यसलिलैः[3]पूर्वमाल्यसमन्वितम् ॥ १८ ॥
[4]सोऽस्मिन् देशे मलं त्यक्त्वा देवः [5]कारूषमेवच ।
मित्राभिद्रोह[6]संयुक्तं परं हर्षमवाप्तवान् ॥ १९ ॥
[7]निर्म्मलो निष्करूषश्च शुचिरिन्द्रो यदात्वभूत् ।
तदा देशस्य सुप्रीतो ददौ वरमरिन्दम ॥ २० ॥
इमौ जनपदौ स्फीतौ ख्यातिं लोके गमिष्यतः ।
[8]मलजश्च करूषश्चेत्यङ्गजेन ममाङ्कितौ ॥ २१ ॥
[9]एवमस्त्विति तं देवा पाकशासनमब्रुवन् ।
देशस्य नामनिर्वृत्तिं श्रुत्वा[10]तां वासवेरिताम् ॥ २२ ॥
एवमेतौ जनपदौ पूर्वमेव विशब्दितौ ।
मलजाश्च करुषाश्च [11]मुदिता ऋद्धिसम्पदा ॥ २३ ॥

---

1. For this Sl B 19-20. तमिन्द्र (a) मलिनं देवा ऋषयश्च तपोधनाः ॥ कलशैः स्नापयामासुर्मलं (b) चास्य प्रमोचयन् । (a) V स्नापयन्देवा &c. (b) S वास्य &c. 2 P ऋषिगणाः &c. 3 G 18 पूर्णैर्मलविशोधनैः । 4 For this Sl B 20 21. (a) इह भूम्या मलं दत्त्वा देवाः कारूषमेव च ॥ शरीरज महेन्द्रस्य ततो हर्षं प्रपेदिरे । (a) V has सोऽस्मिन् देशे मलं त्यक्त्वा देवः कारूषमेवच । वृत्रारिद्रोहसंभूतं ततो हर्षमवाप्तवान् ॥ शरीरजं &c. 5 G 19 कालुष्यमेवच । 6 P संयुक्त परिहर्ष मवाप्तवान् ॥ 7 For this Sl B 21-22 निर्मलो निष्करूषश्च (a) शुद्ध इन्द्रो यथाभवत् ॥ ततो देशस्य सुप्रीतो वरं प्रादादनुत्तमं । (a) V शुचिरिन्द्रो यदाभवत् ॥ 8. For this line B. 23. मलदाश्च करूषाश्च ममाङ्गमलधारिणौ । G 21 मलजाश्च करूषाश्च &c 9 For this, and the following Sl B 23-25. साधुसाध्विति तं देवा पाकशासनमब्रुवन् ॥ देशस्य पूजा तां दृष्ट्वा कृतां शक्रेण धीमता । एतौ जनपदौ स्फीतौ दीर्घकालमरिन्दम ॥ मलदाश्च करूषाश्च मुदिता धन धान्यतः । 10 P देववैरिताम. 11. P देवनिर्म्मणानिर्म्मितौ After this,

[1]अथ कालस्य महतो यक्षिणी कामरूपिणी ।
बलं नागसहस्रस्य धारयन्ती[2]महाबला ॥ २४ ॥
ताड़का नाम सुन्दस्य भार्या दैत्यपतेरभूत् ।
मारीचो राक्षसः पुत्रो यस्याः शक्रपराक्रमः ॥ २५ ॥
[3]सेयं जनपदं राम समुत्साद्य सुदारुणा ।
अद्यापि सा[5]ऽधिवसति ताड़का दुष्टयक्षिणी ॥ २६ ॥
[6]एनं पन्थानमाक्रम्य साध्यर्द्धाद्योजनादितः ।
अत एव च गन्तव्यं ताड़काभवनं प्रति ॥ २७ ॥
स्वबाहुबलमाश्रित्य [7]जहि तां दुष्टयक्षिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ २८ ॥
[8]नहि कश्चिदिमं देशं [9]शक्नोत्यागन्तुमीदृशम् ।
यक्षिण्या घोररूपिण्या उत्सादितमनार्यया ॥ २९ ॥

---

P· reads the additional line —हृष्टपुष्टजनपदा मुदिता ऋद्धिसंपदा । 1· B. 25 कस्यचित्त्वथकालस्य &c 2 B 26 तदाह्यभूत् । 3 For this Sl B 26-27 ताटका नाम भद्रन्ते भार्या सुन्दस्य धीमतः &c After this Sl B (27-28) reads the line —वृत्तबाहुर्महाशीर्षो विपुलास्यतनुर्महान् ॥ राक्षसो भैरवाकारो नित्यं त्रासयते प्रजा । 4 For this Sl B 28-29 इमौ जनपदौ नित्यं विनाशयति राघव ॥ मलदांश्च करूषांश्च ताटका दुष्टचारिणी । 5 P निवसति &c 6 For this Sl B 29-30 सेयं पंथानमावृत्य वसत्यत्यर्धयोजने ॥ अत एव च गन्तव्यं ताटकाया वनं यतः । G 27 अत &c P एव &c 7 B. 30. जहीमां दुष्टचारिणीं 8 For this Sl B 31-32 नहि कश्चिदिमं देशं (a) शक्नोत्यागन्तुमीदृशं ॥ यक्षिण्या घोरया राम उत्सादितमसह्यया । (a) S. शक्नोत्या गंतुं &c. 9. P शक्नोत्यागंतुं &c

[1]इति ते सत्यमाख्यातं यथेदं दारुणं वनम् ।
यक्षिण्योत्सादितं पूर्वमद्याप्युत्साद्यते [2] तथा ॥ ३० ॥

आदिकाण्डे ताडकावनप्रवेशः ॥

## XXVIII

[3]इति तस्याप्रमेयस्य मुनेर्वचनमद्भुतं ।
श्रुत्वा रामस्ततोभूयः परिपप्रच्छ संशयम् ॥ १ ॥
अल्पवीर्या यदा [4]यक्षाः श्रूयन्ते मुनिपुङ्गव ।
कथं नागसहस्रस्य धारयत्यबला बलम् ॥ २ ॥
[5]विश्वमित्रस्ततो रामं श्रुत्वेति पुनरब्रवीत् ।
शृणु राम यथा चैषा धारयत्यबला बलम् ॥ ३ ॥
[6]पूर्वमासीन्महायक्षः सुकेतुरिति विश्रुतः ।
अनपत्यः प्रजाकामः स तेपे सुमहत्तपः ॥ ४ ॥
[7]तस्मै साक्षात्स्वयं ब्रह्मा तपसा परितोषितः ।
कन्यारत्नं ददौ राम ताडकां नाम नामतः ॥ ५ ॥

---

1. For this Sl B 32 एतत्ते सर्वमाख्यातं यथेतद्दारुणं वनं । यक्ष्या चोत्सादितं सर्वमद्यापिन निवर्त्तते ॥ 2 G 30 तया P ऽनया 3 For this Sl B XXV 1 अथ तस्याप्रमेयस्य मुनेर्वचनमुत्तम । श्रुत्वा पुरुषशार्दूलः प्रत्युवाच शुभां (a) गिरम् ॥ (a) S गिराम् 4 B 2 यक्षी श्रूयते &c 5. For this Sl. B 3 and 4 इत्युक्त वचन श्रुत्वा राघवस्यामितौजसः । हर्षयन श्लक्ष्णया वाचा सलक्ष्मणमरिन्दमं ॥ विश्वामित्रोऽब्रवीद्वाक्य श्रूयेन बलोत्कटा । वरदानकृत वीर्यं धारयत्यबलाबलं ॥ 6 For this Sl B 5 पूर्वमासीन्महायक्षः सुकेतु र्नामवीर्यवान् । अनपत्य शुभाचार. स च तेपे महत्तपः ॥ 7 For this Sl B 6 पितामहस्तु सुप्रीतस्तस्ययक्षपतेस्तदा । कन्या &c 7 For this Sl B 7 ददौ नागसहस्रस्य बलं चास्या. पितामहः । न त्वेव पुत्र यक्षाय ददौ (a) चा सा महा-

[1]बलं नागसहस्रस्य ददौ चास्याः पितामहः ।
काङ्क्षतोऽप्यस्य पुत्रं हि न [2]यक्षाय ददौ प्रभुः ॥ ६ ॥
[3]वर्धमानाञ्च तां दृष्ट्वा रूपयौवनशालिनीम् ।
धुन्धुपुत्राय सुन्दाय ददौ भार्यामनिन्दिताम् ॥ ७ ॥
कस्य चित्त्वथ कालस्य यक्षी पुत्रं [4]व्यजायत ।
मारीचं नाम [5]विख्यातं शापाद्राक्षसतां गतम् ॥ ८ ॥
सुन्दे तु निहते [6]तस्मिन्नगस्त्यमृषिसत्तमम् ।
ताडका सह पुत्रेण प्रधर्षयितु[7]मुद्यता ॥ ६ ॥
[8]राक्षसस्त्वं [9]भवत्वेवं मारीचं व्याजहार सः ।
अगस्त्यः परमः क्रुद्धस्ताडकाञ्चेदमब्रवीत् ॥ १० ॥
[10]पुरुषा घोररूपा च यक्षी त्वं विकृतानना ।
इदं रूपं परित्यज्य विकृता त्वं भविष्यसि ॥ ११ ॥

---

यशा· ॥ (a) V चास्मै &c. 1. P यक्षस्य &c. 2 For this Sl. B 8. तां तु बालां विवर्द्धन्तीं रूपयौवनशालिनीं । जंभपुत्राय सुंदाय ददौ भार्यां यशस्विनीं ॥ 3 P. व्यसूयत. 4. B 9 दुर्द्धर्षं य शापाद्राक्षसोऽभवत् ॥ 5. B 10 राम अगस्त्य &c. 6 B. 10.. .मिच्छति. Between this, and the following Sl. of our text B (11) reads. भक्ष्यार्थं जातसंरंभा गर्जन्ती साभ्यधावत । आपतन्तीं(a) तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ॥ (a) V च तां &c. 7. For this Sl B 12. राक्षसत्व भजस्वेति मारीचं व्याजहारसः । अगस्त्यः परमा मर्ष- स्ताटकामपि शप्तवान् ॥ 8 G 10. भवेत्येवं &c 9 For this Sl. B. 13. पुरुषादी महायक्षी विकृता विकृतानना । इद रूप विहायाशु दारुणं रूपमस्तु ते ॥ For the firt line, G (11) has पुरुषादी घोररूपा यक्षित्व &c 10 For this Sl B. 14 सैषा शापकृतामर्षा ताटका क्रोधमूर्छिता । देशमुत्सादयत्येनमगस्त्या·

[1]सैषा शाप[2]समाविष्टा ताडका दुष्टचारिणी ।
देशमुत्सादयत्येनमगस्त्याध्युषितं पुरा ॥ १२ ॥
[3]एवन्तां रामदुर्वृत्तां यक्षीं परमदारुणाम् ।
गोब्राह्मणहितार्थाय जहि घोरपराक्रमाम् ॥ १३ ॥
[4]नहि वीर्यमदोन्मत्तामेतां परमदारुणाम् ।
[5]निहन्ता त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १४ ॥
[6]नच ते[2]स्त्रीवधं कृत्वा घृणा कार्या कथञ्चन ।
प्रजानां हि हितं नित्यं कर्तव्यं राजसूनुभिः ॥ १५ ॥
[7]राजवंशेऽभिजातानामेष धर्मः सनातनः ।
अधर्मं जहि काकुत्स्थ कुरु धर्मं प्रजाहितम् ॥ १६ ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
[8]पावनं [9]वा सदोषं वा कर्तव्यं नात्र संशयः ॥ १७ ॥
[10]श्रूयते हि पुराह्येवं विरोचनसुता किल ।
राक्षसी दीर्घजिह्वेति [11]विश्रुता कामरूपिणी ॥ १८ ॥

चरितं शुभम् ॥ 1. P परामृष्टा &c 2. For this Sl B 15. एनां राघव दुर्वृत्तां यक्षीं परमदारुणां । गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमां ॥ 3. For this Sl B 16 नह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान् । निहन्तुं त्रिषु &c. 4 G. 14 निहन्ति &c but P. has निहन्ता &c 5. For this Sl B 17 नहिते स्त्रीवधकृते घृणा कार्या नरोत्तम । चातुर्वर्ण्यहितार्थंहि कर्त्तव्यं राज सूनुना ॥ 6 G 15. स्त्रीवधकृते &c P. स्त्रीबधकृता &c 7. For thiss B 19. राज्यभारनियुक्तानामेषधर्मः सनातनः । अधर्म्याञ्जहि काकुत्स्थ धर्मो (a) ह्यस्या न विद्यते ॥ (a) S. ह्यस्या ॥ 8. For this line B 18......पातकं वा सदोषं वा कर्त्तव्यं रक्षता सदा ॥ 9. P. च &c 10. For this, and the following Sl. B. 20 श्रूयते हि पुरा शक्रोविरोचनसुतां नृप । पृथिवीं हन्तुमिच्छन्तीं मंथरामभ्यसूदयत् ॥ विष्णुना च 11. G. 18 विख्याता &c., but P. has विश्रुता &c.

विकृतं मुनिदत्तं कृत्वा कालानलोपमम् ।
ग्रसन्ती पृथिवीं कृत्स्नां शक्रेण विनिपातिता ॥ १९ ॥
[1]विष्णुना च पुरा राम शक्रतुल्यपराक्रमा ।
अपीन्द्रलोकमिच्छन्ती काव्यमाता निषूदिता ॥ २० ॥
[2]एतैश्चान्यैश्च बहुभी राजपुत्र महात्मभिः ।
अधर्मनिरता नार्यो हताः पुरुषसत्तम ॥ २१ ॥

इति आद्येकाण्डे ताडकोत्पत्तिः ।

## XXIV

मुनेर्वचनमक्लीवं श्रुत्वा नृपवरात्मजः ।
राघवः प्राञ्जलिर्भूत्वा प्रत्युवाच [3]धृतव्रतम् ॥ १ ॥
[4]अहं पित्रा समादिष्टो मात्रा चैव महामुने ।
विश्वामित्रस्य वचनं त्वया कार्यमिति प्रभो ॥ २ ॥
[5]अहं पितृनियोगेन तव चानुपमद्युते ।
करिष्ये [6]दुष्टचारिण्यास्ताडकाया वधं मुने ॥ ३ ॥

---

1 For this Sl B 21 विष्णुना च पुरा राम भृगुपत्नीपतिव्रता । अनिंद्रंलोकमिच्छन्ती काव्य माता निषूदिता ॥ 2 For this Sl B 22 एतैश्चान्यैश्च बहुभीराजपुत्रैर्महात्मभिः ॥ अधर्मसहिता नार्यो हता पुरुषसत्तमैः ॥ तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ॥ 3 B XXVI 1 दृढव्रतः· G 1 शुभव्रत, P. दृढव्रतः । 4 For this Sl B 2-3. पितुर्वचननिर्देशात् पितुर्वचनगौरवात् । वचनं कौशिकस्येति कर्त्तव्यमविशङ्कया ॥ अनुशिष्टोऽस्म्ययोध्याया गुरुमध्ये महात्मना । पित्रा दशरथेनाहं नावज्ञेयं हि तद्वचः ॥ 5 For this Sl B. 4 सोऽहं पितुर्वचः श्रुत्वा शासनाद्ब्रह्मवादिनः । करिष्यामि न सन्देहस्ताटकावधमुत्तमम ॥ G 3 सोऽहं &c. 6 G 3 दुष्टचारिण्या &c, but

[1]गोब्राह्मणहितार्थाय [2]देशस्यास्य सुखावहम् ।
तदेतद[3]प्रतीपेन कर्तव्यं वचनं मुने ॥ ४ ॥
[4]एवमुक्त्वा धनुः सज्यं कृत्वोद्यम्य च राघवः ।
ज्याशब्दमकरोत्तीव्रं दिशः शब्देन पूरयन् ॥ ५ ॥
[5]तेन शब्देन वित्रस्ता मृगास्तद्वनचारिणः ।
ताडका चापि[6] वित्रस्ता ज्याशब्दप्रतिबोधिता ॥ ६ ॥
[7]नर्दमाना भृशं क्रुद्धा विकृता विकृतानना ।
अतिप्रमाणामायान्तीं रामो लक्ष्मणमब्रवीत् ॥ ७ ॥
[8]पश्य लक्ष्मण राक्षस्या विकृतं दारुणं मुखम् ।
अतिप्रमाणं क्रुद्धाया रूपञ्चातिभयावहम् ॥ ८ ॥
[9]एतां पश्य महाबाहो मद्बाणेन हृदि क्षताम् ।
निहतां पतितां भूमौ रुधिरेण परिप्लुताम् ॥ ९ ॥

P has दुष्टयक्षिण्या &c 1 For this Sl B. 5. गोब्राह्मणहितार्थाय देशस्य च हिताय च । तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ 2. G 4 देशस्य च &c, but P has देशस्यास्य &c 3 P प्रतीतेन &c 4 For this Sl B 6 एवमुक्त्वा धनुर्मध्ये बद्ध्वामुष्टिमरिंदमः । ज्याघोषमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ 5. For this Sl B 7 तेन शब्देन वित्रस्ता स्ताटकावनवासिनः । ताटकाच सुसंक्रुद्धा तेन (a) शब्देन मोहिता ॥ (a) V क्रोधेन &c 6 G 6 संभ्रान्ता &c , P संत्रस्ता &c. 7 For this Sl B. 8 and 9 तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्छिता । श्रुत्वा चाभ्यद्रवत् क्रुद्धा यत्र शब्दो विनिस्सृतः ॥ तां दृष्ट्वा राघव क्रुद्धा विकृतां विकृतानना । प्रमाणेनातिवृद्धाञ्च लक्ष्मणं सोऽभ्यभाषत ॥ Between the two lines of Sl 7 our text-G (7-8) reads the lines ·—(a) श्रुत्वा चाभ्यद्रवद् वेगाद्यतः शब्दोऽभिनिः सृत. ॥ ता दृष्ट्वा (b)घोरवपुष विरूपा विकृताननां । (a) P. श्रुत्वैवभ्यद्रवद &c (b) P राघवः क्रुद्धा &c 8 For this Sl B 10 पश्य लक्ष्मण यक्षिण्या भैरवं दारुणं वपु. । भिद्येरन् दर्शनादस्या भीरूणां हृदयानि च । 9 For this Sl B 11 एता पश्य दुराधर्षा मायाबलसमन्विता । विनिवृत्ता

[1]इयं हि राक्षसी [2]क्रुद्धा महादुष्कृतकारिणी ।
मच्छराग्नि विनिर्दग्धा धूतपापा भविष्यति ॥ १० ॥
[3]एवं तस्य ब्रुवाणस्य ताडका क्रोधमूर्छिता ।
उद्यम्य बाहू गर्जन्ती वेगेनाभ्यासमाययौ ॥ ११ ॥
[4]तामापतन्तीं वेगेन विमुक्तामशनीमिव ।
ताडकां विकृताकारां जिघांसन्तीं सुदारुणाम् ॥ १२ ॥
महाभ्रचयसङ्काशां समुच्छ्रितभुजद्वयाम् ।
विव्याधोरसि बाणेन चन्द्रार्धाकारवर्चसा ॥ १३ ॥

---

करोम्यद्य हृतकर्णाग्रनासिका ॥ 1. For this Sl B 12. नह्येनामुत्सहे हन्तु स्त्रीस्वभावेन रक्षितां । वीर्यं चास्या गतिं चैव हन्यामिति हि मे मति. ॥ 2. G 11. घोरा &c., but P has क्रुद्धा &c 3. For this Sl B. 13 एव ब्रुवाणे रामे तु ताटका क्रोध मूर्छिता । उद्यम्य (a) बाहुं गर्जन्ती राममेवाभ्यधावत ॥ (a) V has बाहू &c 4 For this, and the following two Slokas, B 14-2. विश्वामित्रस्तु ब्रह्मर्षिर्हुंकारेणाभिमर्त्स्यताम् । स्वस्ति राघवयोरस्तु जय चैवाभ्यभाषत । उद्धुन्वानारजोघोर ताटकाराघवावुभौ । रजोमेघेन महता मुहूर्त सा (a) व्यमोहयत् । ततो माया समास्थाय शिलावर्षेण राघवौ । अवाकिरत्सुमहता ततश्चुक्रोध राघवः ॥ (b) शिलावर्षं महत्तस्याः शरवर्षेण राघव. । प्रतिवार्योपधावन्त्याः करौ चिच्छेद-पत्रिभिः ॥ ततश्छिन्न (c) भुजा श्रान्तामभ्याशे परिगर्जतीम् । सौमित्रिरकरोत् क्रोधा-द्धृतकर्णाग्रनासिका । कामरूपधरा सा तु कृत्वा रूपाण्यनेकशः । अन्तर्धानं गता यक्ष मोहयन्ती स्वमायया ॥ अश्मवर्षं विमुञ्चन्ती भैरव विचचार (d) सा । ततस्तावश्मा वर्षेण कीर्यमाणौ समन्ततः ॥ दृष्ट्वा गाधिसुत. श्रीमानिदं वचनमब्रवीत् । अलते घृणय-राम पापैषा दुष्टचारिणी ॥ यज्ञविघ्नकरो यक्षी पुरा वर्द्धेत मायया । बध्यता ताव देवैषा पुरासध्या प्रवर्तते ॥ रक्षांसिसंध्याकालेतु दुर्धर्षाणि भवंतिहि । (e) इत्युक्त सतु ता यक्षीमश्मवृष्ट्याभिवर्षिणीं । दर्शयन् शब्दवेधित्व तारुरोध स सायकै. । साऽरुद्धा बाणजालेन मायाबलसमन्विता ॥ अभिदुद्राव काकुत्स्थ लक्ष्मणं च विनेदुषी । तामाप-तन्तीं वेगेन विक्रान्ता मशनीमिव ॥ शरेणोरसि विव्याध पपात च ममार च । (a) V. व्यमोहयत् (b) This line comes after the next line in V (c) S. भुजा-

सा तेन वज्ररूपेण [1]भृशं वक्षसि ताडिता ।
ववाम रुधिरं [2]घोरं पपात च ममार च ॥ १४ ॥
तां हतां [3]पतितां भूमौ दृष्ट्वा सुरपतिस्तदा ।
साधु साध्विति काकुत्स्थं [4]सुराश्च समपूजयन् ॥१५॥
[5]उवाच च भृशं प्रीतः सहस्राक्षोऽम्बरेस्थितः ।
सह सर्वामरगणैर्विश्वामित्रमिदं वचः ॥ १६ ॥
[6]मुने कौशिक पश्यास्मान्[7] सेन्द्रान्देवानुपस्थितान् ।
तोषितान् कर्म्मणानेन रामस्यामिततेजसः ॥ १७ ॥
अस्मन्नियोगाद्भद्रन्ते स्नेहं दर्शय राघवे ।
तपो योगबलेनैवमाप्ययितुमर्हसि ॥ १८ ॥
[8]प्रजापतिसुताञ्चैव कृशाश्वाद्राजसत्तमात् ।
यान्यवाप्तानि तेऽस्त्राणि तान्यस्मै प्रतिपादय ॥ १९ ॥
[9]पात्रभूतो हि ते शिष्यो रामो दशरथात्मजः ।
कर्तव्यञ्च महात्कार्यमस्माकं राजसूनुना ॥ २० ॥

---

यातास् &c (d) V ह (e) V इत्युक्तस्तुतदायक्षामश्मवर्षाभिवर्षती । 1 G. 15 बाणेन भृशविक्षता । but P has भृशं वक्षसि ताडिता । 2 G 15 भूरि &c., but P. has घोरं &c 3 B 26 भीमसंकाशा दृष्ट्वा &c 4 B 27. सुराश्चाप्यभिपूजयन् । 5 For this Sl B.27-28 उवाच परम प्रीतः सहस्राक्षः पुरंदरः ॥ सुराश्च सर्वे संहृष्टा विश्वामित्रमथा ब्रुवन् । 6 For this and the following Sl B. 28 29 मुने कौशिक भद्रन्ते सेन्द्राः सर्वे मरुद्गणाः ॥ तोषिताः कर्मणानेन स्नेहं दर्शय राघवे ॥ 7 G 18 देवान सेन्द्रान् &c. but P has सेन्द्रान् देवान् &c. 8 For this Sl. B 29-30 प्रजापतेः (a) कृशाश्वस्य पुत्रान् सत्यपराक्रमान् ॥ तपोबल (b) भृतोब्रह्मन राघवायनिवेदय ॥ (a) V. भृशाश्वस्य &c. (b) V भृतान् &c 9 For this Sl B 30-31 पात्र भूतश्चते ब्रह्मं स्तवानुगमने (a) रतः ॥ कर्त्तव्यं सुमहत्कर्म्म सुराणां राजसूनुना । (a)

[5]एवमुक्त्वा सुरगणा विश्वामित्रं पुनर्ययुः ।
यथागतेनैव पथा ततः सन्ध्याभ्यवर्तत ॥ २१ ॥
[6]विश्वामित्रोपि भगवांस्ताडकावधतोषितः ।
[7]रामं मूर्द्धन्युपाघ्राय वचनं चेदमब्रवीत् ॥ २२ ॥
इहाद्य रजनीं [8]वीर वहामः शुभदर्शन ।
श्वः प्रभाते गमिष्यामस्तदाश्रमपदं मम ॥ २३ ॥

आदिकाण्डे ताडकावधः ।

---

## XXX

[1]प्रभातायान्तु शर्वर्य्यां विश्वामित्रो महामुनिः ।
प्रहसन् राममाभाष्य मधुरं वाक्यमब्रवीत् ॥ १ ॥

---

V. घनः 5 For this Sl B. 31-32. एवमुक्त्वा सुराः सर्वे जग्मुर्हृष्टा (a) विहायसं ॥ विश्वामित्र पूजयन्तस्तत संध्याप्रवर्त्तते । (a) V. यथागत । P, has एवमुक्त &c 6 For this Sl B 32-33 ततो मुनिवरः प्रीतस्ताटकावधतोषितः ॥ मूर्ध्नि राममुपाघ्राय इदं वचनमब्रवीत् । 7. G 23 मूर्ध्निराममुपाघ्राय &c, but P has रामं मूर्द्धनुपाघ्राय &c 8. B 33 राम &c G 24 राम &c but P has वीर &c B (34 36) reads the following lines after this,— विश्वामित्रवचः श्रुत्वा हृष्टो दशरथात्मजः ॥ उवास रजनीं तत्र ताटकाया वने सुखं । मुक्तशाप वनं तच्च तस्मिन्नेव तदाहनि ॥ (a) रमणीय विबभाज यथा चैत्ररथं वनं । निहत्य ता यक्षसुता स रामः प्रशस्यमानः सुरसिद्धसंघे । उवास तस्मिन् मुनिना सहैव प्रभातवेलां प्रतिबोध्यमानः ॥ (a) Before this line V reads the lines — चम्पकाशोकपुन्नागमल्लिकाभिः सुशोभित ॥ चूतैश्च पनसैः पूगैर्नारिकेलैश्च शोभितं । वापीकूपतडागैश्च दीर्घिकाभिरलङ्कृत ॥ मल्लिकाहेमकूटैश्च मण्डपैरुपशोभितं । 1 For this Sl B XXVII. 1 अथ ता रजनीमुष्य विश्वामित्रो महायशाः । प्रहस्य राघव वाक्यमुवाच मधुरस्वर ॥ G 1 अथता रजनी व्युष्टा &c., but P has प्रभातायां तु शर्वर्य्यां &c

वृकः पक्षिविशेषः पक्षिसमभिव्याहारान्नत्वारण्यः श्वा, तस्याप्यत्तमाणत्वात् । काककपोतौ प्रसिद्धौ । एतेषां घातकः समस्तस्याप्यस्य-बुध्यावच्छिन्नत्रान्वयात् । सारीतित्तिरी प्रसिद्धौ तयोश्च घातकोऽन्तर्जले जलमध्ये उभे सन्ध्ये सायं प्रातः सन्ध्ये अत्यन्तसंयोगे द्वितीयाश्रवणात्ते अभिव्याप्य प्राणायामेन तावत्कालाभ्यस्तेन शुध्यतीति ।

किञ्च ।

**गृध्रश्येनशशादीनामुलूकस्य च घातकः ।**
**अपकाशी दिनं तिष्ठेत्त्रिकालं मारुताशनः ॥ ५ ॥**

गृध्रो दाक्षाय्यः, श्येनः पक्षी शशादस्तदवान्तरजातिः, उलूकः पेचकस्तेषां घातकः, एकस्मिन् दिने अपक्व कन्दमूलफलमशित्वा ततः परदिने कालद्वयेऽपि तृतीयदिने तु दिवा मारुतमेवाशित्वा रात्रौ भुञ्जीतेत्येवं सार्द्धदिनद्वयं प्रायश्चित्तं भवति । अत्राशक्तस्य कश्यप आह । बकबलाकासारसकारण्डवचक्रवाककुररगृध्रश्येनखञ्जरीटटिट्टिभोलूकसारिकातित्तिरिमयूरकुरमुखामेजनककलविङ्कपारावतादीनां वधे प्रायश्चित्तमहोरात्रोपोषितः सर्वबीजानि च दद्यादिति ।

किञ्च ।

**वल्गुलीटिट्टिभानां च कोकिलाखञ्जरीटयोः ॥**
**लाविकारक्तपक्षाणां शुद्ध्यते नक्तभोजनात् ॥ ६ ॥**

वल्गुली पक्षिविशेषः । टिट्टिभस्य पुनर्वचनमवान्तरजातिभेदादिप्रापणार्थं कोकिला परभृता अत्र सर्वत्र लिङ्गमविवक्षितमुद्देश्यगतत्वात् । खञ्जरीटः खञ्जनः लाविका लावः, रक्तपक्षाः लोहितपक्षाः, एतेषां पूर्ववाक्यादनुशक्तो घातको नक्तभोजनाच्छुध्यति ।

किञ्च ।

**कारण्डवचकोराणां पिङ्गलाकुररस्य च ॥**
**भारद्वाजादिकं हत्वा शिवं संपूज्य शुध्यति ॥ ७ ॥**

कारण्डवः प्लवः चकोरपिङ्गले प्रसिद्धे कुरर उत्क्रोशः भारद्वाजो व्याघ्राटः । आदिशब्देनोक्तातिरिक्तानामन्येषामपि ग्रहणम् । एतान् हत्वा शिवं विधिवत् सम्पूज्य शुध्यति ।

किञ्च ।

**भेरुण्डचाषभासांश्च पारावतकपिञ्जलान् ॥**
**पक्षिणां चैव सर्वेषामहोरात्रमभोजनम् ॥ ८ ॥**

भेरुण्डः पक्षिविशेषः चापः किकीदिवः भासः पक्षिविशेषः पारावतस्य पुनर्वचनं प्रायश्चित्तविकल्पार्थं कपिञ्जलः पक्षिविशेषः एतान् हत्वान्यनुपङ्गः पक्षिजातीनामानन्त्यात्पृष्टाकोटिन्यायेन वक्तुमशक्तेरेकोपाधिना तेषु प्रायश्चित्तमाह । पक्षिणां चैव सर्वेषां हनन इति शेषः । अहोरात्रमभोजनमेकाहोपवास इति । एवं मलिनीकरणविशेषे प्रायश्चित्तविशेष आचार्येणोक्तः । अवशिष्टे कृमिकीटवधादौ प्रायश्चित्तं स्मृत्यन्तरोक्तं द्रष्टव्यम् । तदाह ।

मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहमिति ।

इदानीं सङ्करीकरणे प्रायश्चित्तमाह ।

**हत्वा मूषकमार्जारसर्पाजगरडुण्डुभान् ।**
**कृसरं भोजयेद्विप्रान् लोहदण्डं च दक्षिणा ॥ ९ ॥**

मूषकादयोऽजगरान्ताः प्रसिद्धाः डुण्डुभो राजिलश्चकाराच्चकुलश्चैतान् हत्वा कृसरं तिलमुद्गमिश्रमोदनं त्रीन् ब्राह्मणान् भोजयित्वा लोहदण्डदक्षिणां दद्यादिति । तथा च विष्णुः । हत्वा मूषकमार्जारनकुलडुण्डुभाजगराणामन्यतमं कृसरान्नं भोजयित्वा लोहदण्डं दक्षिणां दद्यादिति ।

किञ्च ।

**शिशुमारं तथा गोधां हत्वा कूर्मं च शल्यकम् ।**
**वृन्ताकफलभक्षी चाप्यहोरात्रेण शुध्यति ॥ १० ॥**

शिशुमारः सूंसः गोधा कृकलासानुकारिणी कूर्मः कच्छपः शल्यकः

तथाशब्देन कृकलासनकुलयोर्ग्रहणम् । एतान् हत्वा वृन्ताकफलमात्रभक्षोऽहोरात्रेण वकारात्तु पूर्वोक्तं लोहदण्डं च दत्वा शुध्यति । तथा च कश्यपः । कृकलाससर्पनकुलगोधाशल्यकवधे अहोरात्रोषितश्चीर्णान्ते लोहं दद्यादिति । ननु ।

स्वट्वावार्ताककुम्भीकव्रश्चनप्रभवाणि च ।
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः ॥

इति वृद्धयमेन सर्वथा निषिद्धस्य वृन्ताकभक्षणस्य शोधकत्वं विरुद्धमिति चेत् । मैवं सुरां पीत्वा हि मोहादग्निवर्णां सुरां पिबेदिति मनुना निषिद्धस्यापि सुरापानस्य शोधकत्ववदस्याविरुद्धत्वात् । नच सुरापानमात्रं न तत्र शोधकं किं तु अग्निवर्णसुरापानेनास्यदाहान्मरणमेवमुखे तयावाङ् निर्दग्धे मृतः शुद्धिमवाप्नुयादिति स्मरणादित्यय विषमो दृष्टान्त इति वाच्यम् । वृन्ताकमात्रभक्षणेनाहारान्तरपरिहारस्य क्लेशरूपस्य शोधकस्य अत्रापि तुल्यत्वादिति । यत्तु वृन्ताकफलभक्षो चेत्यस्यापि निमित्तसमर्पकत्वेनाहोरात्रोपवासमात्रमेव प्रायश्चित्तं न वृन्ताकभक्षणमिति तन्न । प्राणिवधप्रायश्चित्तप्रस्तावेऽभक्ष्यभक्षणप्रायश्चित्तस्यासङ्गतेवृन्ताकभक्षणप्रायश्चित्तस्यैकादशे वक्ष्यमाणत्वेन पौनरुक्त्याच्च । तस्माद्यथोक्तमेव साधीय इत्याचार्यस्वरसः ।

किं च ।

**वृकजम्बुकऋक्षश्वतरक्षूणां च घातकः ।**
**तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ॥ ११ ॥**

वृकः ईहामृगः जम्बुकः शृगालः ऋक्षो भल्लुकः श्वा कुक्कुरः तरक्षुर्मृगादनः, एषां घातकः त्रिरात्रं वायुभक्षश्चतुर्थदिने तिलप्रस्थं षोडशपलपरिमितांस्तिलान् ब्राह्मणाय दत्वा शुध्यति । तथा च विष्णुः । श्वानं हत्वा त्रिरात्रमुपवसेदिति ।

किं च ।

**गजस्य च तुरङ्गस्य महिषोष्ट्रस्य घातने ।**
**प्रायश्चित्तमहोरात्रं त्रिसन्ध्यमवगाहनम् ॥ १२ ॥**

गजतुरङ्गयोर्महिषश्चोष्ट्रश्च तयोः समाहारो महिषोष्ट्रं तस्य च घातने प्रमापणे अहोरात्रमुपवासः त्रिसन्ध्यमवगाहन प्रायश्चित्तं शोधकं भवति ।

किं च ।

**कुरङ्गं वानरं सिंहं चित्रं व्याघ्रं च घातयन् ।**
**शुध्यते स त्रिरात्रेण विप्राणां तर्पणेन च ॥ १३ ॥**

त्रिरात्रोपवासेन ब्राह्मणत्रयभोजनेन च शुध्यति । तथा च संवर्त्तः ।

व्याघ्रं श्वानं खरं सिंहं मृगसूकरमेव च ।
एतान् हत्वा द्विजः कुर्याद्ब्राह्मणानां च भोजनमिति ॥

किं च ।

**मृगरोहिवराहाणामवेर्बस्तस्य घातकः ।**
**अफालकृष्टमश्नीयादहोरात्रमुपोष्य सः ॥ १४ ॥**

मृगः कुरङ्गेतरस्तस्य पूर्वमुपात्तत्वात् रोही मृगविशेष. वराह सूकरः अविरुरभ्रः बस्तः छागः । एषां घातको ऽहोरात्रमुपोष्य परेद्युरफालकृष्ट नीवारादिकमश्नीयादिति ।

मृगजातीनामानन्त्यात्प्रतिव्यक्ति व्रतविशेषाभिधानाशक्तेरेकोपाधिना प्रायश्चित्तमाह ।

**एवं चतुष्पदानां च सर्वेषां वनचारिणाम् ।**
**अहोरात्रोषितस्तिष्ठेज्जपन्वै जातवेदसम् ॥ १५ ॥**

वनचारिणां सर्वेषां चतुष्पदानां पूर्वानुषक्तो घातको जातवेदसे सुनवामसोममिति मन्त्रं जपन् अहोरात्रोषितस्तिष्ठेन्नोपविशेदेवमित्यनेनाफालकृष्टाशनं परदिनेऽतिदिश्यते वनचारिविशेषणेन ग्राम्याणां प्रतिपदोक्तादन्यत्र स्मृत्यन्तरोक्तं द्रष्टव्यमित्युक्तम् । तदाह शङ्खः ।

पशून् हत्वा तथा ग्राम्यान्त्र्यहमेतद्व्रतं चरेत् ।
सर्वांश्च प्राणिनः स्थूलान् मण्डूकनकुलेष्वहः ॥ इति ।

बहुवचनेनैव सर्वप्राप्तौ सर्वपदोपादानमवशिष्टेषु खरमीनादिति कश्यपस्मरणात्तदूहार्थम् ।

इदानीं केषु चिदुपपातकेषु प्रायश्चित्तमाह ।

**शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत् ।**
**प्राजापत्यं द्वयं कृत्वा वृषैकादशदक्षिणा ॥ १६ ॥**

शिल्पी चित्रकारादिर्यद्यप्येतयोर्जातिविशेषानादरेण कर्मविशेषपुरस्कारेणोपादानात्सर्वजातीयत्व प्रतीयते तथापि मत्वर्थे सत्तायां वर्त्तमानत्वे सञ्ज्ञायां चेनुणोः प्रत्यययोः श्रवणात्स्वसमानधर्मकशूद्रसमभिव्याहाराच्च तदेककृत्योः सङ्करजात्योरेव ग्रहणं युक्तम्। शूद्रो जातिमात्र गुणविशेषेण व्रतविशेषस्य च वक्ष्यमाणत्वात् । स्त्री गुणदोषरहिता जातिमात्रेण ब्राह्मणी क्षत्रियादिहनने व्रतविशेषस्य स्मृत्यन्तरादूहनीयत्वात् । एतान्यो घातयेत्तेन मूलोक्त प्राजापत्यद्वयं यथोक्तविधिना कृत्वा वृष एकादशो यासु ता वृषैकादशास्ताश्च ता दक्षिणा चेति वृषैकादशदक्षिणा देयेत्यर्थः । यद्यप्यत्र सङ्ख्येयं नोपात्त तथाप्यनिर्दिष्टसंख्येया सङ्ख्या गोगामिनीति न्यायाद्वृषसाहचर्याच्च गाव एव । शूद्रवधं प्रकृत्याह गौतमः "वृषभैकादशाश्च गा दद्यादिति" । अत्रैकादशानां गावामेकादश प्राजापत्याः द्वौ च प्रतिपदोक्तौ ताभ्यां च कृच्छ्रचतुष्टयसिद्धिरित्येवं पञ्चदशकृच्छ्राणि संपद्यन्ते, एवं च षड्भिर्मासैर्भवति षाण्मासिकमेव व्रतमापद्यते । इदमेवाभिप्रेत्य सूतादिसङ्करजातिहनने षाण्मासिकादिव्रतमाह ब्रह्मगर्भः । अन्तरप्रभवाणां तु सूतादीनां चतुर्द्विषडिति । अत्र माम इत्यनुवर्तते तेन सूतवधे षण्मासाः वैदेहकवधे चत्वारश्चण्डालवधे द्वौ मागधवधे चत्वारः क्षत्रवधे द्वौ आयोगववधेऽपि "आयोगववधेपि द्वाविति । जातिमात्रशूद्रवधे तु मूलवचनादेव षण्मासिकव्रतं ज्ञेयम्। तथा कामाकामाभ्यां जातिमात्रब्राह्मणीवधे प्रचेतसापि वार्षिकषाण्मासिके व्रते अभिहिते अनृतुमतीं ब्राह्मणीं तु हत्वा कृच्छ्राब्दं षण्मासान्वेति । क्षत्रियादिवधेऽपि स एवाह । क्षत्रियां हत्वा षण्मासान्मासत्रयं वा वैश्यां हत्वा

मासत्रयं सार्द्धमास वा शूद्रा हत्वा मांसमर्द्धमास वा शूद्रा हत्वा-मामार्द्धमासमार्द्धद्वा विंशत्यहानि चेति। कामाकामाभ्या पत्तद्वयोरुपन्यासो व्यवस्थाप्यः । सवनस्याग्निहोत्रियाञेयादिवधे तु ब्रह्महत्याव्रतमिति । अत्यन्तव्यभिचरितब्राह्मण्यादिवधे तु याज्ञवल्क्योक्तम् ।

दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।
दृति धनुर्बस्तमवि क्रमाद्दद्याद्विशुद्धये ॥
इति द्रष्टव्य, दृतिश्चर्मपात्र बस्तः-छागः ।
क्षत्रियादिवधे प्रायश्चित्तमाह ।

**वैश्यं वा क्षत्रियं वापि निर्दोषं यस्तु घातयेत् ।**
**[1]सोऽपि कृच्छ्रद्वयं कुर्याद्गोविंशद्दक्षिणां ददेत् ॥ १७ ॥**

दोषोऽत्र विहिताकरण प्रतिषिद्धसेवन च तभ्या रहितौ निर्दोषौ क्षत्रियवैश्यौ घातयेत् सोऽपि कृच्छ्रद्वयं यथोक्तविधिना कृत्वा विंशद्विंशतिगा दक्षिणां दद्यात् । अत्राप्युक्तरीत्या चतुर्विंशतिः प्राजापत्यानि भवन्ति तानि च द्वादशदिनोनदशमाससाध्यानि इति दशमासिक व्रतमुपदिष्टं तदपेक्षया गुणदोषतारतम्येन व्रततारतम्य स्मृत्यन्तरादूहनीयम् । तत्र सर्वक्षत्रियादिवधे चतुर्विंशतिमतेऽभिहितम् ।

क्षत्रियस्य वधं कृत्वा चरेच्चान्द्रायणत्रयम् ।
वैश्यस्य तु द्वय कुर्याच्छूद्रस्यैन्दवमेव च ॥ इति ।

अत्यन्तदुष्टेषु तेषु संवर्त्त आह ।

निपात्य क्षत्रियं मोहात्त्रिभिः कृच्छ्रैर्विशुध्यति ।
कुर्यादेवानुपूर्व्येण त्रीन्कृच्छ्रांस्तु यथाविधि ॥
वैश्यहत्यासु संप्राप्य कथ चिन्मूढचेतनः ।
कृच्छ्रातिकृच्छ्रौ कुर्वीत स नरो वैश्यघातकः ॥
कुर्याच्छूद्रवधे विप्रः कृच्छ्रं सांतपन तथा ॥ इति ।

अकामकृतक्षत्रियादिवधविषयमेतद्, मोहादिपदश्रवणात् । याग-

---

१ सोऽतिकृच्छ्रद्वयमित्यपि पाठः ।

स्थक्षत्रियादिवधे तु ब्रह्महत्याव्रतातिदेशे वक्ष्यते, वृत्तस्थक्षत्रियादिवधे मनूक्तमेव ।

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश ॥ इति द्रष्टव्यम् ।

वृत्तशब्देनात्मगुणादिकमुच्यते

गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः ।
प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥ इतिस्मरणात् ।

ब्रह्महत्याशब्देनात्र वक्ष्यमाणब्रह्महत्याव्रतस्येत्यनुबधमननस्य योजनेन प्राजापत्यकल्पनया सिद्धा प्राजापत्यसंख्या ग्रहीतव्या तस्य चतुर्थाष्टमषोडशांशसंख्यासमिताः प्राजापत्याः क्रमेण क्षत्रियादिवधेषु योजनीयाः ।

इदानीमवृत्तयोर्वैश्यशूद्रयोर्दुर्वृत्तविप्रस्य च वधे प्रायश्चित्तमाह ।

**वैश्यशूद्रं क्रियासक्तं विकर्मस्थं द्विजोत्तमम् ।**
**हत्वा चान्द्रायणं कुर्यात्त्रिंशद्गाश्चैव दक्षिणाम् ॥ १८ ॥**

क्रियासु नित्यनैमित्तिकासु आभिमुख्येन कार्यान्तरपरिहारेणापि सक्तं वैश्यं शूद्रं च विरुद्धे लोकशास्त्रनिषिद्धे कर्मणि पातकादौ निरन्तर तिष्ठतीति विकर्मस्थः तादृशं द्विजोत्तम विप्रं च हत्वा चान्द्रायणं वक्ष्यमाणं यथोक्तविधिना कृत्वा त्रिंशद्गा दक्षिणां दद्यात् । एतच्च वैश्येऽष्टमांशो वृत्तस्थ इति मनूक्तेन समानमेव । अत्रैव विषये ब्रह्महा संवत्सरं कृच्छ्रं चरेदधः शायी त्रिषवणी कर्मावेदको भैक्षाहारो दीर्घनदीपुलिनसङ्गमाश्रमपर्वतप्रस्रवणतपोवनविहारी स्थानवीरासनी सङ्गमाश्रमगोष्ठपर्वतप्रस्रवणतपोवनविहारी स्थात्मस्थानवीरासनी संवत्सरे पूर्णे हिरण्यमणिगोधान्यतिलभूमिसर्पींषि ब्राह्मणेभ्यो ददत्पूतो भवतीति सुमन्तुवचनं योजनीयम् । उक्तरीत्याष्टत्रिंशत्प्राजापत्यसमानत्वात् ।

यत्तु द्विजोत्तमशब्देन वैश्यापेक्षयोत्तमत्वविवक्षया क्षत्रियमपि संगृह्णाति विकर्मस्थे तस्मिन्नप्येतदेव व्रतमिति चतुर्वर्णसाधारण्यमस्य

व्रतस्य वर्णितं तदयुक्तम् । निर्दोषक्षत्रियवधोक्तप्रायश्चित्तादस्याधिकत्वात् । तस्माद्यथोक्तमेव सुस्थम् ।

चण्डालवधे प्रतिवर्णं प्रायश्चित्तमाह ।

**चाण्डालं हतवान् कश्चिद्ब्राह्मणो यदि कञ्चन ।**
**प्राजापत्यं चरेत्कृच्छ्रं गोद्वयं दक्षिणां ददेत् ॥ १९ ॥**
**क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा ।**
**चण्डालस्य वधे प्राप्ते कृच्छ्रार्द्धेन विशुद्ध्यति ॥ २० ॥**

यदि कश्चित् सगुणो निर्गुणो वा जातिमात्रेण ब्राह्मणः कञ्चित् सगुणं निर्गुणं जातिमात्रेण ब्राह्मण्यां शूद्राज्जातं हन्ति स प्राजापत्यसञ्ज्ञकं कृच्छ्रं यथोक्तविधिना कृत्वा गोद्वयं दक्षिणां ददेत् । यद्वा कञ्चन शूद्रप्रतिलोमजत्वसाम्येनात्रायोगवं इत्यर्थं एतदप्यज्ञानपूर्वकवधे । ज्ञानपूर्वके तु पराकः । तदाह लौगाक्षिः ।

हनने प्रतिलोमानां शूद्रजानां कथं भवेत् ।
ज्ञानपूर्वे पराकः स्यादज्ञाने त्वैन्दवं तथा ॥ इति ।

अत्रोक्तरीत्या मूल्ये गोचतुष्टयं भवति । एतदेवेति मूलोक्तेन समानविषयम् । "चान्द्रायणमकुर्वाणाः कुर्युः कृच्छ्रचतुष्टयमिति" स्मरणात् । यद्यपि पराके गोत्रयप्रत्याम्नायत्वपक्षे चान्द्रायणादपि न्यूनत्वं तथापि पराके पञ्चधेनव इति स्मरणादैन्दवादाधिकत्वं ज्ञेयम् । यद्वा कञ्चन प्रतिलोमजत्वसाम्यात्सूतादिकं वेत्यर्थः । तदाह याज्ञवल्क्यः । "चान्द्रायणं चरेत्सर्वानवकृष्टान्निहत्य त्विति" । अवकृष्टाः प्रतिलोमजाः क्षत्रियवैश्यशूद्रैरितरेणानुलोमजेन मूर्द्धावसिक्तादिना प्रतिलोमजेन सूतादिना वा चण्डालादिप्रतिलोमजवधे कृते कृच्छ्रार्द्धेन तत्पूर्वापरवर्त्तिभ्यां पादत्रयैकपादाभ्यां क्रमेण शुद्धता कार्या ।

तदाह लौगाक्षिः ।

सर्वं त्रिपादं मध्यं च पादं चैव व्रतं चरेत् ।
वर्णक्रमादन्तराणां हिंसागमनभोजने ॥ इति ।

अतश्च ब्राह्मणादिक्रमेण चत्वारोऽपि वर्णाः कृच्छ्रं त्रिपादमर्द्धपादं च कुर्युरिति सिध्यति कृच्छ्रविभागवद्दक्षिणाविभागोऽप्यूह्यः । तदकृत्वा- त्तस्य ।

दुष्टचण्डालादिवधे प्रायश्चित्तान्तरमाह ।

**चोरः श्वपाकश्चण्डालो विप्रेणाभिहतो यदि ।**
**अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥२१॥**

यदि चौर्यासक्तः श्वपाकः तत्तायामुग्राज्जातश्चण्डालश्च पूर्वोक्तो विप्रेणाभिहतस्तदा स विप्रोऽहोरात्रोपोषितः परेद्युः स्नात्वा पञ्चग- व्यपानेन शुद्ध्यति अनेन निर्दोषश्वपाकवधेऽपि पूर्वोक्तं प्रायश्चित्तमि- त्युक्तं भवति चण्डालसाम्यात् । चण्डालवधस्योपपातकत्वाभावेन तु व्यवधानसाम्यात् प्रसङ्गेनाभिधानमविरुद्धम् ।

इदानीं चण्डालवधप्रसङ्गात्तद्विषयेषु प्रकीर्णेष्वपि केषु चित्प्राय- श्चित्तमाह ।

**श्वपाकं वापि चाण्डालं विप्रः संभाषते यदि ।**
**द्विजसंभाषणं कुर्यात्सावित्रीं च सकृज्जपेत् ॥ २२ ॥**

पूर्वोक्तलक्षणं श्वपाकं चण्डालं वा यदि विप्रः सभाषते तदा द्विजस्य ब्राह्मणस्य सभाषणं कुर्यात्तदभावे सावित्रीं सकृज्जपेत् । चका- रस्य विकल्पार्थत्वात् ।

अत एव एव हारीतः ।
चाण्डालैः सह सभाष्य द्विजसंभाषणाच्छुचिः ।
सावित्रीं व्याहरेद्वापि इति ।

उच्छिष्टस्य त्रिरात्रमाह स एव । "उच्छिष्टः सह संभाषेत्त्रिरा- त्रेणैव शुद्ध्यतीति ।

किं च ।

**चण्डालैः सह सुप्ते तु त्रिरात्रमुपवासयेत् ।**
**चण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः ॥ २३ ॥**

चण्डालैरिति बहुवचनं तत्समानधर्माणामन्येषामपि श्वपाका-दीनां प्राप्त्यर्थम् ।

आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः ।
सगोत्रोढासुतश्चैव चण्डालास्त्रय एव ते ॥

इति चित्वाभिप्राय वा, तैः सहैकशय्यायां सुप्ते त्रिरात्रमुपवासये-दुपवमेत् णिचः स्वार्थिकत्वात् । चण्डाल एव एकः परिदृश्यमानः पथि यस्मिन्नसौ चण्डालैकपथस्तं गत्वा गायत्र्याः स्मरणादनभिव्यक्ताक्षरप्रति-सन्धानाच्छुचिर्भवेत् । अनेन सार्थसमुदायान्तर्गते चण्डाले न दोष इति ध्वनितम् ।

किं च ।

**चण्डालदर्शने सद्य आदित्यमवलोकयेत् ।**
**चण्डालस्पर्शने चैव सचैलं स्नानमाचरेत् ॥ २४ ॥**

चण्डालस्य दर्शने सद्यस्तत्कालमेवादित्यमवलोकयेत् । तदाह सुमन्तुः । चण्डालस्पर्शनं सूर्यदर्शनं भाषणे ब्राह्मणव्यवहारः संस्पर्शने सचैलस्नानमिति एतच्च दिवा रात्रौ चेज्ज्योतिर्दर्शनं "दर्शने ज्योतिषां दर्शनमि"त्यापस्तम्बस्मरणात् । चण्डाल इति चित्याद्युपलक्षम् । तथा चतुर्विंशति मते ।

चितिं च चितिकाष्ठं च श्वपाकं शवदाहकम् ।
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेदिति" ॥

एषां स्पर्शने सचैलं स्नात्वा शुध्येत् । चकाराद्यूपकाष्ठं च स्पृष्ट्वा ।

श्वपाकं पतितं द्रव्यमुन्मत्तं शवदाहकम् ।
सूतकं सूतिकां नारीं रजसा च परिप्लुताम् ॥
श्वकुक्कुरवराहांश्च ग्राम्यान् संस्पृश्य मानवः ।
सचैलः सशिराः स्नात्वा तदानीमेव शुद्ध्यति ॥

इति देवलस्मरणात् । अवस्थाविशेषेण स्पर्शे विशेषमाह शातातपः ।

येन केन चिदभ्यक्तं चण्डालं मस्पृशेद्यदि ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥
अशुचिः स्वयमप्येतानशुद्धाश्च यदि स्पृशेत् ।
विशुद्ध्यत्युपवासेन त्रिरात्रेण ततः शुचिः ॥
उच्छिष्टः सस्पृशेद्विप्रो मद्यं मूत्र शुनोऽशुचीन् ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥
चण्डालश्वपचैः स्पृष्टो विण्मूत्र तु कृते द्विजः ।
त्रिरात्र तत्र कुर्वीत भुक्तोच्छिष्टस्तथैव च ।

किं च ।

**चण्डालखानवापीषु पीत्वा सलिलमग्रजः ।**
**अज्ञानादेकभक्तेन त्वहोरात्रेण शुद्ध्यति ॥ २५ ॥**

चण्डालेन खातासु खानितासु वापीषु बहुवचनं कूपतडागादिग्रहणाय अग्रजो ब्राह्मणः सलिलं पीत्वा पान स्नानाद्युपलक्षणम् । अज्ञानादेकभक्तेन ज्ञानादहोपवासेन शुध्यति । अतएवापस्तम्बः ।

अन्त्यजैः खनिताः कूपास्तडागा वाप्य एव च ।
तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा ॥
अकामादेकभोजी स्यादहोरात्रेण कामतः ॥ इति ।

नक्तैकभक्तयोर्विकल्पः शक्ताशक्तयोर्ज्ञेयः । यत्तुतेनैवोक्तम् ।
प्रपास्वरण्ये कटके च सैरे द्रोण्यां जल कोशविनिःसृत वा ।
श्वपाकचण्डालपरिग्रहेषु पीत्वा जल शुध्यति पञ्चगव्यात् ॥

तदप्येकभक्तेन समानं पराकविषयं वा अत्यन्तकृततज्ज्ञफलभोगे तु न दोषः ।

अन्त्यजानां तु ये वृक्षा बहुमूलफलोपगाः ।
उपभोग्याश्च ते सर्वे स्वल्पेषु च फलेषु च इत्यत्रिस्मरणात् ।

किं च ।

**चण्डालभाण्डसंस्पृष्टं पीत्वा तूपगतं जलम् ।**
**गोमूत्रयावकाहारस्त्रिरात्राच्छुद्धिमाप्नुयात् ॥ २६ ॥**

कूपस्थमेव जलं यदि चण्डालेनोद्धरणार्थं प्रक्षिप्तेन भाण्डेन संस्पृष्टं तदा तत्पीत्वा गोमूत्रपाचितयावकमात्रमाहारस्त्रिरात्रान्ते शुद्धिं प्राप्नोति।

किं च।

चण्डालघटसंस्थं तु यत्तोयं पिबति द्विजः।
तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥२७॥
यदि न क्षीयते तोयं शरीरे यस्य जीर्यति।
प्राजापत्यं न कर्तव्यं कृच्छ्रं सान्तपनं चरेत् ॥ २८ ॥

चण्डालस्य घटे सम्यक् चिरं कालं तिष्ठतीति चण्डालघटसंस्थं यत्तोयं तच्चेदज्ञानात्पूर्वं द्विजः पिबत्यनन्तरं ज्ञात्वा पश्चात्तापेन तत्कालमेव क्षीयते वमति तदा प्राजापत्यं कुर्यात्। यदि तु तृषातुरत्वेन तत्कालमज्ञानेन वा तत्तोयं न क्षीयते न वमति। किं तु शरीर एव जीर्यति परिणमते तदा पूर्वोक्तं प्राजापत्यमेव न कर्तव्यं किन्तु उक्तलक्षणं कृच्छ्रं सान्तपनं कुर्यात्। तथा चाङ्गिरः।

चण्डालपरिगृहीतमज्ञानादुदकं पिबेत्।
तस्य शुद्धिं विजानीयात्प्राजापत्येन नित्यशः॥
यस्तु चण्डालसंस्पृष्टं पिबेत्किंचिदकामतः।
स तु सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः॥ इति।
बुद्धिपूर्वं तत्पाने प्रतिवर्णं प्रायश्चित्तभेदमाह।

चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरम्।
तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्तथाचरेत् ॥ २९ ॥

यदि चण्डालभाण्डस्थं जलं बुद्धिपूर्वं ब्राह्मणः पिबति तदा सान्तपनं चरेत्। अनन्तरः क्षत्रियो वैश्यः शूद्रश्च तत्रैव प्राजापत्यं तदर्द्धं तत्पादं च यथार्थं कुर्यात्। तदाहापस्तम्बः।

चण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत्।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत्॥
चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः।
तदर्द्धं तु चरेद्वैश्यः पादं शूद्रे विनिर्दिशेदिति॥

इदानीं प्रसङ्गादन्त्यजजलादिपानेऽपि प्रायश्चित्तमाह ।

**भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् ।**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ ३० ॥**
**ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ।**
**शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ ३१ ॥**

यदिप्रमादतोऽज्ञानाद्ब्राह्मणक्षत्रियवैश्यशूद्रा अन्त्यजानां रजकादीनां

रजकश्चर्मकारश्च नटो वरुड एव च ।
कैवर्त्तभेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥

इतिस्मरणात् ।

भाण्डस्थानि जलदधिपयांसि पिबन्ति तदा वक्ष्यमाणलक्षणब्रह्मकूर्चसहितेनोपवासेन द्विजाः शुध्यन्ति । शूद्रस्य तु

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणश्च सुरां पिबेत् ।
उभौ तु तुल्यदोषौ हि सपाख्ये नगरे मतौ ॥

इत्यङ्गिरसा ब्रह्मकूर्चपानाधिकाराभावबोधनात्तत्पाने यथा शक्तिदानेनोपवासेन च शुद्धिरिति । आमात्रादिषु पात्रपर्यावर्त्तने न दोषः । तथा चतुर्विंशतिमते ।

आमं मांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
अन्त्यभाण्डस्थिता ह्येते निष्क्रीताः शुचयः स्मृताः ॥ इति ।

इदानीमज्ञानाच्चण्डालान्नभोजने प्रायश्चित्तमाह ।

**भुङ्क्तेऽज्ञानाद्द्विजश्रेष्ठश्चण्डालान्नं कथंचन ।**
**गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ ३२ ॥**

यो द्विजश्रेष्ठो ब्राह्मणो अज्ञानाच्चण्डालस्यान्नं कथञ्चन आपदादिना भुङ्क्ते स दशरात्रं गोमूत्रपाचितयावकं भुक्त्वा शुध्यति । ज्ञानपूर्वं त्वङ्गिरा आह ।

अन्त्यावसायिनामन्नमश्नीयाच्चैव कामतः ।
चतुश्चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वेति ॥

अन्त्यावसायिनश्चण्डालादयः । तदाह स एव ।
चण्डालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा ।
मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः ॥ इति ।

तच्च सिद्धान्नविषयमामान्ने तु त्रिरात्रमेव । तथा च विष्णुः । चण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक इति । पराकश्च मूलोक्तेन दशाहगोमूत्रयावकाहारेण समान एव । क्षत्रियादीनां तु हारीत आह ।

चण्डालान्नं प्रमादेन यदि भुञ्जीत वै द्विजः ।
ततश्चान्द्रायणं कुर्यात् मासमेकं व्रतं चरेत् ॥
शूद्रो वाप्यर्द्धमासं वै भुक्त्वा चैवाजितेन्द्रियः ।
त्रिरात्रमुपवासं च ब्राह्मणांस्तर्पयेच्छुचिरिति ॥

भोज्यद्रव्यपरिमाणमाह ।

**एकैकं ग्रासमश्नीयाद् गोमूत्रं यावकस्य च ।**
**दशाहनियमस्थस्य व्रतं तत्तु विनिर्दिशेत् ॥ ३३ ॥**

यद्गोमूत्रयावकस्याशनीयान्नदैकैकं ग्रासमित्यशनानुवादेन ग्रासस ङ्ख्याविधानान्न पौनरुक्त्यम् । नच गोमूत्रयावकाशनस्य विशिष्टस्यानुवादे वाक्यभेद इति शङ्कनीयम् । मृग्यामहे हविषोविशेषणं निर्विषेणामिति न्यायेन निर्विशेषणस्याशनस्योद्दश्यत्वासिद्धेः । यदुक्तं विनिर्दिशेत्तन्नि-यमस्यस्येत्यपि गुणविधानमेवेति न पौनरुक्त्यम् । नियमस्वरूपमाह याज्ञवल्क्यः ।

स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता ॥ इति ।

इदानीं चण्डालेन सहैकस्मिन् गृहे संव्यवहर्तुर्नवभिः श्लोकैः । प्रायश्चित्तमाह ।

**अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति ।**
**विज्ञातरूपं सन्न्यस्य द्विजाः कुर्युरनुग्रहम् ॥ ३४ ॥**

पर्षदभिधेयं प्रायश्चित्तमाह ।

**दध्ना च सर्पिषा चैव क्षीरं गोमूत्रयावकम् ।**
**भुञ्जीत सह भृत्यैश्च त्रिसन्ध्यमवगाहनम् ॥ ३६ ॥**

क्षीरेण संयुक्तगोमूत्रयावकमिति समासान्तर्गतक्रियाप्रदर्शनेन दधिसर्पिषोरप्यत्र सम्पर्कादागतस्तेन दध्ना सर्पिषा च संयुक्तमित्यर्थः सिद्धति तद्भृत्यैर्भरणीयैः पुत्रपत्न्यादिभिः संसर्गिभिः सह वक्ष्यमाणप्रकारेण गृहस्वामी भुञ्जीत त्रिसन्ध्यमवगाहनं च कुर्यात् ।

अन्त्यजैः सहेति सहयोगे तृतीयया भृत्यानामप्राधान्येन प्रधानकर्तुर्गृहस्याश्रमिण एव प्रायश्चित्तपूर्वोत्तराङ्गानुष्ठानं प्रधानं च सर्वेषामिति गम्यते ।

गोमूत्रयावकेन दध्यादीनां संयोगे समाहारप्राप्तौ विशेषमाह ।

**त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।**
**त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥ ३७ ॥**

अत्र यद्यपि भुजिकर्म न श्रूयते नापि दध्यादि तृतीययावरोधात् तथापि सहायतृतीयान्तेन तत्संस्कारकेण दध्यादिना आक्षिप्तस्य स्वसंस्कार्यस्य गोमूत्रयावकस्य पूर्ववाक्यादनुवृत्तिर्ज्ञेया । ततश्च दध्ना संयुक्तं गोमूत्रयावकं दिनत्रयं भुञ्जीत । एवं घृतेन क्षीरेण चेति योज्यम् । तेन नवदिनानि भवन्ति पुनश्चैकेन दध्यादिना युक्तं गोमूत्रयावकमेकैकस्मिन् दिने भुञ्जीतेति त्रीणि दिनानि सम्पद्यन्ते तानि च पूर्वैर्नवभिर्मिलित्वा द्वादश भवन्ति तेन च द्वादशरात्रसाध्यं व्रतं सम्पद्यत इति ।

ननु कीदृशं यावकं कियता च दध्यादिना युक्तं भोज्यमित्यपेक्षायामाह ।

**भावदुष्टं न भुञ्जीत कृमिभिर्दूषितं तथा ।**
**दधिक्षीरस्य त्रिपलं पलमेकं घृतस्य तु ॥ ३८ ॥**

भावेन चित्तवृत्त्या दुष्टं यस्मिन्दृष्टे अमेध्यादिभावो बुद्धिविषयो भवतीत्यर्थस्तादृशं यच्च भवति यच्चान्योच्छिष्टं क्रिमिभिर्वा दूषितं ना

case of the Bird and Space we find that one of them, the Bird, is not the substratum of space, and as such has a distinct "inherence" Though in this case we also find one of the two having a *distinct motion* also, yet we take no account of this, as this has been explained as pertaining to eternal substances only.

*Question* "How is it that you do not define the 'separate existence' of transitory substances also as consisting in *separate movement* ?"

*Answer* In the case of the Organ of Touch and the Body, we find that there is no *separate movement*, and yet they inhere in distinct substrates, and hence the relationship between them is one of Conjunction, and not of Inherence, while if among transitory substances also "separate existence" were to consist in 'separate movement,' then as these two are never found to have 'separate movement,' they would be regarded as 'inseparate' or 'inherent,' and hence the relation between them could not be one of mutual Conjunction, as this latter relation is invariably concomitant with 'separate existence' For this reason in the case of transitory substances, 'separate movement' cannot be regarded as constituting 'separate existence' As for the eternal substances, in as much as they have no substratum or receptacle, they could never be said, to have any 'separate substratum;' and their Conjunctions and Disjunctions would only be due to separate movement, and consequently in their case it is 'separate movement' that constitutes 'separate existence' The sense of all this is that in the case of the organ of Touch and the Body, though, in the first instance, there is no separate existence, yet when it is found that they have distinct substrates, their Conjunction becomes possible, and hence it is concluded that in the case of transitory substances, 'separate existence' is in the form of 'having separate substrates,' and not in that of 'having separate movement'

With a view to further strengthen the same view, the author proceeds to show that in the case of the Cloth and the

Yarns (in it)—between which all parties recognise the relationship of Inherence—there is no possibility of Conjunction and Disjunction, even though they are incapable of 'separate movement'; and the sole reason for this lies in the fact of their not having distinct substrates.

In the case of all-pervading substances, in as much as there is no 'separate existence,' there can be no Conjunction among them; nor Disjunction, as this latter always follows from Conjunction; hence in the case of these there is mere 'continuance in their own forms.'

[**Page 161.**] The upshot of all this is this: The mere fact of the Body not moving when the hand moves does not constitute 'separate existence'; if the two had distinct substrates of their own, then there might have been 'separate existence'; as a matter of fact however such is not the case, as the hand is inherent in the body (and has no distinct substrate).

All Disjunction is destructible, being momentary in its character. The author proceeds to show how all the three kinds of Disjunction—that caused by action, that existing in the cause, and that existing in the cause and the non-cause—are momentary, being liable to quick destruction:— The limit of all Disjunction lies in the subsequent Conjunction; and as the two things disjoined become immediately conjoined to some other things, the Disjunction can have but a momentary existence.

*Question*: "How do you know that this subsequent Conjunction is the limit of Disjunction?"

*Answer*: *Disjunction is not like Conjunction*. That is to say, in the case of Conjunction we find that it is destroyed only by the Disjunction of the two things that have been in contact; while Disjunction is destroyed by the Conjunction, not only of the two things disjoined between themselves, but of these things with other things also. For instance, the Disjunction of a man form the tree at its root is destroyed by his Conjunction with that particular point of the tree, and also by

in contact with another part of it And thus it becomes established that Disjunction has its limit in the subsequent Conjunction, all the more so as the action that brought about the Disjunction does not cease until it has brought its substratum into contact with another place.

*Objections* 'Your argument involves the fallacy of '*Sādhyasama*, in as much as you assert that the Disjunction ceases by Conjunction"

*Reply* In the case of the notion of two things being 'conjoined' in contact, we find that the idea continues for sometime (all the time that the things remain in contact) in the case of Disjunction on the other hand, we find that as soon as the things concerned have come into contact with another place, the notion of the two things having been 'separated' or 'disjoined' ceases, and hence it is only right to say that Disjunction ceases with Conjunction

In some cases Disjunction ceases with the destruction of its substratum.

*Question* "How?"

*Answer* An action originating in one part of the yarn that forms part of a 'duplicate yarn,' brings about the disjunction of that part from another part of the same yarn,—at that very time an action appears in the other yarn and the resulting disjunction brings about, in the part of the yarn, the destruction of the cohesive conjunction of the yarn and then the action of one yarn brings about its Disjunction of the other yarn,—all this constitutes one point of time Then at the time that Disjunction brings about the destruction of the Conjunction of the two yarns,—there is also the destruction of the conjunction of the parts of the yarn, and this leads to the destruction of the yarn composed of those parts And this yarn having been destroyed, there follows the destruction of the 'Disjunction from another yarn' inhering in the former yarn, and in this case we find that the only cause of the destruction

of the Disjunction is the destruction of the substratum, no other cause being available.

[Page 162.] The Opponent comes forward again with the following objections: "Thus then, the destruction of the Dis- "junction of the yarn is simultaneous with the destruction of "the 'yarn duplicate.' The '*subsequent Disjunction*'—that "of the mobile yarn from points in space—is brought about by "such Disjunction as is born of Disjunction, (and this would "not be possible) *because of the absence of its cause, viz*: the "Disjunction of the two yarns.

"And when the 'subsequent Disjunction' would not be "brought about, then there would be no cessation of the "'Conjunction of the yarn and Ākāça,' which acted as an "obstacle to it; and then there can be no conjunction of it "with any other point in space. Thus then no contrary quality, "in the shape of this subsequent Conjunction, being present, "the Action would continue at other times also, in fact it "would continue as long as its substratum would not be "destroyed, or as some other cause for its cessation would not "appear, and thus there would be the anomaly that the action "of all eternal substances would be eternal (as the substratum "of such an action would never cease to exist).

"*Question*: 'How so?'

"*Answer:* When action appears in the atom compos- "ing the Water-diad, it brings about its disjunction from "the other atom; and at that time there appears an action in "the other atom composing the Diad. And hence at the time "that from the Disjunction of the atoms there follows the des- "truction of the cohesive Conjunction of the substance, there "appears the Disjunction of the atom from the Diad, brought "about by the action in the atom; and then at the time when "there follows from the Disjunction of the Atom and the Diad, "the destruction of the conjunction of the Atom and the Diad, at "that very time there follows, from the destruction of the con- "junction of the atoms, the destruction of the Diad formed by

"that Conjunction; and this Diad having been destroyed, the "'Disjunction of the atom from the Diad,' which inhered in "that Diad, would also be destroyed, and thus this Disjunction "having ceased to exist, there could not appear its effect, in "the shape of the Disjunction of the atom from the points in "space, and thus the previous Conjunction continuing to exist, "and there being no possibility of the subsequent Conjunction "which would oppose and destroy it, the action inhering in the "eternal atom would continue for ever"

The author offers the following reply to the above *The disjunction of another part of the yarn &c* That is to say, as a rule when an action appears in the cause as containing the effect, it disjoins its own substratum from another part of the substance, and not from the points of space &c, specially as the capability of bringing about Disjunctions from points in space is invariably concomitant with the non-capability of bringing about any specific disjunctions And yet the said action does bring about the Disjunction of the part in contact with its own substratum from another part, as there could be no incongruity in this Thus then, when an action is produced in one of the two yarns composing the 'yarn-duplicate,' it is simultaneous with the disjunction of that yarn from the other yarn, and this action also brings about the disjunction from the part of the yarn And this disjunction of the yarn from the part of the other yarn remains intact (and is not destroyed by the destruction of this latter yarn, which was the substratum of its own disjunction from the other yarn), for the simple reason that even on the destruction of the yarn, its part remains intact, and so does also the other yarn This is what the author means by saying—*by the destruction of the substratum it is only the Disjunction of the yarn that is destroyed, while that of the part of the yarn from the other yarn remains intact*

*Question* "Yes, but what then?"

*Answer* *Etasmāt &c* The sense of the example is that, just as from the action-born Disjunction of the finger from the

*Ākāça* we have the Disjunction of the Body from the *Ākāça*, so, in the same manner, from the action-born Disjunction of the yarn and its part, we have the Disjunction of the yarn from the *Ākāça*.

*Objection:* "It is quite right that from the Disjunction of the Hand and the *Ākāça* there follows the Disjunction of the Body from *Ākāça*; but it is not right that this latter Disjunction should follow the Disjunction of the finger from *Ākāça*; as the Finger is not the (direct component) cause of the Body."

[**Page 163.**] *Reply*: If this argument be accepted, then the Hand also is the direct component of the *arm*, and not of the Body; and as such how could any Disjunction from the Body follow from Disjunction from the Hand? If the Hand be regarded as a component of the Body, on the ground of this latter pervading equally over all its parts,—then, on the same grounds, the Finger would also be a component of the Body; as it is the aggregate of all the different members, the Hand, the Finger &c., that is recognised as the "Body."

The Disjunction of the Yarn from Ākāça having thus come about, the previous Conjunction (which was an obstacle to further Conjunctions) having ceased, the action in the Yarn brings about another Conjunction, and then ceases.

The author next proceeds to explain another manner in which Disjunction is destroyed by the destruction of its substratum. Simultaneously with the Disjunction of the other part of the Yarn, there appears an action in the disjoined part of that same Yarn; and then from that Disjunction follows the destruction of that Conjunction of the parts of the Yarn which constituted the Yarn; and the action of the Yarn brings about the Disjunction of that Yarn from another Yarn—all this forming one point of time. After that, from the destruction of the Conjunction there follows the destruction of the Yarn formed by that Conjunction; and from that there follow simultaneously the destructions of the Disjunction and the action.

We have seen above that the opponent had brought forward an objection based upon the "anomaly of the eternality

of the action inhering in eternal substance." This particular phrase of the objection the author did not choose to take the trouble of repudiating, as it was found too absurd for any serious consideration. As a matter of fact we find that when an action appears in the cause as constituting the effect, it does not bring about the Disjunction from the points of space simultaneously with the Disjunction from other parts of the substance; and the reason for this is that the capability of bringing about disjunctions from Akāça &c, is not compatible with the capability of bringing about a disjunction opposed to the cohesive Conjunction of the substance. But an action in the atom which is in contact with the Dyad into whose composition that atom does not enter, does bring about its Disjunction from the points in space simultaneously with the disjunction from the Dyad, and that Disjunction having brought about the cessation of the previous Conjunction of that atom with Akāça, there appears [illegible] and then the pre- [illegible] corresponding to the action in the eternal atom need not necessarily be eternal.

It has been explained now, when there is a Conjunction of homogeneous substances a substance is produced, and then the substance having been destroyed, we have the destruction of the Disjunction and the initial action. The author now proceeds to show how when there is Conjunction of heterogeneous substances a substance is not produced, there is a destruction of the Disjunction following from the destructions of the Conjunction of the constituent (of the Disjunction). *There being a Conjunction of the Yarn with the shuttle &c, &c.* The sense of this is that at the very time that the action appears in the part composing the Yarn there appears an action in the shuttle, and then the action of the part of the Yarn brings about its disjunction from another part of the Yarn, and the action of the shuttle brings about the disjunction from *Akāça* of the Yarn whose parts had been thus disjoined, and then the

disjunction of the parts of the Yarn there follows the destruction of the Conjunction of these parts; and from the disjunction of the shuttle, follows the disjunction of the yarn from the shuttle and also that of the shuttle from *Ākāça*. And then from the destruction of the Conjunction of the parts of the Yarn there follows the destruction of the Yarn; and another Conjunction of the shuttle. And thus from this subsequent Conjunction, and from the destruction of the substratum (the yarn), there follows the destruction of the disjunction of the shuttle from the Yarn.

---

**[Page 164.]** *Text (90): Distance and Proximity form the basis of the notions of 'prior' and 'posterior.' They are of two kinds: (1) Due to space, and (2) Due to time. Those which are due to space afford ideas of particular directions; and those are due to Time affords ideas of age.*

*We proceed to explain the production of those due to space; when two things exist in the same direction (of the seer), then the number of Conjunctions with contacts in the case of one thing would be larger than that in the case of the other; and then judging from the point occupied by the seer, we have with regard to the thing wherein 'distance;' would have its substratum, the notion that 'it is further removed from him;' and then on the basis of this notion, the contact of the thing with the further point in space, produces the quality of 'Distance.' Similarly taking the further removed object as the limit, we have the notion, that 'this is nearer than that,' with regard to the nearer object, which is the substratum of 'Proximity;' and on the basis of this notion, the contact of the thing with the nearer point in space produces the quality of 'Proximity'?*

Question "*How do you apply this process to the Distance and Proximity of time?*"

Answer *(It is thus) when we come across two men, both existing at the present time, though occupying any points in space, though one of them is youthful and another older,—then we ourselves, as observers, find in one of them (the latter) such characteristics* as *a growing beard, roughness of the skin, wrinkles and a general looseness of skin, and then taking the younger man as the limit (standard of comparison) there arises in us, with regard to the older person, the notion of the other being further removed in time; and on the basis of this notion, the contact of that person with the further point in time produces the quality of 'Distance,' and when we take the older man as the standard we have the notion of his being nearer in time, and on the basis of this notion, the contact of the person with the nearer point in time produces the quality of 'Proximity'*

*The destruction of these is due to the destructions of (1) 'Apekshābuddhi' (idea of comparison), (2) Conjunction aud (3) the Substance To explain how it follows from the destruction of (1) When the quality of 'Distance' has been produced, as soon as there arises a notion of 'commonality' (of 'Distance'), the apekshābuddhi becomes liable to destruction and the idea of the quality of 'Distance' becomes liable to production from the notions of the said commonality and its relationships,—these two liabilities occurring at one point of time Then there comes the destruction of the apekshābuddhi, and the production or appearance of the idea of 'quality', and from the destruction of the apekshābuddhi there follows the liability of the quality to destruction, and from the idea of quality and its relationships*

*follows the liability of the idea of 'substance' to production,—all these occupying one point of time. Then we have the appearance of the idea of 'substance,' and the destruction of the quality (of 'distance').*

Question: "*In what way does the destruction of this quality follow from the destruction of Conjunction?*"

Answer: *Simultaneously with the apekshābuddhi there arises an action in the substratum of the quality of 'Distance'; that action brings about the disjunction of the object from space; and from the apekshābuddhi follows the quality of 'Distance,' all this occupying one point of time. Then there arises the idea of 'commonality'; then we have the destruction of the Conjunction of the object and space; and then at the time that there arises the notion of the quality, we have the destruction of the quality (of 'Distance') following from the destruction of the Conjunction of the object and space.*

Question: "*How does the destruction of the qualities in question follow from the destruction of the substance?*"

Answer: *When an action appears in that part of the substance which is the substratum of the quality of 'Distance,' at the very time that this action brings about the disjunction of that part from other parts of the substance, there appears also apekshābuddhi; and at the time that Conjunction is destroyed by that disjunction, we have the appearance also of 'Distance'; and then from the destruction of the Conjunction (of its particles) there follows the destruction of the substance; and from the destruction of the substance follows the destruction of the quality (of 'Distance)' inhering in it.*

Question "*How does the destruction of the quality follow simultaneously from the destructions of the substance and the apekshābuddhi?*"

Answer *When an action appears in that part of the substance which is the substratum of 'Distance' at that same time apekshābuddhi is produced, the action brings about the disjunction of that part from the other parts, and then we have the appearance of the quality of 'Distance,'—all this occupying one point of time. Then, at the time that we have the destruction of the cohesive Conjunction of the substance following from the disjunction of the particle there appears the notion of the commonality (of 'Distance'), and after that from the destruction of Conjunction follows the destruction of the substance, and from the notion of 'commonality' follows the destruction of apekshābuddhi,—all this occupying one point of time. And then from the destruction of the substance and the apekshābuddhi follows the destruction of the quality of 'Distance'*

Question "*How does the destruction of the quality follow from the destruction of the substance and Conjunction?*"

Answer *When the action, produced in that part of the substance which is the substratum of 'Distance,' brings about the disjunction of that part from the other parts of the substance at that same time there is a simultaneous production of the action of the mass and the Apekshābuddhi, and then at the time that the quality of 'Distance' appears, we have the destruction of the cohesive Conjunction of the substance following from the disjunction of the particles, and the action of the mass brings*

*about the disjunction of it from the mass of space,—all this forming one point of time: and then, at the time that the idea of 'commonality' appears, the mass is destroyed on account of the destruction of the cohesive conjunction of the substance; and from the destruction of the mass follows destruction of the conjunction of the mass; and then simultaneously with the notion of 'quality,' we have the destruction of the quality of 'Distance' following from the destruction o the conjunction of the mass of substance from the mass of space.*

Question: "*How does the destruction of the quality follow from the simultaneous destruction of Conjunction and the apékshābudhhi?*"

Answer: *When the quality of 'Distance' is produced, and then an action in the substance wherein that quality inheres,—then at the time that there appears the notion of the commonality 'Distance' the action of the object (wherein the 'Distance' inheres) brings about its disjunction from space; and then from the destruction of that quality follows the destruction of the disjunction wherein 'Distance' inheres; and the disjunction (of the object from space) brings about the destruction of the conjunction of space and the object,—all this forming one point of time. Then from the destruction of the Conjunction and apékshābuddhi follows the destruction of the quality of 'Distance.'*

[Page 167.] Question: *How does the destruction of the quality follow from the simultaneous destruction of its three kinds of causes—the material, the non-material and the efficient?"*

Answer: *When apékshābuddhi appears, there follows*

*action in a part of the mass; and then at the time that the action brings about the disjunction of that part from another part, and we have the appearance of apékshābuddhi and the quality of 'Distance,'—at that same time there is an action in the mass; and then the disjunction of the parts brings about the destruction of the cohesive conjunction of the mass; and the action of the mass brings about the disjunction of mass and space, and also the notion of the commonality,—all this forming one point of time. Then the destruction of Conjunction brings about the destruction of the mass; and the disjunction brings about the destruction of the conjunction between space and the mass; and from the notion of commonality follows the destruction of apékshābuddhi,—and thus have we the destruction of the quality of 'Distance' following from the simultaneous destruction of its three causes, material, non-material and efficient.*

## Commentary:

'Distance' forms the basis of the use of the word 'Distant,' as also of the idea of 'distance;' and so also with 'Proximity.' The effects of the two are mentioned as evidences of their existence. Though *Ākāça* and the conjunction of *Ākāça* with the throat, &c., are the cause of the use (utterance) of the words 'distant' and 'near,'—and so also the contact of the soul with the mind is the cause of the idea,—yet the existence of causes other than these is indicated by their peculiarities. That is to say, the causes mentioned are common to all *utterance*, and all *idea*, hence for the particular utterance of the words question, and also for the particular ideas of them, there must be more specified causes, as without special causes no special effects would be possible.

The two qualities are put together, because they are dependent upon each other; they are relative qualities.

They are each of two kinds, due to Time and Space. The latter is due to the contact of the mass of substance with particular points in Space, and the former to the contact of the mass with points in Time. These differences are evidenced by the effects they bring about. The 'Distance' due to space produces ideas of *distance in space,* and the 'Proximity' produces those of *nearness in space*; and, similarly 'Distance' and 'Proximity' due to Time give rise to ideas of *distance and proximity in time.*

[Page 168] The author proceeds to explain the process of the origination of the quality of 'Distance' due to Space.

There is no idea of 'distant' or 'near' when the two things are on two different sides of the person; hence the author says—'*existing on the same side*'—meaning that both of them should be either to the east of him or to the west. In such cases we find that one person is in contact with one point of the earth, this latter is in contact with another point; and that with another; and so on and on, till one of the objects is reached; and so on to the other. Thus then, the number of such contacts with reference to the latter object being more than that of those with regard to the other, when we take the nearer object as the standard, there arises in our mind, an idea of *remoteness* with reference to the object in regard to which the number of contacts is greater; and it is this object which is to be the substratum of the quality of 'Distance' to be produced later. And on the basis of this idea of remoteness (as the efficient cause), there arises the quality of 'Distance,' in the *object* which is its 'material' cause, out of the non-material cause in the shape of the Conjunction with the point in space which has the larger number of the aforesaid contacts. And when we take for the standard the object remote from the observer, the number of contacts with regard whereto is greater,

then there arises the idea of '*nearness*' with regard to the object in connection with which the number of contacts is smaller; and on the basis of this idea of nearness as the efficient cause, there arise, from the non-material cause in the shape of the conjunction with the point in space in connection wherewith the number of contacts is smaller, the quality of 'Proximity' in its material cause, the object which is nearer to the observer.

*Objection:* "The notions of *nearness* and *remoteness* being relative, the one depending upon the other, there would be a negation of both."

*Reply:* Not so; because we do not admit of any such necessary relativity, as that the notion of one thing as *remote* is always preceded by that of another as *near*, or *vice versa*; what happens is that the notion of remoteness arises on the ascertainment of the fact of the number of place-contacts being greater than in the case of another object; and similarly the notion of *nearness* arises on the ascertainment of the fact of the number of place-contacts being smaller than in the case of another object; and thus there is no actual interdependence between the two notions.

The production of the two qualities due to Space having been explained, the author proceeds to describe that of those due to Time. *Of two things existing at the present time &c.* If one or both of the objects did not exist at the time, no 'Distance' or 'Proximity' would be possible; and hence this specification. *Occupying any points in space,—i. e.* existing either on the same side or on different sides of the observer. When two persons, one young and another old, are, under the above conditions, observed, and in one of them are found such marks as the *growing beard, &c.*, which are indicative of grearter extent of time,—the observer taking for his standard the man in whom the absence of these marks indicates the fact of his having passed through a lesser extent of time, has the

notion of *remoteness of time* with regard to the person with the beard, &c., and on the basis of this notion (as the efficient cause), from the non-material cause in the shape of the conjunction with the point in time which has been in contact with a larger number of the revolutions of the sun, there arises the quality of 'Distance,' in that older man who is thus the material cause. Similarly taking the older man as the standard, there arises the notion of *nearness* with regard to the younger person; and on the basis of this notion, from the non-material cause in the shape of the conjunction with the point of time, which has been in contact with a lesser number of the sun's revolutions, there arises the quality of 'Proximity' in the younger person, who is its material cause.

The greater or less number of contacts with the points of time, in the older and the younger person, is with reference to the series of changes that their bodies are undergoing every moment; and not with reference to them as individual personalities; as the personalities are undergoing changes every moment, and as such could not be regarded as having any contact with more than one point of time.

Anything that is brought about by a cause must be liable to destruction; and there could be no destruction without a cause; hence the author proceeds to describe the cause of the destruction of the qualities of 'Distance' and 'Proximity.'—The destruction of these follows from the following seven causes—(1) the destruction of *apékshābuddhi*, (2) the destruction of conjunction, (3) the destruction of the substances, (4) the destruction of the substance and *apékshābuddhi*, (5) the destruction of the substance and conjunction (6) the destruction of Conjunction and *apékkshābudhhi* and (7) the destruction of *apékshābuddhi*, conjunction and substance.

(1) To explain the destruction of 'Distance' and 'Proximity' due to (1). *'Distance' having been produced &c.* In *'tatah'* the affix *'tasil'* is used in the sense of the Locative. At this

चान्मयडर्थे यत्। वसव्यः समूहः। मयडर्थो वा। वसोरिति योगविभागात्स्वार्थेऽपि। हस्तौ पृणस्व बहुभिर्वसव्यैः। वसव एव वसव्याः॥ अक्षरसमूहे छन्दस उपसङ्ख्यानम्॥ * ॥ छन्दःशब्दादक्षरसमूहे वर्तमानात्स्वार्थे यदित्यर्थः। आश्रावयेति चतुरक्षरं अस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामहइति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशाक्षरश्छन्दस्यः॥

**नक्षत्राद् घः। ४। ४। १४०॥**

स्वार्थे॥ समूहे इत्यस्य निवृत्तत्वात्। नक्षत्रियेभ्यः स्वाहा॥

**सर्वदेवात्तातिल्। ४। ४। १४१॥**

स्वार्थे॥ सविता नः सुवतु सर्वतातिम्। प्रदक्षिणिद्देवतातिमुराणः॥

**शिवशमरिष्टस्य करे। ४। ४। १४२॥**

करोतीति करः॥ पचाद्यच्। शिवं करोतीति शिवतातिः। याभिः शन्ताती भवथो ददाशुषे। अथो अरिष्टतातये॥

**भावे च। ४। ४। १४३॥**

शिवादिभ्यो भावे तातिल् स्याच्छन्दसि॥ शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः॥ इति प्राग्घितीयाः॥

इत्योरम्भट्टेन श्रीघोगडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ चतुर्थस्याध्यायस्य चतुर्थः पादोऽध्यायश्च चतुर्थः समाप्तः॥

---

श्रीगणेशायनमः ।

पञ्चमाध्यायः ।

# अथ पञ्चमाध्यायस्य प्रथमः पादः ।

## प्राक् क्रीताच्छः । ५ । १ । १ ॥

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥

## उगवादिभ्यो यत् । ५ । १ । २ ॥

प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत्स्यात् ॥ छस्यापवादः । सनङ्गुर्नाम चर्मविकारस्ततः परत्वाच्चर्मणोऽञित्येष विधिः प्राप्नोति । तथा चरुर्नाम हविः । सक्तुरन्नविकारः ॥ अपूपादिष्वन्नविकारेभ्यश्चेति पठ्यते । ततो विभाषा हविरपूपादिभ्य इति प्राप्नोति । ततः पूर्वविप्रतिषेधेन यत्प्रत्यय एवेष्यते ॥ सनङ्गव्यं चर्म । चरव्यास्तण्डुलाः । सक्तव्या धाना इति ॥ नाभि नभञ्च ॥ * ॥ नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । शरीरावयवे तु परेण बाधान्न ॥ शुनः सम्प्रसारणं वा च दीर्घत्वम् ॥ * ॥ दीर्घसंन्नियोगेन चान्तोदात्तत्वम् । चेन प्रकृतिभावः । तस्यानुक्तसमुच्चयार्थत्वात् । येचाभावकर्मणोरिति तु दुर्लभम् । सम्प्रसारणादौ कृते अनन्त्यभावादित्याहुः । दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपो न भवति । शुन्यम् । शून्यम् ॥ ऊधसोऽनङ् च ॥ * ॥ ऊधन्यः ॥

## कम्बलाच्च संज्ञायाम् । ५ । १ । ३ ॥

यत्स्यात् ॥ कम्बल्यमूर्णापलशतम् । संज्ञायां किम् । कम्बलीया ऊर्णा ॥

**विभाषा हविरपूपादिभ्यः। ५। १। ४॥**

आमिक्ष्यं दधि॥ आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। अपूप्यम्। अपूपीयम्॥ अन्नविकारेभ्यश्च॥ * ॥ अन्नविकारा अन्नप्रकाराः। अदनीयविशेषाः। तेभ्यो यद्वा स्यात्॥ ओदन्याः। ओदनीयाः। एवञ्च अपूपादीनां केषाञ्चित्पाठः प्रपञ्चार्थः॥

**तस्मै हितम्। ५। १। ५॥**

वत्सेभ्यो हितो वत्सीयो गोधुक्॥ शङ्कव्यं दारु। गव्यम्। हविष्यम्।

**शरीरावयवाद्यत्। ५। १। ६॥**

दन्त्यम्। कण्ठ्यम्। नस्यम्। नाभ्यम्॥ रथाच्चोपसंख्यानम्॥ * ॥ रथाय हिता रथ्या। हितार्थे एव रथाद्यद्यथा स्यादर्थान्तरे मा भूदित्येवमर्थमुगवादिभ्यो यदित्यत्रोपसंख्यानं न कृतम्। केचिद्रथसीताहलेभ्यो यद्विधाविति तदन्तविधिमिच्छन्ति। अन्ये तु हलसीताशब्दयोः साहचर्याच्चतुर्थाध्यायविहिते एव यति तदन्तविधिर्न त्वस्मिन्नित्याहुः।

**खलयवमाषतिलवृषब्रह्मणश्च। ५। १। ७॥**

खलाय हित खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। वृष्णे हितं ब्राह्मणेभ्यो हितमिति विग्रहे तु वाक्यमेव भवति। छप्रत्ययोऽपि न भवत्यनभिधानात्।

**अजाविभ्यां थ्यन्। ५। १। ८॥**

अजथ्या यूथिः। अविथ्या।

**आत्मन्विश्वजनभोगोत्तरपदात्खः। ५। १। ९॥**

आत्माध्वानौ खे इति प्रकृतिभावः। आत्मने हितं आत्म-

नीनम् । विश्वजनीनम् । कर्मधारयादेवेष्यते । षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । अग्रे वार्तिकत्रयेऽप्येवम् । विश्वजनीयम् ॥ पञ्चजनादुपसंख्यानम् ॥ * ॥ पञ्चजनीनम् ॥ सर्वजनाट्ठञ् खश्च ॥ * ॥ सार्वजनिकः । सर्वजनीनः ॥ महाजनाट्ठञ् ॥ * ॥ माहाजनिकः । मातृभोगीणः । पितृभोगीणः । मातृपितृशब्दाभ्यान्तु औत्सर्गिकश्छ एव । मात्रीयः । पित्रीयः । राजभोगीणः । आचार्यादणत्वञ्च ॥ * ॥ आचार्यभोगीनः । राजाचार्याभ्यां तु अनभिधानाच्छो न । किन्तु राज्ञे हितमाचार्याय हितमिति वाक्यमेव ।

## सर्वपुरुषाभ्यां णढञौ । ५ । १ । १० ॥

सर्वाण्णो वेति वक्तव्यम् ॥ * ॥ सर्वस्मै हितं सार्वम् । सर्वीयम् ॥ पुरुषाद्वधविकारसमूहतेनकृतेषु ॥ * ॥ भाष्यकारप्रयोगात्तेनेत्यस्य द्वन्द्वमध्ये निवेशः । पुरुषस्य वधः पौरुषेयः । तस्येदमित्यणि प्राप्ते । पुरुषस्य विकारः पौरुषेयः । प्राणिरजतादिभ्योऽञित्यञि प्राप्ते । समूहेऽप्यणि प्राप्ते । एकाकिनोऽपि परितः पौरुषेयवृता इवेति माघः । तेन कृते तु ग्रन्थे अणि प्राप्ते । अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः ॥

## माणवचरकाभ्यां खञ् । ५ । १ । ११ ॥

माणवाय हितं माणवीनम् । चारकीणम् ।

## तदर्थं विकृतेः प्रकृतौ । ५ । १ । १२ ॥

विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां प्रत्ययः स्यात् ॥ अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु ॥

छदिरुपधिबलेर्ढञ् । ५ । १ । १३ ॥

छादिषेयाणि तृणानि । बालेयास्तण्डुलाः । उपधिशब्दात्स्वार्थे इष्यते । उपधीयत इत्युपधिः । रथाङ्गम् । तदेव औपधेयम् ॥

ऋषभोपानहोर्ञ्यः । ५ । १ । १४ ॥

छस्यापवादः । आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन । औपानह्यं चर्म ॥

चर्मणोऽञ् । ५ । १ । १५ ॥

चर्मणो या विकृतिस्तद्वाचकादञ्स्यात् । बार्ध्रं इदं वार्ध्रं चर्म । वारत्रं चर्म ।

तदस्य तदस्मिन्स्यादिति । ५ । १ । १६ ॥

प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारोऽस्मिन्प्राकारीयो देशः । इतिशब्दो लौकिकीं विवक्षामनुसारयति । तेनेह न । प्रासादो देवदत्तस्य स्यादिति ॥

परिखाया ढञ् । ५ । १ । १७ ॥

पारिखेयी भूमिः ॥

प्राग्वतेष्ठञ् । ५ । १ । १८ ॥

इयतोः पूर्णोऽवधिः । अतः परं तेन तुल्यमिति वक्ष्यति ततः प्राक् ठञधिक्रियते ॥

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । ५ । १ । १९ ॥

तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा ।

## असमासे निष्कादिभ्यः । ५ । १ । २० ॥

आर्हादित्येतत्तेन क्रीतमिति यावत् सप्रदशसूत्र्यामनुवर्तते । निष्कादिभ्यो ऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । नैष्किकम् । समासे तु ठञ् । परिमाणान्तस्यासंज्ञाशाणयोरित्युत्तरपदवृद्धिः । परमनैष्किकम् । असमासग्रहणं ज्ञापकं भवतीतः प्राक् तदन्तविधिरिति । तेन सुगव्यं । यवापूप्यमित्यादि । इत ऊर्ध्वन्तु सङ्ख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते । तच्चालुकि । पारायणिकः । द्वैपारायणिकः । अलुकीति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्पेण क्रीतं शूर्पादञ्माभूत् । किं तु ठञ् । द्विशौर्पिकम् ॥

## शताच्च ठन्यतावशते । ५ । १ । २१ ॥

शतेन क्रीतं शत्यम् । शतिकम् । अशते किम् । शतं परिमाणमस्य शतकः संघः । इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थान्न भिद्यते । तेन ठन्यतौ न । किन्तु कनेव । प्रकृत्यर्थस्य शतस्य यत्र प्रत्ययार्थत्वं तत्रैवायं निषेध इष्यते । इह तु न । शतेन क्रीतं शत्यं शाटकशतम् । असमासे इत्येव । द्विशतेन क्रीतं द्विशतकम् ॥

## संख्याया अतिशदन्तायाः कन् । ५ । १ २२ ॥

संख्यायाः कन्स्यादार्हीयेऽर्थे न तु त्यन्तशदन्तायाः ॥ पञ्चभिः क्रीतः पञ्चकः । बहुकः । त्यन्तायास्तु साप्ततिकः । शदन्तायाः । चात्वारिंशत्कम् । अर्थवत्तिशब्दस्य ग्रहणाडुत्यवयवस्य तिशब्दस्य पर्युदासो न । कतिकः ॥

## वतोरिड्वा । ५ । १ । २३ ॥

वत्वन्तात्कन इड्वा स्यात् ॥ तावतिकः । तावत्कः ।

## विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् । ५ । १ । २४ ॥

योगविभागः कर्तव्यः । आभ्यां कन्स्यात् । असंज्ञायां तु ड्वुन् स्यात् ॥ कनोऽपवादः । विंशकः । त्रिंशकः । संज्ञायां तु विंशतिकः । त्रिंशत्कः ।

## कंसाट्टिठन् । ५ । १ । २५ ॥

टो ङीबर्थः । इकार उच्चारणार्थः । कंसिकः । कंसिकी ॥ अर्द्धाच्चेति वक्तव्यम् ॥ * ॥ अर्द्धिकः । अर्द्धिकी ॥ कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा ॥ * ॥ कार्षापणिकः । कार्षापणिकी ॥ प्रतिकः । प्रतिकी ॥

## शूर्पादञन्यतरस्याम् । ५ । १ । २६ ॥

शौर्पम् । शौर्पिकम् ।

## शतमानविंशतिकसहस्रवसनादण् । ५ । १ । २७ ॥

एभ्योऽण् स्यात् ॥ ठञ्ठकोरपवादः । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ।

## अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञायाम् । ५ । १ । २८ ॥

अध्यर्धपूर्वात्परस्य द्विगोर्निमित्तं यस्तद्धितस्तस्य चार्हीयस्य लुक् स्यात् । अध्यर्द्धकंसम् । द्विकंसम् । द्विगुनिमित्तस्येति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्पेण क्रीतं द्विशौर्पिकमित्यत्र पूर्वोदाहृते द्वितीयस्य मा भूत् । द्विशूर्प्या क्रीतमित्यत्र तु न प्रत्ययोऽनभिधानात् । संज्ञाप्रतिषेधश्चाऽनर्थकः । असंज्ञायामिति हि द्विगोर्विशेषणं न तु प्रत्ययान्तस्य । पञ्च कलापाः परिमाणमस्य पञ्चकलापं, इत्येवंरूपा कृततद्धितलुक् इयं कस्यचित्संज्ञा । तत उत्पन्नस्य न लुक् ।

तस्य द्विगुनिमित्तत्वाभावात् । पाञ्चकलापिकम् । प्रत्ययान्तसंज्ञाभिप्रायेण तु सूत्रकारेण संज्ञाप्रतिषेधः कृत इत्यवधेयम् ।

**विभाषा कार्षापणसहस्राभ्याम् । ५ । १ । २९ ॥**

अध्यर्द्धपूर्वात् द्विगोश्च कार्षापणसहस्रान्तादार्हीयस्य लुग्वा स्यात् ॥ अध्यर्द्धकार्षापणः । अध्यर्द्धकार्षापणिकम् । द्विकार्षापणिकम् । द्विकार्षापणम् । औपसंख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्धप्रतिकम् । द्विप्रतिकम् । आदेशस्य प्रत्ययसन्नियोगशिष्टत्वान्नादेशपक्षे प्रत्ययलुक् । अध्यर्द्धसहस्रम् । अध्यर्द्धसाहस्रम् । शतमानविंशतिकेति विहितस्याणो लुक् । तदभावे तु संख्यायाः संवत्सरसंख्यस्यचेत्युत्तरपदवृद्धिः । अध्यर्द्धग्रहणं च समासकन्विध्यर्थमिति संख्यासंज्ञासूत्रस्थवार्त्तिके हि समासविधिशब्देन समासरूपो विधिस्तन्निमित्तको विधिश्च गृह्यते । अतः संख्यापूर्वपदकतदन्तविधिनिमित्तकः प्रत्यय उत्तरपदवृद्धिश्चेति बोध्यम् । द्विसहस्रम् । द्विसाहस्रम् ॥ सुवर्णशतमानयोरुपसंख्यानम् ॥ * ॥ अध्यर्द्धसुवर्णम् । अध्यर्द्धसौवर्णिकम् । द्विसुवर्णम् । द्विसौवर्णिकम् । अध्यर्द्धशतमानम् । अध्यर्द्धशातमानम् । द्विशतमानम् । द्विशातमानम् ॥

**द्वित्रिपूर्वान्निष्कात् । ५ । १ । ३० ॥**

द्वित्रिपूर्वान्निष्कान्ताद्द्विगोरार्हीयस्य लुग्वा स्यात् ॥ अध्यर्द्धपूर्वग्रहणमुत्तरार्थमनुवृत्तमपि नेह सम्बध्यते । द्विगोरिति तु सम्बध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् । अन्यथाध्यर्द्धपूर्वात् द्वित्रिपूर्वाच्च निष्कान्तादिति समुच्चयः स्यादित्याहुः । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ॥ बहुपूर्वाच्चेति वक्तव्यम् ॥ * ॥ बहुनिष्कम् ॥ बहुनैष्किकम् ।

**बिस्ताच्च । ५ । १ । ३१ ॥**

द्वित्रिबहुपूर्वाद्बिस्तान्ताद् द्विगोरार्हीयस्य लुग्वा स्यात् ॥ द्विबिस्तम् । द्विबैस्तिकमित्यादि ॥

**विंशतिकात्खः । ५ । १ । ३२ ॥**

अध्यर्धपूर्वात् द्विगोरित्येव ॥ अध्यर्द्धविंशतिकीनम् । द्विविंशशतिकीनम् ।

**खार्या ईकन् । ५ । १ । ३३ ॥**

अध्यर्धखारीकम् । द्विखारीकम् ॥ केवलायाश्चेति वक्तव्यम् ॥ * ॥ खारीकम् ॥ काकिण्याश्चोपसंख्यानम् ॥ * ॥ अध्यर्द्धकाकिणीकम् । द्विकाकिणीकम् । काकिणीकम् ।

**पणपादमाषशताद्यत् । ५ । १ । ३४ ॥**

अध्यर्द्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह पादः पदिति न । यस्येतिलोपस्य स्थानिवद्भावात् । पद्यत्यतदर्थे इत्यपि न । प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् । अध्यर्द्धमाष्यम् । द्विमाष्यम् । अध्यर्द्ध शत्यम् । द्विशत्यम् ।

**शाणाद्वा । ५ । १ । ३५ ॥**

यत्स्यात् । पक्षे ठञ् । तस्य लुक् । अध्यर्द्धशाण्यम् । अध्यर्द्धशाणम् । द्विशाण्यम् । द्विशाणम् ॥ शताच्चेति वक्तव्यम् ॥ * ॥ पूर्वेण नित्ये विकल्पार्थम् । अध्यर्द्धशत्यम् । अध्यर्द्धशतम् । पञ्चशत्यम् । पञ्चशतम् । यदभावे संख्यालक्षणकनो लुक् ॥

**द्वित्रिपूर्वादण् च ॥ ५ । १ । ३६ ॥**

शाणादित्येव । चाद्यत् । तेन चैरूप्यम् । परिमाणान्तस्या

संज्ञाशाणयोरिति पर्युदासादादिवृद्धिरेव । द्वैशाणम् । द्विशाण्यम् । द्विशाणम् । त्रैशाणम् । त्रिशाण्यम् । त्रिशाणम् । इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थविभक्तयोऽर्थाश्चाकाङ्क्षितास्ते इदानीमुच्यन्ते ॥

**तेन क्रीतम् । ५ । १ । ३७ ॥**

गोपुच्छेन क्रीतं गौपुच्छिकम् । साप्ततिकम् । प्रास्थिकम् । ठक् । नैष्किकम् । इद्गोण्या इतीकारादेशः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः ॥

**तस्य निमित्तं संयोगोत्पातौ । ५ । १ । ३८ ॥**

संयोगः सम्बन्धः । उत्पातः शुभाशुभसूचकम् । शत्यः शतिको धनपतिसंयोगः । शत्य शतिकं दक्षिणाक्षिस्पन्दनम् । शतस्य निमित्तमित्यर्थः ॥ वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ॥ * ॥ वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । सन्निपाताच्चेति वक्तव्यम् ॥ * ॥ सान्निपातिकम् ॥

**गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् । ५ । १ । ३९ ॥**

गोर्निमित्तं संयोग उत्पातो वा गव्यः । द्व्यचः । धन्यः । यशस्यः । स्वर्ग्यः । गोद्व्यचः किम् । विजयस्य वैजयिकः । असंख्येत्यादि किम् । पञ्चानां पञ्चकम् । साप्तकम् । प्रास्थिकम् । खारीकम् । अश्वादि । आश्विकम् ॥ ब्रह्मवर्चसादुपसंख्यानम् ॥ * ॥ ब्रह्मवर्चस्यम् ॥

**पुत्राच्छ च । ५ । १ । ४० ॥**

चाद्यत् । पुत्रीयः । पुत्र्यः ।

**सर्वभूमिपृथिवीभ्यामणञौ । ५ । १ । ४१ ॥**

सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। पार्थिवः सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते ॥

**तस्येश्वरः । ५ । १ । ४२ ॥**

**तत्र विदित इति च । ५ । १ । ४३ ॥**

सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः। पार्थिवः ॥

**लोकसर्वलोकाभ्यां ठञ् । ५ । १ । ४४ ॥**

तत्र विदित इत्यर्थे। लौकिकः। अनुशतिकादित्वादुभयपदवृद्धिः। सार्वलौकिकः ॥

**तस्य वापः । ५ । १ । ४५ ॥**

उप्यतेऽस्मिन्निति वापः क्षेत्रम्। प्रस्थस्य वापः प्रास्थिकम्। द्रौणिकम्। खारीकम् ॥

**पात्रात्ष्ठन् । ५ । १ । ४६ ॥**

पात्रस्य वापः पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्रभक्तिः ॥

**तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते । ५ । १ । ४७ ॥**

वृद्धिर्दीयते इत्यादिक्रमेण प्रत्येकं सम्बन्धादेकवचनम्। पञ्चास्मिन्वृद्धिः आयो लाभः शुल्कं उपदा वा दीयते पञ्चकः। शतिकः। साहस्रः। उत्तमर्णेन मूलातिरिक्तं ग्राह्यं वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भाग आयः। विक्रेत्रा मूल्यादधिकं ग्राह्य लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा ॥ चतुर्थ्यर्थे उपसंख्यानम् ॥ * ॥ पञ्चास्मै वृद्ध्यादि दीयते पञ्चको देवदत्तः। समम्ब्राह्मणे दानमितिवदधिकरणत्वविवक्षा वा ॥

## पूरणार्द्धाट्ठन् । ५ । १ । ४८ ॥

यथाक्रमं ठक्ठिठनोरपवादः । द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयकः । तृतीयिकः ॥ अर्द्धिकः । अर्द्धशब्दो रूपकस्यार्द्धे रूढः ॥

## भागाद्यच्च । ५ । १ । ४९ ॥

चाट्ठन् । भागशब्दोऽपि रूपकस्यार्द्धे । भागो वृद्ध्यादिरस्मिन्भाग्यम् । भागिकं शतम् । भाग्या । भागिका विंशतिः ॥

## तद्धरति वहत्यावहति भाराद्वंशादिभ्यः । ५ । १ । ५० ॥

वंशादिभ्यः परो यो भारशब्दस्तदंतं यत्प्रातिपदिकं तत्प्रकृतिकाद्द्वितीयान्तादित्यर्थः । वंशभारं हरति वहति आवहति वा वांशभारिकः । ऐक्षुभारिकः । भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरम् । भारभूतेभ्यो वंशादिभ्य इति । भारभूतान् वंशान् हरति वांशिकः । ऐक्षुकः ॥

## वस्नद्रव्याभ्यां ठन्कनौ । ५ । १ । ५१ ॥

यथासंख्यं स्तः ॥ वस्नं हरति वहत्यावहति वा वस्निकः । द्रव्यकः ॥

## संभवत्यवहरति पचति । ५ । १ । ५२ ॥

प्रस्थं सम्भवति प्रास्थिकः कटाहः । प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः । प्रास्थिकी ब्राह्मणी । प्रस्थमुपसंहरति पचति वेत्यर्थः ॥ तत्पचतीति द्रोणादण् च ॥ * ॥ द्रोणं पचति द्रौणी । द्रौणिकी ॥

## आढकाचितपात्रात्खोऽन्यतरस्याम् । ५ । १ । ५३ ॥

पक्षे ठञ् । आढकं सम्भवत्यवहरति पचति वा आढकीना । आढकिकी । आचितीना । आचितिकी । पात्रीणा । पात्रिकी ॥

**द्विगोः ष्ठंश्च। ५। १। ५४॥**

आढकाचितपात्रादित्येव। आढकाद्यन्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः। पक्षे ठञ्। तस्याध्यर्द्धेति लुक्। षित्वान्ङीष्। द्व्याढकिकी। ठञि। द्व्याढकीना। द्विगोरिति ङीप्। द्व्याचितिकी। द्व्याचितीना। अपरिमाणेति ङीप्निषेधः। द्व्याचिता। द्विपाचिकी। द्विपाचीणा। द्विपाची।

**कुलिजाल्लुक्खौ च। ५। १। ५५॥**

कुलिजान्तात् द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः॥ चात् ष्ठंश्च। लुगभावे ठञः श्रवणम्। द्विकुलिजी। द्विकुलिजीना। द्विकुलिजिकी। द्वैकुलिजिकी॥

**सो ऽस्यांशवस्नभृतयः। ५। १। ५६॥**

अंशो भागः। वस्नं मौल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नो भृतिर्वाऽस्य पञ्चकः॥

**तदस्य परिमाणम्। ५। १। ५७॥**

इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते न तु सर्वतो मानमेव। उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात्। प्रस्थं परिमाणमस्य प्रास्थिको राशिः। षष्टिर्जीवितपरिमाणमस्य षाष्टिकः॥

**संख्यायाः संज्ञासंघसूत्राध्ययनेषु। ५। १। ५८॥**

पूर्वसूत्रमनुवर्तते। तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः। यद्वा द्व्येकयोरितिवत्संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः। पञ्चैव पञ्चकाः शकुनयः। पञ्च परिमाणमेषामिति वा। संघे पञ्चकः। सूत्रे। अष्टकं पाणिनीयम्। संघशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगुपात्तम्। पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम्। परिमाण-

ग्रहणानुवृत्तेर्नेह । पञ्च गावः स्वभूता अस्य ब्राह्मणसंघस्येति । योगश्चायं पूर्वस्यैव प्रपञ्चः । स्तोमे डविधिः । पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः । सप्तदशः सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठादिसंज्ञिका या स्तुतिस्तत्करणीभूतमन्त्रसमूहः स्तोमः ।

**पंक्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतम् । ५ । १ ५९ ॥**

एते रूढिशब्दा निपात्यन्ते ॥ तथाचाच नावयवार्थेऽभिनिवेष्टव्यम् ॥

**पञ्चद्दशतौ वर्गे वा । ५ । १ । ६० ॥**

पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे पञ्चकः । दशकः ॥

**सप्तनोऽञ् छन्दसि । ५ । १ । ६१ ॥**

पञ्च परिमाणमिति वर्ग इति च । सप्त साप्तान्यसृजत् ॥

**त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् । ५ । १ । ६२ ॥**

त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि । चात्वारिंशानि ।

**तदर्हति । ५ । १ । ६३ ॥**

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताठ्ठञादयः स्युः ॥ श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ।

**छेदादिभ्यो नित्यम् । ५ । १ । ६४ ॥**

नित्यमाभीक्ष्ण्यम् छेदं नित्यमर्हति छैदिको वेतसः । छिन्नप्ररूढत्वात् ॥ विराग विरङ्गं च ॥ * ॥ विरागं नित्यमर्हति वैरङ्गिकः ॥

**शीर्षच्छेदाद्यच्च । ५ । १ । ६५ ॥**

शिरश्छेदं नित्यमर्हति शीर्षच्छेदिकः । यठ्ठकोः सन्नियोगे शिरसः शीर्षभावो निपात्यते ।

दण्डादिभ्यः । ५ । १ । ६६ ॥

एभ्यो यत्स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः ॥

छन्दसि च । ५ । १ । ६७ ॥

प्रातिपदिकमात्रात्तदर्हतीति यत् । सादन्यं विदथ्यम् ।

पात्राद्घंश्च । ५ । १ । ६८ ॥

चाद्यत् । तदर्हतीत्यर्थे । पात्रियः । पात्र्यः ।

कडङ्करदक्षिणाच्छ च । ५ । १ । ६९ ॥

चाद्यत् । कडं करोतीति विग्रहे ऽतएव निपातनात्खच् । कडङ्करं माषमुद्गादिकाष्ठं अर्हतीति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हतीति दक्षिणीयः । दक्षिण्यः ॥

स्थालीबिलात् । ५ । १ । ७० ॥

स्थालीबिलमर्हतीति स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः ।

यज्ञर्त्विग्भ्यां घखञौ । ५ । १ । ७१ ॥

यथासंख्यं स्तः । यज्ञं ऋत्विजं वार्हति यज्ञियः । आर्त्विजीनो यजमानः ॥ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ॥ * ॥ यज्ञियो देशः । आर्त्विजीन ऋत्विक् ।

परायणतुरायणचान्द्रायणं वर्तयति । ५ । १ । ७२ ॥

आर्हीयाणां ठगादीनां पूर्णोऽवधिरतः परं ठञेव । पारायणं वर्तयति पारायणिकश्छात्रः । तुरायणं यज्ञविशेषः । तं वर्तयति तौरायणिको यजमानः । चान्द्रायणिकः ॥

संशयमापन्नः । ५ । १ । ७३ ॥

संशयविषयीभूतोऽर्थः सांशयिकः। सन्देग्धरि तु प्रत्ययो नेष्यते॥

**योजनं गच्छति। ५। १। ७॥**

यौजनिकः॥ क्रोशशतयोजनशतयोरुपसंख्यानम्॥ *॥ क्रोशशतं गच्छति क्रौशशतिकः॥ यौजनशतिक आचार्यः॥

**पथः ष्कन्। ५। १। ७५॥**

षो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी॥

**पन्थो ण नित्यम्। ५। १। ७६।**

पथः पन्थादेशो णश्च प्रत्ययः। पन्थानं नित्यं गच्छति पान्थः। पान्था॥

**उत्तरपथेनाहृतञ्च। ५। १। ७७॥**

उत्तरपथेनाहृतं औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः॥ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम्॥ *॥ वारिपथिकमित्यादि॥ अजपथशङ्कुपथाभ्यां चेति वक्तव्यम्॥ *॥ आजपथिकम्। शाङ्कुपथिकम्॥ मधुमरीचयोरण् स्थलात्॥ *॥ स्थलात्परो यः पथिन्शब्दस्तदन्तादित्यर्थः। स्थालपथं मधु मरीचं वा॥

**कालात्। ५। १। ७८॥**

व्युष्टादिभ्योऽणित्यतः प्रागधिक्रियते॥

**तेन निर्वृत्तम्। ५। १। ७९॥**

अन्हा निर्वृत्यमान्हिकम्॥

**तमधीष्टो भृतो भूतो भावी। ५। १। ८०॥**

अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूतो स्वसत्तया व्याप्तकालः। भावी तादृश एवानागतकालः। मासमधीष्टो

हारजनकाश्रयो न भवतीत्युक्ते बाधस्तादृशादृष्टाश्रयत्वात्तन्निवृत्यर्थं प्रकाशेति । ननु सिद्धान्तेऽहङ्कारव्यवहारहेतुप्रकाशस्य साक्षिणोऽनाश्रितत्वेन तदाश्रयाप्रसिद्धेस्तन्निषेधानुपपत्तिरिति चेत् । न शून्यवत् परप्रसिद्धिमात्रेणापि निषेधसम्भवात् । तादृशप्रकाशात्यन्ताभावो वा साध्यः । तथाचाहमनुभवगोचरस्य स्वद्रष्टृत्वाभावसिद्धेस्तस्य दृश्यत्वमहिम्नात्मान्तरसिद्धिरिति भावः । इदानीं मुख्यत एवात्मान्तरं साधयति । स्वव्यतिरिक्तेति । अहङ्कारव्यतिरिक्तद्रष्टृरूपात्मनोऽपि वृत्तिकृतभेदेन दर्शनवत्वमस्तीति न बाधः । नैयायिकादीन्प्रति हेतुमाह । दृश्यत्वादिति । प्रभाकरं प्रति हेतुमाह । स्वप्रकाशत्वेति ॥

आद्यं हेतुं निरूपयन् ब्रह्मणि व्यभिचारमुक्तं परिहरति । दृश्यत्वं चेति ।

(व्यभिचारोद्धरणपूर्वकमाद्यहेतुनिरूपणम्)

**दृश्यत्वं च प्रकाशाविषयत्वं, तच्च मतद्वयसाधारणं, ब्रह्म च न प्रकाशाविषयस्तद्व्यवहारादेरन्यथाऽपि सम्भवादिति वक्ष्यते । च न ज्ञानानाश्रयत्वादिकमुपाधिः । वृत्तिज्ञानानाश्रयत्वादेरन्तःकरणे साध्याव्यापकत्वात् । प्रकाशस्यास्मिन्मते निरधिकरणत्वेन तदनाश्रयत्वाप्रसिद्धेः । न च प्रकाशात्यन्ताभावाश्रयत्वम् । साधनव्यापकत्वात् । ज्ञानाश्रयत्वस्यात्मत्व इव तदनाश्रयत्वस्याप्यनात्मत्वेऽप्रयोजकत्वात् । न चाहमनुभवातिरिक्तप्रकाशमात्रविषयत्वमुपाधिः । साधनविशेषितत्वात् ॥**

यदुक्तं ब्रह्मणः प्रकाशविषयत्वाभावे व्यवहारविषयत्वं न स्यादिति तत्राह । तद्व्यवहारादेरिति । आदिपदेन संशयादिनिवृत्तिर्गृह्यते । अन्यथेति । ब्रह्मव्यवहारे तत्प्रकाशमात्रं हेतुर्न तु तद्विषयप्रकाश इति वक्ष्यत इत्यर्थः । अत्र पूर्वोक्तमुपाधिं दूषयति । न चेति । ज्ञानशब्देन वृत्तिर्विवक्षिता, उत चित्प्रकाशः, आद्ये आह । वृत्तीति । अन्तःकरणस्य मतद्वयेप्यनात्मत्वस्य निश्चितत्वात्तत्रोक्तोपाधेरभावात्साध्याव्यापकत्वमित्यर्थः । द्वितीये, किं प्रकाशाश्रयभिन्नत्वमुपाधिरुत प्रकाशात्यन्ताभाववत्त्वम् । आद्ये, प्रतियोग्यप्रसिद्ध्या तदसिद्धिरिति दूषयति । प्रकाशस्येति । द्वितीयं निराकरोति । न चेति । तव मते ऽपि ज्ञानादेरव्याप्यवृत्तित्वेन पक्षेऽपि तदभावसत्त्वात् साधनव्यापकत्वमित्यर्थः । किंच सुषुप्तौ ज्ञानाश्रयत्वाभावेप्यात्मत्वदर्शनाद्यथा तदात्मत्वेऽप्रयोजकमेवं तद्व्यतिरेको ऽपि तद्व्यतिरेके न प्रयोजकस्तथा च नायमुपाधिरित्याह । ज्ञानाश्रयस्येति । नन्वनात्मत्वेऽहमनुभवातिरिक्तप्रकाशमात्रविषयत्वं प्रयोजकं, स एव चोपाधिः, प्रकाशविषयत्वमात्रं पक्षे ऽप्यस्तीति साधनव्याप्तिः स्यात्तद्व्यावृत्त्यर्थमहमनुभवातिरिक्तेति । मात्रपदाभावे ऽहमनुभवातिरिक्तपरोक्षप्रकाशविषयत्वात् पक्षस्योक्तदोषः स्यात्ततो मात्रपदम् । तथा च पक्षस्याहमनुभवप्रत्यपि विषयत्वात्तदतिरिक्तप्रकाशमात्रविषयत्वाभावाद्भवत्ययमुपाधिरिति तत्राह । न चाहमनुभवेति । देहादौ साध्याव्यापकत्वादिति भावः । दूषणान्तरमाह । साधनविशेषितत्वादिति । साधनमिश्रितत्वादित्यर्थः ॥

किन्ततस्तत्राह । लाघवेनेति ।

**लाघवेन प्रकाशविषयत्वस्यैवोक्तसाध्यव्या-**

प्यत्वात् । अत एव नाप्रयोजकत्वम् । लाघवतर्कस्य सत्त्वात् ।

( अहमनुभवस्यात्मत्वे गौरवम् ) किं चाहमनुभवविषयस्यात्मत्वे प्रतिशरीरं सुखदुःखादिधर्मिणस्तस्य भेद आवश्यक इति गौरवं, तदतिरिक्तस्य भेदे प्रमाणाभावाल्लाघवम् । न चातिरिक्तात्मकल्पनागौरवम् । त्वयाप्यन्तःकरणात्मभेदस्वीकारात् । अहमनुभवगोचरस्यात्मत्व एव परं विवादात् । न चैवमहमनुभवगोचरस्य ज्ञानाद्याश्रयत्वानुभवविरोधः । ज्ञानाद्याश्रयस्यात्मत्वनियमग्राहकप्रमाणाभावात् । आत्मग्राह्यस्य रूपादिवदतद्धर्मत्वनियमात्तस्यानात्मधर्मत्वात् । न चैवं दुःखाद्याश्रयस्य चैतन्यसम्बन्धानुभवविरोधः । चैतन्यतादात्म्यारोपात्तदुपपत्तेः । न चात्मभेदे सिद्धे दुःखाद्याश्रयस्य तदभेदारोपविषयोऽयमनुभवस्तद्भेदस्त्वनुभवविरोधान्नानुमानात्सिध्यतीति वाच्यम् । तथा सति गौरोऽहमित्यनुभवविरोधाद्देहातिरिक्तात्मनोप्यसिद्ध्यापातात् ॥

उपाध्येकदेशस्य साधनस्य लाघवेनोक्तसाध्यप्रयोजकत्वेन व्याप्यत्वनिश्चयात्पक्षसाध्यस्य निर्णयात्तन्नैवो-

पाधेः साध्यंव्यापकत्वभङ्ग इत्यर्थः । तदुक्तमनुकूलेन तर्केण सनाथे सति साधने साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भव इति । प्रमेयलाघवं चानुकूलतर्क इत्याह । किं चेति । दुःखादिधर्म्यहङ्काराद्भिन्नस्यात्मन एकत्वाल्लाघवमित्याह । तदतिरिक्तस्येति । उभयवादिसंमताहङ्कारातिरिक्तात्मकल्पनमेव गौरवग्रस्तमित्याशङ्क्याह । न चातिरिक्तेति । तर्हि मतद्वयेऽप्यन्तःकरणमात्मा चेति पदार्थद्वयाभ्युपगमान्न विप्रतिपत्तिरित्याशङ्क्य त्वदभिमतात्मन एवान्तःकरणत्वेन तदतिरिक्तचैतन्यस्यात्मत्वेन च मयाभ्युपगमान्न मतसाम्यमित्याह । अहमनुभवेति । यदुक्तं ज्ञानाद्याश्रयस्यानात्मत्वे ऽनुभवविरोध इति, तदयुक्तमनात्मत्वेऽपि तदाश्रयत्वसम्भवादित्याह । न चैवमिति । प्रत्युत वैपरीत्ये मानमस्तीत्याह । आत्मग्राह्यस्येति । बुद्ध्यादिकं, नात्मधर्मः, आत्मग्राह्यत्वात्, रूपादिवत्, न चात्मत्वादौ व्यभिचारः, पक्षसमत्वादितिभावः । दुःखद्रष्टुस्तदाश्रयादन्यत्वे तदभेदानुभवो विरुध्येतेत्याशङ्क्यायो दहतीति वदुपपद्यत इत्याह । न चैवमिति । नन्वभेदानुभवस्य नारोपितविषयत्वम् । बाधकाभावात् । न चोक्तानुमानमेव बाधकम् । परस्पराश्रयप्रसङ्गादित्याशङ्क्य प्रतिबन्द्या दूषयति । न चात्मभेद इति । असिद्ध्यापातादिति । देहः, स्वव्यतिरिक्तद्रष्टकः, दृश्यत्वादित्याद्यनुमानादिति शेषः ॥

ननु शरीरस्य भोक्तृत्वे तस्यानित्यत्वेन कृतहानादिप्रसङ्ग इत्यादियुक्तिसहकृतभेदप्रत्यक्षमेवाभेदप्रत्यक्षबाधकं, ततश्च नानुमानाद्देहात्मभेदसिद्धिरिति शङ्कते । मम शरीरमिति ।

(मम शरीरमिति प्रत्यक्षं न देहाभेदप्रत्यक्षबाधकम्।

मम शरीरमिति प्रत्यक्षं युक्तिसहकृतं देहाभेदप्रत्यक्षबाधकमिति, चेत्तर्हि दुःखिनो ममात्मेति प्रत्यक्षं तद्द्रष्टकस्य दुःखादेरतद्धर्मत्वनियमग्राहकयुक्तिसहकृतं दुःखाद्याश्रयस्यात्माभेदप्रत्यक्षबाधकमस्तु । दुःखाद्याश्रयस्यैव ममेति प्रतीतिविषयत्वादन्तःकरणावच्छिन्नचैतन्यस्यापि मम प्रतीतिविषयान्तःकरणादन्यत्वात् । न चैवं ममान्तःकरणमिति प्रतीत्यनुपपत्तिः । तव मते ममात्मेति प्रत्ययवद्राहोः शिर इति वद्भेदोपचारात् । न च वैपरीत्यापत्तिः । आत्मनोऽहमनुभवगोचरदुःखाद्याश्रयाभेदगौरवस्य बाधकत्वात् ।

ममात्मा ममान्तःकरणमिति प्रतीत्योर्यथार्थत्वम्)

अथ वा ममात्मा ममान्तःकरणमिति प्रतीतिद्वयस्य भेदांशे बाधकाभावाद्यथार्थत्वम् । न च ममताधिकरणत्वादुभयोरपि भेदानुपपत्तिः । ममता ह्यन्तःकरणचैतन्ययोरविद्ययैकतामापन्नयोर्धर्मः, तद्भेदश्च ममान्तःकरणमात्मेति प्रतीत्या विषयीक्रियत इति न बाध्यते ॥

तुल्यमुत्तरमित्याह । तर्हीति । ननु ममात्मेति शरी-

रात्मनोभेदः प्रतीयत इत्यत आह । दुःखाद्याश्रयस्येति । ननु चिदचित्समुदायस्याहमर्थतया ममप्रतीतेरपि तद्विषयत्वेनात्मनस्ततोभेदानुभवो भ्रम एवेति तत्राह । अन्तःकरणावच्छिन्नेति । मतद्वयेप्यहमिति प्रकाशविषयस्यैव ममताधिकरणत्वान्मम मते चान्तःकरणस्यैव तादृक्त्वान्ममात्मेति तद्भेद एवात्मनः प्रतीयत इति मुख्य एवायमनुभव इत्यर्थः । नन्वन्तःकरणस्यैव ममताधिकरणत्वे ममान्तःकरणमित्यन्तःकरणस्य तद्भेदानुभवो नुपपन्न इत्याशङ्क्यान्यथोपपत्तिमाह । न चैवं ममेति । नन्वस्यौपचारिकत्वे ममात्मेत्यनुभव एवौपचारिको ऽस्तु, ममान्तःकरणमिति तु मुख्य एव किन्न स्यादित्याशङ्क्य ममताधिकरणस्यात्मत्वे गौरवात्तद्भेदानुभवो मुख्य इत्याह । न च वैपरीत्येति । किं चाहङ्कारात्मभेदवादे ऽनुभवद्वयस्यापि प्रामाण्यमुपपद्यत इत्याह । अथ वेति । नन्वात्मनो ऽन्तःकरणस्य वैकस्य ममताधिकरणत्वात्ततः कथमुभयाभेद इत्याशङ्क्य ममताया उभयधर्मत्वात्तदधिकरणप्रतियोगिकभेद उभयोरप्यविरुद्ध इत्याह । न च ममेति । आत्मेति । ममात्मेति प्रतीत्यर्थः ॥

ममताया उभयधर्मत्वेप्युभयप्रतियोगिकभेद एकस्यानुपपन्नः, स्वप्रतियोगिकभेदस्य स्वस्मिन्नसम्भवादित्याशङ्क्यानुभवद्वयस्याप्येकैकप्रतियोगिकभेदविषयत्वेनोपपत्तिमाह । नचैवमिति ।

नचैवं सम्पिण्डितोभयस्यैव ममताधिकरणत्वात्कथं तदेकदेशभेदप्रतीतिरबाधिता स्यादिति वाच्यम् । सामान्यतोदृष्टानुमाने वस्तुतो ऽबाधितविषयस्येव सामान्येन सामान्य-

भावाभाववादे विशेषभेदस्येव सामान्येन ममेत्यनेन रूपेण तदधिकरणैकदेशभेदस्यैव तद्बुद्धिविषयत्वाद्विनिगमनाभावेनानयोः प्रतीत्योर्गत्यन्तराभावात् । अत एवाहमर्थस्य द्विरूपत्वमाहुः । निपुणतरञ्चैतदुपपादयिष्यते । न च ममान्तःकरणमिति धीरहङ्कारातिरिक्तान्तःकरणविषया, ममात्मेति बुद्धिस्तूपहिताहङ्कारात्मभेदविषयेति वाच्यम् । परमते कथमपि तत्प्रतियोगिकतदधिकरणभेदाभावाच्छबलस्यैवाहम्पदार्थत्वप्रसङ्गाच्च । ममात्मा दुःखीति दुःखाश्रयतयानुभूयमानस्यौपाधिकात्मप्रदेशादन्यत्वायोगाच्चौपाधिकात्मप्रदेशस्यैव दुःखाद्याश्रयत्वात् ।

(ममात्मेति बुद्धिर्नेश्वरविषया) अत एव ममात्मेति बुद्धिरीश्वरविषयेति निरस्तम् । ममात्मा दुःखी तवात्मा सुखीत्यन्योन्यं व्यावृत्ततयानुभूयमानस्यानीश्वरत्वाच्च ॥

यथा शब्दो द्रव्याश्रितः । गुणत्वादित्यनुमानेन वा स्तुत आकाशस्यैव सामान्याकारेण विषयत्वम् । यथा वा रूपं न भवति रस इत्यनुभवे नीलरूपादीनामेव रूपत्वेन भेदप्रतियोगित्वमेवं ममात्मेति भेदप्रतीतौ ममत्वसामा

न्याकारेणान्तःकरणस्यैव प्रतियोगितया विषयत्वं. ममान्तःकरणमित्यत्र त्वात्मन एवेति न विरोध इत्याह । सामान्यत इति । अन्यतराप्रामाण्ये कारणाभावादेवमोवोभयप्रामाण्यं निर्वहणीयमित्याह । विनिगमनेति । अभियुक्तानामहम्पदार्थस्य द्विरूपत्वाभिधानमुभयप्रामाण्यलिङ्गमित्याह । अत एवेति । नन्वहङ्कारात्मवादेऽप्यनुभवद्वयस्य प्रामाण्यमुपपद्यते, ममात्मेति प्रतीतेः शरीरावच्छिन्नाहङ्कारप्रतियोगिकतदनवच्छिन्नतद्धर्मिकभेदविषयत्वेन याथार्थ्यादिति तत्राह । न च ममेति । औपाधिकभेदस्य पारमार्थिकत्वस्यासम्भवादनिर्वचनीयस्य त्वयानङ्गीकारात्त्वन्मते अप्रामाण्यमेव स्यादित्याह । परमत इति । किं च देहाद्यवच्छिन्नस्य मम प्रतीतिगोचरत्वे तस्यैवाहम्पदार्थत्वेन तस्यानेकार्थत्वापात इत्याह । शबलस्यैवेति । किं च ममात्मेति प्रतीयमानभेदधर्मिणो ऽनुपहिताहङ्काररूपत्वे तस्य दुःखित्वानुभवो विरुध्येतेत्याह । ममात्मेति । भेदधर्मिणि दुःखानुभवादेवेश्वराविषयत्वेन प्रामाण्यं दुर्घटमित्याह । अत एवेति । भेदधर्मिणो नानात्वादीश्वरस्यैकत्वान्न तद्विषयो ऽयमनुभव इत्याह । ममात्मेति ॥

एवं भेदप्रत्यक्षेण दुर्बलाभेदानुभवस्य बाधितत्वेन भ्रमत्वात्प्रकृतानुमानस्य साम्राज्यमित्याह । तस्मादिति ।

(प्रत्यक्षस्य नात्मानुमानबाधकत्वम्) तस्मात्प्रत्यक्षत एव दुःखाद्याश्रयादात्मभेदानुभवः कल्पिताभेदविषय इत्यनुमानं न बाधते । अनुमानमप्युक्तयुक्तिसहकृतं गगननीलिमप्रत्यक्षस्येव दुःखाद्याश्रयात्माभेदप्रत्य-

त्त्वबाधकम् । अत एवाहङ्कारस्यानात्मत्वेप्यहं मुक्तः स्यामिति प्रवृत्तिर्न विरुध्यते । अहमनुभवे प्रकाशमानस्य चिदात्मनो मुक्त्यर्थप्रवृत्त्युपपत्तेः । दुःखाद्याश्रयाहङ्कारस्यैवात्मत्वे निरतिशयसुखार्थिनो मुमुक्षोः प्रवृत्त्यसम्भवः । दुःखाभावस्यापुरुषार्थत्वात् । आत्मातिरिक्तनित्यसुखे प्रमाणाभावात् ॥

किं च तर्कोपोद्बलितस्यानुमानस्य प्रत्यक्षबाधकत्वं गगननीरूपत्वानुमाने दृष्टं, प्रकृतानुमानस्यापि लाघवादितर्कानुगृहीततया प्रबलत्त्वेनात्माभेदप्रत्यक्षबाधकत्वमित्याह । अनुमानमपीति । यदुक्तमहमर्थस्यानात्मत्वे तन्मुक्त्यर्थप्रवृत्त्यनुपपत्तिरिति । तदप्यहमर्थस्य द्विरूपाभिधानादेव निरस्तमित्याह । अत एवेति । प्रत्युत तव मत एव मुमुक्षुप्रवृत्त्यनुपपत्तिः । निरतिशयसुखस्य मुमुक्ष्वभिलषितत्वात्, दुःखाद्याश्रयाहङ्कारे तदयोगादित्याह । दुःखाद्याश्रयेति । ननु दुःखाभावार्थमेव प्रवृत्तिः किन्न स्यादिति तत्राह । दुःखाभावस्येति । दुःखस्य सुखाभिव्यक्तिविरोधित्वेन तदभावः सुखाभिव्यक्तिशेषतया क्वचिदिष्यते इतरथोभयोरपि पुरुषार्थत्वे गौरवादित्यर्थः । तर्ह्यहङ्कारधर्मनित्यसुखाभिव्यक्तिरेव मुक्तिरिति भट्टमतमाशङ्क्याह । आत्मातिरिक्तेति । एतच्चानन्दवादे निपुणतरमुपपादयिष्यते ॥

हेतूच्छित्तिरपि विपक्षे बाधकस्तर्क इति वक्तुं प्रथममहङ्कारस्य दृश्यत्वमनुभवसिद्धमित्याह । किं चेति ।

(अहङ्कारस्य दृश्यत्वमानुभविकम्) किं च मामहं जानामीति ज्ञानविषयत्वमहङ्कारस्यानुभूयते । तच्च न तावत्स्वसमवेतजन्यज्ञानविषयत्वम् । निरवयवात्मनि संयोगाभावेन सामग्र्यभावात् । नाप्यहङ्कारधर्मी नित्यं ज्ञानमस्ति । आत्मातिरिक्तनित्यज्ञाने प्रमाणाभावात् । न च विषयस्य स्वप्रकाशत्वं सम्भवति । स्वविषयत्वं स्वप्रकाशत्वमित्यस्य निरसिष्यमाणत्वात् । अत एव न द्वितीयहेत्वसिद्धिः । तथाद्यहेतूच्छित्तिरपि बाधिका ॥

एतच्चाहङ्कारस्य दृश्यत्वं मानसप्रत्यक्षविषयत्वेनोत, स्वसमवेतनित्यज्ञानविषयत्वेन, किं वाहङ्कारस्य स्वप्रकाशत्वेनेति विकल्प्य क्रमेण दूषयति । तच्च न तावदित्यादिना । निरवयवेति । संयोगस्य प्रदेशवृत्तित्वान्निरवयवात्ममनसोस्तदभावादिति वक्ष्यमाणन्यायेनेत्यर्थः । दृश्यत्वादेव स्वप्रकाशत्वानधिकरणत्वादिति हेतुः सिद्ध इत्याह । अत एवेति ॥

उक्तसाध्ये एव पुनरपि हेतुद्वयमाह श्लोकेन । किं चेति ।

(उक्तानुमाने एवान्यहेतुनिरूपणम्) किं चाहमिति बोधस्य विषयो न स्वबोधकः । विनाशप्रतियोगित्वान्मितत्वाच्च घटादिवत् ॥

न चासिद्धिः । "[1] स्वमपीतो भवति" इति श्रुत्या सुषुप्तौ तस्य लयश्रवणात् । अपि पूर्वस्येतेलयार्थत्वात् । न च ज्ञानस्यैव लयः । "[2] यत्रैतत्पुरुषः स्वपिति नाम" इति प्रक्रान्तपुरुषप्रतियोगिकत्वात्तस्य । न च जीवस्य स्वरूपेण विलयोऽस्ति । प्रत्यभिज्ञानविरोधात् । कृतहानाकृताभ्यागमप्रसङ्गात् । सत्सम्पत्तिविरोधाच्च । उपाधिलये तु जीवस्य तदभेदाभिमानिनोऽपि लयो भवति । सत्सम्पत्तिवाक्यानुसारेण पुरुषलयवाक्यस्य तथैवार्थवर्णनात् । उपाधिश्चाहमनुभवगोचर एवेति तस्य विलयः । अन्यथा जाग्रतीव सुषुप्तावप्यहमाकाराधीः स्यात् । न च सास्ति । अन्यथाहमित्यभिमन्यमान एव स्वाप्समिति तदभिमानपरामर्शप्रसङ्गात् । तस्यानुभवनियमात् ॥

मितत्वात्परिमितत्वादित्यर्थः । अहङ्कारस्य नित्यतयायं हेतुरसिद्ध इत्याशङ्क्याह । न चासिद्धिरिति । ननु स्वमपीतो भवतीति स्वरूपप्राप्तिरेवोच्यते न तु लय इति तत्राह । अपिपूर्वस्येति । इतेः, इणगताविति धातोः । "[3] यदा

---

१ छान्दोग्योपनिषदि ६ प्र० । ८ खं० । १ कं० ।
२ छान्दोग्योपनिषदि ६ प्र० । ८ खं० । १ कं० ।
३ छान्दोग्योपनिषदि ४ प्र० । ३ खं० । १ कं० ।

वा अग्निरुद्वापयति वायुमेवाप्येति'' इत्यादिषु लयार्थत्वद-र्शनादित्यर्थः । ननु सुषुप्तौ विज्ञानस्यैव लयो न तु कर्त्तु-रित्याशङ्क्याह । न ज्ञानस्यैवेति । एवमपि कथमहङ्कारस्य विलय इत्यत आह । न च जीवस्येति । प्रत्यभिज्ञानेति । यो ऽहं सुप्तः सो ऽहं जागर्मीत्यादिविरोधादित्यर्थः । किञ्च जी-वस्य स्वरूपनाशे "[1]सता सोम्य तदा सम्पन्नो भवति'' इति श्रुतिविरोध इत्याह । सत्सम्पत्तीति । कथं तर्हि पुरुषलया-भिधानं तत्राह । उपाधिलय इति । यथा कलाक्षय एव चन्द्रक्षयशास्त्रार्थ एवं पुरुषलयशास्त्रस्यापि तदुपाधिलय एवार्थः । ननु चन्द्रस्यामावास्यायां सूर्यसङ्गत्यभिधानात् क्षयवचनं कलाविषयमित्याशङ्क्य तुल्यमुत्तरमित्याह । स-त्सम्पत्तीति । वर्णनादिति । वर्णनस्य युक्तत्वादित्यर्थः । तथापि तटस्थस्य कस्यचिदुपाधेर्लयः किं न स्यादित्याशङ्क्य तटस्थोपाधिलयेऽप्युपहिते लयबुद्ध्यदर्शनाज्जीवतादात्म्या-पन्न एवोपाधिर्वक्तव्यः, स चाहङ्कार एवेत्याह । उपाधि-श्चेति । स्थूलदेहस्य जाग्रत्स्वप्नयोरेकस्याभावान्न स उपाधि-रित्याह । एवेति । अहङ्कारलयानङ्गीकारे बाधकमाह । अन्यथेति । सुषुप्तावप्यहमनुभवाङ्गीकारे तस्यापि परामर्शः स्यादित्याह । अन्यथाहमित्यभिमन्यमान इति । अनु-भवन्नेवेत्यर्थः ॥

नन्वनुभवस्याजातत्वान्न तत्परामर्श इत्याशङ्क्य त-स्यानुभवनियमादिति तदुपपादयति । जाग्रतीति ।

(परामर्शस्यानुभवपूर्वकत्वम्) **जाग्रति तदनुभवतया निर्णीतचैतन्य-स्य तदादि सत्त्वात्, सुषुप्तौ चैतन्याभावे सुखादि**

१ छान्दोग्योपनिषदि ६ प्र० । ८ खं० । १ क० ।

परामर्शस्याप्यभावापातात् । न चैवं प्रत्यभिज्ञाविरोधः । अहमनुभवे प्रकाशमानचैतन्यस्य तद्विषयस्यावस्थात्रयेप्यनपायात् । उपाधावहङ्कारे प्रत्यभिज्ञानस्य वर्णध्वनिविषयप्रत्यभिज्ञानवज्जातिविषयत्वात् । व्यक्तिविषयत्वे बाधकस्योक्तत्वात् । न चैवमधिकरणविरोधः । तस्य सूक्ष्मरूपेण तदा तदवस्थानविषयत्वात् । अन्यथोदाहृतश्रुत्या सुषुप्तिकाले सकले विलीन इति कार्यमात्रविलयश्रुत्या च विरोधप्रसङ्गात् । अहं निर्दुःखः स्यामिति प्रवृत्तिरप्यहमनुभवे प्रकाशमानस्य चिदात्मनो ऽध्यासाद्दुःखाश्रयस्य दुःखाभावार्थमिति न विरुध्यते । किं च दुःखाभावस्यापि सुखशेषत्वादहङ्कारे सुषुप्तौ दुःखाभावजन्यसुखासम्भवान्नित्ये धर्मरूपे तस्मिन्मानाभावाच्च । स्वरूपसुखाभिव्यक्त्यर्थमेव दुःखाभावकामनया सुषुप्तौ प्रवृत्तिः, स चाहङ्कारात्मवादे नोपपद्यते । न चानुभवस्मरणयोर्वैयधिकरण्यं, कृतहानाकृताभ्यागमो वा । सुषुप्तावपि सूक्ष्मरूपान्तःकरणावच्छिन्नचैतन्यस्य सत्त्वात्, तावतैवातिप्रसङ्गविरहात् । सर्वज्ञेश्वरस्यसङ्कीर्णफलदातृत्वोपपत्तेश्च ॥

वैशेषिकादिमतानुसारिणं प्रत्याह । सुषुप्ताविति । सुषुप्तावहङ्कारनाशे तदुपहितस्य सोऽहमिति प्रत्यभिज्ञाविरोध इत्यत आह । न चैवमिति । तद्विषयस्य । प्रत्यभिज्ञाविषयस्य । तर्ह्यहङ्कारांशे निर्विषयः स्यादिति तत्राह । उपाधाविति । यथा वैशेषिकादिमते स एवायं गकार इति प्रत्यभिज्ञा जातिविषया, अथवा भट्टमते ध्वनिविषया, तथा सापीत्यर्थः । व्यक्तिविषयत्वे सुषुप्तौ लयश्रवणाद्यनुपपत्तिरित्याह । व्यक्तीति । ननु "तदापीतेः संसारव्यपदेशात्"[1] इत्यधिकरणे मोक्षपर्यन्तं लिङ्गदेहस्थानोक्तेः कथं स्वापे लय इति तत्राह । न चैवमिति । श्रुतिसूत्रयोर्विरोधे श्रुत्यनुरोधेन सूत्रं नेयमित्यभिप्रायेणाह । अन्यथेति । यदुक्तं सुषुप्तावहमर्थस्य नाशे तद्दुःखाभावार्थप्रवृत्त्यनुपपत्तिरिति तत्राह । अहं निर्दुःख इति । ननु चिदात्मनो दुःखानाश्रयत्वात्तस्य दुःखाभावो नार्थनीय इत्याशङ्क्य दुःख्यहङ्कारतादात्म्यारोपाद्दुःखप्रसक्तेस्तदभावप्रार्थनेत्यभिप्रेत्याह । अध्यासादिति । अपि च दुःखेन विना सुखी स्यामिति कामनादर्शनात्सुखशेषतयैव दुःखाभावे प्रवृत्तिः, सा च त्वन्मत एवानुपपन्नेत्याह । किं चेति । यच्चोक्तं निरहङ्कारनाशेऽस्मर्तृत्वाद्यनुपपत्तिरिति तत्तदापि सूक्ष्मरूपाङ्गीकारान्निरस्तमित्याह । न चानुभवेति । ननु सूक्ष्माद्भिन्नस्य स्थूलस्य तदनुभूतार्थस्मर्तृत्वेऽतिप्रसङ्ग इत्यत आह । तावतैवेति । स्थूलसूक्ष्माकारभेदेऽपि धर्म्यैक्यान्नातिप्रसङ्ग इत्यर्थः । स्थूलरूपस्य नाशात्तत्कृतकर्मनाशेऽपि तदुपहित एव जीवे कालान्तरेऽपि सेवादिफलवदीश्वरदातृकं नियतं भविष्यतीत्याह । सर्वज्ञेति ॥

[1] ब्रह्मसूत्रम् अ० । ४ । पा० । २ । सू० ८ ।

ननु किमिदं सूक्ष्मत्वं ? कारणात्मतापत्तिरिति चेत्, कोऽर्थः ? किं कारणमेव वर्तते कार्यमपि ? आद्ये नान्तःकरणसत्त्वं, द्वितीये न जाग्रदवस्थातो विशेष इति तत्राह । सूक्ष्मता चेति ।

(अनिर्वचनीयत्वेऽपि सूक्ष्मता कार्यमात्रस्य) **सूक्ष्मता च विविच्य निर्वक्तुमशक्याप्यसत उत्पत्त्यनुत्पत्त्या "[1]असद्वा इदमग्र आसीत्" इति श्रुत्या च कार्यमात्रस्यावश्याभ्युपेया । अनभिव्यक्तरूपस्यैवासच्छब्दार्थत्वात् । अन्यथासीदिति विरोधात् । अत एवानिर्वचनीयं विश्वमिति तत्वविदां स्थितिः ॥**

सूक्ष्मताया अनिर्वचनीयत्वेन भेदाभेदाभ्यां दुर्निरूपत्वमनुकूलमेव । न च तत्र मानाभावः । सतो ऽसतोवोत्पत्त्यनुत्पत्त्या ऽसद्वा इदमिति श्रुत्याच्च तदवगमादित्यर्थः। नन्वसदिति कार्यस्यासत्त्वमेवोच्यते न तूक्तसूक्ष्मरूपत्वं तत्राह । अनभिव्यक्तेति । तुच्छत्वपक्षे बाधकमाह । अन्यथेति । अग्र आसीदिति पूर्वकालसम्बन्ध इदमसदित्यस्य कार्यस्यासदैक्यं चानिर्वचनीयसूक्ष्मरूपमन्तरेणानुपपन्नमित्यर्थः । दुर्निरूपत्वादेव कार्यरूपमप्यनिर्वचनीयमित्याह । अत एवेति ॥

एवमहङ्कारावच्छिन्नात्मनः परामर्शाश्रयत्वमिति मते सुषुप्तिकालीनानुभवसामानाधिकरण्यं परामर्शस्योपपादितमिदानीमविद्यावच्छिन्नस्येति मते तस्यावस्थात्रयेऽप्यनपायान्न चोद्यावकाश इत्याह । परामर्श इति ।

[1] तैत्तिरीयकोपनिषदि । २ प्र० । ७ खं० । १ कं० ।

(अविद्यावच्छिन्नस्य परामर्शः) परामर्शो ऽविद्यावच्छिन्नस्यैवेति केचित्, अहमिहैवास्मीत्यनुभवात्, परिच्छिन्नत्वस्यापि नासिद्धिः। न चैतस्याप्रयोजकत्वम्। परिच्छिन्नस्यात्मशब्दार्थत्वव्याघातात्। न चात्मत्वमेव तदर्थः। आत्मनानात्वसिद्धेः पूर्वं तज्जातेरसिद्धेस्तस्य चाद्याप्यसिद्धत्वात्। नानात्मकल्पने गौरवाच्च ॥

भिन्नत्वहेतोरसिद्धिं परिहरति। अहमिहेति। न च देहपरिच्छेदविषयो ऽयमनुभव इति वाच्यम्। अहमिहैवास्मि जानन इति परिच्छिन्नस्य ज्ञानाश्रयत्वानुभवादिति भावः। आत्मनो ऽणुत्वात् परिच्छिन्नत्वमात्मत्वेप्युपपद्यत इत्यत्राह। न चेति। यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयत इति वचनाद्युत्पत्तेश्च परिच्छिन्नस्यात्मशब्दार्थत्वं व्याहतमित्यर्थः। आत्मत्वजातेरात्मपदार्थत्वान्न विरोध इत्याशङ्क्यासिद्ध्या दूषयति। न चात्मत्वमेवेति। गौरवाच्च न जातिरर्थ इत्याह। नानात्मेति ॥

स्वमते परामर्शमुपपाद्य परमते तस्यानुपपत्तिं वक्तुमनुवदति। यत्तु सुखमिति।

(परमते परामर्शानुपपत्तिः) यत्तु सुखमहमस्वाप्समिति परामर्शो ऽहङ्कारविषय इति। तदसत्। सुषुप्तौ कादाचित्काहङ्कारानुभवस्यासम्भवात्। नित्यस्यात्मान्यस्याभावात्। विषयस्य चास्वप्रकाशत्वादि-

नस्त्वयान्ययोर्भेदाग्रहाच्चैतन्यमभिमन्यन्ते तत्रेव च कर्मवासना इन्द्रियप्रणालिकयान्तःकरणस्य ज्ञानं परिणामो घटादिना सह सम्बन्धः प्रकृतेः परिणामरूपं तदन्तःकरणमंशत्रयवद्भवति पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेति । तथा हि ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागः । स च चेतनोपरागः स्वच्छान्तःकरणे प्रतिबिम्बित इति दर्पणस्येव मुखोपराग इत्यतात्त्विकः । इदमिति विषयांशः इन्द्रियप्रणालिकया परिणामविशेषः स च निश्वासाभिहतदर्पणस्य मलिनिमावत्पारमार्थिकः । एतदुभयभिन्नो व्यापारावेशस्तत्रैवंरूपव्यापारलक्षणाया बुद्धेर्विषयोपरागलक्षणं ज्ञान तथा च कर्त्तव्यमिति व्यापारावेश इति तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धः मुखस्य दर्पणनिष्ठमलिम्नेव विकृतेः प्रकृतिनिष्ठत्वात्कृतिसमानाधिकरणत्वेन भासमानाना ज्ञानवत्सुखदुःखद्वेषप्रयत्नधर्मादीनामपि प्रकृतिनिष्ठत्वमिति । तदपरे न क्षमन्ते चेतनोऽहं करोमीति प्रत्ययाच्चैतन्यस्य कृतिसामानाधिकरण्य मिद्धमिति चेतनस्यात्मनः कर्त्तृत्त्व न तु प्रकृतेः । न चायं प्रत्ययः प्रकृतेः कर्त्तृत्वबोधकः परं तु चैतन्यांशे भ्रमात्मक इति वाच्यम् । कर्त्तृत्वांशे भ्रमात्मकत्त्वकल्पने बाधकाभावात् । तथा च चेतनस्यात्मन एव कर्त्तृत्वमिति तत्वम् । अत एव कर्त्तृधर्मा नियन्तारश्चेतिता च स एव नः । अन्यथानपवर्गः स्यादसंसारोऽथ वा ध्रुव इति कुसुमाञ्जलीयं सङ्गच्छते । अयमर्थः कर्त्तृधर्माः कृतिसमानाधिकरणा धर्मादयो नियन्तारः नियामकाः स एव कर्त्तैव चेतिता चेतनः कृतिचैतन्ययोः सामानाधिकरण्येनानुभवात् । अन्यथा बुद्धेर्नित्यत्वेऽनपवर्गः अनिर्मोक्षः । अनित्यत्वे तदनुत्पत्तिदशाया को नियन्ता प्रकृतेः । तथा चासंसार इति एवं च "तत्रैवं सति कर्त्तारमात्मानं केवलं तु य"इति भगवद्वचनमपि सङ्गच्छते । न चैवं प्रकृते. क्रियमाणानीत्यनेन विरोध इति वाच्यम् । तत्र प्रकृतिपदस्यादृष्टार्थत्वेनाविरोधात् तथा चायमर्थः प्रकृतेरदृष्टस्य गुणै अदृष्टजन्यज्ञानेच्छाप्रयत्नरूपैर्गुणैः कर्त्ताहं अहमेव कर्त्तत्यलमति विस्तरेण । ननु कुत्र वा प्रकृतिः को वान्यः पुरुषः विज्ञानातिरिक्तवस्त्वभावाद्विज्ञानमेवात्मा नचैवमात्मविज्ञानयोः शब्द.

विभेदमात्रं न तु वस्तुभेद इति वाच्यम्। भावमात्रस्य क्षणिकत्वाङ्गीकारेण भवन्मतवैलक्षण्याज्ज्ञानसुखादीनां पुरुषाकारविशेषत्वेन बहुवैलक्षण्याच्च। न चैवं विज्ञानात्मकस्यात्मनः कथं चैतन्यमिति वाच्यम्। स्वतः प्रकाशात्मकत्वरूपस्य चैतन्यस्यात्मनि सत्त्वात्। अन्यथा विज्ञानस्य विज्ञानभिन्नग्राहकत्वाङ्गीकारे तदप्यन्येन ग्राह्यन्तदपि च तदन्येनेत्यनवस्थति। न च विषयवैलक्षण्यमन्तरेण कथं विषयिताकूपविज्ञानवैचित्र्यमिति वाच्यम्। वासनावैलक्षण्येन ज्ञानवैलक्षण्याङ्गीकारात्। अथ वासना कुत्रोत्पद्यत इति चेत्। आलयविज्ञान एव। न च वासनाया वृत्तिरूपघटपटादिज्ञानस्य च वैलक्षण्यात्कथ तदुपादानमालयविज्ञानमिति वाच्यम्। ज्ञानत्वेन साजात्यात् पूर्वपूर्वालयविज्ञानमपि उत्तरोत्तरालयविज्ञानजनकं चित्सन्ततिरप्यालयविज्ञानमेव तथा च पूर्वपूर्वविज्ञानेनोत्तरोत्तरं जन्यते विज्ञानमिति सुषुप्तावालयविज्ञानपरम्परा नानुपपन्नेति। न च वासनारूपसंस्काराश्रयस्य विज्ञानस्य क्षणिकत्वात्कथं पूर्वानुभूतस्य कालान्तरे स्मरणमिति वाच्यम्। पूर्वविज्ञानजन्यवासनाया उत्तरोत्तरविज्ञाने सङ्क्रमात्। दृष्टश्च कर्पूरवासितवसनवासनासङ्क्रमो वसनान्तरेष्विति चेत्। अत्रोच्यते विज्ञानस्य घटादियत्किञ्चिद्विषयकत्वे विनिगमनाविरहः निखिलविषयकत्वे सर्वज्ञत्वं स्यात्। एवं क्षणिकविज्ञानस्य वासनाश्रयत्वे स्मरणानुपपत्तिः। न च वासनाश्रयविज्ञानजन्योत्तरविज्ञाने वासनासङ्क्रमान्नानुपपत्तिरिति वाच्यम्। तर्हि मातृवासनासङ्क्रमः पुत्रेऽपि स्यात्। तस्य स्वतः प्रकाशत्वे मानाभावः। न चोक्तानवस्थेति वाच्यम्। तद्ग्राहकस्य ग्राहकान्तरानपेक्षणात्। आलयविज्ञानस्य सविषयकत्वे सुषुप्तौ विषयावभासःस्यात्। निर्विषयकत्वे विज्ञानत्वानुपपत्तिः। इतरथा निर्विषयाणां कुड्यकुसुलादीनामपि विज्ञानत्वापत्तिः। अथाभिहितमेव विज्ञानव्यतिरिक्तवस्तुनोऽभावाद्भवतु तेषां तथात्वमिति चेत् न। प्रत्यक्षसिद्धानां विभिन्नत्वेन भासमानानां घटपटकुड्यादीनां निरसनायोगात्। ननु न वयमेषां पदार्थानां निरसनं ब्रूमः किं तु भासमाननिखिलपदार्थानां विज्ञानाकारत्वमिति चेत्। आकारस्य विज्ञानभिन्नत्वे सिद्धान्तभङ्गः।

तदात्मकत्व प्रत्यक्षविरोधः । घटमानयेत्यादिवद्विज्ञानाकारमानयेति प्रत्ययापत्तेरिति संक्षेपः । ननु यत्सत्तत् क्षणिकं यथा घन इत्यनुमानात्क्षणिकशरीरात्मक एवात्मा स्मृतिजनकत्वव्यवहितपूर्वक्षणोत्पन्नं शरीरम् । एवं कुसूलस्थं बीजं नाङ्कुरोत्पादनसमर्थं समर्थस्य क्षेपायोगात् । किं तु सलिलमृदादिसहकारिसमवधानसहितक्षेत्रमध्यपतितं बीजं तत्रैव जनकतावच्छेदककुर्वद्रूपत्वाङ्गीकारादिति चेन्न । अङ्कुरार्थिनः कुसुलस्थबीजे प्रवृत्तिर्न स्यात् । सहकारिसमवधानेनैवोपपत्तौ कुर्वद्रूपत्वकल्पनाया मानाभावात् । सलिलादिसत्त्वे कुसुलस्थबीजादङ्कुरोत्पत्तेः क्षणिकत्वकल्पने गौरवाद् आत्मनः क्षणिकत्वे मोक्षे प्रवृत्त्यनुपपत्तेश्चेति । अथ भवदुक्तमोक्षो न पुरुषार्थः सुखलेशस्यापि विरहात् । तदुक्त वरं वृन्दावने रम्ये शृगालत्त्व वृणोम्यहं । न तु वैशेषिकीं मुक्तिं प्रवृणोमि-कथञ्चनेति चेन्न । मधुविषसपृक्तान्नवद्दुःखसवलितसुखस्यापि हेयत्वात् । तथा चाविवेकिनो मधुविषसपृक्तमन्न भुजन्ते दुःखसवलितं सुखमपि तथेति । विवेकिनस्तु कुपितफणिफणामण्डलच्छायेव दुःखसवलितं सुखमपि त्यजन्तीति दिक् ।

स्यादेतत् यदि शक्तिग्रहः सहकारी तदा घटशब्दात्पटप्रत्ययः किं न स्यादस्ति च तस्य शक्तिग्रहो घटे । अथ यः शब्दो यत्र गृहीत शक्तिकः स तदर्थं बोधयतीति चेत्तर्हि काश्यां गौरस्तीति वाक्याद्देशान्तरीयस्य गोःप्रत्ययो न स्यात् न हि तस्य काशीस्थायां गवि शक्तिग्रहोऽस्ति तस्या एवाप्रतीतेः । मीमांसकास्तु गवादिपदानां गोत्व एव शक्तिः कथन्तर्हि व्यक्तिलाभ इति चेत्तदाक्षेपादित्याहुः । ननु कोयमाक्षेपस्तस्यार्थापत्तिराक्षेपः गोत्वं हि स्वाश्रयं विना-

ऽनुपपद्यमानमिति तमाक्षिपतीति भट्टास्तन्न । अनुपपत्तिज्ञानमन्तरेणापि गौरस्तीत्यतो गोत्वविशिष्टव्यक्तिप्रतीतेस्तस्मात्समानवित्तिवेद्यत्वमाक्षेप इति गुरवः । यावती हि जातिधीर्व्यक्तिं हि विषयी करोतीति व्यक्तेर्लाभः । इदमेव कथमिति चेज्जातिभानसामग्र्या व्यक्तिबोधकत्वमिति गृहाण ॥

नन्वीश्वरेच्छाया ऐक्याद्घटपदात्पटरूपोऽर्थो बोद्धव्य इति ईश्वरेच्छाया विषयतासम्बन्धेन पटेऽपि सत्त्वाद्घटपदात्पटशाब्दबोधः स्यादित्याह यद्यपीति । यद्वा सामान्यतःशक्तिग्रहस्य सहकारित्वेऽतिप्रसङ्गं शङ्कते यद्यपीति । तस्य घटपदस्य । अर्थेति तथा च घटपदस्य पटे गृहीतशक्तिकत्वाभावाद्घटपदान्न पटप्रत्यय इति भावः । वाक्यात् चैत्र वाक्यात् । देशान्तरीयस्य मैत्रादेर्देशान्तरस्थस्य गोःप्रत्ययो न स्यात् । काशीस्थगोःप्रत्ययो न स्यात् तस्य देशान्तरीयस्य तस्याः काशीस्थायाः । मीमांसकमते शक्तिर्द्विविधा आनुभाविका स्मारिका च तत्रानुभाविका कार्यान्विते स्मारिका जातौ । तत्र स्मारिका शक्तिमाह अत्र मीमांसका इत्यादिना । गोत्व एवेति लाघवादिति शेषः तेषामयमाशयः व्यक्तौ न शक्तिरानन्त्याद्व्यभिचाराच्च तथाच घटपदाद्घटत्वबोधो भवत्वित्याकारिका शक्तिः न तु तत्र व्यक्तेः प्रवेशः तथा चेदृशशक्तिग्रहस्य कार्यतावच्छेदक घटत्वप्रकारकघटविशेष्यकशाब्दत्वमिति घटव्यक्तेस्तत्र प्रवेशः । तत्र यदि तत्तद्व्यक्तिशक्तिग्रहत्वेन तत्तच्छाब्दबोधं प्रति हेतुत्व तदा कार्यकारणभावानन्त्य यदि तद्व्यक्तिशक्तिग्रहत्वेन घटशाब्दबोधं प्रति हेतुत्व तदा व्यभिचार इति घटत्वादिविशिष्टशक्तिग्रहत्वेन हेतुत्वापेक्षया लाघवाद्घटत्वादिशक्तिग्रहत्वमेव हेतुत्वमुच्यतामिति । अथ यदि जातावेव शक्तिस्तदा शाब्दबोधे व्यक्तिभान न स्याद् इत्यत आह कथमिति । कथ व्यक्तिलाभः कथंव्यक्तेः शाब्दबोधविषयत्वलाभः ।

सापात् अन्यथानुपपत्या तत्कल्पनात् । तस्य गोत्वादेः । स्वाश्रय समानवित्तिवेद्यत्वं स्वविषयिताव्यापकविषयिताकत्व । समानवित्तिवेद्यत्व निर्वक्ति यावतीहीति । इदमेव समानवित्तिवेद्यत्वमेव यद्वि येन विना न भासते तद्भासकहेतोरेव तद्भासकत्वमिति नियमाभिप्रायेण समाधत्ते जातिभानसमाग्र्या इति । तथा च जातिर्व्यक्तिं विना न भासत इति जातिभासकस्यैव व्यक्तिभासकत्वमिति ॥

यद्वा जातिशक्तिरेव व्यक्तिं बोधयति । नचान्यशब्दशक्त्यान्यबोधनेऽतिप्रसङ्गः गोत्वशक्तं पदं गोत्वविशिष्टं बोधयतीत्यनतिप्रसङ्गादन्यथानुपपत्य तथैव कल्पनादिति तदपरे न क्षमन्ते । तथासति गोत्वमस्तीत्यतोऽपिगोत्वविशिष्टप्रत्ययापत्तेः । न च गोपदस्य गोत्व इवेगोत्वपदस्यापि गोत्वत्वे शक्तिरस्त्विति वाच्यम् गोपदस्य गवि शक्तौ व्यभिचारात् गोत्वे शक्तिकल्पना नहि गोत्वपदस्यापि गोत्वेशक्तौ व्यभिचारः सम्भवति गोत्वस्यैकत्वात् तस्माद्गोत्वविशिष्ट एव शक्तिः । न चोक्तदोषः गोत्वसामान्यलक्षणया सकलस्य गोरुपस्थितौ सर्वत्रैव गवि शक्तिग्रहसम्भवात् । अस्तुवा एकत्रैव गवि शक्तिग्रहः । न चान्यगोबोधानुपपत्तिरन्यशक्तिग्रहादन्यबोधनेऽतिप्रसङ्ग इतिवाच्यम् । गोत्वविशिष्टशक्तिग्रहो गोत्वविशिष्टप्रत्यायक इत्येवमनतिप्रसङ्गादिति सम्प्रदायविदः ।

ईदृशनियमे मानाभाव इत्यत आह यद्वेति अथवा यदि च दृश्यविषयीभूतस्य न शाब्दबोधविषयत्वमितीष्यते तदास्तां जातौ व्यक्तौ

च शक्तिः। परं तु लाघवाज्जातिशक्तिग्रहत्वेनैव शाब्दबोधहेतुत्वमिति कुब्जशक्त्यभिप्रायेणाह यद्वेति। जातिशक्तिरेव जातिशक्तिधीरेव। व्यक्तिं बोधयति व्यक्तिबोधं जनयति। कुब्जशक्तिपक्षेऽतिप्रसङ्गाभावात्ययमकल्पे शङ्कते अतिप्रसङ्ग इति। घटत्वशक्तिग्रहात्पटादिशाब्दबोधः स्यादित्यर्थः ननु स्वच्छन्दतया नियमं कल्पयित्वा कथमतिप्रसङ्गवारणमित्यत आह अन्यथेति तथासतीति तत्र मते जातिशक्तिग्रहस्य जातिविशिष्टव्यक्तिभासकत्वनियमादिति भावः। इदमुपलक्षणं। जातिशक्तिपक्षे कदाचित्कालिकसम्बन्धेन घटत्वविशिष्टस्य शाब्दबोधः। कदाचित्समवायसम्बन्धेन घटत्वविशिष्टस्य शाब्दबोध इत्यत्र तव किं नियामकं मम तु समवायेन घटत्वविशिष्टशक्तिग्रहाद्घटत्वविशिष्टस्य समवायेन शाब्दबोधः। कालिकसम्बन्धेन घटत्वविशिष्टशक्तिग्रहाद्घटत्वविशिष्टस्य कालिकसम्बन्धेन बोध इति। किं च घटे पटत्वभ्रमदशायां पटत्वेन घटे शक्तिग्रहे पटत्वेन घटो भासते जातिशक्तिपक्षे तच्च स्यात्। पटत्वशक्तिग्रहस्य पटशाब्दहेतुतायास्त्वया स्वीकारात्। मन्मते तु पटत्वप्रकारकशब्दबोधे पटत्वप्रकारकशक्तिग्रहस्य हेतुत्वेनादोषात्। किं च घटपदाद्घटत्वबोधो भवत्वित्याकारिका त्वन्मते शक्तिस्तद्ग्रहश्च घटपदं घटत्वे शक्तमित्याकारकः तत्र घटत्वत्वस्यापि प्रवेशेन गौरवं मन्मते तु घटपदं घटशक्तमिति शक्तिग्रहस्तत्र घटत्वत्वस्याप्रवेशे लाघवमिति दिक्। उक्तदोषः देशान्तरीयस्य काशीस्थगोप्रत्ययो न स्यादित्युक्तदोष सामान्यलक्षणाया विवादग्रस्तत्वादाह अस्तुवेति। यद्वा नानाव्यक्तिषु शक्तिकल्पने गौरवादाह अस्तुवेति। तथा च गोत्वप्रकारकगोविशेष्यकशक्तिग्रहत्वेनैव हेतुत्त्व गोत्वप्रकारकगोविशेष्यकशाब्दबोधत्वेन कार्यतेति भावः॥

गव्येव शक्तिर्न तु गोत्वेऽपि गौरवात्। न चैवं गोत्वप्रत्ययानापत्तिः गोत्वावच्छेदकशक्तिग्रहस्य गोत्वविशिष्टप्रत्यायकत्वादिति तत्वम्। यदि

गोत्वविशिष्टे शक्तिस्तदा गौः शुक्ल इत्यतो गोशुक्लयोरभेदप्रत्ययो न स्यात्तस्यान्वयरूपस्याशक्यत्वात् । नच शब्दादशक्यमपि भासतेऽतिप्रसङ्गामुच्यते । गोशक्तं पदमेव गवान्वयं बोधयति न चाशक्यबोधने घटमपि बोधयेदिति वाच्यम् । गोशक्तं हि पदं गवान्वयबोधजनकं न च घटो गवान्वयो येनातिप्रसङ्गः स्यात् ॥

ननु मास्तु शक्यतावच्छेदके शक्तिस्तद्भानं तु लक्ष्यतावच्छेदकवद्भविष्यति तथा हि । लक्ष्यतावच्छेदकांशे लक्षणां विना यथा शाब्दबोधांशे लक्ष्यतावच्छेदकस्य विषयत्व तथा शक्यतावच्छेदकांशे विनैव शक्तिं शक्यतावच्छेदकस्य शाब्दबोधविषयत्वमास्तामित्याशयवानाह गव्येवेति । यद्वा ननु यदा यद्धर्मप्रकारेण शक्तिग्रहस्तद्धर्मप्रकारेण नियमेन पदार्थोपस्थितिस्तदेव शक्यतावच्छेदकमिति निखिलतान्त्रिकसमत तथा च गगनपदात्कदाचिच्छब्दाश्रयत्वेन कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेनैव गगनोपस्थितिरिति निरवच्छिन्नकेवलव्यक्तावेव शक्तिरित्यपि सकलसमतं । एवं च सर्वत्र व्यक्तावेवास्तां शक्तिरित्याशयवानाह गव्येवेति । ननु गोत्वे यदि शक्तिर्न तदा कथं तस्य शाब्दबोधविषयत्वमित्याशयवानाह नचैवमिति समाधत्ते गोत्वेति । गोत्वावच्छेदेन शक्तिग्रहस्येत्यर्थः । तथा च यदि वृत्त्युपस्थित एव शाब्दबोधविषयत्वमिति मन्त्रो निरीक्ष्यते तदा कथं लक्ष्यतावच्छेदकस्य शाब्दबोधविषयत्वमिति भावः । ननु पदानां व्यक्तावेव यदि शक्तिस्तदा कदाचित्समवायसम्बन्धेन घटत्वविविशिष्टे निरवच्छिन्न शक्तिग्रहात्समवायसम्बन्धेन घटत्वविशिष्टशाब्दबोधः कालिकसम्बन्धेननिरवच्छिन्न घटत्वविशिष्टे शक्तिग्रहात्कालिकसम्बन्धेन घटत्वविशिष्टशाब्दबोध इत्यत्र किं नियामकं अस्मन्मते तु समवायसम्बन्धेन घटत्वविशिष्टशक्तिग्रहात्समवायसम्बन्धेन घटत्वविशिष्टशाब्दबोधः । कालिकस-

म्बन्धेन घटत्वविशिष्टशक्तिग्रहात् कालिकसम्बन्धेन घटत्वविशिष्टशाब्दबोध इति चेन्न । निरवच्छिन्नशक्तिकादाकाशपदात्कदाचित्समवायसन्धेनाकाशत्वविशिष्टस्य शाब्दबोधः कादाचित्कालिकसम्बन्धेनाकाशत्वविशिष्टस्य घटादेः शाब्दबोध इत्यत्र तत्र किं विनिगमकमिति चेत् येन सम्बन्धेन यद्धर्मविशिष्टे तात्पर्यग्रहो वर्त्तते तेन सम्बन्धेन तद्धर्मविशिष्टस्य शाब्दबोध इति नानुपपत्तिगन्धोपीत्युच्यते तदास्माकमपि तुल्यमिति । ननु तथापि कार्यान्विते शक्तिरवश्यं वाच्या न तु विशिष्टे शुद्धव्यक्तौ वा अन्यथान्वयाशस्याशक्यत्वेन कथं तस्य शाब्दबोधे भानमित्याह यदीति । अभेदप्रत्ययः शुक्लाभिन्नागौरित्यभेदप्रत्ययः तस्य अभेदस्य । अतिप्रसङ्गादिति । गौशुक्लेत्यत्राशक्योप्यभेदो यदि भासते तदा घटादिकमपि भासेतेति भावः । गोशक्तमिति । तथा च यच्छक्तं यत्पदं तत्तदन्वबोधं जनयतीति भावः ।

भट्टास्त्वन्वयविशिष्टे शक्तिग्रहादन्वयेऽपि शक्तिरेवेत्याहुस्तन्न । अन्वयस्यान्यलभ्यात्वाद् अनन्यलभ्यस्य च शब्दार्थत्वादन्यथा लक्षणोच्छेदापत्तिः । प्राभाकरास्तु कार्यत्वान्वितपदानां शक्तिस्तथा हि प्रयोजकवाक्यश्रवणानन्तरं प्रयोज्यस्य प्रवृत्तिमुपलभमानो बालस्तत्प्रयोजकतया कार्यताविशिष्टज्ञानमनुमिनोति स्वप्रवृत्तौ तेन कार्यत्वविशिष्टज्ञानस्य हेतुत्वावधारणादतस्तद्धेतुत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव तथाऽवधारयति ततस्तन्निर्वाहिकां शक्तिं कार्यत्वान्विते शब्दत्वावच्छेदेन कल्पयति । तदनुचावापोद्वापाभ्यां घटादिपदे शक्तिं गृह्णानः प्रथमकल्पानुरोधात्कार्यत्वान्विते घटादौ शक्तिं कल्पयति

**न तु केवलघटादावाद्यव्युत्पत्तिविरोधात् । इत्यञ्च यत्र कार्यतावाचकपदसमभिव्याहारो नास्ति तद्वाक्यमर्थवादरूपमूलकमेव । व्यवहारस्त्वसंसर्गाग्रहात् ॥**

अन्वयविशिष्ट इति । एतन्मते गोपदं गवान्वयविशिष्टे शक्तमित्याकारकशक्तिग्रहत्वनान्वितगोशाब्दत्वेन कार्यकारणभावः तथा च गौः शुक्ला इत्यत्र शुक्लपदं शुक्लान्विते शक्तमित्यभेदस्यान्वयरूपत्वेनान्वयेपि शक्तिरस्तीति नानुपपत्तिलेशोपि । अन्यलभ्यत्वात् आकाङ्क्षादिलभ्यत्वात् । तथा च घटादिपदानां घटत्वादिविशिष्टे शक्तिः । निरूपकतासम्बन्धेन घटादिप्रकारकबोधे घटादिपदोत्तरद्वितीया दज्ञानस्य हेतुत्वादितिभावः । अनन्यलभ्यस्य आकाङ्क्षाद्यलभ्यस्य । तथा चाकाङ्क्षादिना लक्षणया वालभ्य एव शब्दार्थ इति भावः । अन्यथा आकाङ्क्षादिलभ्यस्यापि शब्दार्थत्वे । लक्षणोच्छेदापत्तिरिति तथा च गङ्गायां घोष इत्यत्र गङ्गापदाल्लक्षणया लभ्यस्यापि तीरस्य गङ्गापदार्थत्वे लक्षणोच्छेदःस्यादिति भावः । प्राभाकरास्त्विति । तेषामयमाशयः । घटादिपदानां कार्यान्वितघटे शक्तिः । कथमन्यथा घटानयनं कार्यमित्यादि कार्यताविषयकः शाब्दबोधः । अस्मन्मते तु घटादिपदानां कार्यान्विते घटादावेव शक्तिरिति कार्यताविषयकः शाब्दबोधो भविष्यत्येव । एवं च सिद्धार्थस्थले कार्यतावाचकलिङ्गादिपदाभावान्न शाब्दबोधः तस्य चाप्रामाण्यम् । तथा च घटपदं कार्यान्वितघटे शक्तमित्याद्याकारकशक्तिग्रहस्यैव शाब्दबोधे हेतुत्वमिति । तत्प्रयोजकतया प्रवृत्तिप्रयोजकतया । कार्यत्वविशिष्टेति । अथ घटानयनकार्यताज्ञानवान् घटानयनप्रवृत्तिमत्वात् यो यद्विषयकप्रवृत्तिमान् स तद्विषयकज्ञानवानित्यर्थः । स्वप्रवृत्तौ बालप्रवृत्तौ । तेन बालेन । हेतुत्वावधारणात् प्रवृत्तिहेतुत्वावधारणात् । तद्धेत्वाकाङ्क्षायां प्रवृत्तिहेत्वाकाङ्क्षायां । उपस्थितत्वात् प्रथमोपस्थितत्वात् । तथावधारयति शब्दमेव हेतुत्वेन जानाति । तन्निर्वाहिका हेतुत्वनिर्वाहिका शक्ति आनुभाविका शक्ति । शब्दत्वावच्छेन लिङ्गादिपदसमभिव्याहृतशब्दत्वावच्छे-

टेन आवापोद्वापाभ्यां आनयनानयनाभ्यां'। प्रथमकल्पनानुरोधात् प्रथमं कार्यान्वितशक्तिकल्पनानुरोधात् ॥ अर्थवादरूपमूलकमिति । ननु स्वर्गकामोऽश्वमेधेन यजेतेति श्रुतिशेषीभूतयन्नदुःखेन संभिन्न नचग्रस्तमनन्तर । अभिलाषोपनीतं च तत्सुख स्वःपदास्पदमित्यर्थवादात्कथं कार्यताविषयकशाब्दबोधस्त्वन्मते कार्यत्वाविषयकशाब्दबोधस्यालीकत्वादिति चेत् न । विधिशेषार्थवादाच्च शाब्दधीरपि तु स्वर्गकामोऽश्वमेधेन यजेतेत्यादौ स्वर्गपदार्थकामनावतो यागेष्टसाधनत्वलिङ्गकृतिसाध्यताबोधे स्वर्गपदार्थः क इत्याकाङ्क्षायां यन्नदुःखेन संभिन्नमित्यस्य प्रवृत्तिरिति । अर्थवादरूपं कार्यताविषयकशाब्दाजनकस्वरूपं अत एव मूलकमित्युक्तम् । नन्वर्थवादवाक्यात्कथं प्रवृत्तिरित्यत आह व्यवहारस्त्विति । व्यवहारः प्रवृत्त्यादिरूपव्यवहारः ।

ननु सर्वेषां पदानां कार्यतान्वितवाचकत्वात्तद्वाचकपदसमभिव्याहारो नास्तीत्यसङ्गतमसङ्गतार्थवादस्याप्रामाण्यमिति । अत्रोच्यते द्विविधा हि पदशक्तिरनुभाविका स्मारिका च तत्रानुभाविका कार्यतान्विते स्मारिका च जातौ तथा च घटादिपदं घटपदात्कार्यत्वानुपस्थितौ कथं तदन्वितबोधं जनयेत् कार्यत्वान्वयबोधे तदुपस्थितेरपि हेतुत्वादिति नार्थवादस्य प्रामाण्यमित्युचुस्तन्न। आवापोद्वापाभ्यां लाघवाद्घटादिमात्र एव शक्तिग्रहो न तु कार्यत्वान्वयेप्यन्यलभ्यत्वात् । प्रथममन्यलभ्यत्वं बालस्य नोपस्थितमिति चेत्प्रथमन्तर्हि कार्यत्वान्वयेऽपि शक्तिग्रहोऽस्तु यदा च तदुपस्थितं तदा घटमात्रशक्तिग्रहोऽस्तु सा बाध्यतां गौरवात् ॥

अथ यद्यावापोद्वापाभ्यां बालेन पदानां कार्यान्विते शक्तिर्गृहीता तदा तु सर्वं पदं कार्यतावाचकमेव जातं तर्हि कार्यतावाचकपदसमभिव्याहारो नास्तीत्यसङ्गतमित्याह नन्विति ॥ अर्थवादस्येति कार्यतावाचकपदसमभिव्याहारो नास्तीत्यस्यासङ्गतत्वे लिङादिसमभिव्याहृतस्यैव शाब्दबोधजनकत्वे च सिद्धे सर्वत्रार्थवादस्थले लिङादिपदं कल्पनीयं । तथा च लिङादिसमविव्याहृतस्यैव प्रमाणत्वेनार्थवादस्याप्रमाण्यमित्यसङ्गतमित्यर्थः यद्वा यत्र लिङादिपदसमभिव्याहारो नास्ति तद्वाक्यं मूकं यदि तदा पुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ कथमर्थावगमोऽन्यथा तादृशवाक्यश्रवणोत्तर मुखप्रसादमालिन्ये न स्याता तत्र यदि लिङादिपद कल्पनीय तदा सर्वत्र कल्प्यता तथा च सर्वत्र लिङादिपदसमभिव्याहाराल्लिङ्गादिपदसमभिव्याहारो नास्तीत्युक्त तदसङ्गत लिङ्गादिसमभिव्याहृतस्यैव प्रामाण्यमित्यप्यसङ्गतमित्यभिप्रायवानाह नन्विति । अथ पुत्रस्ते जात इत्यादावन्यथानुपपत्त्या लिङादिपद कल्प्यता सर्वत्र तु तत्कल्पने मानाभाव इत्यभिप्रायवान्समाधत्ते द्विविधा हीति । तदेवोपसंहरति तथा चेति । तथा च लिङादिसमभिव्याहृतपदस्यैव प्रामाण्य तस्यैवानुभाविका शक्तिस्तादृशशक्तपदादेव कार्यताविषयकशाब्दबोधः । सिद्धार्थस्थने तु लिङादिपदसमभिव्याहाराभावात्तेषूक्तमेवाप्रामाण्यमिति नानुपपत्तिलेशोपीति भावः । तत् घटादिपदं । अन्वयबोधं कार्यत्वान्वयबोधं तदुपस्थितेः । कार्यत्वोपस्थितेः । नार्थवादस्येति । कार्यतावाचकपदसमभिव्याहाराभावान्नार्थवादस्य प्रामाण्यमित्यर्थः । तत् अन्यलभ्यत्त्व । घटमात्रेति । तथा च केवलव्यक्तावेव शक्तिर्न तु जात्यंशेपीति भावः । अस्त्वित्यनन्तरं परन्त्विति पूरणीयं सा कार्यान्विते शक्तिकल्पना गौरवात् घटत्वस्य शक्यताच्छेदकत्वापेक्षया कार्यान्वितघटत्वस्य घटशाब्दत्वापेक्षया कार्यान्वितघटशाब्दत्वस्य च गौरवात् ।

**अथैवं चरमप्रवृत्ता घटमात्रशक्तिकल्पना कथं प्रथमप्रवृत्तां बलवतीं कार्यत्वान्वितशक्तिकल्पनां**

बाधितुमिष्टेति चेत्प्रथमकल्पनाया बलवत्वासिद्धेः न हि प्रथम प्रवृत्तमेव बलवच्चन्द्रतारकाद्यल्पतायाः प्रथमप्रतीतायाः शास्त्रजतन्महत्वप्रतीत्या बाधानापत्तेः। चरमकल्पनाया लाघवसहायतया बलवत्वाच्च। किञ्चैवं काव्यादिभ्योऽनुभवसिद्धोऽन्वयानुभवो न स्यात्। न चासंसर्गाग्रहमात्रं तत्र न तु संसर्गानुभव इति वाच्यम्। घटमानयेत्यत्रापि तदापत्तेः तथा च गतं शब्दप्रामाण्यप्रत्याशयापि ॥

एवं प्रथम कार्यान्विते शक्तिस्वीकारे। दृष्टा समर्था तन्महत्वप्रतीत्या चन्द्रताराादिमहत्वप्रतीत्या ॥

ननु चन्द्रताराादिस्वल्पताया भवतु महत्वप्रतीतिर्बाधिका तत्कल्पने शास्त्रस्य सहायत्वात्। चरमप्रवृत्तघटमात्रशक्तिकल्पनाया सहायाभावात् कथ सा शक्तिर्बलवत्तरकार्यान्वितशक्तिकल्पनाया बाधिका भविष्यतीत्यत आह चरमेति। ननु चरमप्रवृत्तघटमात्रशक्तिकल्पनाया लाघवसहायत्वन्तया प्रथमप्रवृत्तत्वेन कार्यान्वितशक्तिकल्पनायाः सामग्रीसहकृतत्वेन बलवत्तरत्वमस्त्वेवेति कथमियमपिबाध्यतत्यत आह किञ्चैवं काव्यादिभ्य इति। यद्वा नन्वमुकपदं कार्यान्विते शक्तमित्याकारकातिरिक्तशक्तिग्रहस्यालीकत्वेन कार्यान्वितशाब्दबोधातिरिक्तशाब्दबोधस्यालीकत्वेन च तादृशशक्तिग्रहत्वेन तादृशशाब्दबोधत्वेन कार्यकारणभावात् कार्यान्विते शक्तिरवश्य वाच्येति किं लाघवगौरवविचारेणेत्यत आह किं चैवमि त्यादि। अथ वा ननु विधिपदसमभिव्याहृतानामेवपदाना कार्यताबोधकत्वेन तेष्वेव शक्तिग्रहो वाच्यस्तथा च तेषामेव शाब्दबोधजनकत्वे विलीयेत् कविकाव्यादिस्थलेऽनुभवसिद्धोन्वयबोध इत्याह कि चैवमिति घटमानयेति। काव्यादिभ्योऽनुभवसिद्धशाब्दबोधस्यासंसर्गाग्रहमात्रपरत्वे-

नानुभावापलापे घटमानयेत्यतो घटानयनानुभवस्यापि विलोपापत्तेरित्यर्थः । तथाचेति । तुल्ययुक्त्या विधिसमभिव्याहृतस्थलेऽनुभवापलापापत्त्या शब्दस्य प्रमाजनकत्वाभावे गतं शब्दस्य प्रामाण्यप्रत्याशयेति भावः ।

किं चैवमर्थवादरूपाणां श्रुतिस्मृतीतिहासपुराणादीनामप्रामाण्यं स्यात्तथा च सुष्टूपहासितं मिश्रैः प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकर इति प्रतारकः कश्चिद्वर्णव्यत्यासलिपिसादृश्याभ्यां प्रभाकर इति गृहीतो लोकैरिति युक्तमुत्पश्यामः ।

ननु घटोऽस्तीत्यादौ लिङादिपदसमभिव्यहाराभावाद्वत्वसंसर्गाग्रहमात्र घटमानयेत्यादौ तु तत्समभिव्याहाराच्छाब्दबोधो भवत्येवेत्यत आह किं चैवमिति । एव लिङादिसमभिव्याहृतेष्वेव शक्तिस्वीकारे । अर्थवादरूपाणामिति । तेषां लिङादिसमभिव्याहाराभावादप्राण्य स्यादित्यर्थः । बुद्धबन्धुरिति । अर्थवादरूपश्रुत्यादीनामप्रामाण्यस्वीकारेण बुद्धबन्धुत्वमित्यर्थः । वर्णव्यत्यासलिपिसादृश्याभ्यामिति । रकारककारयोर्व्यत्यासेन गौडाक्षरे तकारभकारयोः सादृश्येन च तथा च प्रतारक इति वक्तव्ये प्रभाकर इत्युक्तिर्लोकाना भ्रान्तिप्रयुक्तेत्यर्थः ।

ननु यदि शक्तिग्रहः सहकारी तदा गङ्गापदात्तीरप्रत्ययो न स्यादिति चेन्न । शक्तिर्हि न तत्वेन प्रयोजिका किन्तु वृत्तित्वेन । अस्ति च गङ्गापदस्यापि तीरे वृत्तिर्लक्षणैव । अथ केयं लक्षणानाम शक्यादशक्योपस्थितिर्लक्षणेत्येके तन्न । उपस्थितिहेतुर्हि वृत्तिर्न तु सैव । अशक्ये तात्पर्यं लक्षणेत्यन्ये तन्न । अन्वयेपि तात्पर्यस्य लक्षणात्वापत्तेः किं च

तात्पर्यनिर्वाहिका हि वृत्तिर्न तु तदात्मिकैव शक्तेरपि तत्वापत्तेः। उच्यते स्वशक्यसम्बन्धो लक्षणा अस्ति हि गङ्गापदशक्यः प्रवाहविशेषस्तत्सम्बन्धस्तीर इति। स च लक्षणा द्विविधा गौणी शुद्धा च तत्र सादृश्यात्मकः शक्यसम्बन्धो गौणी यथा गौर्वाहिक इति। तदन्यां शुद्धा यथाऽऽयुर्घृतमिति। ·

ननु न्यायनये शक्तिरीच्छारूपा परनयेऽतिरिक्ता तस्याः शक्तिग्रह त्वेन ज्ञान न कारणं किं तु शाब्दानुकूलज्ञानविषयपदार्थसम्बन्धवत्पद मित्याकारकशक्तिज्ञान कारण तादृशपदसम्बन्धत्व लक्षणायामप्यस्तीति लक्षणा निरूपयति नन्विति अथ वा वृत्त्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारणं तत्र वृत्तिःशक्तिलक्षणान्यतरसम्बन्धस्तत्र क्रमप्राप्ता शक्तिं प्रतिपाद्य लक्षणां प्रतिपादयितु भूमिकामारचयति। नन्वित्यादिना। यद्वा। यदि शक्त्या पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारण तदा लाक्षणिकगङ्गापदात्तीरबोधो न स्यादित्याह नन्विति। तत्वेन शक्तित्वेन वृत्तित्वेनेति। तथा च वृत्त्या पदजन्यपदार्थोपस्थितेः शाब्दबोधे कारणत्वमित्यर्थः। अस्तिचेति। गङ्गापदस्य लक्षणारूपवृत्तेः सत्वादित्यर्थः। ननु सादृश्यरूपशक्यसम्बन्धेनोपस्थितिर्गौणी साच वृत्त्यन्तरमिति प्राचा मत तन्न समीचीन तस्या लक्षणान्तर्गतत्त्वेन निर्वाहे वृत्त्यन्तरकल्पने गौरवादृइत्यभिप्रायवतां मतं दूषयितुमाह शक्येत्यादिना॥ गङ्गपदशक्यप्रवाहादशक्यतीरस्योपस्थितिरित्यर्थः। उपस्थितीति वृत्त्या पदार्थोपस्थितिर्जायते न तु पदार्थोपस्थितिरूपा वृत्तिरित्यर्थः। अशक्ये तात्पर्य्य व्यञ्जना सा च वृत्त्यन्तरं। अन्यथा गङ्गाया घोष इत्यादौ शैत्यपावनत्वादिकञ्च बुध्येत गङ्गापदेन लक्षणया तीरस्यैव बोधनादित्यलङ्कारिकमतं तच्चायुक्त शैत्यपावनत्वादिविशिष्टस्य तीरस्य लक्षणयैव प्रतीतिसम्भवादलव्यञ्जनयेत्यभिप्रायवतः कस्यचिल्लक्षणं दूषयितुमाह अश-

क्येति॥ अन्वयेति। अशक्यस्याप्यन्वयस्य ता त्पर्यविषयया शाब्दबोधे भास-मानत्वादन्वयतात्पर्य्यस्यापि लक्षणात्वापत्तेरित्यर्थः । ननु तर्ह्यन्वयभि-न्नाशक्ये तात्पर्यं लक्षणेत्युच्यतामित्यत आह किं चेति । गङ्गायां घोष इत्यत्र तीरे घोषान्वयस्य तात्पर्यविषयत्वेसति तीरे घोषस्यानन्वये तात्पर्यमनुपपन्नमिति गङ्गापदस्य तीरे लक्षणा वाच्येति । तथा च लक्षणयैव तात्पर्यस्योपपन्नत्त्वन्न लक्षणायास्तात्पर्यात्मकत्वमिति भावः । तदा त्मिका तात्पर्यात्मिका । तथात्वापत्तेः तात्पर्यात्मकत्वापत्तेः । स्वं गङ्गादिपदं। गौणी लक्षणाभेद एवेत्यभिप्रायेणाह द्विविधेति। गौणीति। गौणी तु लक्षितलक्षणैव तथा हि यत्र वाच्यपरंपरासम्बन्धेन बोधस्तत्र लक्षितलक्षणा। यथा सिंहो माणवकः। अत्र सिंहपदवाच्यसम्बन्धिशौर्यादि-सम्बन्धेन माणवकबोधः तदेवाह सादृश्यात्मक इति सादृश्यमेव यत्र सम्बन्धः सा गौणी तथा च शक्यस्य परंपरासम्बधः सादृश्यमेवेति भावः। स्वय निदर्शन दर्शयति यथेति गोपदवाच्यसम्बन्धिजाड्यादेः सादृश्यसम्बन्धेन वाहीकबोध इति गोनिष्ठजाड्यमायादिकेन वाहीको लक्ष्यत इत्यर्थः। एवं द्विरेफपदेपि लक्षितलक्षणैव तत्र रेफद्वयसहितभ्रम-रपदवाच्यन्वसम्बन्धेन भ्रमरत्वविशिष्टावबोध इति। गुरवस्तु स्ववाच्यपद-द्वयघटितवाच्यत्त्वसम्बन्धो लक्षितलक्षणा । द्विरेफपदस्य स्ववाच्यपदद्वय-घटित भ्रमरपद वर्बरपदं च तद्वाच्यत्व भ्रमरे वर्बरेच शक्यसम्बन्धः सैव लक्षितलक्षणेत्याहुः । यत्तु द्वै रेफौ यत्रेति बहुव्रीहिविधया रेफद्वयवत्त्वेन भ्रमरपद लक्ष्यते । भ्रमरपदेन च भ्रमरत्वजातिविशिष्ट लक्ष्यत इतीयमेव लक्षितलक्षणेति । तन्न । भ्रमरत्वजातिविशिष्टे शक्तेः सत्वादिति । ननु तथापि बहुव्रीहिपदलक्षणयोपस्थित भ्रमरपदं शक्त्यैव भ्रमरत्वविशिष्ट-स्वार्थबोध जननसमर्थमिति द्विरेफपदे लक्षितलक्षणास्वीकारो न युक्तः द्विरेफं पश्येत्यादौ द्वितीयार्थकर्मत्वादेर्भ्रमरत्वविशिष्टेऽन्वयानापत्तेर्भ्रमर-पदेऽन्वयापत्तेश्च प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वव्युत्पत्तेः । न च प्रकृत्या साक्षात्परंपरासाधारण्येनोपस्थापिते प्रत्ययार्थान्वयः सङ्कोचे

प्रमाणाभावादिति साम्प्रतं । परंपरोपस्थापकाभावेन साक्षादुपस्थापित एव प्रत्ययार्थान्वयस्य वक्तु युक्तत्वात् । परंपराघटिका वृत्तिरेवेत्यत्र प्रमाणाभवेन घटपरपरया घटपदोपस्थितगगनादेरपि घटज्ञानीहोत्यादौ कर्मत्वान्वयस्य दुर्वारत्व ज्ञानविषयतया बोधापत्तेः । अस्तु वा साक्षात्परंपरासधारण्येन प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकता तथाप्युपस्थितेस्तुल्यत्वाद्भ्रमरत्वजातिविशिष्ट इव भ्रमरपदेऽपि कर्मतान्वयः स्यात् । न च तात्पर्यस्याप्यन्वयबोधनियामकतया भ्रमरत्वजातिविशिष्टस्यैवान्वियितावच्छेदकावच्छिन्नत्वेन तत्रैवान्वयो न पद इति वाच्यम् । युगपत्तात्पर्यान्तरे भ्रमरपदघटकानपूर्व्या अप्यन्वयितायितावच्छेदकतया तदवच्छिन्नस्य कर्मत्वान्वयापत्तेर्दुवारत्वात् । न चेष्टापत्तिरपसिद्धान्तादिति युक्तमुत्पश्यामः । तदन्येति । तदन्या गौण्यन्या । तथा च सादृश्यान्यः सम्बन्धो यत्र बुध्यते सा शुद्धेत्यर्थः । शुद्धा त्रिविधा जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्थेति । यत्र शक्यान्तर्भावमन्तरेणार्थान्तरप्रतिपादकत्व तत्र जत्स्वार्थत्व तत्र निदर्शनं दर्शयति यथेति । अत्र सादृश्यातिरिक्तः सम्बन्धः कार्यकारणभावस्तथा चायुर्घृतमित्यत्रायुः पदमायुर्जनके लाक्षणिकं अत्र ह्यायुः पद स्वार्थजीवनान्तर्भावमन्तरेणापि तज्जनकरूपार्यान्तरप्रतिपादकमिति । एव गङ्गायां घोष इत्यत्र गङ्गापद स्वार्थप्रवाहान्तर्भावमन्तरेणापि तीररूपार्थान्तर लक्षयति । अत्र जहत्स्वार्थलक्षणा । एव अजहत्स्वार्था यत्रेति व्युत्पत्त्या स्वार्थविशेष्यकान्वयबोधिका हि अजहत्स्वार्थलक्षणा । यथा छत्रिणो यान्ति काकेभ्यो दधिरक्ष्यतामित्यादौ छत्रिपदस्य छत्र्यछत्रिवृत्तिबहुत्वे लक्षणा मतुपस्तदाश्रयबोधकत्व । तथा च छत्र्यछत्रिवृत्तिबहुत्वशालिनो यान्तीत्यर्थः । ननु यदि छत्रिपदस्य छत्र्यछत्रिवृत्तिबहुत्व लक्षणा तर्हि जहत्स्वार्थापत्तिरिति चेन्न । बहुत्वस्य लक्षणावच्छेदकत्वात्तद्विशिष्टे लक्षणास्वीकारः तुल्ययुक्त्या शक्यतावच्छेदके शक्तिवल्लक्ष्यतावच्छेदके लक्षणास्वीकारः इति । अत्र च लक्ष्यतावच्छेदकत्व व्यासज्यवृत्ति यथा पुष्पवन्तादिपदस्थले एकयैव

मासिकोऽध्यापकः । मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः ॥

मासाद्वयसि यत्खञौ ॥ ५ । १ । ८१ ॥

मासं भूतो मासीनः । अर्थान्तरे तु प्रत्ययार्थेन वयो न गम्यते ॥

द्विगोर्यप् ॥ ५ । १ । ८२ ॥

मासाद्वयसि इत्यनुवर्तते । यत्खञोरपवादः । द्वौ मासौ भूतो द्विमास्यः ॥

षण्मासाण्ण्यच्च ॥ ५ । १ । ८३ ॥

वयसीत्येव । यबप्यनुवर्तते । चाट्ठञ् ॥ षाण्मास्यः । षाण्मासिकः । षण्मास्यः ॥

अवयसि ठंश्च ॥ ५ । १ । ८४ ॥

चाण्ण्यत् । षण्मासिको व्याधिः । षाण्मास्यः । तेन परिजय्येत्यतः प्राक् निर्वृत्तादिषु पञ्चस्वर्थेषु यथायोगं प्रत्ययाः ॥

समायाः खः ॥ ५ । १ । ८५ ॥

समया निर्वृत्तः समामधीष्टो भृतो भूतो भावी वा समीनः ॥

द्विगोर्वा ॥ ५ । १ । ८६ ॥

समायाः ख इत्येव ॥ द्विसमीनः । द्वैसमिकः ॥

रात्र्यहःसंवत्सराच्च ॥ ५ । १ । ८७ ॥

द्विगोरित्येव । द्विरात्रीणः । द्वैरात्रिकः । द्व्यहीनः । द्वैयन्हिकः । समासान्तविधेरनित्यत्वान्न टच् । द्विसंवत्सरीणः । द्विसांवत्सरिकः ॥

वर्षाल्लुक् च ॥ ५ । १ । ८८ ॥

वर्षशब्दांताद् द्विगोर्वा खः। पक्षे ठञ्। वा च लुक्। द्विवर्षीणो व्याधिः। द्विवार्षिकः। वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः। भविष्यति तु द्वैवार्षिकः। द्विवर्षः।

**चित्तवति नित्यम्। ५। १। ८९॥**

वर्षशब्दांताद् द्विगोः प्रत्ययस्य नित्यं लुक् स्यात् चेतने प्रत्ययार्थे॥ द्विवर्षो दारकः। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणं भूतेऽर्थे एव नित्यो लुगन्यथा स्यादित्येवमर्थमिति हरदत्तः। तेनेह न। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः। इहाभविष्यतीत्यपि प्रतिषेधो न। गम्यते ह्यत्र भविष्यत्ता न तु तद्धितार्थः॥

**षष्टिकाः षष्टिरात्रेण पच्यंते। ५। १। ९०॥**

बहुवचनमतन्त्रम्॥ षष्टिको धान्यविशेषः। तृतीयान्तात्कन् रात्रशब्दलोपो निपात्यते॥

**वत्सरान्ताच्छश्छन्दसि। ५। १। ९१॥**

निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः॥

**सम्परिपूर्वात्ख च। ५। १। ९२॥**

छन्दसीत्येव। चाच्छः। संवत्सरीणः। संवत्सरीयः। परिवत्सरीयः। परिवत्सरीणः॥

**तेन परिजय्यलभ्यकार्यसुकरम्। ५। १। ९३॥**

मासेन परिजय्यो जेतुं शक्यो मासिको व्याधिः। मासेन लभ्यं कार्यं सुकरं वा मासिकम्॥

**तदस्य ब्रह्मचर्यम्। ५। १। ९४॥**

द्वितीयांतात्कालवाचिनो ऽस्येत्यर्थे प्रत्ययः स्यात् ॥ अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । आर्द्धमासिकः । यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् । अत्र वाक्ये मासस्य प्राधान्यात्प्रथमैव न तु द्वितीया । तस्याः षष्ठीविषये विधानात् ॥ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ॥ * ॥ महानाम्न्यो नाम विदामघवन्नित्याद्या ऋचः । तासां ब्रह्मचर्यं माहानाम्निकम् ॥ तच्चरतीति महानाम्न्यादिभ्य उपसंख्यानम् ॥ * ॥ महानाम्नीसहचरितं व्रतं महानाम्न्यः । महानाम्नीश्चरति माहानाम्निकः । हरदत्तस्तु भस्याढ इति पुंवद्भावान्माहानामिक इत्याह ॥ अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः ॥ * ॥ अवान्तरदीक्षां चरति अवान्तरदीक्षी । डित्करणमुत्तरार्थम् ॥ अष्टाचत्वारिंशतो ड्वुंश्च ॥ * ॥ चाड्डिनिः । अष्टाचत्वारिंशतं वर्षाणि व्रतं चरति प्रतिवेदं द्वादशवर्षाणि व्रतचरणात् । अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी । वृत्तिविषये वर्षेष्वेव संख्येयेष्वष्टाचत्वारिंशच्छब्दो वर्तते ॥ चातुर्मास्यानां यलोपश्च ॥ * ॥ चात् ड्वुन्डिनौ । चातुर्मास्यानि चरतीति चातुर्मासकः । चातुर्मासी ॥ चतुर्मासाण्ण्यो यज्ञे तत्र भवे ॥ * ॥ चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञाः ॥ संज्ञायामण् वक्तव्यः ॥ * चतुर्षु मासेषु भवति चातुर्मासी । आषाढी ॥

## तस्य दक्षिणा यज्ञाख्येभ्यः । ५ । १ । ९५ ॥

द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकालादपि । आग्निष्टोमिकी । वाजपेयिकी ॥

## तत्र च दीयते कार्यं भववत् । ५ । १ । ९६ ॥

प्रावृषि दीयते कार्यं वा प्रावृषेण्यम् । शारदम् । योगविभाग-स्त्वात्र कर्तव्यः । तत्र च दीयते यज्ञाख्येभ्य इति । अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तम् । प्राग्वतेः संख्यापूर्वपदानामिति वचनात् । द्वयो-र्वाजपेययोर्दीयते द्वैवाजपेयिकम् । कालाधिकारस्य पूर्णोऽवधिः ॥

## व्युष्टादिभ्योऽण् । ५ । १ । ९७ ॥

व्युष्टमहर्मुखं तत्र दीयते कार्यं वा वैयुष्टम् । अग्निपदे दीयते कार्यं वा आग्निपदम् । पैलुमूलम् । व्युष्टतीर्थप्रवासप्रयाम इत्यादि । अण्ग्रहणमनर्थकम् । भववदित्यनुवर्तिष्यते । तेना-णेव भविष्यति । न चैवं व्युष्टनित्यशब्दाभ्यां कालाट्ठञः प्रसङ्गः । पूर्वेणैव सिद्धत्वात् । सत्यम् । आदिशब्दस्य प्रकारवाचित्वेन वृद्धे-र्नस्य प्रवृत्तौ कः स्यात् । पठितेषु तु नास्ति दोषः ।

## तेन यथाकथा च हस्ताभ्यां णयतौ । ५ । १ । ९८ ॥

यथाकथाचेत्यव्ययसङ्घातात् तृतीयांताद्धस्तशब्दाच्च यथा-सङ्ख्यं णयतौ स्तः ॥ अर्थाभ्यां तु यथासङ्ख्य नेष्यते । यथाकथा च दीयते कार्यं वा याथाकथाचम् । अनादरेण देयं कार्यं वेत्यर्थः । हस्तेन दीयते कार्यं वा हस्त्यम् ।

## संपादिनि ॥ ५ । १ । ९९ ॥

तेनेत्येव ॥ अवश्य संपद्यते इत्यावश्यके णिनिः । संपत्ति-र्गुणोत्कर्षः । कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखम् । कर्णा-लङ्काराभ्यामवश्य शोभत इत्यर्थः ।

## कर्मवेषाद्यत् ॥ ५ । १ । १०० ॥

कर्मणा संपादि कर्मण्य शौर्यम् । वेषेण संपादी वेष्यो नटः । वेषः कृत्रिम आकारः ।

**तस्मै प्रभवति सन्तापादिभ्यः ॥ ५ । १ । १०१ ॥**

सन्तापाय प्रभवति सान्तापिकः । सांग्रामिकः ॥

**योगाद्यच्च ॥ ५ । १ । १०२ ॥**

चाट्ठञ् । योगाय प्रभवति योग्यः । यौगिकः ।

**कर्मण उकञ् ॥ ५ । १ । १०३ ॥**

कर्मणे प्रभवति कार्मुकम् ।

**समयस्तदस्य प्राप्तम् ॥ ५ । १ । १०४ ॥**

समयः प्राप्तोऽस्य सामयिकम् ।

**ऋतोरण् ॥ ५ । १ । १०५ ॥**

ऋतुः प्राप्तोऽस्य आर्तवम् ॥ उपवस्त्रादिभ्य उपसंख्यानम् ॥ * ॥ उपवस्ता उपवासस्य कर्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् ।

**छन्दसि घस् ॥ ५ । १ । १०६ ॥**

ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे ॥ भाग ऋत्वियः ।

**कालाद्यत् ॥ ५ । १ । १०७ ॥**

कालः प्राप्तोऽस्य काल्यं शीतम् ॥

**प्रकृष्टे ठञ् ॥ ५ । १ । १०८ ॥**

कालादित्येव । तदस्येति च । प्रकृष्यतेऽयमिति प्रकृष्टः । कर्मणि क्तः कालश्चानेन विशेष्यते । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् । ठञ्ग्रहणं स्पष्टार्थमन्यथाऽनन्तरस्य यतोऽनुवृत्तिः शङ्क्येत ॥

**प्रयोजनम् ॥ ५ । १ । १०९ ॥**

तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च ।

**विशाखाषाढादण्मन्थदण्डयोः ॥ ५ । १ । ११० ॥**

आभ्यामण् स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः ॥ विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो व्रतिनां दण्डः । वैशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते तयोर्यथाकथञ्चिद्व्युत्पत्तिः क्रियते ॥ चूडादिभ्य उपसंख्यानम् ॥ * ॥ चूडा । चौडम् । श्रद्धा । श्राद्धम् ।

**अनुप्रवचनादिभ्यश्छः ॥ ५ । १ । १११ ॥**

अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् ॥ विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् ॥ * ॥ गेहानुप्रवेशनीयम् । प्रपापूरणीयम् । गोप्रपदनीयम् । प्रासादारोहणीयम् ॥ स्वर्गादिभ्यो यत् ॥ * ॥ स्वर्ग्यम् । धन्यम् । यशस्यम् । आयुष्यम् ॥ पुण्याहवाचनादिभ्यो लुग् वक्तव्यः ॥ * ॥ पुण्याहवाचनम् ।

**समापनात्सपूर्वपदात् ॥ ५ । १ । ११२ ॥**

व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयम् ।

**ऐकागारिकट् चौरे ॥ ५ । १ । ११३ ॥**

एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागारिकश्चोरः । ससहाये तु गृहे मोषितुं न शक्यते । एतच्च सूत्रं भाष्ये प्रत्याख्यातम् । तथा च वार्तिकम् । एकागारान्निपातनानर्थक्यं ठञ्प्रकरणादिति । इह कस्मान्न भवति । एकागारं प्रयोजनमस्य भिक्षोरिति । एकागारं चरेद्भैक्षं तत्पुराणं मुनेर्व्रतमिति शास्त्रात् । अनभिधानात् । एतेन टित्वं नियमार्थं ङीबेव भवति न ञित्स्वर इत्यपास्तम् । ञित्स्वरस्येष्टत्वात् ।

**आकालिकडाद्यन्तवचने ॥ ५ । १ । ११४ ॥**

समानकालावाद्यन्तौ यस्येत्याकालिकः। समानकालस्याकाल आदेशः। आशु विनाशीत्यर्थः। पूर्वदिवसे मध्यान्हादौ उत्पद्य दिनान्तरे तत्रैव नश्वर इति वा ॥ आकालाट्ठंश्च ॥ * ॥ आकालिकी। आकालिका विद्युत्। ठञः पूर्णोऽवधिः ॥

**तेन तुल्यं क्रिया चेद्वतिः ॥ ५ । १ । ११५ ॥**

ब्राह्मणेन तुल्यं ब्राह्मणवदधीते। क्रिया चेत्किम्। गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः।

**तत्र तस्येव ॥ ५ । १ । ११६ ॥**

मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवत् मैत्रस्य गात्रः।

**तदर्हम् ॥ ५ । १ । ११७ ॥**

विधिमर्हति विधिवत्पूज्यते। क्रियाग्रहणं मण्डूकप्लुत्याऽनुवर्तते। तेनेह न। राजानमर्हति छत्रम्।

**उपसर्गाच्छन्दसि धात्वर्थे ॥ ५ । १ । ११८ ॥**

धात्वर्थविशिष्टे साधने वर्तमानोपसर्गात्स्वार्थे वतिः स्यात् ॥ यदुद्वतो निवतः। उद्गतान्निर्गतानित्यर्थः।

**तस्य भावस्त्वतलौ ॥ ५ । १ । ११९ ॥**

प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। गोता। त्वान्तं क्लीबम्। तलन्तं स्त्रियाम्। इह नानात्वं सहत्वं यौगपद्यमित्यादौ वृत्तिविषये नानाशब्दो असहभूतेऽर्थे वर्तते। सहशब्दश्च सहभूते। युगपच्छब्दश्च युगपद्भूते। ततोऽसहभावादौ भावप्रत्ययः। एवमन्यत्रापि यथासंभवं द्रष्टव्यम्। इह न ब्राह्मणस्य भाव

इति युगपद्भावे नञर्थेन च संबंधे विवक्षिते पूर्वं नञ्समासः पश्चात् त्वतलौ तेनाब्राह्मणत्वमब्राह्मणतेति । सति शिष्टत्वात् त्वप्रत्ययस्वरः । तलि लित्स्वरेण मध्योदात्तत्वं भवति । न त्वव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । परत्वात्तु त्वतलौ न प्राप्नुतः । सापेक्षत्वात् । ब्राह्मणार्थो ह्यत्र नञर्थमपेक्षते । नन्वेवं नञ्समासोऽपि तर्हि न प्राप्नोति । ब्राह्मणस्य भावापेक्षत्वात् । नैष दोषः । प्रधानं ह्यत्र ब्राह्मणपदम् । उत्तरपदार्थप्रधानो नञ्समासः । भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः । यथा राजपुरुषोऽभिरूप इति । वा छन्दसि । छन्दसि विषये क्वचित्पूर्वं त्वतलौ । पश्चान्नञ्समासः । अयोनित्वाय । अशिथिलत्वाय । अत्र नञ्स्वर एव भवति । क्वचिद्विपर्ययः । त्वतलव्यतिरिक्ते भावप्रत्यये पूर्वं स एवेष्यते पश्चान्नञ्समासः । तेनाप्रथिमेत्यादौ सति शिष्टत्वान्नञ्स्वर एव भवति । अशौक्ल्यमित्यादौ च नञः प्रकृतावनन्तर्भावात् शुक्लादौ वृद्धिः । पूर्वं तु नञ्समासे न नञ्पूर्वादिति प्रतिषेधात् ष्यञेव न स्यात् । सत्यपि वा ष्यञि नञो वृद्धिः स्यात् । ज्ञापकात्सिद्धम् । यदयं युवादिषु पुरुषासे हृदयासे इति नञ्समासे विषयभूते भावप्रत्ययप्रतिषेधं शास्ति तज्ज्ञापयति त्वतलपवादः प्रत्ययो नञर्थापेक्षादपि परत्वान्नञ्समासं बाधित्वा भवतीति ।

### आ च त्वात् ॥ ५ । १ । १२० ॥

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थम् । गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता । सवनादित्वात् ह्रस्वात्तादाविति षत्वं न ।

## न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः । ५ । १ । १२१ ॥

इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा ॥ अपतित्वम् । अपटुत्वम् । नञ्पूर्वात्किम् । बार्हस्पत्यम् । तत्पुरुषात्किम् । नास्य पटवः सन्तीत्यपटुस्तस्य भावः आपटवम् । अचतुरेति किम् । आचतुर्यम् । आसंगत्यम् । आलवण्यम् । आवट्यम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् । बहु कृते नञ्समासे ब्राह्मणादेराकृतिगणत्वात् ष्यञ् ।

## पृथ्वादिभ्य इमनिज्वा । ५ । १ । १२२ ।

वावचनमणादिसमावेशार्थम् । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् ।

## वर्णदृढादिभ्यः ष्यञ् च । ५ । १ । १२३ ॥

चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा । षो ङीषर्थः । औचिती । याथाकामी ।

## गुणवचनब्राह्मणादिभ्यः कर्मणि च । ५ । १ । १२४ ।

चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मौढ्यम् । ब्राह्मण्यम् । अर्हतो नुम् च । अर्हतो भावः कर्म वा आर्हन्त्यम् । आर्हन्ती । ब्राह्मणादिराकृतिगणः ॥ आपादसमाप्तेर्भावकर्माधिकारः ॥ चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् ॥ * ॥ चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सांनिध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यमित्यादि । सर्वे वेदाः सर्ववेदास्तानधीते सर्ववेदः । सर्वादेरिति लुक् । स एव सार्ववेद्यः ।

चतुर्वेदस्योभयपदवृद्धिश्च । चतुरो वेदानधीते चतुर्वेदः । स एव चातुर्वैद्यः । चतुर्विद्यस्येति पाठान्तरम् । चतुर्विद्य एव चातुर्वैद्यः ।

स्तेनाद्यन्नलोपश्च । ५ । १ । १२५ ॥

स्तेनेति संघातग्रहणम् । स्तेन चौर्ये पचाद्यच् । स्तेनस्य भावः कर्म वा स्तेयम् । स्तेनादिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति ।

सख्युर्यः । ५ । १ । १२६ ॥

सख्युर्भावः कर्म वा सख्यम् । दूतवणिग्भ्यां च । दूतस्य भावः कर्म वा दूत्यं वणिज्यमिति काशिका । माधवस्तु वणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः । भाव एवाच प्रत्ययो न तु कर्मणीत्याह । भाष्ये तु दूतवणिग्भ्यां चेति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि ।

कपिज्ञात्योर्ढक् । ५ । १ । १२७ ।

कापेयम् । ज्ञातेयम् ।

पत्यन्तपुरोहितादिभ्यो यक् । ५ । १ । १२८ ॥

सैनापत्यम् । पौरोहित्यम् । राजाऽसे । राजशब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम् ।

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।५।१।१२९॥

प्राणभृज्जाति । आश्वम् । औष्ट्रम् । वयोवचन । कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् ।

हायनान्तयुवादिभ्योऽण् । ५ । १ । १३०॥

द्वैहायनम्। यौवनम्। स्थाविरम्॥ श्रोत्रियस्य यलोपश्च॥ *॥ श्रौत्रम्। कुशलचपलनिपुणपिशुनकूतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते। कौशलम्। कौशल्यमित्यादि।

**इगन्ताच्च लघुपूर्वात्। ५। १। १३१॥**

शुचेर्भावः कर्म वा शौचम्। मौनम्। कथं काव्यम्। कविशब्दस्य ब्राह्मणादित्वात्। इगन्तात्किम् घटत्वम्। लघुपूर्वात्किम्। पांडुत्वम्।

**योपधाद् गुरूपोत्तमाद् वुञ्। ५। १। १३२॥**

रामणीयकम्। आभिधानीयकम्। योपधात्किम्। कुलीनत्वम्। गुरूपोत्तमात्किम्। क्षत्रियत्वम्। सहायाद्वा। पक्षे ब्राह्मणादित्वात् ष्यञ्। साहाय्यम्। साहायकम्।

**द्वन्द्वमनोज्ञादिभ्यश्च। ५। १। १३३॥**

शैष्योपाध्यायिका। गौपालपशुपालिका। कौत्सकुशिकिका। मानोज्ञकम्।

**गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु। ५। १। १३४॥**

श्लाघादिषु विषयभूतेष्वित्यर्थः। अत्याकारोऽधिक्षेपः। तदवेतस्ते गोत्रचरणयोर्भावकर्मणी प्राप्तः अवगतवान्वा। गार्गिकया श्लाघते। गार्ग्यत्वेन विकत्थत इत्यर्थः। गार्गिकयात्याकुरुते। गार्गिकामन्ववेतः। एवं काठिकया श्लाघत इत्यादि।

**होत्राभ्यश्छः। ५। १। १३५॥**

होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः। बहुवचनाद्विशेषग्रहणम्। अच्छावाकस्य भावः कर्म वा अच्छावाकीयम्। मैत्रावरुणीयम्।

ब्रह्मणस्त्वः । ५ । १ । १३६ ॥

होत्रावाचिनो ब्रह्मशब्दात् त्वः स्यात् ॥ छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद् ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम् । ब्रह्मता । नञ्स्नञो-र्धिकारः समाप्तः ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ पञ्चमस्याध्यायस्य प्रथमः पादः समाप्तः ॥



# अथ पञ्चमाध्यायस्य द्वितीयः पादः ।

---

**धान्यानां भवने क्षेत्रे खञ् । ५ । २ । १ ।**

भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ।

**व्रीहिशाल्योर्ढक् । ५ । २ । २ ॥**

व्रैहेयम् । शालेयम् ।

**यवयवकषष्टिकाद्यत् । ५ । २ । ३ ॥**

यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ।

**विभाषा तिलमाषोमाभङ्गाणुभ्यः । ५ । २ । ४ ॥**

यद्वा स्यात् । पक्षे खञ् । तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् ।

**सर्वचर्मणः कृतः खखञौ । ५ । २ । ५ ॥**

असामर्थ्येऽपि निपातनात्समासः । सर्वश्चर्मणा कृतः सर्वचर्मीणः । सार्वचर्मीणः ।

**यथामुखसंमुखस्य दर्शनः खः । ५ । २ । ६ ॥**

दृश्यतेऽस्मिन्निति दर्शन आदर्शादिः । मुखस्य सदृशं यथामुखं प्रतिबिम्बम् । निपातनात्सादृश्येऽव्ययीभावः । समं सर्वं मुखं संमुखम् । समशब्दस्यान्तलोपो निपात्यते । यथामुखं दर्शनः यथामुखीनः । सर्वस्य मुखस्य दर्शनः संमुखीनः ।

**तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति । ५ । २ । ७ ॥**

सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात्खः स्यात् ॥ सर्वपथान् व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ॥

**आप्रपदं प्राप्नोति । ५ । २ । ८ ॥**

पादस्याग्रं प्रपदं तन्मर्यादीकृत्य आप्रपदम् । आप्रपदीनः पटः ॥

**अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु । ५ । २ । ९ ॥**

अनुरायामे सादृश्ये वा । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः । अयानयः स्थलविशेषः । तं नेय अयानयीनः शारः ॥

**परोवरपरंपरपुत्रपौत्रमनुभवति । ५ । २ । १० ॥**

परांश्च अवरांश्च अनुभवति परोवरीणः । अवरस्यादेरुत्वं निपात्यते । परांश्च परतरांश्च अनुभवति परम्परीणः । प्रकृतेः परम्परभावो निपात्यते । पुत्रपौत्रमनुभवति पुत्रपौत्रीणः । परम्परा शब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गं तस्मादेव स्वार्थे ष्यञि पारम्पर्यम् । कथं पारोवर्यवदिति । असाधुरेवायम् । खप्रत्ययसन्नियोगेनैव परोवरेति निपातनात् ॥

**अवारपारात्यन्तानुकामं गामी । ५ । २ । ११ ॥**

अवारपारं गामी अवारपारीणः । अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी अनुकामीनः । यथेष्टं गन्ता ॥

**समांसमां विजायते । ५ । २ । १२ ॥**

समायां समायामित्यत्र यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते । समांसमीना गौः । समांसमीना सा येव प्रतिवर्षं

प्रसूयते ॥ खप्रत्ययानुत्पत्तौ पदद्वयेपि यलोपो वा वक्तव्यः ॥ * ॥ समासमां विजायते। समायां समायां वा ॥

## अद्यश्वीना ऽवष्टब्धे। ५। २। १३॥

अवष्टब्धमासन्नम्। अद्य श्वो वा विजायते अद्यश्वीना वडवा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्तयन्ति। अद्यश्वीनं मरणम्। आसन्नमित्यर्थः॥

## आगवीनः। ५। २। १४॥

आङ् पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्यंतं यः कर्म करोति स आगवीनः। वृत्तिविषये गोशब्द-गोप्रत्यर्पणे वर्तते॥

## अनुग्वलङ्गामी। ५। २। १५॥

अनुगु गोः पश्चात्पर्याप्तं गच्छति अनुगवीनो गोपालः॥

## अध्वनो यत्खौ। ५। २। १६॥

अध्वनो यत्खौ॥ अध्वानमलङ्गच्छति अध्वन्यः। अध्वनीनः। ये चाभावकर्मणोः आत्माध्वानौ खे इति प्रकृतिभावः॥

## अभ्यमित्राच्छ च। ५ २। १७॥

चाद्यत्खौ॥ अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः॥

## गोष्ठात्खञ् भूतपूर्वे। ५। २। १८॥

गोष्ठो भूतपूर्वः गौष्ठीनो देशः॥

## अश्वस्यैकाहगमः। ५। २। १९॥

एकाहेन गम्यते इत्येकाहगमः। आश्वीनोऽध्वा॥

शालीनकौपीने अधृष्टाकार्ययोः । ५ । २ । २०

रूढिशब्दावेतौ । अवयवार्थे तु नातीवाभिनिवेष्टव्यम् । शालाप्रवेशमर्हति शालीनोऽधृष्टः । कूपपतनमर्हति कौपीनं पापम् । तत्साधनत्वात्तद्वद्गोप्यत्वाद्वा पुरुषलिङ्गमपि । तत्सम्बन्धात्तदाच्छादनमपि ॥

व्रातेन जीवति । ५ २ । २१ ।

व्रातेन शरीरायासेन जीवति न तु बुद्धिवैभवेन स व्रातीनः

साप्तपदीनं सख्यम् । ५ । २ । २२ ॥

सप्तभिः पदैरवाप्यते साप्तपदीनम् ॥

हैयङ्गवीनं संज्ञायाम् । ५ । २ । २३ ।

ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् निपात्यते ॥ ह्यःशब्दस्य गोदोहशब्देन सुप्सुपेति समासः । दुह्यते इति दोहः क्षीरम् । अत्र ह्यःशब्देन कालप्रत्यासत्तिर्विवक्षिता । ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम् ॥

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ । ५ । २ । २४ ॥

पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ॥

पक्षात्तिः । ५ । २ । २५ ॥

मूलग्रहणमनुवर्त्तते । पक्षस्य मूलं पक्षतिः ॥

तेन वित्तश्चञ्चुप्चणपौ । ५ । २ । २६ ॥

यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः । तेन चस्य नेत्सञ्ज्ञा । विद्यया वित्तो विद्याचञ्चुः । विद्याचणः ॥

किञ्च ।

नाथाश्लेषसनाथनश्रुतिवधूवैधव्यखेदच्छिदं
प्राचीनान्नयपद्धतिं यतिपतिः प्राचीकशन्नैष चेत् ।
व्यासो हासपदीकृतो विगलितः प्राचेतसश्चेतसः
क्लृप्तः केलिशुकश्शुकस्स च मुधाबाधाय बोधायनः ॥ ४६ ॥

राजा–( स प्रसाद ) अभङ्गुरगुरुभक्तेरार्यस्यक इवनजेतव्यः । तथाहि

अशिथिलगुरुभक्तिस्तत्प्रशंसादिशील:
प्रचुरबहुमतिस्तद्वस्तुवास्तवादिकेपि ।
गुणवति विनियोक्तुं गोपयन्सम्प्रदायं
कृतविदनघवृत्तिः किन्नविन्देन्निधानं ॥ ४७ ॥

---

नाथेति–॥ नाथः प्रतिपाद्यतयास्वामीभर्ताच तस्याश्लेषेण प्रतिपाद्यप्रतिपादकभावरूपसंबन्धेन सनाथनात् सनाथीकरणात् श्रुतिरेव वधूः तस्य वैधव्येन विधवात्वेन प्रतिपाद्यनायकाभावेन वैधव्य ननु । सर्वे वेदाः यत्पदमामनन्ति इति श्रवणात् भगवानेव श्रुतीना प्रतिपाद्यः । तत्कथमिद वैधव्यमुच्यते बाह्यास्तावत् भगवतस्स्वरूपमेव नाभ्युपगच्छन्ति । कुदृष्टयस्तु निर्विशेष स्वरूपमात्रमंगीकृत्य गुणविभूत्यादिक नाभ्युपयन्ति । केचिन्भगवतः प्रकारभूतं चतुर्मुखमीश्वरं मन्यन्ते अपरे तु तंसज्य पशुपतिमीश्वरमाचक्षते एवमंतेषामितरेतरविरोधादयमाश्वरो वेदप्रतिपाद्य इतिनिर्णयाभावात् श्रुतिवध्वाः वैधव्य जातं तेन यः खेदः दुःख तच्छिद तदपहन्त्रो प्राचीना प्राक्तर्नी बाधरायणबोधायनादिभिर्प्रवर्त्तितामित्यर्थः नयपद्धतिं नीतिपदवीं एष यतिपति न प्राचीकशच्चेत् न प्रकाशयामास चेत् व्यासः पाराशर्यः हासपदीकृतः हासास्पदीकृतः तं सर्वेपि हसन्तीत्यर्थ प्राचेतस वाल्मीकि चेतसः परिहृत. तं मनसापि न स्मरन्तीत्यर्थ शुकः वैयासिकि क्रीडार्थशुक इव क्लृप्त अय यत्किंचिज्जल्पतीति न तद्वचसि विश्वास कुर्वन्तीत्यर्थः सः भगवत्परतया प्रसिद्धः बोधायनश्च परं बाधाय पाडायैभवति परस्परविरुद्धानेष तद्दर्शनाब्बोधायनकृता ब्रह्मसूत्रवृत्तिरपि न प्रमाण्यमवगाहत इति भावः ॥ ४६ ॥

कइव न जेतव्यः सर्वोपि जेतुं शक्य एवेत्यर्थः । तदेवोपपादयति । तथाहीति ।

अशिथिलेति–॥ अशिथिला स्थिरा गुरोभक्तिर्यस्य स तथा तस्य गुरोः प्रशंसादो तत्ज्ञानभक्त्यादिगुणकीर्त्तनादौ शीलं स्वभावो यस्य स तथा । आदिशब्देन तद्विग्रहचिन्तनादि गृह्यते तस्य वस्तुषु वस्त्राभरणादिषु वास्त्वादिकेषु गृहक्षेत्रारामादिकेषु

शिष्यः—सिद्धान्त बलादेव विजिगीषे। तदत्रसपश्यन्तो महाराजः।

निराबाधा बोधायनफणितिनिष्यन्दसुभगा
विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धानिजमुखै
रनिद्राणप्रज्ञारसधमनिवेधायसुधियां ॥ ४८ ॥

किंच।

दृष्टेपह्नुत्यभावादनुमितिविषये लाघवस्यानुसारा
च्छास्त्रैणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात्।

प्रचुरा अधिका बहुमतिर्यस्य स तथा गुणवति शिष्ये विनियोक्तुमुपदेष्टु संप्रदाय ब्रह्म-विस्तरपराधिगतमर्थं गोपयन् अपात्रेभ्यो रक्षन् कृतवित् कृतज्ञः। ब्रह्मवेदनाभावा दसत्कल्पस्य मम तत्त्वरूपाद्युपदेशेन सत्तामत्पाद्य भगवत्कृपाजननीं शरणागतिं विधाय शरीरपातसमनन्तरमेव मुक्तिमपदमपिदापयिष्यति। केवलकृपयैव सर्वमिदं कृतवान् अहो महानयमस्यानुग्रहः इत्याचार्यविषये कृतज्ञः अनघ इति अनघादोषरहिता वृत्ति र्जीविका यस्य स तथा। यथाह मनुः—

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।
सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथचन ॥

यद्वावृत्ति व्यापारः धर्मानुष्टानमिति यावत्। तस्याघराहित्यं निषिद्धकाम्यानु ष्टान वैमुख्य ममुक्षुणा हि निषिद्धकाम्यपरित्याज्ये किं निधानं न विन्देत् सर्वमपि विन्देदेवेत्यर्थ अत्र निधानशब्दस्सपद्वाची। प्रतिकथकजयस्यापि सपद्यन्तर्भाव इति ॥ ४७ ॥

सिद्धान्तबलात् गुरुप्रसादबलादेव विजिगीषे जेतुमिच्छामि।

निराबाधा इति—॥ निराबाधाः आबाधाईषत्बाधा तद्रहिताः नकेन चिद-प्येषां बाधो विद्यत इत्यर्थः बोधायनफणितिः तत्कृता ब्रह्मसूत्रवृत्ति तस्या निष्यन्दः प्रवाह इवसुभगाः मनोहरा। विशुद्धेन दूषणानर्हेण उपन्यासेन व्यतिभिदुरा व्यति भिन्ना शारीरकस्य ब्रह्ममीमांसाया नयाः उक्तयः येषाते तथोक्ताः। यतिपतेर्निबन्धाः तत्कृता॰ प्रबन्धा॰ अकुण्टैः तीक्ष्णै॰ प्राम णिकैर्निजमुखैः प्रतिपद्यार्थविशेषै सुधियां शोभनबुद्धीना प्रमाणशरणानां अनिद्राणा प्रबुद्धा प्रज्ञैवरसः तस्य या धमनिर्नाडी तस्य वेधाय घटनाय कल्पन्ते समर्थाभवन्ति। लोकेहि तदभिज्ञास्तद्रसोन्मेषाय ततत् सिराः विध्यन्ति तद्वदेतेषामितिभावः ॥ ४८ ॥

यतिपतिनिबद्धानां प्रज्ञाजनन सामर्थ्यं कुतोवगम्यत इत्यत्राह—।

दृष्ट इति—॥ दृष्टे प्रत्यक्षसिद्धेर्थे अपहुतेरपलापस्याभावात् अनेन सौगतम-ताद्भूपावादिमतात्त्वाद्यस्यमतस्य व्यावृत्तिरुक्ता। तन्मतद्वयनिष्टे॰ प्रत्यक्ष सिद्धेर्जगतोपला

नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै
स्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः कर्शनन्दर्शनन्नः ॥ ४९ ॥

राजा—किमुच्यते

नेपथ्ये—(तर्कव्याकृतीत्यादि पुनः पठित्वा)

सप्रतिज्ञं महान् कलकलः ।

(सर्वे समाकर्णयन्ति)

शिष्यः—(यतीश्वरेत्यादि पुनः पठन्नर्धोक्तेविरम्य)

(राजानमवलोकयति)

राजा—पठ्यतां पठ्यतां ।

शिष्यः—(शेषं पठति)

राजा—आर्य, सर्वज्ञाद्भगवतस्समासादितसर्वविद्यानिधेरत्रभवतस्स्वं प्रति विपश्चितामपश्चिमैरेतैरापतद्भिस्संव्यवहारेण संशयप्रशमनमिच्छामि ।

---

पात. अस्मन्मते प्रत्यक्षसिद्धाना सत्यत्वाङ्गीकारात अनुमितिरनुमानं तद्विषये अनुमेये वस्तुनि लाघवस्यानुसरणात् कल्पनालाघवस्याश्रयणात् परिमाणतारतम्य निश्चये पारिमाणडल्याभ्युपगमे न्यायवैशेषिकपक्षयो. गौरव त्रसरेणु रेव परिमाणाश्रयत्वाङ्गीकारेणास्मिन् पक्षे लाघवस्यानुगमात् । तन्मतद्वयादस्यातिशय इति हृदयं । यथोक्त

कल्पना लाघवं यत्र तं पक्षं रोचयामहे ।
कल्पना गौरवं यत्र तं पक्षं नसहामहे । इति ।

विहतिर्विघात. तद्विरहिते शास्त्रैणैवागमेनैवावसेये निश्चेतव्येऽर्थे नास्तिकत्व प्रहाणात् नास्तिक्यपरित्यागात्। अनेन कुमारिलगुरुमताभ्यामस्य विशेषः । तन्मतद्वयेपि वेदैकगम्यस्य भगवतो नाङ्गीकारात् तत्र तदभ्युपगमाच्च । अस्य सत्सम्प्रदायागतत्वम. प्यस्तीत्याह न येति—। नाथात् नाथमुनेः उपज्ञा प्रथमप्रमितिर्यथाभवति तथा प्रवृत्त । प्रथमं भगवान्नाथमुनिः पराशरपाराशर्यप्राचेतसबोधायनादि परमर्षि हृदय ज्ञात्वा मतमेतत्प्रवर्त्तितवान् । अत तदुपज्ञ प्रवृत्त बहुभि यामुनेयप्रबन्धैः सिद्धित्रयागमप्रामाण्यस्तोत्रादिभिः उपचितं वर्धितं यतीन्द्रैः सम्यक् त्रातं रक्षितं श्रीभाष्यवेदार्थसंग्रहादिभिस्स्थिरीकृतं इद दर्शनं नः अस्माकं अखिलतमःकर्शनं चिदचिदीश्वरयाथात्म्यावबोधित्वादखिलाज्ञान निवर्तकम् ॥ ४९ ॥

किमुच्यते किंवक्तव्यमित्यर्थः ।

अर्धे विरम्य पूर्वार्धे विरम्येत्यर्थः । शेषमुत्तरार्धं भगवतस्समासादितानां सर्वासां विद्यानां निधेः वासस्थानस्य भवतः विपश्चितां सर्वज्ञानां अपश्चिमः प्रथमः संव्यवहारेण कथया संशय प्रशमनमिच्छामि ।

शिष्यः-( सगर्वहासं ) निशमयतु निपुणमेतन्महाराजः ।

पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे
मीमांसामांसलात्मासमजनिषिमुहुस्साङ्ख्ययोगौ समाख्यम् ।
इत्थं तैस्तै र्यतीन्द्रत्रुटित बहुमृषा तन्त्रकान्तारपान्थै
रन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयन्तनीयः ॥५०॥

किंच ।

यद्येतं यतिसार्वभौमकथितं विद्यादविद्यातमः
प्रत्यूषप्रतितन्त्रमन्तिमयुगे कश्चिद्विपश्चित्तमः ।
तत्रैकत्र झटित्युपैतिविलयन्तत्तन्मतस्थापना
हेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः ॥ ५१ ॥

---

स्वपर्यायइत्यनेन गर्वितेष्ववज्ञया हासः ताभ्यां सहितं यथा भवति तथा । निपुणं सम्यक् । निशमयतु ।

पर्याप्तमिति-॥ कणचरणकथा कणादग्रन्थः कणानां चरणं भक्षणं यस्यस कणचरणः चरगतिभक्षणयोरिति धातु. पर्याप्तं पूर्णं यथाभवति तथा पर्यचैषं परिचितवानस्मि आक्षपादं अक्षपादकृतं निबन्धनं शिशिक्षे शिष्यान् शिक्षितवानस्मि मीमांसया कर्ममीमांसया मांसलः तुन्दिलः आत्मा मनो यस्य सतथा समजनिषि अभवं मुहुः पुनः पुन साङ्ख्ययोगौ साङ्ख्ययोगशास्त्रे समाख्यमाख्यातवानस्मि । इत्यमुक्त प्रकारेणान्तर्मोह मानसाज्ञानं तदेव क्षपातया अन्धैः मूढै यतीन्द्रेण त्रुटितानि बहूनि च मृषा तन्त्राणि अप्रामाणिकमतानि तान्येव कान्ताराणि तेषुपान्थैस्तैरिह लोके तनीयः अत्यल्पमपि किंचिन्तनीय न किंचिदपीत्यर्थः ॥ ५० ॥

यतीन्द्रकृतप्रबन्धेषु सर्वेष्वभ्यासो मास्तु । एकस्मिन्नपिपरिचयवतोपि प्रतिकथकानस्यातं न्यन्तइत्याह-

यदिति-॥ यतिसार्वभौमः यतिपति तेन कथितं अविद्या अज्ञानं तदेव तमः तस्यप्रत्यूषं दिनमुख तन्नाशकं एकं प्रतितन्त्रं इतरसिद्धान्तिभिरनङ्गीकृतं स्वसिद्धान्तमात्राभ्युपगमं अर्थ विपश्चित्तमः कश्चिद्विद्यात्यदि एकत्र एकस्मिन्नेव तत्र तस्मिन् युगे तत्तन्मतानि तानितानि तेषां स्थापनायां स्थिरीकरणे हेवाकेन इच्छया प्रथमानानां वर्धमानानां हैतुककथानां युक्तिमात्रशरणप्रसङ्गानां कल्लोलाः । त्रितत्तयः तेषां कोलाहलः कलकलः कल्लोलानां परस्परास्फालन जन्य इव घोषो विलय झटित्युपैति ॥५१॥

गुरुः-महाराज, एते मेघप्रलापमुखरमुखदुन्दुभयः कलहकोलाहलकुतूहलिनः कथकाः ।

श्वावराहकलहक्रमादमी संपतन्ति निगमान्तरोधकाः ।
तानिमान्युगलवादसिद्धये वारयत्वयमसौ चमूपतिः ॥५२॥

शिष्य –( सान्तहासं )

अध्यक्षं यच्छ्रुतं वा लघु तदिति भवत्यादिमो वादिमोह
स्तत्वोदर्कानतर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठन्त्वेते लघिष्ठाः कतिचन दधतो मानसे मानसेतुं
हंहो सभ्यानसभ्यस्थपुटमुखपुटादुर्जनान्निर्जयन्ति ॥ ५३ ॥

मेघेन व्यर्थेन प्रलापेनासंगतभाषणेन मुखराः शब्दायमानाः मुखान्येव दुन्दुभयो येषां ते तथोक्ताः कलहकोलाहले परस्पर जनित कलकले कुतूहलिनः इच्छावन्तः ।

श्वावराहेति-॥ निगमान्तानां रोधकाः तत्पर्यां वेदनेन विरुद्धार्थ कथनात् बाधकाः बाह्याः कुदृष्टयश्चामी श्वावराहकलहक्रमात् शुनां वराहाणाञ्च कलहेयः क्रमः परस्परमन्वकाशान्वेषणं तत्क्रमात्संपतन्ति आपतन्ति युगलवादसिद्धये युगलस्य वादिप्रतिवादिरूपस्य वादसिद्धयेतानिमानसौ चमूपतिर्वारयितु संघश आपततएतान्विवार्य एकमेकं वादाय नियुक्त्वेत्यर्थः ॥ ५२ ॥

स्वमते परैरुक्तदूषणमनुवदति-

अध्यक्षमिति-॥ अध्यक्ष प्रत्यक्षविषयं श्रुतमागमेषुश्रुतं वा यद्वस्तु तल्लघुयुक्तिबाधादागमबाधाद्वा सिद्ध भवतीति । अयं भावः । भेदवादिना हि भेदः प्रत्यक्षेण साध्यते उत श्रुत्या । आद्यः कल्पो न कल्पते प्रत्यक्षस्य युत्याबाधितत्वात् नद्वितीयः । अभेदश्रुत्याभेदश्रुतेर्बाधितत्वात । अत एतत् भेदसाधन दुर्लभवतीति परिहार इति । वादिमोह इति वादिमोहः अज्ञान आदिमः आद्यः बहोः कालादागतः मोहमात्रमेवेदमित्याशयः । तर्कैरेवभेदस्सिध्यतीति सिद्धान्तिमतं दूषयति पूर्वपक्षी तत्वेति तर्काः तत्वोदर्कान तत्व याथात्म्य उदर्कः उत्तर फलं येषां ते तथोक्ता तदेतत्सिद्धान्ती दूषयति तदिति यस्मात्तर्काणां वैयर्थ्यं तस्मात्कारणादित्यर्थः मेधया बुध्या किंसाधयामः न किञ्चिदपीत्यर्थः । लघिष्ठाः अतिशयेन लघवः एतेतिष्टन्तु मानसेहृदये मानसेतुं मानः अभिमानः तमेवसेतुं दधतः कतिचनदुर्जनाः असभ्यैर्वचनै स्थपुटानि संभृतानि मुखपुटानि वक्त्रपुटानि येषा ते तथोक्तास्सन्तः सभ्यान्निर्जयन्ति हंहो इति खेदे ॥ ५३ ॥

निशम्यतां चेदं सभापतिसेनापतिभ्यां ।

बाधादिभिस्स्वमतहेतुगणे निरस्ते
नित्यागमप्रतिहतेषु निजागमेषु ।
प्रागल्भ्यमात्रशरणाः प्रतिवावदूका
स्संभूयवादकरणेपिनमे प्रभूताः ॥ ५४ ॥

( विहस्य ) अहोन खल्वन्धैरन्धस्य यष्टिभिः प्रदीयते पङ्गोर्वा पङ्गुभिरतिवहनं, यदेतेकर्मान्धकारप्रतिहतमतयः कुमतयो महामोहस्य साचिव्यमाचरन्ते ।

किंच ।

वशिकनटिनी वर्षारंभप्रवाहविडंबकै
रलघुभिरपभ्रश्यद्गुंभोपलंभित डंबरैः ।
उपकरणयन्त्येते बालानुदग्रकुतूहला
नुपलनिकरग्रासप्रायैरुपन्यसनक्रमैः ॥ ५५ ॥

अहहमीमांसा प्रतिवावदूकाना प्रवादमनुमोदमाना महामोहपक्षपातिनो गर्दभगाने सृगालविस्मयमनुस्मारयन्ति ।

---

निशम्यतामवनीक्षता ।

बाधादिभिरिति--॥ स्वमते स्वकीयमते यो हेतुगणःहेतूनां युक्तीनां गणः तस्मिन् बाधादिभिः बाध. असिद्धिः आदिशब्देन विरोधादिग्रह्यते तैर्निरस्ते प्रतिक्षिप्ते निजागमेषु स्वशास्त्रेषु नित्यागमो वेद तेन प्रतिहतेषु प्रागल्भ्यमात्रशरणा धार्ष्ट्यमात्रशरणाः प्रतिवावदूकाः प्रतिकथकाः संभूय एकीभूयापि सर्वसमूहीभूयापीत्यर्थः वादकरणे वादकल्पने मेनप्रभूताः नपर्याप्ताः नसमर्थाः ॥ ५४ ॥

एतैः क्रियमाणं महामोहस्य साचिव्यं विचिन्त्य हासः । अहो इति विस्मये यष्टिरवलंबनार्थोदण्डः । अतिवहनं मार्गानयन । कर्म प्राचीनदुरितं तदेवान्धकार तेनप्रतिहता मतिः येषां ते तथोक्ताः ।

वशिकेति-॥ वशिकाः तटिन्यः क्षुद्रनद्यः तासांवर्षारंभे येप्रवाहाः तान्विडम्बयन्तीति तद्विडम्बकाः तदनुकारिण इत्यर्थःतत् प्रवाहा हिवर्षारम्भसमय एव प्रवृद्धा तद्विरामे विरमन्ति एवमेषामुपन्यसनक्रमा अपि उपक्रमसमय एव दुरवगमाः क्षणान्तर एव विनश्यन्तीत्यर्थ । अलघुभिः विस्तृतै अपभ्रश्यद्भि शिथिलीभवद्भिः गुंभैः संदर्भैः उपलंभितः प्रापितः डम्बरः संभ्रमो येषाते तथोक्ताः । उपलनिकराणा ग्रासश्च येषां तत्प्रायैः तत्तुल्यैरित्यर्थः उपन्यसनक्रमैः उदग्रं अधिकं कुतूहल येषां तान् बालानुपकरणयन्ति उपकरणं कुर्वन्ति वशीकुर्वन्तीत्यर्थः ॥ ५५ ॥

गर्दभगानेषु सृगालानां विस्मयमनुस्मारयन्ति अनुस्मरणं कारयन्ति ।

राजा—सेनापते, नियम्यन्तामेते निर्भरनिगमान्तवैरविप्लुतप्रतिपत्तयः प्रत्येककथाप्रवर्तनाय।

सेना—नियच्छामि तानेतान्निरर्थकादाटोपात्। (परिवृत्यावलोक्य) भोभोस्त्रयीबाह्याः कुदृष्टयश्च।

अलमिह मिथश्श्लाघामाद्यन्मितंपचसंमतै
रनघपरिषत्प्रत्यादिष्टैरलीकविकत्थनैः।
अवितथकथाधौरेयाणामनुप्रसृतौ सतां
ध्रुवमिह भवद्वृत्तेराविर्भविष्यति पङ्गुता॥ ५६॥

शिष्यः—भगवन्, इतः प्रसार्यतां दृष्टिः।

माहाराष्ट्रीं मागधीं शौरसेनीं
लाटीं गौडीमित्थमन्यादृशीं च।
अङ्गीकुर्वन्त्यागमी कृत्यदत्तां
हास्यां भाषां हन्त बुद्धार्हदाद्याः॥ ५७॥

अहन्त्वशेषभाषावेदी तत्तदभ्यस्तभाषयापि तार्किकानेतान् प्रतिक्षेप्स्यामि। वदन्ति हि पिशाचानां पिशाचभाषयैवोत्तरं देयमिति।

---

निर्भरं पूर्णं निगमान्तेषु वैरं तेन विप्लुता विनाशिता प्रतिपत् ज्ञानं येषां ते तथोक्ताः।

निरर्थक प्रयोजनशून्यः वादेष्वाटोपः गर्वः तस्मात् नियच्छामि नियमयामि वारयामित्यर्थः।

अलमिति—॥ मिथः परस्परं श्लाघया माद्यन्तः मुह्यमानाः ये मितंपचाः क्षुद्राः तैस्संमतैः अङ्गीकृतैः अनघानामवैदिकता दोषरहितानां परिषदा गोष्ठ्या प्रत्यादिष्टैः निरस्तैः अलीकैरपरमार्थैः विकत्थनैः वृथाजल्पैः अलं। अवितथा स्वमोघासु कथासु वादेषु धौरेयाणां धुरंधराणां सतामिहानुप्रसृतौ अनुप्रसरणे भवद्वृत्तेः भवतांवृत्तेः पंगुता आविर्भविष्यति ध्रुवं॥ ५६॥

माहाराष्ट्रीमिति—॥ महाराष्ट्री महाराष्ट्रदेशीयां मागधीं मगधदेशीयां शौरसेनीं शूरसेनदेशीयां लाटीं लाटदेशीयां इत्थमेवमन्यादृशीं अपरिचितामिवास्थित बुद्धार्हताद्यैः सुगत जैनाद्यैः आगमीकृत्य शास्त्रं कृत्वा दत्तां हास्यां हास्ययोग्यां भाषां अङ्गीकुर्वन्ति पठन्तीत्यर्थः॥ ५७॥

तत्तदभ्यस्तया तैस्तैः अभ्यस्तया भाषया प्रतिक्षेप्स्यामि। वदन्ति लौकिका इति शेषः।

गुरुः–यथारुचि दैवीमदैवीं वा भाषां पुरस्कुर्याः। अपि तु दैव्येव विश्वहृदयङ्गमा, महाराजोपि प्रायशस्तस्यामेव बहुलदत्तदृष्टिः।

राजा–भगवन् अतिधृष्टोयं भगवत्प्रसादगोचरो महानुभावः॥

सेना–किमत्रचित्रं।

कथाकलहकौतुकग्रहगृहीतकौतस्कुत-
प्रथाजलधिसंप्लवग्रसनकुंभसंभूतयः।
जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासन
प्रभावपरिपक्त्रिमप्रमितिभारतीसंपदः॥ ५८॥

अपि च।

विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति।
वितण्डाहङ्कुर्वत्प्रतिकथकवैतण्डपृतना
वियातव्यापार व्यतिमथनसंरंभकलहः॥ ५६॥

शिष्यः–सभापतिसेनापतिसात्विक प्रवृत्तस्य दयाकूपदेशिकदृष्टि-दृढदंसितस्य कथाहवेषु कस्त्रासः।

---

दैवीं संस्कृतां अदैवी मानुषीं वा विश्वहृदयङ्गमा विश्वेषां हृदयङ्गमा। तस्या तयैव व्यवहर्तव्य हेत्वन्तरमाह महाराजोपीति। भगवत्प्रसादस्य भगवदनुग्रहस्य गोचर विषयः महानुभाव अतिशयो यस्य स महानुभावः किञ्चित्र इदमाश्चर्यं नभवतीत्यर्थः। तदेवाह।

कथेति–॥ कथयाप्रसङ्गेन कलहं तस्मिन् कौतुकमिच्छातदेवग्रहः भूतविशेषः तेनगृहीतानां कौतस्कुताना प्रथाप्रसिद्धिः सैवजलधिः तस्य यस्संप्लवः उद्रेकस्तस्य ग्रसनं कुम्भसम्भूतय कुम्भात्सम्भूतिः जन्मयेषां ते अगस्त्या इत्यर्थः तत्प्रसिद्ध्यपहर्तार इत्यर्थं। यतिक्षितिभृतः यतिराजस्यान्तिके समीपे उपासनस्य सेवायां प्रभावेन परिपक्त्रिमाः परिपक्वाः प्रमितिभारत्योः ज्ञानसाहित्ययोः संपदः समृद्धयः येषां ते तथोक्तास्सुधियः शोभनबुद्धयः जयन्ति॥ ५८॥

विकल्पेति-॥ विकल्पेषु एवं वा एवंवेत्यनेकपक्षाश्रयणारूपेषु आटोपेनगर्वेणाशेषं भगवतस्स्वरूपरूपगुणविभूतिप्रतिपादनलक्षणं श्रुतिपथं वेदान्तमार्गं विघटयन् अन्यथा कुर्वन् वितण्डया अनैकान्तिकवादेनाहं कुर्वन्तः येप्रतिकथकाः त एव वैतण्डाः गजाः तेषां पृतनासमूहः तस्या वियातानां धृष्टाना व्यापाराणां व्यतिमथने विमर्दने यस्संरंभ तेन कलहः यदृच्छया दैवाद्विर्दिष्टे यतिनृपतेः यतीश्वरस्य शब्दे उक्ते विरमति शाम्यति। अनेन यतीश्वरविरचितप्रबन्धेषु एकैकशब्दोपि यदृच्छयोक्तस्सर्वमतसमूहप्रशमन इति सूच्यते॥ ५६॥

अत्राहि ।

अर्थ्या तिष्ठतिमामिकामतिरसा वाजन्मराजन्वती
पत्यासंयमिनामनेन जगतामत्याहितच्छेदिना ।
मत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां
प्रस्वापायनबोभवीति भगवन्मायामहायामिनी ॥६०॥

अपि च । वयमेतावन्तमनेहसमनेकसहस्रवैतण्डिकमण्डलमण्डितेषु तुण्डीर चोलपाण्ड्य केरल कर्णाटनेपालमालवगौडलाटादि कटकेष्वखण्डिताहङ्कारा निष्कण्टकेन नीतिघण्टापथेन निगमसञ्चरेषु संचरमाणा स्सद्भिरेव ज्ञातसख्यास्सुख्यामः ।

किं बहुना ।

आस्तान्नाम यतीन्द्रपद्धतिजुषामाजानशुद्धामति
स्तद्वाऽव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतं ।

---

सेनापति सेनापतिप्राधित्वं यस्मिन्कर्मणि तद्यथा भवति तथा प्रवृत्तस्य दयैव रूपं शरीरं यस्य स तथा देशिकानामिन्द्रः स्वामी तस्य दृष्ट्वा दृढं यथाभवति तथा दसितस्य कवचितस्य ममेति शेषः ।

**अर्थ्येति**—॥ अर्थ्या अर्थादनपेता अर्थः प्रयोजनं जगतामत्याहितच्छेदिन आभयनिवर्तकेन अनेन संयमिनां पत्या आजन्म जन्म भृति राजन्वती समीचीनायुक्ता मामिकामतिष्ठति । यस्य संयमिपतेस्सारस्वतं साहित्य तदेव दुग्धसागरस्तस्मिन् धार मारांशस्सिद्धौषधमसकृद्दृष्टवीर्यं औषध तदास्वादिना तन्भुजा भगवन्माया भवद्विभूति भूता प्रकृतिः सैव महायामिनी महती रात्रिः प्रस्वापाय प्रसुप्तये अज्ञानाय न बोभवीति न प्रभवति । अनादिमायया सुप्त इति हिश्रूयते ॥ ६० ॥

अनेहसमङ्कालं अनेकसहस्राणि वैतण्डिकास्तैर्मण्डितेषु तुण्डीरादिकटकेषु शिबिरेष्वखण्डित अहङ्कारो येषा ते तथा निष्कण्टकेन निर्बाधेन नीति घण्टापथेन नीतयः युक्तयः सोपब्रह्मणा वेदानुविधायिन्य तासा घण्टापथः महापथः तेन निगमाः वेदा. नगराणि च तेषु संचरणानि समीचीनविचारणानि सञ्चाराश्च तेषु सद्भिरेव ज्ञातसख्याः सुख्याम सुखमनुभवामः । किंबहुना उक्तेनेति शेषः ।

**आस्तान्नामेति**—॥ यतीन्द्रपद्धतिजुषा यतीश्वरदर्शितमार्गसेविना नः आजानशुद्धा आजन्मविमला मतिः अव्याजविशुद्ध स्वभावतो विशुद्धा । अनेन क्षुद्रदेवतोपासनजनित विशुद्धौ व्यावृत्तिः । मुग्ध सुन्दरं शब्दसौष्टवयुक्त मधुरं प्रति पाद्यार्थ सौष्टवान्मनोहरं यद्वाविशुद्धमित्यनेन शब्दार्थदोष राहित्य मुग्धमित्यनेन शब्दगत ओजःप्रसादादिगुणसाहित्य मधुरमित्यनेन अर्थगतगुणपौष्कल्य च सूच्यते । शाश्वत

कोवा चक्षुरुदञ्चयेदपि पुरस्साटोपतर्कच्छटा
शस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥६१॥

सेना - किमुच्यते ॥

एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।
न तत्तिसृभिरष्टाभिस्सहस्रेणापि कस्यचित् ॥ ६२ ॥

अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासना
दाचार्यादिह देवतां समधिकां मन्यान्नमन्यामहे ।
यस्यासौ भजने कदाचिदजहद्भूमा स्वयंभूमिकां
मग्नानां भविनां भवार्णव समुत्ताराय नारायणः ॥ ६३ ॥

गुरुः - महाराज, भव्यभाषितेन भवस्त्वमूपतिना नियमितास्त एते परमतकथकधौरेयाः प्रत्येकमुपतिष्ठन्ताम् । (शिष्यमवलोक्य) शृणु सौम्य, श्रुतिशिरः प्रत्यासन्नतया प्रथमसमुत्थितानां साङ्ख्यानां संप्रति स्वमतोपन्यासः ।

---

सदैकरूपं सारस्वतं कवनं चास्ता तिष्ठतु नाम इदन्द्वितयमपि वर्तत एवेतिभावः । किमन्यदित्यत आह क इति । साटोपाः ससंभ्रमाः तर्काणां छटाः परंपराः ताभिः शस्त्राशस्त्रि शस्त्रैश्च शस्त्रैश्च प्रवृत्त युद्ध तदेव विहारस्तस्मिन् संभृतः संपादितः रणास्वादः रणरसानुभावो येषु तेषु वादेषु नः अस्माकं पुरोऽग्रे कोवा चक्षु उदञ्चयेत् उन्नमयेत् नकश्चिदपि चक्षुरुन्नमय्य विलोकयितुं शक्नुयादित्यर्थः ॥ ६१ ॥

एकयेति -॥ गुरोरेकयैव दृष्ट्या ज्ञानरूपया द्वाभ्यां दृष्टिभ्यां वालोचनाभ्यां वापि यल्लभेत प्राप्नुयात तत्फलं कस्यचित्तिसृभिरष्टाभिस्सहस्रेण दृष्टिभिरपि न लभ्यते । अयंभावः इह जातिकस्यचित्पुरुषः गुरोः ।

गुशब्दस्त्वन्धकारस्याद्रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात्गुरुरित्यभिधीयते ॥

इत्युक्तरीत्या अज्ञाननिवर्तकस्य एकयैव तदुपदिष्टज्ञानरूपया कृपारूपयादृष्ट्या यत्फलं लभेत द्वाभ्यां दृष्टिभ्यां वा यल्लभेत तत्कस्यचिद्रुद्रस्य तिसृभिः दृष्टिभिः कस्यचिच्चतुर्मुखस्याष्टाभिः कस्यचिदिन्द्रस्य सहस्रेणापि न लभेतेति ॥ ६२ ॥

परेषां मतं परमतं तस्मिन्कथकानां वादिकानां धौरेयाः धूर्वहाः प्रत्येकं पृथक् पृथक् श्रुतिशिरसः वेदान्तस्य प्रत्यासन्नतया समीपवर्तितया तेषां वेदान्तप्रत्यासन्नत्वं अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपामित्यादि वेदान्तवाक्योदितत्रिगुणप्रकृतिस्वीकारादिति मन्तव्यम् । प्रथमं अग्रे समुत्थितानां साङ्ख्यानां स्वमतोपन्यासं शृण्विति सम्बन्धः ।

अमी च ।

कपिलासुरिपञ्चशिखादिमुनि
प्रतिपादितसाङ्ख्यमतप्रवणाः ।
प्रकृतिंपुरुषं च विभज्यपरं
पुरुषं न पठन्त्यघरुद्धधियः ॥ ६४ ॥

शिष्यः-(स्वगतं) संप्रवृत्तेस्मिन्वादे सवननीयाश्चैते प्रथम सभासदः (प्रकाश)

अक्षय्यशान्तिमकरन्दरसप्रवृत्ता
नभ्यर्थयेमुरभिदङ्घ्रिसरोजभृङ्गान् ।
कामं प्रसीदत यथाहमनन्यभावः
कर्णामृतानि भवतामवतारयेयं ॥ ६५ ॥

(गुरुमवलोक्य, सविनयमञ्जलिं बध्वा) भगवन्, भवदाज्ञया प्रतिक्षिपामि तावत्साङ्ख्यान् ।

---

कपिलेति-॥ कपिलं ऋषि प्रसूतं कपिल महान्त ।

अयं सिद्धगणाधीशस्सांख्याचार्यैस्सुसंमतः ।
लोके कपिलइत्याख्यां गन्ता ते कीर्तिवर्धनः । इत्यादिषु ।

प्रसिद्धः आसुरीनाम कश्चिदृषिः पंचशिखोपि तद्वत् एतदादिभिः मुनिभिः । आदिशब्देन तेष्वनादरो द्योत्यते । प्रतिपादितं यत्साङ्ख्यमतं साङ्ख्यानामतं तस्मिन् प्रवणाः आसक्ता. । प्रकृति पंचविंशतितत्वात्मिकां पुरुष जीवञ्च विभज्य मूलप्रकृतिर विकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्तषोडशकश्चविकारो नप्रकृतिर्नविकृतिरितिविविच्य-परं पुरुषं भगवन्त अघेन पापेन रुद्धधियस्सन्तः नपठन्ति भगवदनङ्गीकारहेतुः प्राचीनदुरितमेवेतिभावः ॥ ६४ ॥

सवनीयाः वशीकरणीयः ।

अक्षय्येति-॥ अक्षय्या क्षय नेतुमशक्या या शान्तिः चित्तस्याविकारत्व सैवम-करन्दरसः तस्मिन् प्रवृत्तान् प्रकर्षेणवर्तमानान् भगवतः अंघ्रियेव सरोजे तयोभृङ्गान् मधुपान् भवत, अभ्यर्थये प्रार्थयामि । अस्माभिस्तत्र किं कर्तव्यमित्यत आह । कामं प्रकामं प्रसीदत प्रसन्नाभवत अनन्यभावः नविद्यते अन्यस्मिन् भावो यस्य स तथा-अहं यथा भवतां युष्माकं कर्णामृतानि कर्णानाममृतमिव सुखावहानि वचनानीत्यर्थ. अवतारयेयमुत्पादयेयं ॥ ६५ ॥

भवदाज्ञया भवतामाज्ञया एते प्रतिक्षेप्तव्या इत्येवंरूपया ।

प्रधानपुरुषौ यदि प्रकृतिर्यन्त्रितैराहतौ
परः किमपराध्यति श्रुतिसहस्रचूडामणिः ।
कुतर्कशतकर्कशैर्यदि विभुः प्रतिक्षिप्यते
भवत्परिगृहीतमप्यपहरन्तु पाटच्चराः ॥ ६६ ॥

सेना—देव ।

विश्वपतिमार्यवचसा साङ्ख्याः संमत्य विगतसंरंभाः ।
गणयन्ति पञ्चविंशं षड्विंशं सप्तविंशं वा ॥ ६७ ॥

राजा—भगवन्, यदि खल्वेते सेश्वरता मानेताः । भजन्तु ताव त्भवत्त्वमागोचरास्साङ्ख्यास्त्वय्यन्तपार्श्वं ।

गुरुः—महाराज, मैव वादीः, किन्तु अभ्युपगतेश्वराणामपि साङ्ख्यानां प्रायिकसंवादयोगसमय मिद्धपरिच्छिन्नैश्वर्येश्वरपक्षप्रणिहितचक्षुषां प्रतिवक्तव्यमयमादिश्यता मौपनिषदवादी ।

---

प्रधानेति -॥ प्रकृत्या मायया यन्त्रितै बद्धै भवद्भिरितिशेषः प्रधानपुरुषवाहतौ यदिश्रुतिसहस्राणामनन्तश्रुतीना चूडामणि. उपनिषत् प्रतिपाद्य अजामेकामित्यादिभिः श्रुतिभिः प्रतिपादितौ प्रधानपुरुषौ भवद्भिरङ्गीकृतौ यदि तद्वदेव वेदान्तेषु । सत्यं ज्ञानमनन्तंब्रह्म, आनन्दोब्रह्म, प्रधानक्षेत्रज्ञपतिर्गुणेशः । अनश्नन्नन्योभिचाकशीतीत्यादिषु प्रतिपन्न परः उत्तमः पुरुषः किं किंवा भवतामपराध्यति अपराधं करोति । कुत्सिताः तर्काः कुतर्कः तेषा शतैः कर्कशाः कठिनाः तैर्भवद्भिर्विभुरीश्वरः प्रतिक्षिप्यते यदि भवद्भिः परिगृहीत भवद्भिरंगीकृतमपि अर्थं पाटच्चराः चोराः माध्यमिका अपहरन्तु । कैश्चित्तर्काभासैरीश्वराभावे भवद्भिरंगीकृते तैरेव चोराइव कैचित्यापिष्टा' प्रधानपुरुषावपि नागीकुर्वन्तीति भावः ॥ ६६ ॥

विश्वेति ॥ आर्यस्य वादस्य वचसा विश्वपतिं सर्वेश्वरं संमत्यांगीकृत्य विगतसंरंभा' अपगतसंनाहाः साङ्ख्याः पंचविंशं षड्विंशं सप्तविंशं त गणयन्ति प्रकृति प्राकृतानि चतुर्विंशति तत्वानि परमात्मा पंचविंशकः षड्विंशः पुरुष इति केचित् पंचविंशो जीवः षड्विंश परमात्मेति अन्ये पंचविंशः पुरुषः षड्विंशः कालः सप्तविंशः परमात्मेत्यपरे ॥ ६७ ॥

सेश्वरता अङ्गीकृते श्वरसहितता यदि । भवत्त्वमायाः गोचरास्त्वय्यन्तपार्श्वं भजन्त्विति ।

मावादी प्रायिक बहुलः संवाद ऐकमत्यंयस्मिन्स्तथोक्त । योगसमयः योगमतं तस्मिन्वः परिच्छिन्नैश्वर्यः ईश्वरः तत्पक्षे प्रणिहितं न्यस्त चक्षुर्येषा साङ्ख्यानां प्रतिवक्तव्यास्त इति शेषः ।

राजा-आदिष्ट एवायमीदृशेन भवता वाक्येन ।

शिष्यः-

य एते योगाख्ये कतिचिदपतन्त्रे पठितिनः
प्रजल्पन्त्यैश्वर्यं प्रतिफलनकल्पं भगवतः ।
स्वतस्सिद्धान् बोधप्रशकन बलादीन् गुणगणान्
गृणन्तस्त्रय्यन्ताः प्रतिफणितिरेषामवितथा ॥६८॥

सेना-देव ।

कृतं सांख्यकृतान्तस्थैः कृपणैरघशिक्षितैः ।
काणादमतभङ्गाय कार्यमार्यस्य शासनं ॥ ६९ ॥

राजा-नियुक्त एवायं यथार्हं निगमान्तविपक्षपक्षप्रतिक्षेपाय ।

शिष्यः-महाराज, अनुतिष्ठामि यथानियोगं ।

---

य एते इति-॥ योगाख्ये योगनाम्नि अपतन्त्रे तन्त्राभासे पठितिनः परिचयवन्त. य एते ये केचित्भगवतऐश्वर्यं प्रतिफलनकल्पं आदर्शादिषु वस्तुतो सता पदार्थानां प्रतिफलनमिवप्रजल्पन्ति । स्वतस्सिद्धान्स्वाभाविकान् बोधप्रशकनबलादीन् ज्ञानशक्तिबलप्रभृतीन् गुणगणान् गुणयन्ते भोग्यतातिशयेन पुनः पुनरावर्त्तन्तेगुणाःतेषां गुणान् गृणन्तः वदन्तः त्रय्यन्ता वेदान्ताः । परास्यशक्तिर्विविधैव श्रूयते, स्वाभाविकीज्ञानबलक्रिया च, यस्सर्वज्ञस्सर्ववित्, यस्यज्ञानमय तपः, सत्यकामस्सत्यसकल्पः इत्यादयः । येषा योगशास्त्रनिष्टाना अवितथा अमोघाप्रतिफणितिः प्रत्युक्तिः । भगवतोज्ञानशक्त्यादीना कल्याणगुणानां स्वाभाविकत्व वदन्तं वेदान्ता एव तेषां बाधका इति भावः ॥ ६८ ॥

कृतमिति-॥ साख्यानां कृतान्ते सिद्धान्ते तिष्टन्तीति सांख्यकृतान्तस्थाः तैः कृपणै स्वसिद्धान्तस्थापनलुब्धैरघशिक्षितै सेश्वरतया क्लिनीतैरलं पर्याप्त आर्यस्य वादस्य काणादमतभंगाय शासनं नियमनं कार्यं ॥ ६९ ॥

भगवता गुरुणा यथार्हं यथायोग्यं निगमान्ताना विपक्षाये पक्षा स्तेषां प्रतिक्षेपाय नियुक्त एवह्ययं । यथार्हमित्यनेन वेद विपक्षपक्षप्रतिक्षेपावसरे काणादपक्षस्यापिः वेदविरुद्धत्वात तन्निरसनं योग्यमितिव्यज्यते ।

यथानियोगं शासनमनतिक्रम्येत्यर्थः ।

दृहं हि ।

असद्द्रव्यसृष्टिप्रभृत्यर्थक्लृप्त्या
श्रुतिप्रक्रियाणामधिक्षेपतश्च ।
उलूकोपदेशापदेशप्रवृत्तः
कथाशेषितोसौ कणादप्रणादः ॥ ७० ॥

गुरुः-( सबहुमानमीक्षते ) ।

शिष्यः-( सापहासं ) आकर्ण्यतामिदमत्यद्भुतं महाराजेन ।

राजा-किं तत् ।

शिष्यः-एते किल कणचरणमतानुवर्तिनः परमानन्दलक्षणं परमपुरुषसाम्यमपहाय पाषाणसाधर्म्यलक्षणं मोक्षमाचक्षते । तथा च कुंभकर्ण एव विजयते । शाप एव तस्यानुग्रहस्स्यात् ।

---

असदिति-॥ असत कारणभूते मृत्पिण्डादौ पूर्वमसतः कार्यभूतघटादिद्रव्यस्य सृष्टिरुत्पत्तिस्तत्प्रभृत्यर्थस्य क्लृप्त्या कल्पनेन । प्रभृतिशब्देन परमाणूना जगत्कारणत्वं गृह्यते । श्रुतीनां वेदान्ताना याः प्रक्रियाः प्रकारः। सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयं, तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत, ब्रह्मवा इदमेक एवाग्र आसीत्, आत्मन आकाशस्संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः सन्मूलास्सोम्येमास्सदायतनास्सत्प्रतिष्ठाः, नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते । इत्यादिकाः । तासामधिक्षेपतश्च उलूकस्योपदेश एवापदेशः व्याजं तेन प्रवृत्तः असौ कणादस्य प्रणादः । प्रणादशब्देनास्य निरर्थकत्वं सूच्यते । कथाशेषितः कथाशेषः कृतः कणादमतमिति कथनमात्रमेवास्त्यस्य इति भावः ॥ ७० ॥

परमानन्दः लक्षणं असाधारणधर्मः यस्य तं परमपुरुषेण साम्ये समत्वं । सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चितेत्युक्तं ।

तद्गुणाभे कृत्स्नसाम्यमपहाय पाषाणसाधर्म्यं लक्षणं यस्य स तथा च मोक्षस्य पाषाणसाधर्म्यलक्षणत्वे कुम्भकर्ण एव विजयते मोक्षलाभेन सर्वातिशायी जायेत तस्य शाप एवानुग्रहस्स्यात् मोक्षहेतुत्वेन शापस्यानुग्रहत्वं ।

राजा—सत्यमेतत् ।

सेना-देव ।

**अर्धवैनाशिकास्तावदार्येण विमुखीकृताः ।**
**अथवैनाशिकास्त्वेते विनाश्याचेद्दूषकाः ॥ ७१ ॥**

राजा-(साशङ्कं) आर्य, पर्याप्तोसि तर्केन्द्रजालकोविदानां तथागतानां निरासे ।

शिष्यः-(सामर्षमिव) राजन्, अपर्याप्तास्त्वेते त्वद्राद्दिष्टस्य ममैकस्यापि प्रतिक्षेपाय ।

तथाहि ।

**कथयति जडोविश्वं वैभाषिकः क्षणभङ्गुरं**
**परमनुमितं बाह्यं सौत्रान्तिकोमतिचैत्र्यतः ।**
**तदिदमनृतं योगाचारस्तथा निखिलं परे**
**स्ववचनहताःसर्वे गर्वन्त्यजन्ति ममाग्रतः ॥ ७२ ॥**

---

अर्धेति—॥ अर्धवैनाशिकाः काणादाः तेह्यागमानमनुमानानुविधायित्वमङ्गीकुर्वन्त पृथक् प्रमाण्यं नाङ्गीकुर्वन्ति । परमाणूनामेव जगत्कारणत्वं ब्रह्मणोनुमानाधीनसिद्धत्वं च ब्रुवते । अत एषामर्धवैनाशिकत्वं वैनाशिकाणाः सौगतादिसमूहाः तेषां ॥ ७१ ॥

तर्केन्द्र जालकुशलतया राज्ञस्साशङ्कत्वं पर्याप्तो सीत्यत्र कि शब्द अध्याहार्यः । समर्थ्यस्यममासामर्थ्यं शङ्कते राजेति शिष्यस्यामर्षः ।

कथयतीति—॥ वैभाषिकसौत्रान्तिक योगाचारमाध्यमिकभेदाच्चतुर्विधास्सौगताः तेषु जडमतिर्वैभाषिकः स्वय क्षणभगुर कथयति क्षणभगुर क्षणेक्षणे विनष्टं प्रतिक्षणमुत्पाद्यमानमित्यर्थः सौत्रान्तिकः मतिचैत्र्यत मतिवैचित्र्यात् अय घट अयं पटः अयमश्व अय हस्तीति मतिवैचित्र्यात् अनुमितं बाह्यं वस्तु कथयति अनुमित परमिति वचनात् अनुमितस्यापि वस्तुन त्व नास्तीति द्योत्यते । योगाचारस्तदिदमिति तत्व अनृतं क्षणिकं। कथयति परं माध्यमिकः निखिलं तथा नृतं असत्यं वदति अत एते सर्वे स्ववचनहताः परस्परवचन व्याहतास्सन्तः ममाग्रतो गर्वं त्यजन्ति नयत्वारोपितं परस्परव्याघातादेव निरस्तगर्वा इति भावः ॥ ७२ ॥

गर्वत्यागमेव प्रतिपादयवितथाहेति ।

तथाहि ।

दन्तादन्तिविधानलंपटधियो दिङ्नागमुख्या जडा
श्शृण्वन्त्वद्य विपद्यते परमियं शिक्षा भवत्पक्षतः ।
बुध्वा बोध्यमुदाहरन्ति विशदं बुद्धादयश्चेज्जितं
नोचेद्धन्तजितं पुनस्तदिह न स्तूर्यन्तु जोघुष्यतां ॥ ७३ ॥

सेना-(सश्लाघं) देव परिमितगंभीरमतोप्यमिदं पारिषदहृदयंगममार्यवचनमुपश्रुत्य पलायितास्सौगतापशदादिशदिशं प्रविशन्ति । अपि त्वयं माध्यमिको नाम बौद्धमतनासीरवीरः कथितमपि दूषणमनादृत्य वैयात्यमात्रावष्टभेन पाण्डित्यं प्रख्यापयति । तदयं विशेषतोप्युन्मूलयितव्यः । यश्चैवमुद्घोषयति ।

भाषावैभाषिकानां शुभमनुभवतु स्वस्तिसौत्रान्तिकेभ्यो
योगाचाराः प्रयोगं विजहतु किमुतत्किंकरैश्शंकराद्यैः ।

---

दन्तेति । दिङ्नागोनाम कश्चित्बुद्धमताचार्यः समुख्यः प्रधानो येषां तेदिङ्नागमुख्याः दिङ्नागो दिशागजः अत एव दन्तादन्ति विधानलंपटधियः दन्तैश्चदन्तैश्च प्रवृत्तं युद्धं दन्तादन्ति तद्विधाने तत्करणे लंपटा उत्सुकाधीर्येषां ते तथा अनेन भावच्छिद्र एव परस्परं जिघासव इति व्यज्यते । बुधा इति साधिक्षेपवचनं शृण्वन्तु मम वचनमिति शेष इय शिक्षा बाह्यान्तरक्षणिकत्वादिसाधिका भवत्पक्षत युष्मत्पार्श्वतः परं विपद्यते शिथिलीभवति कथमिति चेत् बुद्धादय. बोध्यं प्रमेय बुध्वा ज्ञात्वा परम तस्यास्तित्वनास्तित्वादिकमुदाहरन्ति चेज्जितमस्माभिरिति शेषः बोधक्षणोदाहरणक्षणयो बौद्धरेकस्यासिद्धत्वेन क्षणिकत्वासिद्धेरितिभावः नोचेदबुध्वैवोदाहरणे वस्तुयाथात्म्यमबुध्वैव यत् किञ्चिद्वचनाच्चास्माभिर्जितं हन्तेति हर्षे तदुभयथापिन. अस्माकं तूर्यं विजयसूचको वाद्यविशेषः जोघुष्यते अधिक घुष्यते ॥ ७३ ॥

शब्दे. परिमितगर्भत्वाहुल्यात् गम्भीरं दिशदिश नासीरः सेनामुखं तस्मिन्वीरः सेनाग्रयायी वैयात्यमात्रावष्टभेन धाष्ट्यमात्रावलम्बनेन उन्मूलयितव्य. ।

भाषेति । वैभाषिकाना वैभाषिकमतानुसारिणा भाषाउक्तिः शुभमनुभवतु सौत्रान्तिकेभ्य तन्मतानुवृत्तिभ्य स्वस्ति अस्त्विति शेषः हे योगाचाराः तन्मतानुसारिणः प्रयोगं स्वमतस्थापनायानुमानादि प्रयोगं विजहतु त्यजतु तत्किङ्करैः योगाचारकिङ्करैश्शङ्कराद्यै. आद्यशब्देन भास्कर यादवयोर्ग्रहणं ते किमु किवा साध्यं नकिञ्चिद

त्तिकतया मूर्तत्वं न जातिरित्यत आह। भूतत्वमपीति। भूतं मूर्तमिति सहप्रयोगश्च एकपदस्यापरपदवाच्यत्वपरतयोपवर्णनीय इति भावः। समवेतेति। आत्मवारणाय वृत्त्यन्तम्। आत्मनोऽपि समवेतेन्द्रियग्राह्यद्रव्यत्ववत्त्वाद् गुणेति। गुणवत्त्वमपि एकमात्रसमवेतत्वं गुणत्वम् जातेर्निराकरिष्यमाणत्वात्। चक्षुरादेः समवेतेन्द्रियग्राह्यगुणवत्त्वाभावात् जातिगर्भता। द्रव्यत्वव्याप्येति। तत्त्वं च द्रव्यनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम्। एतेन द्रव्यत्वव्याप्यत्वं द्रव्यत्वस्यापीति तद्दोषतादवस्थ्यम्। भेदेन तत्त्वोक्तौ च व्याप्यत्वानुधावनमनतिप्रयोजकं सत्तायाः निराकरिष्यमाणत्वादिति निरस्तम्। समवेतेन्द्रियग्राह्यद्रव्यत्वव्याप्यजातिमत्त्व ज्ञानवदन्यद्रव्यत्वम्। ज्ञानासमानाधिकरणधर्मसमवायिद्रव्यत्वं वा तदिति तु न्यायः। केचिदित्यस्य गौरवान्नेदं भूतपदस्य शक्यतावच्छेदकमित्यस्वरसः। ननु मूर्तत्वेन द्रव्यसमवायिकारणत्वेऽन्त्यावयविनापि द्रव्यमारभ्येतेत्यत आह। अन्त्यावयवीति। सत्यपि स्पर्शवत्त्वे ऽन्त्यावयवी नारभते द्रव्यं तदारम्भकविलक्षणसंयोगाभावादिति त्वयेव मयापि वाच्यमिति भावः। अन्त्यावयविभिन्नत्वस्य कारणतावच्छेदके निवेशात् तद्वारणमित्यपि केचित्। प्रागभावविरहात् तत्र कार्याभाव इत्यपि वदन्ति। न चैवं द्रव्यत्वमेव तथास्तु उक्तदिशा आत्मनोपि वारणसम्भवादिति वाच्यम्। अजनकव्यावृत्तेन मूर्तत्वेनागुरुणा कारणतायाः सति सम्भवे तद्व्यापकस्यान्यथासिद्धिनिरूपकत्वात्तेन कारणतानवच्छेदकत्वात् समानाकाराणां च

रूपरसगन्धस्पर्शस्नेहपरिमाणद्रवत्वादीनां प्रायश एकैकत्वं न तु नीलादिमात्रस्य तारतम्यानुभवात् पाकात् श्यामं रूपं नष्टं रक्तमुत्पन्नमित्यादिप्रत्ययाच्च ॥

(२८।१) पृथक्त्वमपीति । घटात् पटः पृथगित्येतत्प्रत्ययप्रकारो न द्रव्यादिभिन्नो मानाभावादित्यर्थः । गुणत्वसामान्यस्य निराकर्तव्यत्वेन तन्निषेधस्य कर्तुमशक्यत्वात् । केन तर्हि पृथग्व्यवहार इत्यत आह । अन्योन्याभावादिति । पृथक्त्वं नाभावः सावधित्वात् । न च तदसिद्धम् तथाप्रतीतेः । अभावस्तु न सावधिकः घटान्नेत्यप्रतीतेरत आह । पृथक्त्वेति । मानाभावादिति । अस्तु वा अन्योन्याभावस्यैव सावधित्वं धर्मीति न्यायात् । घटान्नेत्यादिरभिलापस्तु नास्त्येव नञ्योगे पञ्चम्या असाधुत्वादित्यपि वदन्ति । ननु पृथगादिशब्दानामन्योन्याभाववदर्थकत्वे पृथगादिशब्दस्येव नञोपि योगे पञ्चमी स्यात् अन्यारादितरर्तेतिपञ्चमीविधायकसूत्रेण पृथगादिशब्दसाधारणस्यान्यपर्यायान्तःपातिन एव बोधनादित्यत आह । घटादिति । तथा च तत्सूत्रेऽन्यशब्दः पृथगादिपरो न तु सामान्येन तदर्थकपर इति भावः ॥

(२९।४) दूरसन्निकृष्टयोर्ज्येष्ठकनिष्ठयोश्च परापरबुद्धिप्रकारतया परत्वापरत्वाख्ये गुणान्तरे नैयायिकादीनामभिमते निराकुरुते । परत्वेति । रूपादिभिन्ने अस्मादिदं परमपरमिति प्रत्ययविशेषणे न संयोगादिभिन्ने इत्यर्थः । विनापि परत्वापरत्वे दूरसन्निकृष्टयोर्व्यवहारमुपपादयति । विप्रकृष्टेति । बहुतराल्पतरसंयुक्तसंयोगाभ्यामित्यर्थः । जेष्ठकनिष्ठयोस्तदुपपादय-

ति। ज्येष्ठत्वेति । तज्ज्येष्ठत्वम् तत्प्रागभावाधिकरणक्षणवृत्तित्वं तदुत्पत्तिक्षणवृत्तिध्वंसप्रतियोगिसमयवृत्तित्वं वा। तत्कनिष्ठत्वञ्च तदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वं तदधिकरणसमयध्वंसाधिकरणक्षणोत्पत्तिकत्वं वा। घटादेर्ज्येष्ठत्वादिव्यवहारविरहहेतुतत्पदार्थस्तादृशवृत्तित्वादिकं च प्राणित्वेन विशेषणीयम् । तथाविधेति। परापरव्यवहारेत्यर्थः । तचेति । आद्ये विप्रकृष्टत्वसन्निकृष्टत्वे। तृतीयमिति। प्रयागतः काशीविप्रकृष्टा मथुरा । मथुरातः काशीसन्निकृष्टः प्रयाग इति व्यवहारादिति भावः । अन्त्ये ज्येष्ठत्वकनिष्ठत्वे। परस्परेति लक्ष्मणात् ज्येष्ठो रामो रामात्कनिष्ठो लक्ष्मण इति व्यवहारादिति भावः ॥

(३०।३) विशेषोऽपीति। द्रव्यादिभिन्नो न भाव इत्यर्थः। ननु समवायित्वे सति समवायिव्यक्त्यैर्व्यावृत्तं तत्तदसमवेतसमवेतशून्यधर्मसमवायीति व्याप्तेर्घटपटादाववधारणात् । सजातीयनित्यद्रव्यद्वये परस्परासमवेतसमवेतशून्यधर्मसिद्धावर्थाद्विशेषसिद्धिः। अत्र च द्रव्यत्वादिभिः सिद्धसाधनवारणाय तदसमवेतेति । एकत्वादिभिस्तद्वारणाय समवेतशून्येति । अभावव्यक्तिभिस्तद्वारणाय समवायीति। अभावे व्यभिचारवारणाय हेतौ समवायित्वे सतीति । घटादावभावव्यावृत्तिसत्त्वेनाभावसमवेतत्वाप्रसिद्धा व्याप्यत्वासिद्धिः स्यादिति समवायीति । अनुपादेयमेव वा तत् साध्ये तदसमवेतेति परित्यज्य स्वासमवायितत्कत्वस्य वक्तव्यत्वात् साध्ये समवायत्वं साक्षात्स्वाश्रयसमवेतत्वादिपरम्परासाधारणं नातः सजातीयघटद्वये व्यभिचारः विशेषमादाय तत्रापि साध्यसत्त्वात् समवायित्वे सतीत्यपहाय

नित्यद्रव्यत्वे सतीति वाच्यमत आह। विनापीति। समवायेनेति शेषः। स्वत एव। तादात्म्यादिना स्वीयत एव। तथा च यथा विशेषसमवायेन तद्वृत्तिधर्ममन्तरेणापि तद्वृत्तिधर्ममाचस्वत्वेन तद्व्यावृत्तिः तथा प्रकृतेपीत्यप्रयोजकत्वात् तथाव्याप्तिरेव नास्ति किन्तु यो यद्व्यावृत्तः स तद्व्यावृत्तधर्मवानित्येव व्याप्तिरिति भावः। शङ्कते। योगिन इति। त एवेति। तथा च तेषां तदीक्षणमेव नास्ति मानाभावादिति भावः॥

(३२। २) ननु व्याप्यवृत्तिवृत्तिरूपत्वादेः कथमव्याप्यवृत्तिवृत्तित्वं सविषयावृत्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियमात् अव्याप्यवृत्तावस्मदादिज्ञानादौ व्याप्यवृत्तीश्वरज्ञानादौ च वर्तमानस्य ज्ञानत्वादेर्वारणाय सविषयावृत्तीत्यत आह। सविषयेति। ननु तथापि साधकाभावाद्रूपं नाव्याप्यवृत्तीत्यत आह। पक्के चेति। श्यामत्वमिति। रक्तत्वाभावश्च। न तु रक्तत्वमपीति शेषः। तथा चैकत्र घटेऽवच्छेदकभेदेन रक्तत्वतदभावोपलम्भात्प्रत्यक्षसिद्धमेव तदव्याप्यवृत्तित्वमिति भावः॥

(३३। १) नैयायिकवैशेषिकौ विजातीयनानारूपवदवयवारब्धे चित्ररूपवत्ताप्रतीतेर्नीलाद्यतिरिक्तमवयवविजातीयं नानारूपासमवायिकारणकं व्याप्यवृत्ति चित्ररूपं स्वीकुरुतस्तन्निराकरोति। चित्रमपीति। चित्राकारप्रतीतिविषयरूपं न नीलाद्यतिरिक्तमित्यर्थः। एकत्र सजातीये नानारूपभ्रमेण चित्ररूपव्यवहाराभावाद्विजातीयेति। तथेति। चित्ररूपव्यवहारेत्यर्थः। एकमस्य चित्ररूपमिति प्रत्ययस्तु एकं वनमितिवत् समूहस्यैकत्वादिति भावः। नीलादेरिति। न चेदमप्रयोजकं

चित्ररूपं प्रति नीलादीनां व्यभिचारेण नीलरूपत्वादिना हेतुत्वासम्भवात् । न च स्वविजातीयरूपसचिवरूपत्वेन हेतुत्वं स्वविजातीयत्वं च चित्रत्वातिरिक्तं यत्स्वसमवेतं तदन्यधर्मसमवायित्वं नातश्चित्रावयवके चित्ररूपानुपपत्तिरिति वाच्यम् स्वत्वाननुगमात् । नापि रूपत्वेन तद्धेतुत्वं नीलाद्येकैकमात्रावयविके तदनुपपत्तिस्तु प्रागभावविरहादिति सम्यक् रूपवति रूपानुत्पत्त्या रूपं प्रति रूपत्वावच्छिन्नात्यन्ताभावस्यैव हेतुत्वेन तत्र प्रागभावस्याहेतुत्वात् तस्य निरस्तत्वाच्च ॥

एवं चित्रस्पर्शोऽपि नातिरिक्तः समानाधिकरणविजातीयस्पर्शसमुदायादेव तद्व्यवहारोपपत्तेः । इत्थं च चित्ररसोपि नातिरिक्तः अवयविनो नीरसत्वे तु सामानाधिकरण्यं परम्परया बोध्यम्, संयोगेति । अवयवसंयोगविशेष इत्यर्थः । स चावयविनि परम्परासम्बन्धेनेति भावः ॥

एतेन चित्रगन्धोपि निराकर्तव्य इति दिक् । नन्ववयवतिक्तादिनाऽवयविनि मधुराद्यवच्छेदेन तिक्ताद्यजननात् स्वाश्रयसमवेतत्वसम्बन्धेनावयवतिक्तेतररसादेः समवायेनावयवितिक्तादिप्रतिबन्धकत्वमास्थेयमिति कथमवयविनि भिन्नाद्यवच्छेदेन तिक्ताद्युत्पत्तिः । न च तिक्तादीनां स्वाश्रयावच्छेदेनावयविनि तिक्तादिजनकत्वस्वाभाव्येनैवोपपत्तौ अवच्छेदकान्तरे तिक्ताद्यनुत्पादो नोक्तप्रतिबध्यप्रतिबन्धकभावं कल्पयतीति साम्प्रतम् विना तादृशप्रतिबध्यप्रतिबन्धकभावं तथा स्वाभाव्यानिर्वाहात् कार्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् । अथावयवितिक्ताद्यवयवतिक्तयोरवच्छेदकतासम्बन्धस-

मवायसम्बन्धाभ्यामपि कार्यकारणभावान्तरं कल्पनीयं कारणै-कार्थसमवायगर्भया असमवायिकारणतयोक्तातिप्रसङ्गस्य निरा-कर्तुमशक्यत्वादित्युक्तस्वाभाव्यनिर्वाह इति चेत् तर्हि कार्य-कारणभावान्तरस्यावश्यकत्वे लाघवादुक्तप्रतिबध्यप्रतिबन्धक-भाव एवास्थीयते। अन्यथा तादृशावयविन्यनन्तकोटितिक्तादि-कल्पनागौरवापत्तेः। तिक्तेतररसाद्यभावहेतुतायां च न प्रति-योगिनिवेशः तस्याभावविशेषपरिचायकत्वादिति कारणतावच्छे-दके गौरवशङ्कापि नावतरतीत्यभिप्रायवानाह। नीरस एवेति। अवयविनि तिक्तादिप्रत्ययस्तु परम्परयाऽवयवतिक्तादिकमाल-म्बत इति भावः। एवं गतमव्याप्यवृत्तिरूपस्पर्शाभ्यां तत्रा-प्यन्यावच्छेदेन नीलाद्यनुत्पत्तये तथा प्रतिबध्यप्रतिबन्धकभा-वानां वक्तव्यत्वात् एवं च चित्ररूपस्पर्शावप्यतिरिक्तौ स्वीकार्यौ अन्यथा तस्यावयविनो नीरूपस्पर्शत्वे चाक्षुषस्पार्शनाद्यनुपपत्तिः तयोस्तत्र कारणत्वात् तत्र च रूपत्वादिनैव नीलादीनाम-समवायिकारणत्वं चित्ररूपस्पर्शौ प्रति च तदितररूपस्प-र्शयोः प्रतिबन्धकत्वात् प्रतिबन्धकाभावस्य कार्यसहवृत्तित्वेनै-वात्र हेतुत्वात् न नीलाद्युत्पत्तिसमये चित्रोत्पत्तिः। गुरवस्तु चित्ररूपं प्रति नीलेतररूपत्वपीतेतररूपत्वरक्तेतररूपत्वादिना असमवायिकारणत्वं चित्रस्पर्शं प्रति च सुकुमारेतरस्पर्शत्वक-ठिनेतरस्पर्शत्वादिनाऽसमवायिकारणत्वमतो नातिप्रसङ्गव्य-भिचारौ नीलादिपदं च तारतम्यपरं उत्कृष्टापकृष्टनीलाभ्या-मपि चित्ररूपजननादित्याहुः। नैवम् अवच्छेदकतासम्बन्धेना-वयविनीलोत्पत्तिं प्रति समवायेनावयवनीलादेर्नियामकतायाः

कल्पनेनैवातिप्रसङ्गभङ्गे तत्रैव प्रतिबध्यप्रतिबन्धकभावाकल्पनात् चित्ररूपस्पर्शयोस्तदभ्युपगमबाधेन बहुतरकार्यकारणभावकल्पनामपेक्ष्य तत्रावयविनि नीलादिसुकुमारादिकल्पनाया एव न्याय्यत्वात् । इदं तु चिन्त्यते । नीरूपो निस्पर्शस्तत्रावयवी किं न स्यात् द्रव्यचाक्षुषं प्रति रूपस्य स्पार्शनं प्रति च स्पर्शस्य हेतुत्वे मानाभावात् चाक्षुषसामान्यं प्रति विषयकारणताया भावाभावसाधारणेन शक्तिविशेषेणैव लाघवेनावच्छेदात् । अन्यथा गुणादिचाक्षुषेपि रूपस्य सम्बन्धविशेषेण हेतुत्वस्य वक्तव्यत्वेगौरवापत्तेः । अनन्तरूपव्यक्तिकल्पनापेक्षया शक्तिकल्पनाया एव न्याय्यत्वाच्च । एवं स्पार्शनसामान्यं प्रति तथैव रीतिरस्तु । वस्तुतस्तु तत्रावयविनि समवायेन नीलादिप्रतीतेर्बाधकं विना भ्रमत्वायोगादव्याप्यवृत्तयो रूपरसगन्धस्पर्शा दुर्वाराः प्रत्येतव्यकल्पनागौरवेण प्रतीतिबाधरूपादेः त्रुटिमात्रगततापत्तेः । एवं च न कुत्रापि रूपादीनां विजातीयरूपादिविरोधित्वं नीरस एव वा तत्रावयवीत्यत्र तु वाकारोऽनास्थायामिति तत्त्वम् ॥

( ३७ । १ ) एतेनेति । गन्धोपि चाव्याप्यवृत्तिः सुरभ्यसुरभिभ्यामवयवाभ्यामारब्धेऽवयविनि सुरभ्यवच्छेदेन घ्राणसन्निकर्षेऽसौरभ्यानुपलम्भात् न निर्गन्ध एव वा तत्रावयवीत्यर्थः । पितृचरणास्तु तत्र तत्रावयविन्यव्याप्यवृत्तिनीलादिवच्चित्ररूपरसगन्धस्पर्शा अपि दुर्वाराः चित्ररूपानुगताकारप्रतीतेश्चित्ररूपत्वादिजातिमन्तरेणोपपादयितुमशक्यत्वात् । विजातीयनानारूपत्वादेरननुगतत्वात् । अनुगतप्रत्ययापलापिनील-

त्वादेरपि विलोपप्रसङ्गात् । न च नीलादिवृत्तिरेव सा जातिः नीलत्वादिना परापरभावानुपपत्तेः । एवं नीलपीतमात्र-पीतरक्तमात्रतत्तच्चित्रमात्रनीलपीतरक्तमात्राद्यारब्धेषु चित्र-त्वव्याप्यजातयोऽपि दुर्वाराः । तत्तन्नीलत्वादिनैव तयोस्तस्य तेषां च प्रयोजकत्वम् चित्रत्वं च नासमवायिकारणप्रयोज्यम् अस्तु वा पृथिवीरूपत्वेन रूपत्वेन वा तत्रासमवायिकारणत्वं नीलपीतरक्तमात्रारब्धावयवके च चित्ररूपादिचतुष्टयमुत्पद्यते नीलपीतरक्तमात्रारब्धं नीलरक्तमात्रारब्धं पीतरक्तमात्रारब्धं रक्तचित्रमात्रारब्धं च चरमं व्याप्यवृत्ति इतरत्रयमव्याप्य-वृत्तीति विशेषः । तत्तदवयवद्वयमात्रावच्छेदेनेन्द्रियसन्निकर्षे तादृशतादृशचित्रोपलम्भात् । एवं रसादावप्यूहनीयमिति प्राहुः । अस्मत्कृतसिद्धान्तरहस्ये तु नीलविशिष्टपीतादिना नीलपीतोभयादिना वावान्तरचित्रबुद्धिसम्भवात् नावान्तरचि-त्रसिद्धिः । न च सामान्यचित्रत्वेनावान्तरचित्रत्वा-सामानाधिकरण्यप्रत्ययान्नैवमिति वाच्यम् नीलपीतादिविशिष्ट-चित्रेणावान्तरचित्रप्रतीतेः सम्भवस्य तथापि दुर्वारत्वात् नीला-द्यविशेषिता ये नीलादिभेदास्तत्तदाश्रयरूपसमुदायेनानुगतचि-त्रप्रतीतेः सम्भवेन चित्रसामान्यस्याप्यनभ्युपगमाच्च । नन्वेवमपि नीलादिभेदे समुदायेन नीलाद्यनुगतप्रत्ययोपपत्तेः जातिमात्र-मेव विलीयेतेति चेद्विलीयत एव । यदि नाखण्डधर्मावलम्बनानु-भवः यदि चेत्तापि तादृशानुभवोऽभ्युपेयते तदास्तु तत्र तत्रावय-विनि नीलत्वादितत्तच्चित्रत्वाश्रयमेकमेव व्याप्यवृत्तिरूपादिकं लाघवात् नीलत्वादिकमेव तत्राव्याप्यवृत्तिगुणविशेषाणामिव

time the *apékshábuddhi* becomes 'liable to destruction'—*i. e* comes into touch with its destructive cause. The notion of the quality of 'Distance' aries from the community of 'distance,' the cognition of this commonality, and the relationship of the quality of 'distance,'—all this making up one point of time. The notion of the commonality of 'distance' is the cause of the destruction of *Apékshábuddhi*, and also of the production of the notion of 'quality', and hence it is that as soon as it is produced the *apékshábuddhi* becomes liable to destruction; then at the moment we have the destruction of *apéksha-buddhi*, and also the production of the notion of 'quality', and from this destruction of *apékshábuddhi* the quality becomes liable to destruction From the quality, the cognition of the quality, and its relationships, the notion of substances becomes liable to production, and this constitutes one point of time. The destruction of *apékshábuddhi* is the cause of the destruction of the quality, and the cognition of 'quality' is the cause of the cognition of 'substance' The destruction of *apékshábuddhi* and the production of the cognition of 'quality' are simultaneous, thence the destructibility of quality and the producibility of the conjunction of substance would also be simultaneous, and then there is the production of the notion of the substances as qualified by the quality of 'Distance,' and the destruction of the quality itself

(2) The destruction due to the destruction of Conjunction is next described —Simultaneously with the *apékshābuddhī*, there appears an action in the object wherein the quality of 'distance' inheres, and at the next moment, that action brings about the disjunction of space and that object, and then there appears the *apekshābuddhi* and the quality of 'distance,'—this occupying one point of time This quality having been thus produced, we have the appearance of the notion of the commonality of 'Distance,' and from the aforesaid disjunction there follows the destruction of the Conjunction of Space and the object —all this occupying one point of time. Hence at the

time that there appears the notion of 'quality' from the notion of 'commonality,' at that same time we have the destruction of the quality of 'Distance' following from the destruction of the conjunction of space and the object, and not from *apékshā-buddhi*, as this latter also is destroyed at that very time.

(3) The destruction of the qualities by the destruction of the substance is next described —The 'substance' or 'object' is the substratum of the forthcoming quality of 'Distance,' when in a part of this there arises an action, which brings about its disjunction from another part,—at that same time there appears *apékshābuddhi*, and at the time that the disjunction brings about the destruction of the cohesive conjunction of the object, the *apékshābuddhi* brings about the quality of 'Distance,' and then from the destruction of Conjunction we have the destruction of the object, and from that the destruction of the quality inhering in it, and that same time we have the destruction of *apékshābuddhi* following from the notion of the commonality of 'Distance', the destruction of the substratum (*i e* the object) brings about the destruction of the Conjunction of Space and the object, and hence these two cannot be the cause of the destruction of the quality in question, as they are concomitant and coeval with it

(4) The destruction of the substance and *apékshābuddhi* is accepted the cause of the destruction of the quality of 'Distance,' as each of these has been found to bring about its destruction elsewhere, and in the particular case cited, as we cannot very well determine to which one of the two the destruction is due, we attribute it to both

**[Page 171]** (5) In this case the destruction of *apékshābuddhi* cannot be regarded as the cause; as it is only at that very time that it is possible for its destruction to be brought about by the notion of 'commonality'

(6) As at this time the substance is not destroyed, its destruction cannot be regarded as the cause.

(7) The substance is the 'material' cause, the Conjunction is the 'non-material' cause, and the *apékshābuddhi* is the 'efficient' cause.* All the process herein mentioned come about simultaneously because of the simultaneity of the causal operation that brings them about. And thus it is that the destruction of the three causes brings about the destruction of the quality of 'Distance'

All that has been said with regard to the destruction of 'Distance' applies equally to the case of the destruction of the quality of 'Proximity' also.

---

*Text (91) —The words 'buddhi,' 'upalabdhi' 'jnána' and 'pratyaya' are synonymous.*

## Commentary.

It has been shown above that 'distance' and 'proximity' are born of *buddhi*, and the author now proceeds to consider what this *buddhi* is.

On this point the theory of the *Sānkhyas* is as follows A modification of *Pradhána* is the inner organ called '*Mahat*' another name for which is '*Chitta*', and this same is also called '*Buddhi*' (1) Through the sense-organs the *Buddhi* comes into contact with, and is affected by, the external object, and thereby it comes to have a peculiar 'function,' which, taking the form of that same object, and being based upon the attribute of *sattva*, becomes known as '*jnána*' (2). The faculty of consciousness, reflected in the *buddhi* that has become affected by the form of the object thus approached by the sense-organ, comes to imitate the aforesaid 'function' of *buddhi*, and this imitation comes to be known as '*upalabdhi*, (*aprehension*) (3) Says the revered Patanjali (the sentence actually occurs in the *Yogabhashya of Vyasa*, and not in the *Sūtras* of *Patanjali*) "The faculty of the *bhoktri*, the enjoyer, the conscious agent, is modifying, untransferable, and

* The commentary has a long extract from the text here.

appears as if transferred in the modifying object, and comes to perceive or cognise its functioning." In this passage, the 'faculty of *bhoktri*' is none other than the Self, the 'modifying object' is the *principle of buddhi*, and 'transferred' is *reflected*, and 'comes to perceive its functioning' means that being reflected in *buddhi*, it becomes a mere shadow cast in *buddhi*, and thereby comes to imitate its functioning, and the objectives of *buddhi*, in the forms of pleasure or pain, constitutes what is called '*pratyaya*' (4). Says the same author "The *purusha*, though pure, comes to perceive the *pratyaya* belonging to the *buddhi*; and while perceiving it, he appears to be identified with it, though in reality he is wholly distinct from it."

[**Page 172**] With a view to deny this *Sānkhya* theory, (in which distinction is made between *buddhi*, *upalabdhi*, *jnāna* and *pratyaya*) the author has said *The words Buddhi &c.* The sense is that '*Buddhi*' is nothing but synonymous with the other words mentioned. The process of cognition put forward by the *Sānkhya* is denied for the simple reason that no such process is ever perceived. That which is in keeping with the *acceptance* and *rejecting* of the object, and which, in this, appears to have the character of *acquisition* and *expenditure*, is one only (and this is *Buddhi*), and there is another (Self) *i e* the substratum of this *buddhi*; it is this latter on whom which there appear activity or cessation from activity, in accordance with the character of the *buddhi* appearing therein. Both these entities are cognised by all men, no other process is ever known to take place As regards the 'function' of *buddhi* postulated by the *Sānkhya*, we ask—Is this 'function' something distinct from *buddhi*, or absolutely identical with it? Distinct from *buddhi* it cannot be, because it is held that there is an absolute identity between the 'function' and that wherein the function appears If however it be absolutely identical with it, then, in as much as *buddhi* is one only, its functions too, bearing the forms of objects, could not but be one only, and then any idea of three, or 'four' &c., with regard to the 'function' would be absolutely impossible; specially

as there could be no cognition of any distinct forms among them; and also because what on the *purusha* cognises is only that form which is imprinted on *buddhi*, as has been declared "purusha is the counter-cogniser of *buddhi*" On the other hand, the number of 'functions' being many, *buddhi* also would become many; and this would be opposed to the idea of its singleness These and many other such like objections against the *Sānkhya* theory may be put forward.

---

*Text (92),—Buddhi has various forms, as objects are endless, and it appertains to each individual object.*

## Commentary.

The author proceeds to point out the various kinds of *buddhi*, and shows the reason for its endless varieties. The clause 'and it appertains etc' has been added in order to show the reason why the endlessness of objects leads to the endlessness of buddhic forms. The meaning is that our '*buddhis*' are found to appertain to, and be restricted to, each individual object of cognition · and the number of objects is endless, consequently the corresponding *buddhis* too must be endless. Though there may be cases where we have a single cognition with regard to many objects, yet, even in such cases the cognition is restricted to the objects cognised, and as such it cannot but be regarded as distinct from the cognition of objects other than these; and hence even these instances do not vitiate our theory of the number of *buddhis* being many.

---

*Text (93)·—Though there are many kinds of buddhi, yet briefly it is of two kinds, in the form of vidyā 'knowledge' and avidyā 'non-knowledge' or 'Ignorance.' Of these avidyā is of four kinds, in the shape of (1) sançāya, 'doubt' (2) viparyaya 'misconception' (3) anadhyavasāya, 'indefinite or indistinct cognition and (4) svapna 'dream.'*

## Commentary.

Though there are as many *buddhis* as there are objects in the world, yet it may briefly be said to be of two kinds *Vidyā* or knowledge is a cognition of the nature of a definite idea free from all doubts and discrepancies (literally, not rejected as false), and *avidyā* is of the opposite character. As on the present occasion the author has got only to show the two kinds of *buddhi*, he proceeds to describe *avidyā* first though it was the last to be mentioned

This *avidyā* is of four kinds, in the forms of Doubt &c

**(Page 173)** *Objection* "It is not quite right to limit the number to four only, as we have a well-known form of *avidya* in the form of *tarkajnāna*, 'suppositional or argumentative cognition or idea,' appearing between Doubt and Certain cognition. For instance, some people hold that the Self is liable to production while others hold that it is not producible, and between these two contradictory views, there arises the doubt as to whether the Self is liable to production, or not, and then there comes in a cognition in the argumentative form in some such way as this—if the Self were liable to production, then it could not be subject to the cycle of births and rebirths, which consists in the connection and disconnection of the Self with many bodies, one after the other, nor would it be capable of final deliverance from that cycle, while, on the other hand, if it were not liable to production, then being the one cogniser it would be open to the cycle of births and also capable of final deliverance, and hence the Self cannot but be regarded as incapable of production. As for the purpose to be served by such suppositional cognition, it is none other than the knowledge of truth; because the premiss that leads to the true conclusion is rendered as much futile by a doubt to the contrary as by a distinct contradictory cognition, for the simple reason that no object has two forms (as appear in all doubts). This has been thus declared by the revered Bhatta (Kumārila). 'So long as there is even the hun-

dredth part of suspicion with regard to the truthfulness of the contrary proposition, how can there be any conclusive strength in that premiss?' Thus then having, by the previous argument, set aside the producibility of the Self, and having ascertained its non-producibility, when the person comes to ponder over the subject, he finds the course of inference free from all contravening agencies, and it is then that the inferential process becomes duly operative. Thus then *Tarka* or argumentation leads to the knowledge of truth, through the due pondering over of the nature of things concerned, and as for the means of knowledge its end is served only by the aid of the argumentation which embodies the *procedure* leading to the final result in the shape of the knowledge, in which the means of knowledge comes in as the *means*, as an axe even though extremely sharp-edged, is not capable of cutting a wood, when held strongly in the hand, of a person not wishing to cut by it, as has been well said—'there is no instrument, either in the case of ordinary actions or in that of vedic ones, which does not stand in need of the help accorded by the *procedure*.' Then again, if Argumentation be not admitted to exist, then it would be equally proper to reject 'prasanga'—which consists in the bringing about of something undesirable for the opposing disputant; as in reality, this too does not differ in nature from *Tarka* or Argumentation. And yet the Vaisēshikas also admit of *Prasanga*, when they assert that *Prasanga* is not a proper premiss or *hetu*, because it is open to the fallacies of *Āçrayāsiddhi* and the like.

To the above we make the following reply what is this *Tarka*? Does it consist of the cognition of the negation of the opponent's proposition? or of the likelihood of one's own proposition? In the former case, it would be of the nature of true cognition (and as such not a fifth mind of *Avidyā*), because if the cognition that, 'if the cogniser were transient then there would be no possibility of the metempsychosis or deliverance,' were not of the nature of 'true cognition,' then it would not establish the negation of the opponent's view, as any cognition

that is not itself true cannot serve any purpose, and so in this case it would be wholly imperative, as there would not be any discrimination of the nature of things. If however the negation of the opponent's view be regarded to be established by it, then it cannot but be 'true cognition', and as such would come under one of the kinds of 'true cognition,' in the form of 'sense-perception' and the rest, as apart from these there is nothing that can bring about any conviction. All this will have to be admitted by you, however much against your wish it may be. As for *Prasanga*, it consists in the putting forward of a contradiction involved (in the opponent's proposition), and this is nothing else save the bringing up of an authoritative proof contrary to that view. Then we ask—what is *Tarka* save this contrary proof, and the words giving expression to this proof?

[Page 174] If, on the other hand, *Tarka* be held to consist in the putting forward of the likelihood of one's own view of the case, then,—we ask, what would be the cause of the production or appearance of this? A proof supporting one's own view cannot be this cause, as no such proof is operative at the time, for if the proof were to operate after the nature of things has been duly discriminated by means of *Tarka*,—and then if that same proof were to be the cause of this *Tarka*,—we would have a distinct case of mutual inter-dependence.

*Objection*: "When the negation of the opponent's view has been cognised, then there appears the cognition of the likelihood of one's own view, and as such the former cognition may well be regarded as the cause of the latter."

*Reply*: In that case, this would be nothing more or less than an inference based upon the negation of the opponent's view; as between two contradictions, the negation or absence of one is invariably concommitant with the presence of another.

*Objection*, "It would have been so if we had a definite cognition of the Self having any one of the two characters, as it is however, there is no definite cognition, nor is it of the nature

of a Doubt, as it does not partake of both possibilities, hence having moved one step forward from Doubt, and yet not having reached the stage of Definite Cognition, the idea of likelihood must be accepted as something wholly distinct from either, it is for this reason that we find people saying—'thus do I *argue* or think.'"

*Reply* It is not so, because wherever, on account of natural possibilities, there is a definite cognition of the negation of the opponent's view, we have proof of one or other of the two contending views, where however we have a notion of the likelihood of the opposite view, there is no proof or authority for the other view. When the intelligent person, having this concomitance in view, comes to recognise the negation of the opposite view, he is led to think that the Self is non-producible, and then he comes to recognise the natural possibilities of the thing concerned (*i e*, the Self) as the proof of that idea of his, and this is nothing but a case of inference Thus then, the recognition of the natural possibilities of things aiding the process of the proof, it comes to be regarded as the cause of the operation of that proof, if it were not so, then, the cognitions of mere likelihood would be absolutely useless, as not being of the nature of the definite cognition, it could not aid either in any accomplishment or in any perception, and as for the discrimination of the nature of the thing, it is accomplished by the negativing proof which proves the negation of the opposite view

Others hold that *Tarka* is only one kind of 'Doubt', as in that also there is no certain or definite cognition

---

*Text (94)· As for Doubt,—when two objects possessed of well-known distinct specific characteristics, are seen, and we perceive only the similarities between them, then we recall to our mind the peculiarities of the objects, and from this cause, and*

*also by reason of a certain adharma, there arises in our mind a pondering, in the form of 'whether it is this or that', and it is this pondering that constitutes Sançaya, 'Doubt.'* II-1-17-20

*It is of two kinds, internal and exteral Where, an astrologer made certain predictions from certain circumstances, which turned out to be true in one case, but false in another,—if this same person makes for the third time similar predictions from similar conditions, with regard to past, present and future events, there arises in his mind a doubt as to whether his predictions would turn out true or false, and this is an example of Internal Doubt. External Doubt is of two kinds, as pertaining to perceptible and imperceptible objects In the case of two imperceptible objects we find that when we come across a 'mark' common to both af them, we remember their peculiarities, and then from a certain adharma there arises a Doubt, e g when in a forest we see the horns only, we doubt whether the animal seen is a cow or a gavaya In the case of two perceptible objects, like the post and the man, when we perceive only the tallness that is common to both, and do not notice the crookedness and other marks peculiar to each, there is no manifestation (in our mind) of the class 'post' or 'man'; and then when we come to remember the peculiarities of each, the Self has its conviction swinging from the one to the other, and falls into a doubt as to whether the object seen is a post or a man.*

## Commentary

The particle '*tavat*' is added in order to denote the sequential order of the subject taken up for consideration, the mean-

ing being that we now proceed to describe Doubt. The 'two objects'—*i e*, the post and the man—having various such distinctive features as are well-known from before, such *i e* as the presence of crookedness and cavities,—having only their similarity—*i e.*, the qualities common to both—perceived, and then there appearing a remembrance of the said well known distinctive features,—and from a certain *adharma,* there arises a *doubt* &c. &c., which while touching both the man and the post does not touch anyone of them definitely, and this cognition partaking of two contradictory objects is what is called '*Sançaya*' or 'Doubt.'

*From the perception of mere similarity*—The addition of the word 'mere' indicates the non-apprehension of the distinctive features, the word '*darçana*' here means *apprehension* and not direct *sense-perception*, as even inferential cognitions or apprehensions are found to give rise to doubts The 'cognition of similarity' implies the congnition of one object wherein the similarity exists, as in the absence of the cognition of the object, there could be no cognition of the similarity belonging to it. The Doubt too pertains to the object and not to mere similarity, which latter is distinctly and definitely recognised, and with regard to which thus there can be no doubt. The word 'similarity' indicates only the possession of common properties, and it is not something inhering in many objects, because with regard to the single object, Self, we have a doubt as to whether it is *subtile* and small or large,—the doubt being due to the fact of the nontouchability (which is found in the Self) being found in the *extensive Ākāça* as well as in the subtile and small internal organ

The upshot of the whole thus is this —When a person perceives in any object a certain property that is common to it with another object,—and by some reason or other fails to perceive the distinctive feature of that object,—and then remembers the two objects as perceived on some former occasion,

as possessed of mutually contradictory properties, and yet does not perceive the likelihood of these properties existing in any single object, by reason of their contradictory character,—nor does he perceive their nonexistence, as he actually perceives the common properties concomitant with it,—then, at that time he having definitely cognised the object as possessing the common properties, there arises in his mind an uncertain feeling as to that object being possessed or not of its distinctive features, and this uncertain feeling is what we call 'doubt'

*Objection* "To say that it is a 'cognition,' and yet to call it 'uncertain' is a contradiction in terms, as the very nature of cognition lies in the fact of its *ascertaining* the object"

**[Page 176]** *Reply* Not so, since both are possible. The cognition in question is produced by the apprehension of an object qualified by a property in common with another object, aided by the remembrance of the distinctive features of both, which would be contrary to the perception of the particular (common) property, and thus pertaining to the object qualified by the common property, the cognition cannot definitely ascertain which one of the two objects, *post* and *man*, it is, and it is for this reason that it is called 'uncertain', though still retaining the character of *cognition* It is a fact of common experience that peculiar accessories bring about peculiar effects; as in the case of 'recognition.'

Doubt is *Avidyā*; and this is an undesirable thing; and as such an effect of *adharma*, this is what is meant by '*adharmāt.*

*Objection* · "In a case where after having perceived a commonality (the common property), the man remembers a peculiarity (the distinctive features of the objects),—in as much as, on the occasion of this latter remembrance, the previous perception of the commonality will have been destroyed, it could not serve as the cause of Doubt"

*Reply* It is not so; in as much as the single remembrance of the distinctive peculiarities of the two objects is brought about by the *impressions* of these peculiarities, awakened simultaneously, there is every chance, at that time, of the existence of the disappearing cognition of the commonality.

Doubt is of two kinds.—External and Internal These include the five kinds of Doubt put forward by other Vaiçeshika writers,—these five kinds being (1) due to the perception of common properties, (2) due to the perception of many properties, (3) due to contradiction or disagreement, (4) following from the indefinite character of the perception, and (5) following from the indefinite character of non-perception.

To give an example of Internal Doubt An astrologer, having consulted the positions and motions of the planets and stars, makes certain calculations as to a certain event having happened, happening or likely to happen (in the past present and future), and he finds them true, on another occasion however he finds his deduction from the same causes turn out false, and then when on a third occasion he makes similar predictions from the same causes, he has his doubts as to whether it would turn out true or not.

The *external* Doubt is of two kinds—that pertaining to perceptible objects, and that to imperceptible ones &c &c. As instance of the latter kind we have the case where on seeing the horn only &c &c. &c. In this case the object is hidden from view behind some large tree like the banyan; and its character is only inferred from the sight of the horn, and hence the object of Doubt on this case is said to be *imperceptible*. As an instance of the former kind we have the well-known case of the *post* and the *man*, in which case we see the *object* and therein perceive and cognise definitely only the *tallness* that is common to the *post* and the *man* The distinctive features not perceived are those of *crookedness* (in the case of the post) and the presence of hands, feet &c. in

the body of the man. The word 'etcætera,' in the sentence "there being no manifestation of the class 'post' &c" is added to include the class 'man' The 'crookedness' &c, are the causes of the manifestation of the class 'post,' and the presence of 'head' 'hands' &c is the causes of the manifestation of the class 'man'. And when these distinguishing features are not perceived in the object before the person, the class 'man' or 'post' is not manifested (i e recognised) and then the observer happening to remember the characteristics of the man and the post, when he is inclined to conclude that the object before him is a post, he is met by the characteristics of the man that present themselves to his mind, and when he wishes to conclude it to be *man* he is met by those of the post, and thus being drawn from the one to the other, he finds his cognition 'swinging,' 'inconstant,' moving from one to the other. The similarity of the swing lies in the unsettled character of the conviction, which is in the form—'is this a post or a man'

---

*Text (95)—Misconception also pertains to objects of Sense-perception and Inference only. As an instance with regard to perceptible objects, we have the case when of two objects possessed of many well-known qualifications, it so happens that the real thing is not perceived by the person who has his sense-organs deranged by such causes as bile, phlegm and wind, and then the impression on the mind, left by the previous perception of the thing not before the observer, comes to effect the contact of the Self with the mind, and from this contact, and also from a certain adharma, there appears an idea of something which the thing is not, and this idea is a misconception, e. g. the idea of 'horse' with regard to the cow. Even when there is no actual perception, there is an*

*impression or semblance of it, as for instance we have such notions of perceptions as that when the clouds have passed off, the sky appears like the calm ocean, and the night's darkness appears as dark as a mass of colyrium dust. As regards inferable objects, we often find that vapour is mistaken for smoke, and from that the existence of fire is inferred, and also the sight of the horns of the gavaya leads to the inference that the animal is a cow. With regard to the tenets of the Buddha and others opposed to the Veda, some people have the idea that they are conducive to actual welfare; and this also is an instance of wrong idea, a misconception So also are the following—the notion of 'self' with regard to the body, the organs and the mind, the idea of eternality with regard to caused things, the idea of the appearance of effects in the absence of adequate causes, the idea of 'evil' with regard to persons advising what is really good for us; and the idea of 'good' with regard to these who counsel evil ways.*

**Commentary.**

**[Page 178]** After Doubt, the author proceeds to deal with Misconception Misconception also pertains to objects perceiv- and inferred, like Doubt This declaration is due to the fact of there being (according to the *Vaiçeshika*) no third means of true knowledge.

As for misconception with regard to perceptible objects:— we find *e g* in the case of the cow and the horse, of whom many such peculiarities as the presence of the dewlap and the mein respectively, are well known, that we have with regard to the cow the idea that it is a horse which it is not, and *vice versa*, and this is a case of misconception

*Objection* "When such distinctive features of the cow as the class 'cow,' the presence of the dewlap &c, are duly recognised, there can be no misconception, for if even after the due perception of these a misconception be possible, then there would be no end to such misconceptions"

In reply to this the author adds—*the real thing not being perceived* i e, there is no such definite cognition as that 'this animal with the dewlap &c, that I see is a cow', and it is for this reason that we have the notion with regard to a thing, of something that it is not This means that the cause of misconception consists in the non-perception of characteristic properties

*Question* "What is the reason that when the object before the observer is the cow, what he cognises is the class 'horse,' an individual whereof is before him, and not the class of 'cow'?"

*Answer. The sense-organ being deranged &c*; this that is to say, the misconception arises only in such persons as have their sense-organs deranged by the disorder of the [illegible] humours of wind, bile and phlegm,—a disorder the power whereof to bring about the perception of something not before the eyes, and to obstruct the perception of that which is before the eyes, has thus been indicated

*Objection* "If it were solely on account of the power of the derangement that something not before the eyes were perceived, then everything in the world would be perceived everywhere, as there would be nothing to limit the force of the derangement"

*Reply From the contact of the mind and the self, affected by the impressions of the previous cognition of the thing not before the eyes &c.* Such a thing, in the case in question is the *horse*; this having been seen on some previous occasion, the observer has impressions of it on his mind, and when this impression affects the contact of the mind and the Self at the

**विनञ्भ्यां नानाञौ नसह। ५। २। २७॥**

असहार्थे पृथग्भावे वर्त्तमानाभ्यां स्वार्थे प्रत्ययौ॥ विना। नाना॥

**वेः शालच्छङ्कटचौ। ५। २। २८॥**

क्रियाविशिष्टसाधनवाचकात्स्वार्थे॥ विस्तृतम्। विशालम्। विशङ्कटम्॥

**सम्प्रोदश्च कटच्। ५। २। २९॥**

सङ्कटम्। प्रकटम्। उत्कटम्। चाद्विकटम्॥ अलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम्॥ *॥ अलाबूनां रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्॥ गोष्ठजादयः स्थानादिषु पशुनामभ्यः॥ *॥ गवां स्थानं गोगोष्ठम्॥ सङ्घाते कटच्॥ *॥ अवीनां सङ्घातोऽविकटः॥ विस्तारे पटच्॥ *॥ अविपटः॥ द्वित्वे गोयुगच्॥ *॥ द्वावुष्ट्रौ उष्ट्रगोयुगम्॥ षट्त्वे षड्गवच्॥ *॥ अश्वषड्गवम्॥ स्नेहने तैलच्॥ *॥ तिलतैलम्। सर्षपतैलम्॥ भवने क्षेत्रे शाकटशाकिनौ॥ *॥ इक्षुशाकटम्। इक्षुशाकिनम्॥

**अवात्कुटारच्च। ५। २। ३०॥**

चात्कटच्। अवाचीनोऽवकुटारः। अवकटः॥

**नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। ५। २। ३१॥**

अवादित्येव। नतं नमनं। नासिकाया नतं अवटीटम्॥ अवनाटम्। अवभ्रटम्। तद्योगान्नासिका अवटीटा। पुरुषोऽवटीटः।

**नेर्बिडज्बिरीसचौ। ५। २। ३२॥**

निबिडम् । निबिरीसम् ॥

**इनच्पिटच् चिक चि च । ५ । २ । ३३ ॥**

नेरित्येव । नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिक चि इत्यादेशौ च ॥ कप्रत्ययचिकादेशौ च वक्तव्यौ ॥ * ॥ चिकिनम । चिपिटम् । चिक्कम् ॥ क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी ॥ * ॥ क्लिन्ने चक्षुषी अस्य चिल्लः । पिल्लः ॥ चुल च ॥ * ॥ चुल्लः ॥

**उपाधिभ्यां त्यकन्नासन्नारूढयोः । ५ । २ । ३४ ॥**

संज्ञायामित्यनुवर्तते ॥ पर्वतस्यासन्नं स्थलमुपत्यका । आरूढं स्थलमधित्यका ॥

**कर्मणि घटोऽठच् । ५ । २ । ३५ ॥**

घटत इति घटः पचाद्यच् । कर्मणि घटते कर्मठः पुरुषः ॥

**तदस्य सञ्जातं तारकादिभ्य इतच् । ५ । २ । ३६ ॥**

तारकाः सञ्जाता अस्य तारकितं नभः । आकृतिगणोऽयम् ॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः । ५ । २ । ३७ ॥**

तदस्येत्यनुवर्तते । प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रच् । द्वयसज्दघ्नचौ तु विशेषे स्मर्यते । तथाच भाष्यम् । प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ ममेति । ऊर्द्ध्वावस्थितेन येन मीयते तदूर्द्ध्वमानमूर्वादि । तेन तिर्यङ्मानादौ न भवतः । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ॥ प्रमाणे लः ॥ * ॥ प्रमाणशब्दत्वेन ये प्रसिद्धा दिष्टिहस्तादयस्ततः परस्यैवायं लुग्विधीयते । शमः । दिष्टिः । वितस्तिः । एषु मात्रचो लुक् । इतरयोरसम्भवात् । शमादीनामनूर्द्ध्वमानत्वात् ॥ द्विगोर्नित्यम् ॥ * ॥ द्वौ शमौ प्रमाणमस्य

द्विशमम्। द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तौ लुग्विधीयते। एतत्सामर्थ्यादेव प्रमाणान्ताद्द्विगोर्मात्रच्। ननु नेह विकल्पः प्रकृतः तत्किं नित्यग्रहणेन। अत्राहुः। अनुपदं वक्ष्यमाणः संशये मात्रच् शममात्रमित्यादौ यथा न लुप्यते प्रमाणे ल इत्यस्य पूर्वविधिविषयत्वात्। एवं द्विगोरपि न लुप्येत। इष्यते च लुक् द्वौ शमौ स्यातां न वा द्विशम इति। तथा चाधिकसंग्रहार्थं नित्यग्रहणमिति। एतत्सामर्थ्यादेव प्रमाणान्ताद् द्विगोः संशये मात्रच् न तु परिमाणाद्यन्तात्। अप्राप्तेः। तेन पञ्च कुडवाः स्युर्न वेति संशये वाक्यमेवेति दिक्॥ डट् स्तोमे वक्तव्यः॥ *॥ अत्रायामादिमानस्यासम्भवात्परिच्छेदोपाधिकायाः संख्यायाः स्तोमेऽभिधेये डट्प्रत्ययः। डित्करणमेकविंशस्त्रयस्त्रिंश इत्यादौ टिलोपार्थम्। पञ्चदशादौ नस्तद्धित, इत्येव सिद्धम्। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशी रात्रिः। स्तोमसाहचर्याद्रात्र्यादौ स्त्रियां वृत्तिः। टित्वान्ङीप्। तदस्य परिमाणं सङ्ख्यायाः सञ्ज्ञासङ्घेत्यत्र तु स्तोमे डो विहितस्तत्र टाप् भवति। यद्यस्ति प्रयोगः। अथ तु नास्ति ततोऽस्यैव प्रपञ्चः॥ शन्शतोर्डिनिर्वक्तव्यः॥ पञ्चदशिनोऽर्द्धमासाः। त्रिंशिनो मासाः। अत्र छन्दसि भाषायाञ्च डिनेः सामान्यविधानात्सङ्ख्यायाः सञ्ज्ञासंघेत्यत्र शन्शतोर्डिनिश्छन्दसीति वचनं कैश्चित्प्रठ्यमानं प्रपञ्चार्थमेव॥ विंशतेश्चेति वक्तव्यम्॥ *॥ विंशिनोऽङ्गिरसः। प्रवरभेदेन विंशतिः प्रभेदा उच्यन्ते। तत्र विंशतिशब्दात्सङ्ख्यानमात्रवाचिनः सङ्ख्येये प्रमेये डिनिः। तिविंशतेरिति तिलोपः। तस्य यस्येति चेत्यकारलोपे कर्तव्ये ऽसिद्धवदत्राभादित्यसिद्धत्वं न भवति। भाष्यकारवचनात्॥ प्रमाणपरिमाणाभ्यां संख्यायाश्च संशये मात्रज्वक्तव्यः॥ *॥ शममात्रम्। प्रस्थमात्रम्।

पञ्चमात्रम् ॥ वत्वन्तात्स्वार्थे द्वयसज्मात्रचो ॥ * ॥ तावदेव तावन्मात्रम् । तावद्वयसम् ॥

पुरुषहस्तिभ्यामण् च । ५ । २ । ३८ ॥

पुरुषः प्रमाणमस्य पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् ।

यत्तदेतेभ्यः परिमाणे वतुप् । ५ । २ । ३९ ॥

यत्परिमाणमस्य यावान् । तावान् । एतावान् ॥ युष्मदस्मद्भ्यां छन्दसि सादृश्ये वतुप् वाच्यः ॥ * ॥ त्वावतः पुरूवसो । न त्वावान् । यन्न विप्रस्य मावतः । तत्सदृशस्येत्यर्थः ।

किमिदंभ्यां वो घः । ५ । २ । ४० ॥

आभ्यां वतुप्स्यात् वस्य च घः ॥ कियान् । इयान् ॥

किमः संख्यापरिमाणे डति च । ५ । २ । ४१ ॥

चाद्वतुप् । तस्य च वस्य घः स्यात् ॥ का संख्या येषां ते कति । कियन्तः ॥

संख्याया अवयवे तयप् । ५ । २ । ४२ ॥

पञ्च अवयवा अस्य पञ्चतयम् ॥

द्वित्रिभ्यां तयस्यायज्वा । ५ । २ । ४३ ॥

द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ॥

उभादुदात्तो नित्यम् । ५ । २ । ४४ ॥

उभशब्दात्तयपोऽयच् स्यात्स चाद्युदात्तः ॥ उभयम् ॥

तदस्मिन्नधिकमिति दशान्ताड्डः । ५ । २ । ४५ ॥

एकादश अधिका अस्मिन्नेकादशम् । शतसहस्रयोरेवेष्यते ॥*॥ नेह । एकादश अधिका अस्यां विंशत्याम् । प्रकृतिप्रत्ययार्थयोः समानजातीयत्वे एवेष्यते । नेह । एकादश माषा अधिका अस्मिन्सुवर्णशते ॥

## शदन्तविंशतेश्च । ५ । २ । ४६ ॥

डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन् त्रिंशं शतम् । विंशम् । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति तदादिनियमः स्यात् तं वारयितुमन्तग्रहणम् । तेन एकत्रिंशं शतं एकचत्वारिंशमित्यादि । नचैवं गोत्रिंशदधिका अस्मिन् गोशते इत्यादावतिव्याप्तिः । संख्याया अवयवे तयबित्यतः संख्याग्रहणानुवृत्तेः । अन्तग्रहणं च विंशतिशब्दानन्तरं बोध्यम् । शद्विंशत्यन्ताच्चेति । तेन एकविंशं शतमिति सिध्यति । अन्यथा ग्रहणवता तदन्तविधिप्रतिषेधादिह न स्यात् ।

## संख्याया गुणस्य निमाने मयट् । ५ । २ । ४७ ॥

तदस्य सञ्जातमित्यतस्तदस्येत्यनुवर्त्तते । गुणो भागः । निमानं मूल्यं निमीयते क्रीयतेऽनेनेति व्युत्पत्तेः । भागस्य मूल्ये वर्तमानात्प्रथमान्तात्संख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् ॥ यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे । तेन सामानाधिकरण्यं भवति द्विमयमुदश्विदिति । गुणस्य चैकत्वं विवक्षितम् । तेनेह न भवति । त्रयो यवानां भागा निमानमनयोरुदश्विद्भागयोरिति । निमाननिमेययोः साम्येऽपि नेष्यते । एको यवभागो निमानमस्योदश्विद्भागस्येति ॥ निमेये चापि दृश्यते ॥ * ॥ निमेये वर्त्तमानायाः संख्यायाः निमाने प्रत्ययो दृश्यते । उदश्वितो द्वौ भागौ

निमेयस्य यवभागस्य द्विमया यवा उदश्वितः । संख्याया इति किम् । यवभागो निमानमस्योदश्वितुागस्य । गुणस्येति किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमाने किम् । द्वौ गुणौ चीरस्य एकस्तैलस्य द्विगुणा तेन पच्यते चीरेण ॥

**तस्य पूरणे डट् । ५ । २ । ४८ ॥**

एकादशानां पूरण एकादशः ॥

**नान्तादसंख्यादेर्मट् । ५ । २ । ४९ ॥**

डटो मडागमः स्यात् ॥ पञ्चानां पूरणः पञ्चमः । नान्तात्किम् । विंशः । असख्यादेः किम् । एकादशम् ॥

**थट् च छन्दसि । ५ । २ । ५० ॥**

चान्मट् । पञ्चथम् । पञ्चमम् ॥

**षट्कतिकतिपयचतुरां थुक् । ५ । २ । ५१ ॥**

एषा थुगागमः स्यात् डटि ॥ षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्यासंख्यात्वेऽपि अत एव ज्ञापकात् डट् ॥ कतिपयथः । चतुर्थः ॥ चतुरश्छयतावाद्यक्षरलोपश्च ॥०॥ तुरीयः । तुर्यः ॥

**बहुपूगगणसंघस्य तिथुक् । ५ । २ । ५२ ॥**

डटीत्येव ॥ पूगसङ्घयोरसंख्यात्वेऽप्यत एव डट् । बहुतिथ इत्यादि ।

**वतोरिथुक् । ५ । २ । ५३ ॥**

डटीत्येव । यावतिथः ॥

**द्वेस्तीयः । ५ । २ । ५४ ॥**

डटोऽपवादः । द्वयोः पूरणो द्वितीयः ।

**त्रेः संप्रसारणञ्च । ५ । २ । ५५ ॥**

तृतीयः । इह हल इति दीर्घो न । द्वितीयतृतीयइति निर्देशात् ॥

**विंशत्यादिभ्यस्तमडन्यतरस्याम् । ५ । २ । ५६ ॥**

एभ्यो डटस्तमडागमो वा स्यात् ॥ विंशतितमः। विंशः । यद्यपि ग्रहणवतेति निषेधात्तदन्तविधिर्दुर्लभस्तथापि षष्ट्यादेश्चासंख्यादेरिति संख्यादिपर्युदासादिह प्रकरणे तदन्तग्रहणम् । एकविंशतितमः । एकविंशः । विंशत्यादयश्चेह प्रत्यासत्त्या पङ्क्त्यादिसूत्रे निपातिता गृह्यन्ते न तु लोकप्रसिद्धाः । विप्रकृष्टत्वात् । तेनेहापि । एकान्नविंशतेः पूरणः एकान्नविंशतितमः । एकान्नविंशः । लौकिकानां ग्रहणे तु नैतत्सिध्येत् विंशतेः प्राग्भावित्वादस्याः संख्यायाः ॥

**नित्यंशतादिमासार्द्धमाससंवत्सराच्च । ५ । २ । ५७ ॥**

तस्य पूरणः शततमः । एकशततमः । सहस्रतमः । लक्षतमः मासादेरत एव डट् । मासतमो दिवसः । अर्द्धमासतमः । संवत्सरतमः ॥

**षष्ट्यादेश्चासंख्यादेः । ५ । २ । ५८ ॥**

षष्टितमः । संख्यादेस्तु विंशत्यादिभ्य इति विकल्प एव । एकषष्टः । एकषष्टितमः ।

**मतौ छः सूक्तसाम्नोः । ५ । २ । ५९ ॥**

प्रातिपदिकान्मत्वर्थे छः स्यात् ॥ अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम् । वारवन्तीयं साम ॥

**अध्यायानुवाकयोर्लुक् । ५ । २ । ६० ॥**

मत्वर्थस्य छस्य । अत एव ज्ञापकात्तत्र छः । विधानसामर्थ्याच्च विकल्पेन लुक् । गर्दभाण्डः । गर्दभाण्डीयः । अध्यायेऽनुवाकश्च ।

विमुक्तादिभ्योऽण् । ५ । २ । ६१ ॥

मत्वर्थेऽस्यादध्यायानुवाकयोः ॥ विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तः । दैवासुरः ।

गोषदादिभ्यो वुन् । ५ । २ । ६२ ॥

मत्वर्थेऽध्यायानुवाकयोः । गोषदकः । इषेत्वकः ॥

तत्र कुशलः पथः । ५ । २ । ६३ ॥

वुन्स्यात् । पथि कुशलः पथकः ।

आकर्षादिभ्यः कन् । ५ । २ । ६४ ॥

आकर्षे कुशलः आकर्षकः । आकर्षादिभ्य इति रेफरहितो मुख्यः पाठः । आकर्षो निकषोपलः ।

धनहिरण्यात्कामे । ५ । २ । ६५ ॥

काम इच्छा न तु कामयिता । तत्रेति वर्तते धने कामे धनको देवदत्तस्य । हिरण्यकः ॥

स्वाङ्गेभ्यः प्रसिते । ५ । २ । ६६ ॥

केशेषु प्रसितः केशकः । तद्रचनायां तत्पर इत्यर्थः ।

उदराट्ठगाद्यूने । ५ । २ । ६७ ॥

अविजिगीषौ ठक् स्यात् । कनोऽपवादः । बुभुक्षयात्यन्तपीडित उदरे प्रसित औदरिकः । आद्यूने किम् । उदरकः । उदरपरिमार्जनादौ प्रसक्त इत्यर्थः ।

## शस्येन परिजातः । ५ । २ । ६८ ॥

कन्स्वर्यते न तु ठक् । सस्यशब्दो गुणवाची न तु धान्यवाची । शस्येनेति पाठान्तरम् । शस्येन गुणेन परिजातः सम्बद्धः शस्यकः साधुः ॥

## अंशं हारी । ५ । २ । ६९ ॥

हारीत्यावश्यके णिनिः ॥ अत एव तद्योगे षष्ठी न । अंशको दायादः ।

## तन्त्रादचिरापहृते । ५ । २ । ७० ॥

तन्त्र तन्तुवायशलाका । तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्तेः । तन्त्रादचिरापहृतस्तन्त्रकः पटः । प्रत्यग्र इत्यर्थः । अचिरः कालोऽपहृतोऽस्येति कालाः परिमाणिनेति समासः ॥

## ब्राह्मणकोष्णिके संज्ञायाम् । ५ । २ । ७१ ॥

आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः । अल्पमन्नं यस्यां सा उष्णिका यवागूः । अन्नशब्दस्य उष्णादेशो निपात्यते ॥

## शीतोष्णाभ्यां कारिणि । ५ । २ । ७२ ॥

संज्ञायामित्यनुवर्तते । शीतमिव शीतं मन्दं यथा स्यात्तथा करोति शीतकोऽलसः । उष्णमिव उष्णं शीघ्रं यथा स्यात्तथा करोति उष्णकः शीघ्रकारी ॥

## अधिकम् । ५ । २ । ७३

अध्यारूढशब्दात्कन् उत्तरपदलोपश्च ॥ यदि पुनरधिशब्दात्क्रियाविशिष्टसाधनवचनात्कन्निपात्यते तदा कर्तृकर्मणोरन्यतरस्यैवाभिधानं स्यात् । अध्यारूढशब्दस्तूभयार्थ इति तस्यैवेदमङ्गी-

कृतसाधनभेदं निपातनमिष्यते । अधिको द्रोणः खार्याम् । अध्यारूढो द्रोणः खारीमिति ग्रामं गत इति वत् द्वितीयायां प्राप्तायां तदस्मिन्नधिकमिति यस्मादधिकमिति च सूत्रनिर्देशात्सप्तमीपञ्चम्यौ । अधिका खारी द्रोणेनेत्यत्र तु कर्मणोऽभिहितत्वात्प्रथमैव ॥

## अनुकाभिकाभीकः कमिता । ५ । २ । ७४ ॥

अन्वभिभ्यां क्रियाविशिष्टसाधनवाचिभ्यां कन्स्वार्थे ॥ अभेः पाक्षिको दीर्घश्च ॥ अनु कामयते अनुकः । अभि कामयते अभिकः । अभीकः ॥

## पार्श्वेनान्विच्छति । ५ । २ । ७५ ॥

अनृजुरुपायः पार्श्वं तेनान्विच्छति पार्श्वकः ॥

## अयःशूलदण्डाजिनाभ्यां ठक्ठञौ । ५ । २ । ७६ ॥

तीक्ष्ण उपायोऽयःशूलं तेनान्विच्छति आयःशूलिकः साहसिकः । दण्डाजिनं दम्भः तेनान्विच्छति दाण्डाजिनिकः ।

## तावतिथं ग्रहणमिति लुग्वा । ५ । २ । ७७ ॥

तावतिथमिति पूरणप्रत्ययान्तनिर्देशः । तस्मात्कन् स्यात् पूरणप्रत्ययस्य च लुक् ॥ द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य । द्वितीयेन रूपेण ग्रहणमित्यर्थः । कनो लुकि तु लुग्ग्रहणानर्थक्यप्रसङ्गः । पञ्चम पञ्चमकमिति हि रूपद्वयं तेन साध्यं तच्च महाविभाषया विकल्पेन कन उत्पत्त्या सिद्धमेव ॥ तावतिथेन गृह्णातीति कन्वक्तव्यः नित्यश्च लुक् ॥ * ॥ षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः । पञ्चकः ॥

## स एषां ग्रामणीः । ५ । २ । ७८ ॥

देवदत्तो मुख्यो येषान्ते देवदत्तकाः । त्वत्काः । मत्काः ।

**शृङ्खलमस्य बन्धनं करभे । ५ । २ । ७९ ॥**

शृङ्खलकः करभः ।

**उत्क उन्मनाः । ५ । २ । ८० ॥**

उद्गतमनस्त्ववृत्तेरुच्छब्दात्स्वार्थे कन् । उत्क उत्कण्ठितः ॥

**कालप्रयोजनाद्रोगे । ५ । २ । ८१ ॥**

कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे ॥ द्वितीयको ज्वरः । प्रयोजनं कारणं रोगस्य फलं वा । विषपुष्पैर्जनितो विषपुष्पकः । उष्णं कार्यमस्य उष्णकः । रोगे किम् । द्वितीयो दिवसोऽस्य ॥

**तदस्मिन्नन्नं प्राये संज्ञायाम् । ५ । २ । ८२ ॥**

प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् ॥ गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी ॥ वटकेभ्य इनिर्वाच्यः ॥ * ॥ वटकिनी पौर्णमासी ।

**कुल्माषादञ् । ५ । २ । ८३ ॥**

कुल्माषाः प्रायेणान्नमस्यां कौल्माषी ॥

**श्रोत्रियञ्छन्दोऽधीते । ५ । २ । ८४ ॥**

श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः ॥

**श्राद्धमनेन भुक्तमिनिठनौ । ५ । २ । ८५ ॥**

श्राद्धी । श्राद्धिकः ॥

**पूर्वादिनिः । ५ । २ । ८६ ॥**

अनेनेति प्रत्ययार्थः कर्ताऽनुवर्तते । न च क्रियामन्तरेण

कर्ता सम्भवतीति क्रियामध्याहृत्य प्रत्ययो विधेयः । पूर्वं कृतमनेन पूर्वी ॥

**सपूर्वाच्च । ५ । २ । ८७ ॥**

पूर्वं कृतमनेन कृतपूर्वी । सुप्सुपेति समासं कृत्वा तद्धितः क्रियते ॥

**इष्टादिभ्यश्च । ५ । २ । ८८ ॥**

इष्टमनेन इष्टी । अधीती ॥

**छन्दसि परिपन्थिपरिपरिणौ पर्य्यवस्थातरि ।५।२।८९॥**

पर्य्यवस्थातृशब्दाच्छत्रुपर्य्यायात्स्वार्थे इनिः प्रत्ययः अवस्थातृशब्दस्य च पन्थ, पर, इत्येतावादेशौ निपात्येते । अपत्य परिपन्थिनम् । मा त्वा परिपरिणो विदन् । लोके तु परिपन्थिशब्दो न न्याय्यः ।

**अनुपद्यन्वेष्टा । ५ । २ । ९० ॥**

अनुपदमन्वेष्टा अनुपदी ॥

**साक्षात् द्रष्टरि संज्ञायाम् । ५ । २ । ९१ ॥**

साक्षात् द्रष्टा साक्षी । अव्ययानां भमात्रे टिलोपः ॥

**क्षेत्रियच्परक्षेत्रे चिकित्स्यः । ५ । २ । ९२ ॥**

क्षेत्रियो व्याधिः । शरीरान्तरे चिकित्स्यः । अप्रतीकार्य इत्यर्थः ॥

**इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । ५ । २ । ९३ ॥**

इन्द्र आत्मा तस्य लिङ्गं करणेन कर्तुरनुमानात् । इन्द्रेण

दृष्टं ज्ञातं मम चक्षुर्मम श्रोत्रमित्यादिक्रमेण । सृष्टमदृष्टद्वारा । जुष्टं प्रीणितं सेवितं वा दत्तं यथायथं विषयेभ्यः। इतिकरणः प्रकारार्थः। इन्द्रेण दुर्जयमिन्द्रियम् ।

## तदस्यास्त्यस्मिन्निति मतुप् । ५ । २ । ९४ ॥

गावोऽस्यास्मिन्वा सन्ति गोमान्देवदत्तः पर्वतो वा । इतिकरणाद्विषयविशेषलाभः । तथाहि ।

> भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
> सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीत्यर्थः । भूमा बहुत्वं तच्च आपेक्षिकम् । यस्य हि यावदुचितं तावदेव स्वशब्देनापि प्रतीयते । यथा त्र्यादिभिरपि गोभिर्देवदत्तस्य बह्व्यो गाव इति व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति । गोमान् । यवमान् । इह यवमतीभिरद्भिर्यूपं प्रोक्षतीत्यादौ जातिमात्रसम्बन्धस्य विवक्षितत्वाद्भूमाभावेऽपि मतुप् । भूमादिग्रहणं हि प्रायेण भूमादयोऽपि प्रतीयन्ते इत्येवंपरम् । निन्दायां । ककुदावर्तिनी कन्या । प्रशंसायाम् । रूपवान् । नित्ययोगे । क्षीरिणो वृक्षाः । अतिशायने । उदरिणी कन्या । संसर्गे दण्डी । संसर्गः संयोगः । तेन संयुक्तदण्ड एवोच्यते न तु गृहावस्थितदण्डोऽपि ॥

## रसादिभ्यश्च । ५ । २ । ९५ ॥

मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम् । रस रूप वर्ण गन्ध स्पर्श स्नेह गुणात् । एकाचः । स्ववान् । गुणग्रहणं रसादीनां विशेषणम् । तेन जलादिवाचि रसादिभ्यो न ।

कथं रूपिणी कन्या । रूपिको दारकः । रसिको नट इति । गुणादिति विशेषणसामर्थ्यात्प्रसिद्धतराणां रसनादीन्द्रियग्राह्याणां गुणानां ग्रहणात् । इह तु सौन्दर्यादयो गुणाः प्रतीयन्ते इत्याहुः ॥ गुणवचनेभ्यो मतुपो लुगिष्टः ॥ * ॥ शुक्लो गुणो ऽस्यास्ति शुक्लः पटः । कृष्णः ॥

## प्राणिस्थादातो लजन्यतरस्याम् । ५ । २ । ९६ ॥

चूडालः । चूडावान् । प्राणिस्थात्किम् । शिखावान्दीपः । चूडावान् वृक्षः । आतः किम् । हस्तवान् । प्राण्यङ्गादेव । नेह मेधावान् । चिकीर्षावान् । प्रत्ययस्वरेणैव सिद्धेऽन्तोदात्तत्वे चूडालोऽसीत्यादौ स्वरितो वानुदात्ते पदादाविति स्वरितबाधनार्थश्चकारः ॥

## सिध्मादिभ्यश्च । ५ । २ । ९७ ॥

लच्च स्यात् । सिध्मलः । सिध्मवान् । अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थं न तु प्रत्ययविकल्पार्थम् ॥ तेनाकारान्तेभ्य इनिठनौ न । वातदन्तबलललाटानामूङ् च ॥ * ॥ वातूलः । दन्तूलः । बलूलः । ललाटूलः ।

## वत्सांसाभ्यां कामबले । ५ । २ । ९८ ॥

लच् स्यात् यथासंख्यं कामवति बलवति चार्थे ॥ वत्सलः । अंसलः । वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तेते । यद्यपीह प्रकरणे सर्वत्र मतुप्समुच्चीयते तथापीह नेष्यते । मतुबन्तेन तु अर्थान्तरमेव प्रतीयते । वत्सवती गौः । अंसवान्दुर्बलः ।

## फेनादिलच्च । ५ । २ । ९९ ॥

चाल्लच् । अन्यतरस्यां ग्रहणं मतुप्समुच्चयार्थमनुवर्तते ॥ फेनिलः । फेनलः । फेनवान् ।

**लोमादिपामादिपिच्छादिभ्यः शनेलचः । ५ । २ । १०० ॥**

लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः ॥ अङ्गात्कल्याणे । अङ्गना । लक्ष्म्या अच्च । लक्ष्मणः ॥ शाकीपलालीदर्द्वा ह्रस्वत्वञ्च ॥ * ॥ महत् शाकं शाकी तद्वत् शाकिनम् । महत्पलालं पलाली तद्वत्पलालिनम् ॥ दरिद्रातेर्यालोपश्च । चाद्रूः ॥ दर्द्रूः । त्वग्रोगविशेषः । तद्वान् दर्द्रुणः ॥ विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ * ॥ विषुणः । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् ॥

**प्रज्ञाश्रद्धार्चाभ्यो णः । ५ । २ । १०१ ॥**

प्राज्ञो व्याकरणम् । प्राज्ञा । श्राद्धः । आर्चः । वृत्तेश्च *॥ वार्तः ॥

**तपःसहस्राभ्यां विनीनी । ५ । २ । १०२ ॥**

विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा मा भूदिति । सहस्रात्तु ठनेऽपि बाधनार्थम् ॥

**अण् च । ५ । २ । १०३ ॥**

योगविभाग उत्तरार्थः । तापसः । साहस्रः ॥ ज्योत्स्नादिभ्य उपसंख्यानम् ॥ * ॥ ज्यौत्स्नः । तामिस्रः ॥

**सिकताशर्कराभ्यां च । ५ । २ । १०४ ॥**

सैकतो घटः । शार्करः ॥

**देशे लुबिलचौ च । ५ । २ । १०५ ॥**

चादण् । मतुप् च । सिकताः सन्त्यस्मिन्देशे सिकताः । सिकतिलः । सैकतः । सिकतावान् । एवं शर्करेत्यादि ॥

दन्त उन्नत उरच् । ५ । २ । १०६ ॥

उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥

ऊषशुषिमुष्कमधो रः । ५ । २ १०७ ॥

ऊषरः । सुषिरः । मुष्कोऽराडः । मुष्करः । मधु माधुर्ये मधुरः ॥ रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ॥ * ॥ महत्कण्ठबिवरं खं तद्वन् खरः । गर्दभे रूढोऽयम् । मुखरः । कुञ्जो हस्तिहनुः कुञ्जरः ॥ नगपांसुपाण्डुभ्यश्च ॥ * ॥ नगरम् । पांसुरः । पाण्डुरः । पाण्डरशब्दस्त्वव्युत्पन्न एव ॥ कच्छ्वा ह्रस्वत्वं च ॥ * ॥ कच्छुरः ॥

द्युद्रुभ्यां मः । ५ । २ । १०८ ॥

द्यौरस्यास्ति द्युमः । दिव उत् । द्रुमः ॥

केशाद्वो ऽन्यतरस्याम् । ५ । २ । १०९ ॥

प्रकृतेनान्यतरस्यांग्रहणेन मतुपि सिद्धे पुनर्ग्रहणं इनिठनोः समावेशार्थम् । केशवः । केशी । केशिकः । केशवान् ॥ मणिहिरण्याभ्यामुपसंख्यानम् ॥ * मणिवो नागविशेषः । हिरण्यवो निधिविशेषः । छन्दसीवनिपौ च वक्तव्यौ ॥ * ॥ चादुतः । मतुप् च । ई । रथीरभूत् । सुमङ्गलीरियं बधूः । मघवानमीमहे । उद्रा च । उद्गतमस्यास्तीति क्रियाविशिष्टसाधनवचनादुच्छब्दाद्रप्रत्यये टाप् । उद्वती च । मतुपो मय इति वत्वं ङीप् ॥ मेधारथाभ्यामिरन्निरचौ वक्तव्यौ ॥ * ॥ मेधिरः । रथिरः । अपर आह ॥ वप्रकरणे अन्येभ्योपि दृश्यत इति वक्तव्यम् ॥ बिम्बावम् । कुररवम् । इष्टकावम् । अन्येषामपीति दीर्घः ॥ अर्णसो लोपश्च ॥ * ॥ अर्णवः ॥

गांडयजगात्संज्ञायाम् । ५ । २ । ११० ॥

भवति तद्भुञ्जीत । दधि च क्षीरं चेति दधिक्षीरं तयोः प्रत्येकं पलत्रय परिमाणं घृतस्य चैकं पलं यावकस्य च ग्रासमात्रमिति ।

मनुष्यशुद्धिमुक्त्वा द्रव्यशुद्धिमाह ।

**भस्मना तु भवेच्छुद्धिरुभयोस्ताम्रकांस्ययोः ।**
**जलशौचेन वस्त्राणां परित्यागेन मृन्मयम् ॥ ३९ ॥**

ताम्रकांस्ययोर्भस्मावघर्षणेन शुद्धिः । वस्त्राणां जले प्रक्षालनेन शुद्धिर्मृन्मयं घटीत्यादि परित्यागेनैव । इयं च तृतीया प्रकृत्यादिभ्यो विवक्षिता ततश्च मृन्मयं परित्याज्यमित्यर्थो भवति । अन्यथा अन्वयासम्भवात् ।

गृहधान्यादीनां शुद्धिमाह ।

**कुसुम्भगुडकार्पासलवणन्तैलसर्पिषी ।**
**द्वारे कृत्वा तु धान्यानि दद्याद्वेश्मनि पावकम् ॥४०॥**

कुसुम्भं तैलसाधन धान्यं धान्यानि यवव्रीह्यादीनि इतरत्सर्वं प्रसिद्धम् । एतानि कुसुम्भादीनि गृहद्वारे दाह्यत्वेन निक्षिप्य गृहेऽग्निं दद्यात् गृहदाहस्तृणगृहविषयः पाषाणादिगृहे तु तदसम्भवान्मार्जनलेपनाभ्यामेव, गृह मार्जनलेपनादिति योगिस्मरणात् । भूमेस्तु शुद्धिः स्वयमेव वक्ष्यति

शुद्धिसंपादनानन्तरं किङ्कर्तव्यमित्यत आह ।

**एवं शुद्धस्ततः पश्चात्कुर्याद्ब्राह्मणतर्पणम् ।**
**विंशतिं गा वृषं चैकं दद्याद्विप्रेषु दक्षिणाम् ॥ ४१ ॥**

एवमुक्तप्रकारेण शुद्धो भूत्वा अनन्तरमेकविंशतिब्राह्मणान् भोजयित्वा सन्निहितत्वात्तेभ्य एव विप्रेभ्यो वृषैकविंशतिगा दक्षिणा दद्यात् । यद्यपि ब्राह्मणसंख्या न श्रुता तथाप्येका एकस्य दातव्या न सर्वैकस्यैवेतिन्यायावलेन देयसंख्ययैव सम्प्रदानसंख्या नियमितेति न पृथगुपात्ता । यद्यपि च भोक्तृभ्य एव दक्षिणादानमित्याहत्य नोक्तं तथापि यथादर्शपौर्णमासयोर्ब्राह्मणांस्तर्पयीतवै इत्यनेन विहिते ब्राह्मणभोजने प्रकृत-

त्वादृत्विज एवोपतिष्ठन्ते तथा ऽत्रापि भोक्तार एव सम्प्रदानतयोपतिष्ठन्ते। अन्यथा प्रकृतहानाप्रकृतकल्पनेति दोषद्वयापत्तेरिति ।

भूमिशुद्धौ विशेषमाह ।

**पुनर्लेपनखानेन होमजप्येन शुध्यति ।**
**आधारेण च विप्राणां भूमिदोषो न विद्यते ॥ ४२ ॥**

लेपनखननयोर्दाहानन्तर्यबोधनाय पुनः शब्दः तेन दाहादयः पञ्चाप्युपलक्षिताः । तदाह देवलः ।

चण्डालाध्युषितं यत्र यत्र विष्ठादिसङ्गतिः ।
एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता ॥

पञ्चधा चतुर्धा च भूरमेध्या विशुध्यतीति पञ्चधेति दाहकाल-गोक्रमणसेकोल्लेखनैरित्यर्थः । तदनन्तरं तत्र जपहोमौ कृत्वा ब्राह्मणानुपवेश्य भूमेरुक्तो दोषो नास्तीति शुध्यति दोषाभावकीर्तनं च शुध्यति-शयज्ञापनाय । इदं च मूलोक्तं प्रायश्चित्तं द्वादशरात्रं चण्डालसहवासे द्रष्टव्यम् । द्वादशरात्रसाध्यप्रायश्चित्ताम्नानात । अत एव पक्षसंसर्गे पक्षं मासमर्ग च मासं गोमूत्रयावकाशनं वक्ष्यति मासाधिकसहवासे तु हारीतोक्तं द्रष्टव्यम ।

चण्डालैः सह संवासे दीर्घकालमकामिकम् ।
विज्ञान मृन्मयं पात्रं सर्वं त्यजति तद्गृहात ॥
बालकृच्छ्रं ततः कुर्यात्तप्तकृच्छ्रं तथैव च ।
ब्राह्मणास्तर्पयित्वा पश्चाद्ब्रह्मकूर्चेन शुध्यति ॥

अत्रैव विषये गोशतं सर्वस्वं वा दक्षिणामाह च्यवनः । चण्डा-लसङ्करे स्वभवने दहनं सर्वभाण्डभेदनं दारवाणां तु तक्षणं शङ्खशुक्ति-सुवर्णरजतचैलानामद्भिः प्रक्षालनं कांस्यताम्रपात्राणामाकरे शुद्धिः सौवी-रपयोर्दधितक्रयोश्च परित्यागो गोमूत्रयावकाहारो मासं चरेत् । बालवृ-द्धस्त्रीणामर्द्धं प्रायश्चित्तमाषोडशाब्दात् सप्तत्यूर्द्धं गता वृद्धाः चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोशतं दद्यादभावे सर्वस्वमिति । बालकृ

स्त्र्यह भुञ्जीतेत्यादिना मूलोक्तः । आकरमुत्पत्तिस्थानं तेनोल्लेखनादि लभ्यते सौवीर बदरं, चण्डालसंपर्कवति गृहे भुक्तवतस्तद्गृहे च भुक्तवतोऽन्यस्यापि प्रायश्चित्तमाहापस्तम्बः ।

अविज्ञातस्तु चण्डालो यत्र वेश्मनि तिष्ठति ।
सविज्ञातस्तु कालेन तत्र कार्यं विशोधनम् ॥
प्राजापत्यं तु शूद्राणां तेषां तदनुसारतः ।
यैस्तत्र भुक्तं पक्वान्नं कृच्छ्रार्द्धं तेषु दापयेत् ॥
तेषामपि गृहे भुक्तो पादमेकं विधीयते ।
कूपैकपानैर्दुष्टस्तु स्पर्शसम्पर्कदूषितः ॥
सर्वो ह्येकोपवासेन पञ्चगव्येन शुध्यति ।
बालापत्या तथा नारी गर्भिणी या तु दूषिता ॥
तेषां नक्तं प्रदातव्यं प्रहरद्वयसंज्ञितमिति ।

इदानीं चण्डालसम्पर्के कालविशेषेण प्रायश्चित्तमाह ।

**चण्डालैः सह संपर्कं मासं मासार्द्धमेव च ।**
**गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥ ४३ ॥**

चण्डालैरिति बहुवचनाच्छ्वपाकपुल्कसयोर्ग्रहणम् । एतैः सह यो मासं मासार्द्धं वा संपर्कं करोति स शेषं सर्वं च कारयेदित्यग्रे उपसंहारादत्रापि पूर्वोक्तप्रकारेण दध्यादिसंयुक्तं गोमूत्रयावकमाहारीकृत्य मासार्द्धेन मासश्चार्द्धं च तयोः समाहारो मासार्द्धं तेन शुध्यति । मासंसपर्के मासव्रतेनार्द्धमाससंपर्केऽर्द्धमासव्रतेन शुद्धिरित्यर्थः । तथा च संवर्त्तः ।

चण्डालैः सङ्करे विप्रः श्वपाकैः पुल्कसैरपि ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यतीति ॥

अत्र व्रताधिक्यवद्दक्षिणाधिक्यमपि कल्पनीयम् । तद्यथोक्तव्रते व्रतदिनसंख्यातो द्विगुणसंख्याष्टमांशन्यूना गावो भवन्ति तथा पक्षसंपर्के त्रिपञ्चाशच्च गावो देया इति ।

इदानीं रजक्यादिसहवासे प्रायश्चित्तमाह ।

**रजकी कर्मकारी तु लुम्बकी वेणुजिविनी ।**
**चातुर्वर्ण्यस्य च गृहे त्वविज्ञाता तु तिष्ठति ॥ ४४ ॥**

ज्ञानात्तु निष्कृतिं कुर्यात्पूर्वोक्तस्यार्द्धमेव हि ।
गृहदाहं न कुर्वीत शेषं सर्वं च कारयेत् ॥ ४५ ॥

रजको वस्त्रादिरागकृत् सङ्कीर्णसङ्करस्तज्जातीया स्त्री रजकी एवं चर्मकारी लुब्धकी व्याधजातीया स्त्री वेणुजीविनी वंशपत्रादिनिर्माणकर जातीया आसामन्यतमाऽविज्ञातजातिस्वरूपा यदि ब्राह्मणाद्यन्यतमवर्णगृहे वसति तदा तज्ज्ञानानन्तरं पूर्वोक्तस्यैव प्रायश्चित्तस्यैव दध्ना च सर्पिषा वेन्याद्युक्तस्य द्वादशाहसाध्यस्यार्द्धषड्रात्रसाध्यव्रतं कुर्वीत तत्र च दधिसर्पिःक्षीरैः प्रत्येक युक्तं गोमूत्रयावक द्व्यहं द्व्यहं भुञ्जीतेत्येवं षड्रात्रव्रतं कृत्वा गृहदाहातिरिक्त शेषं सर्वं तथैवार्द्धं कृत्वा ब्राह्मणभोजनं वृषभैकादशगाश्च दक्षिणादानं कुर्यादिति ।

इदानीं चण्डालस्य सकृद्गृहप्रवेशे शुद्धिमाह ।

गृहस्याभ्यन्तरं गच्छेच्चण्डालो यदि कस्य चित् ।
तमागाराद्विनिःसार्य मृद्भाण्डं च परित्यजेत् ॥ ४६ ॥
रसपूर्णं तु मृद्भाण्डं न त्यजेत्तु कदाचन ।
गोमयेन तु संमिश्रैर्जलैः प्रोक्षेद् गृहं तथा ॥ ४७ ॥

यदि कस्य चिद्ब्राह्मणाद्यन्यतमस्य गृहमध्ये चण्डालो गच्छेत्तदा त गृहाद्विःसार्य मृद्भाण्ड त्यक्त्वा रसपूर्णान्यत्यक्त्वैव गोमयोदकेन सर्वं गृह प्रोक्षेत्तथा तत्र गोश्च प्रवेश कुर्यात् । तदाह हारीतः ।

गृहस्याभ्यन्तरे यस्य चण्डालो यदि गच्छति ।
पार्थिवाना परित्यागः सर्वथा सद्य एव हि ॥
अनष्टरसभाण्डाना ग्रहण मन्यते तथा ।
अजस्य गोः प्रवेशाद्धि शुध्यते नात्र संशयः ॥

इति । न नष्टो रसो येषां तान्यनष्टरसानि तानि च तानि भाण्डानीति

इदानीं कृम्युपहतदेहस्य शुद्धिमुपक्षिप्याह ।

ब्राह्मणस्य व्रणद्वारे पूयशोणितसंभवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥ ४८ ॥

गवां मूत्रपुरीषेण दधिक्षीरेण सर्पिषा ।
त्र्यहं स्नात्वा च पीत्वा च कृमिदष्टः शुचिर्भवेत् ॥४६॥

विप्रस्य व्रणे पूयशोणितपूरिते यदि कृमिरुत्पद्यते तत्र प्रायश्चित्तं कथं कुर्यादित्युपघोषः स्मृत्यन्तरोक्तप्रायश्चित्तविप्रतिपत्तिव्यवस्थापनार्थः । गोसम्बन्धिना मूत्रपुरीषेण मूत्रपुरीषयोः समाहारेण तथैव दधिक्षीरेण समाहारप्रदर्शनं पञ्चानामपि गव्यानां समाहारप्रदर्शनं च स्नाने गोमूत्रगोमययोरेव पाने च पञ्चानामपि प्राप्त्यर्थम् । ततश्च गोमूत्रगोमयाभ्यां त्रिसन्ध्यं त्रिरात्रं स्नात्वा पञ्चगव्यं च पीत्वा अधोनाभेः कृमिदष्टः शुद्धो भवति । तदाह मनुः

ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे ।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत् ॥
गवां मूत्रपुरीषेण त्रिसन्ध्यं स्नानमाचरेत् ।
त्रिरात्रं पञ्चगव्याशी शोधनात्तैर्विशुध्यति ॥ इति ।
नाभेरूर्ध्वं तु कृम्युत्पादे स एवाह ।
नाभिकण्ठान्तरोद्भूतव्रणे चोत्पद्यते कृमिः ॥
षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे ॥ इति ।

क्षत्रियादीनां विशेषमाह ।

क्षत्रियश्च सुवर्णस्य पञ्चमाषान्प्रदाय तु ।
गोदक्षिणां तु वैश्यस्याप्युपवासं विनिर्दिशेत् ॥५०॥
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुद्ध्यति ।

कृमिदष्टः क्षत्रियः पञ्चमाषपरिमितं सुवर्णं दत्वा शुचिर्भवेत् वैश्यस्तूपवासान्ते गामेकां दत्वा शूद्रो नोपवासेन किं तु गोदानमात्रेण शुध्यतीति । एतेन क्षत्रियादीनां विप्रोक्तमेव प्रायश्चित्तं पादपादन्यूनं कल्पनीयमिति निरस्तम् ।

ननु क्रियमाणे प्रायश्चित्ते कर्मस्वाभाव्यादवश्यं भाविन्यूनातिरेकादोषे कथं कार्यमित्यत आह ।

अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलं हि तत् ॥ ५१ ॥

विविदेवता ब्राह्मणा यदच्छिद्रमिति वाक्य वदन्ति तत् प्रणम्य शिरसा याह्यमग्निष्टोमफलं हि तत् प्रणम्य नम्रीभूय शिरसा याह्य यतोऽग्निष्टोमफलं साधयतीति छिद्रपूरकत्व प्रशंसेति । अत एवापस्तम्बः ।

पूर्णेऽपि कालनियमैर्न शुद्धिर्ब्राह्मणैर्विना ।
अपूर्णेष्वपि कालेषु पूरयन्ति द्विजोत्तमाः ॥ इति ।

न केवलं विप्रवचनं प्रायश्चित्तस्यैव छिद्रपूरकमपि तु सर्वत्रापीत्याह ।

**जपच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ।**
**सर्वं भवतु निश्छिद्रं ब्राह्मणैरुपपादिते ॥ ५२ ॥**

जपतपोयज्ञादिकर्मणामच्छिद्रमस्त्विति द्विजैरुक्त एव सर्वं निःच्छिद्रं भवतीति यद्यप्यस्य सर्वशेषत्वादन्तेऽभिधानमुचित तथापि देहलीदीपन्यायेन मध्येऽभिहितमप्युभयोरुपकारि भवत्येवेति न दोषः ।

ननु निमित्तिनोऽनुष्ठानाशक्तौ कथं पापक्षय इत्यत आह ।

**व्याधिव्यसनिनिश्रान्ते दुर्भिक्षे डामरे तथा ।**
**उपवासो व्रतं होमो द्विजसंपादितानि वा ॥ ५३ ॥**

व्याधिना राजयक्ष्मादिना व्यसनी ग्रस्तः यद्वा व्यसन पित्रादिशुश्रूषणं श्रान्तो दूराध्वगमनादिना दुर्भिक्ष दैविकदोषोपलक्षणम् । डामरो राज्योपद्रवो राष्ट्रिकमात्रोपलक्षणम् ।

एतेषु उपवासव्रतहोमादीनि दक्षिणादानसंतोषितैर्द्विजैः संपादितान्यपि निमित्तिनः पापाक्षयं कुर्वन्तीति । अत एवापस्तम्बः ।

अशक्स्यापि समर्थस्य विप्रो वा यदि वा गुरुः ।
तद्व्रत तस्य गृह्णीयात् ततो मुच्येत किल्बिषादिति ॥

अत्यन्तापदि पक्षान्तरमाह ।

**अथ वा ब्राह्मणाः स्तुष्टाः सर्वं कुर्वन्त्यनुग्रहम् ।**
**सर्वान्कामानवाप्नोति द्विजसंपादितैरिह ॥ ५४ ॥**

अथवा अत्यन्तापद्गतस्य पूर्वसेवादिना तुष्टा ब्राह्मणाः ब्रह्मनिष्ठाः पर्षत्त्वेन नियुक्ता अस्यामापदि एतस्मात्पापादस्मद्वचनेन पूतं मुक्तमिति सर्वथैवानुग्राह्योयुस्तावतैव वास्य शुद्धिर्भवति यतो द्विजैर्महापुरुषैः संवादितैराशीर्विशेषैः सर्वान् पशुपुत्रादिकामानपि प्राप्नोति किं तत्र पापक्षयमिति द्विजवचनप्रशंसेति । तथाचाथर्वणे श्रूयते यं यं लोकं मनसा संभवति विशुद्धमनस्कः कामयते यांश्च कामान् । तं तं लोकं जनयेत्तांश्च कामांस्तस्मादात्मावज्ञां न कारयेद् भूतिकाम इति । सर्वमनुग्राह्यमिति च तदा पक्षान्तरं तत्र सूचितम् । तदाह हारीतः ।

पादत्रयमथाप्यर्द्धं पादं वापि विधानतः ।
ज्ञात्वा बलाबलात्कार्यं प्रायश्चित्त प्रकल्पयेदिति ॥

एवा चतुर्णामपि पक्षाणां देशकालवयोवस्थानुबन्धाद्यनुसारेण व्यवस्था कार्या । यथाह याज्ञवल्क्यः ।

देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्त प्रकल्प्य स्याद्यत्र चोक्ता न निष्कृतिरिति ॥

अन्वयव्यतिरेकाभ्यामनुग्रहविषयमाह ।

**दुर्बलेऽनुग्रहः कार्यस्तथा वै बालवृद्धयोः ।**
**ततोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः ॥ ५५ ॥**

धनविद्याभिजनबलैर्हीनो दुर्बलस्तस्मिन् तथाशब्देन स्त्रीषु बालवृद्धयोराषोडशाद्बालः सप्तत्यूर्ध्वं गतो वृद्ध इति च्यवनोक्तलक्षणयोर्यथासंभवमनुग्रहः । अन्यथोक्तातिरेकेणानुग्रहे क्रियमाणे दोषो भवेत्तस्मादनुग्रहो नेष्यते पूर्वैरिति । अनुग्राहकस्वरूपमाहाङ्गिराः ।

कृत्वा पूर्वमुदाहार यथोक्तं धर्मकर्तृभिः ।
पश्चात्कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
प्रायश्चित्त यथोदिष्टमशक्यं दुर्बलादिभिः ।
इष्यते ऽनुग्रहस्तेषां लोकसग्राहकारणात् ॥
एको नार्हति तत्कर्तुमनूचानोऽप्यनुग्रहम् ।
धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहमिति ॥

उक्तातिरेकेणानुग्रहे प्रत्यवायं विवृद्धयति ।

**स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।**
**कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति ॥ ५६ ॥**

स्नेहात्पुत्रमित्रादौ लोभाद्धनिकेषु अज्ञानतः पण्डितमन्यतया यस्मिन्कस्मिंश्चिद्दुर्बलादिव्यतिरिक्तेऽपि येऽनुग्रहं कुर्वन्ति तेषु तत्प्रकृतपापं सक्तं भवतीति। ननु परपापस्य परस्मिन् सङ्क्रमो नोपपद्यते अमूर्त्तत्वात्सत्यम् । शास्त्रवैयर्थ्यान्यथानुपपत्त्या तत्सजातीयपापान्तरोत्पत्त्या तत्सङ्क्रमितिव्यवहारादिति ।

यथा समर्थानुग्रहे प्रत्यवायस्तथा दुर्बलाननुग्रहेऽपीत्याह ।

**शरीरस्यात्यये प्राप्ते वदन्ति नियमं तु ये ।**
**महाकार्योपरोधे च न स्वस्थस्य कदाचन ॥**

शरीरस्यात्यये विनाशावस्थायां वयसा रोगादिना वा प्राप्तायां सत्यामपि महाकार्ये वृद्धमातापित्रादिशुश्रूषा तदुपरोधस्तद्विनाशस्तस्मिंश्च सति ये यथोपदिष्टमेव नियमं प्रायश्चित्तं तदङ्गभूतं स्नानमौनोपवासादिकं वानुग्रहव्यतिरेकेणैव वदन्त्युपदिशन्ति न पुनः स्वस्थस्य तथा किन्तु सानुग्रहमेव तस्य वदन्ति तेष्वपि तत्पाप गच्छतीति पूर्ववाक्यादनुषज्यते ।

उक्तप्रतिनिधेर्व्यतिरेकमाह ।

**स्वस्थस्य मूढाः कुर्वन्ति वदन्ति नियमं च ये ।**
**तेनास्य विघ्नकर्तारः पतन्ति नरकेऽशुचौ ॥ ५८ ॥**

ये मूढाः प्रतिनिधिनियामकं शास्त्ररहस्यमजानन्तः स्वस्थस्यापि विहितं नियमं प्रायश्चित्तं कुर्वन्ति स्वयमनुतिष्ठन्ति ये च स्वस्थस्यापि प्रतिनिधिं वदन्ति ते सर्वेऽपि तस्य निमित्ततः पापनिवृत्तौ विघ्नं कुर्वन्त्यशुचौ रौरवादिनरके पतन्ति च ।

इदानीं विप्रवाक्यव्यतिरेकेण स्वयमेव व्रतानुष्ठाने प्रत्यवायमाह ।

**स्वयमेव व्रतं कृत्वा ब्राह्मणं यो ऽवमन्यते ।**
**वृथा तस्योपवासः स्यान्न च पुण्येन युज्यते ॥ ५९ ॥**

यः पण्डितं मन्यतया ब्राह्मणमवमन्य स्वयमेव रहस्येऽपि पापे व्रतमाचरति तस्योपवासादिनियमो वृथा भवेन्न च पुण्यं प्राप्नोति । अत एव शातातपः ।

यदि नो धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि स इति ॥

कीदृशं तर्हि व्रतं कार्यमित्यत आह ।

**स एव नियमो ग्राह्यो यमेकोऽपि वदेद्द्विजः ।**
**कुर्याद्वाक्यं द्विजानां वै त्वन्यथा भ्रूणहा भवेत् ॥६०॥**

प्रायश्चित्तोपदेशे पर्षदेया दशावरेत्यादिवक्ष्यमाणतया बहूनां विप्राणां प्रायश्चित्तविधायकत्वं च मुख्यः कल्पः बहुविप्राभावे कथं चिदेकस्यापि तद्विधायकत्वमित्यनुकल्पः सर्वथापि विप्रानुज्ञातमन्तरेण स्वयमेव शास्त्रपर्यालोचनया रहस्यपापेऽपि प्रायश्चित्तं कुर्वन् भ्रूणहा भवतीति ।

विप्रवाक्यस्य शोधकत्वे हेतुमाह ।

**ब्राह्मणा जङ्गमं तीर्थं तीर्थभूता हि साधवः ।**
**तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥ ६१ ॥**

विशिष्टमातापितृजन्या ब्राह्मणा जङ्गममभीष्टदेशे यानायानाभ्यामिष्टसंपादकतया स्थावरं प्रयागादिविलक्षणतीर्थं शोधकं न केवलं ब्राह्मणा एव किं तु साधवोऽन्येऽपि क्षत्रियादयस्तीर्थभूता एव यतस्तेषां ब्राह्मणसाधूनां च वाक्यमेवोदकं तेनैव मलिना पापिष्टाः शुध्यन्ति ।

ननु ब्राह्मणस्य तीर्थत्वेऽपि मनुष्यत्वाविशेषात्कथं वचनसिद्धिरित्यत आह ।

**ब्राह्मणा यानि भाषन्ते मन्वन्ते तानि देवताः ॥**
**सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥ ६२ ॥**

वेदविदो ब्राह्मणा यान्यमाध्यान्यपि पशुपुत्रादीनि शुभानि शोक-भयादीन्यशुभानि वा यस्मै भाषन्त आशासते तानि देवतास्तथैवानुमन्यन्ते तेषां वचनवशवर्तिदेवतात्वेन सर्वदेवमयानां विप्राणां वचनमन्यथा विसंवादि न भवतीति प्रायोवादोऽनृतवादिनो वागितिवत् ।

तथा च श्रूयते "यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्तीति" । स्मृत्यन्तरेऽप्यङ्गिरसा ब्राह्मणा देवताः सर्वाः स च सर्वस्य दैवतमिति ।

ननु प्रतिनिधिनाऽनुष्ठापयितुर्न्यूनफलतायां तद्विधानमनादरणीयं स्यादित्यत आह ।

**उपवासो व्रतं चैव स्नानं तीर्थं जपस्तपः ।**
**विप्रैः संपादितं यस्य संपूर्णं तस्य तत्फलम् ॥ ६३ ॥**

द्रव्यदानादिना सन्तोषितैर्विप्रैर्यस्यासमर्थस्य यजमानस्य कर्तव्यमुपवासादिकं सम्पाद्यते तस्य तेषामुपवासादीनां फलं सम्पूर्णमेव भवति नान्यनिष्पादितत्वेन न्यूनमिति ।

अत एवाह जैमिनिः । तस्मिंश्च फलदर्शनादित्यनेन प्रतिनिधातुरेव फलं न प्रतिनिधेरिति ।

इदानीं क्षुद्रोपहतदेहशुद्धिप्रसङ्गेन केशादिदूषितान्नशुद्धिमाह ।

**अन्नाद्यकीटसंयुक्ते मक्षिकाकेशदूषिते ।**
**तदन्तरा स्पृशेच्चापस्तदन्नं भस्मना स्पृशेत् ॥ ६४ ॥**

अन्नमोदन आद्यं यस्येत्यन्नाद्यं तस्मिन्नोदनादौ अन्नयोऽप्यमाद्यमन्नं च तदाद्यं चानाद्यं पक्वमन्नं न त्वामं तस्मिन् वा कीटैः पिपीलिकादिभिः संयुक्ते मक्षिकाकेशाभ्यां वा दूषिते तस्यान्नस्यान्तरा मध्ये अपः स्पृशेदिति । कीटप्रयोगेन गोघ्रातादिकमुपलक्ष्यते ।

अत एव बृहस्पतिः ।

गोघ्राते ऽन्नच्युते चान्ने मक्षिकाकेशदूषिते ।
मृद्भस्मसलिलं चैव प्रक्षेप्तव्यं विशुद्धये ॥

मृदः पृथगुपादानं स्वतन्त्राया अपि शोधकत्वज्ञापनार्थम् । अत एव मनुः

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् ।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण विशुध्यतीति ॥

अवधूतं वस्त्रावधूननरेणुस्पृष्टम् । अवक्षुतं मुखोत्पन्नबिन्दुस्पृष्टम् । भस्मसलिलयोः समस्तत्वेन मिलितयोरेव शोधकत्वम् । यत्तु सलिलं भस्ममृद्वापीति विकल्पाभिधानं तदन्यतरस्यापि शोधकत्वज्ञापनार्थमिति ।

भोजनकालीनाशुद्धिप्रसङ्गेन बुद्धिस्थान् भोजनधर्मानाह ।

**भुञ्जानश्चैव यो विप्रः पादं हस्तेन संस्पृशेत् ।**
**स्वमुच्छिष्टमसौ भुङ्क्ते यो भुङ्क्ते भुक्तभाजने ॥ ६५ ॥**
**पादुकास्थो न भुञ्जीत न पर्यङ्कस्थितोऽपि च ।**
**श्वचण्डालोदक्यदृष्टश्च भोजनं परिवर्जयेत् ॥ ६६ ॥**

भोजनकाले यो विप्रो वामहस्तेन पादं स्पृशति वामहस्तेन भोजनपात्रमनवलम्ब्य वा भुङ्क्ते स स्वोच्छिष्टभोजनप्रत्यवायं लभते । अनेन स्वोच्छिष्टभोजनप्रायश्चित्तमेवात्रापि भवतीति वक्तुं प्रथमाध्यायोक्तस्याप्यस्य पुनरुपन्यास इति न पौनरुक्त्यम् पादुकापर्यङ्कस्थितौ श्वचण्डालोदक्यदर्शने च भोजनमेव त्यजेत्तु स्वोच्छिष्टभोजनप्रायश्चित्तं कुर्यादिति । प्रायश्चित्तं चोक्तं चातुर्विंशतिमते ।

स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते भुक्तभाजने ।
एवं वैवस्वते प्राह भुक्त्वा चान्द्रायणं चरेदिति ॥

इदं च प्रायश्चित्तं भोजनमध्ये पात्रत्यागविषयं पात्रमनालभ्यैव भोजने तु न प्रायश्चित्तं तस्य वैकल्पिकत्वात् । यथाहापस्तम्बः ।

यावद्ग्रासं सन्नयन्स्कन्दयेदपजिहीतायाजीहीताय वा क्लृप्त ग्रासमश्नीतेति पक्षद्वयेऽपि भोजनपात्रमितिशेषः ।

इदानीमन्नशुद्धिमेव प्राधान्येन वक्तुं प्रतिजानीते ।

**यदन्नं प्रतिषिद्धं स्यादन्नशुद्धिस्तथैव च ।**
**यथा पराशरेणोक्तं यथैवाहं वदामि वः ॥ ६७ ॥**

यदन्नमुपहन्य भोजने प्रतिषिद्धं तस्योपहतौ या चाचशुद्धिरुक्ता पूर्वस्मिन् कालधर्मप्रवचने पराशरेण तथैवाहमस्मिन्नपि कलियुगे भो व्यासादयो महर्षयो वो युष्मभ्यं वदामि पुनः पराशरपरामर्शः सम्प्रदायाविच्छेदसूचनायेति ।

सिद्धान्नशुद्धिं दर्शयति ।

**शृतं द्रोणाढकस्यान्नं काकश्वानोपघातितम् ।**
**केनेदं शुध्यते चापि ब्राह्मणेभ्यो निवेदयेत् ॥ ६८ ॥**

वक्ष्यमाणलक्षणद्रोणाढकाभ्यां परिमित एव पक्वमन्नं च काकाद्युपहतमिदं केन प्रकारेण शुध्येदिति ब्राह्मणेऽसौ निवेदयेत्पृच्छेत् । निवेदनवचनेन स्वयमेव ज्ञात्वा कृतापि शुद्धिर्न निष्पद्यत इत्युक्तं भवति । ब्राह्मणवक्तव्यं प्रतिवचनमाह ।

**काकश्वाद्यवलीढं तु द्रोणान्नं न परित्यजेत् ।**

श्वकाकाद्यवलीढमन्नं द्रोणाढकपरिमितं चेन्न परित्यजेदिति विप्राणां ब्रह्मघोषेण भोज्यं भवति तत्त्वणादित्यनागतेन सम्बन्धाद्विप्रैः प्रतिवचनं देयमिति सिध्यति

इदानीं द्रोणाढकयोः परिमाणमाह ।

**वेदवेदाङ्गविद्भिर्विप्रैर्धर्मशास्त्रानुपालकैः ॥ ६९ ॥**
**प्रस्थद्वात्रिंशतिर्द्रोणः स्मृतो द्विप्रस्थ आढकः ।**
**ततो द्रोणाढकस्यान्नं श्रुतिस्मृतिविदो विदुः ॥ ७० ॥**

पञ्चकृष्णलको माषः तैश्चतुः षष्ठिभिः पलम् ।
पलैर्द्वात्रिंशद्भिः प्रस्थो मार्गोधणप्रकीर्तितः ॥

इति । शतपथब्राह्मणप्रतिपादितलक्षणैर्द्वात्रिंशद्भिः प्रस्थैर्द्रोणो द्वाभ्यां प्रस्थाभ्यामाढक इति ।

वेदवेदाङ्गधर्मशास्त्रकुशलैर्विप्रैः स्मृतं वेदवित्त्वादिविशेषणं च तत्तद्देशीयप्रातिस्विकव्यवहारनिर्वाहकवणिक्कल्पितप्रमाणस्यैव व्यवहारप्रयोजकतामाह । तस्माच्छास्त्रीयादेव परिभाषाद् द्रोणाढकस्यान्नमपरित्या-

न्यत्वेन विवक्षितमिति श्रुतिस्मृतिविदो विदुः । श्रुतिस्मृतिकुशला मन्यन्त ।

तर्हि तन्न्यूनपरिमाणे कथमित्यत आह ।

**काकश्वावलीढं तु गवाघ्रातं खरेण वा ।**

**स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढके भवेत् ॥७१॥**

श्वकाकगोखरैरवलीढं द्रोणाढकन्यूनपरिमाणं द्रव्यं परित्यजेद् द्रोणाढकपरिमाणे तु वक्ष्यमाणप्रकारेण शोधयेत् धनिकाधनिकविषयत्वेन वा द्रोणाढकयोर्व्यवस्था कार्या ।

इदानीं विवक्षितां शुद्धिमाह ।

**अन्नस्योद्धृत्य तन्मात्रं यच्चलालाहतं भवेत् ।**

**सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत् ॥ ७२ ॥**

**हुताशनेन संस्पृष्टं सुवर्णसलिलेन च ।**

**विप्राणां वेदघोषेण भोज्यं भवति तत्क्षणात् ॥७३॥**

उक्तपरिमाणान्नस्य यावदुपहतं यावच्च श्वादिलालास्पृष्टं तावदपनीयावशिष्टं सुवर्णसंयुक्तेनोदकेनाभ्युक्ष्याग्निना परिताप्यानन्तरं विप्राणां शुद्धमिदमुपहतं न परित्याज्यमिति पूर्वोक्तघोषेण ब्राह्मणः पवमानः सुवर्चन इत्यनुवाकस्य घोषेण च तत्कालमेव भोज्यं भवतीत्याहबौधायनः । सिद्धहविषां महताञ्च वायसप्रभृत्युपहतानां तदन्नं पिण्डमात्रमुद्धृत्य पवमानः सुवर्चनइत्यनेनाभ्युक्षणमिति ।

अन्नशुद्धिमुक्त्वा रसशुद्धिमप्याह ।

**स्नेहो वा गोरसो वापि अन्नशुद्धिः कथं भवेत् ।**

**अल्पं परित्यजेदन्नं स्नेहस्योत्पवनेन च ॥ ७४ ॥**

**अनलज्वालया शुद्धिर्गोरसस्य विधीयते ॥ ७५ ॥**

स्नेहो घृतस्तैलादिर्गोरसः क्षीरादिस्तयोः श्वकाकाद्यवलीढयोः न पूर्वोक्तैरेव शुद्धिस्तस्या अल्पविषयत्वादिति प्रकारान्तरम् । किं तु द्रोणाढकपरिमाणादल्पत्वे त्यागोऽधिकत्वे च स्नेहस्योत्पवनेन गोरसस्याग्निज्वालया पाकेन शुद्धिरिति ।

तदाह शङ्खः ।

प्लावनं घृततैलानां पाचनं गोरसस्य च ।

भाण्डानि प्लावयेदद्भिः शाकं मूलं फलानि चेति ॥

एतेनोत्पवनतापने विलीनस्नेहादिविषये घनीभूतयोस्तु तन्मात्रोद्धरणम् । तदाह शातातपः ।

तापनं घृततैलानां मधुनो गोरसस्य च ।

तन्मात्रमुद्धृतं शुध्येत्कठिनं तु पयोदधि ॥

अवलीनं तथा सर्पिर्विलीनं पवनेन त्विति ।

धूलीभिर्धूसराङ्गो व्रजभुवि सततं रिङ्खणोद्धृष्टजानुः
किं चित् पांश्वाकुलाक्षः करतलनवनीतानुलिप्ताखिलास्यः ॥
शक्तश्चेद्याहि बालेत्यभिहितवचसोलूखले वत्सदाम्ना
बद्धो मात्रापि रिङ्खन् स्मितललितमुखः पातु दामोदरो वः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु—
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतोऽत्र षष्ठो
ऽध्यायो मलावहविशुद्धिविनिर्णयाय ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां षष्ठोऽध्यायः ॥



श्रीगणेशायनमः ॥

दध्ना बध्नाति कस्याप्यभिलपनमयं कस्यचिद् धेनुदुग्धं
पाय पाय सखायं कमपि खलुबलात् तक्रवक्रं वितन्वन् ।
लीलाकीलालमर्कैर्वेदनकंदनष्टद्गोपकन्यासु, कुर्वन्
वार्त्तमार्त्तिं विहन्याच्चित्रभवनगतो वासुदेवः सदानः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
द्रव्येषु शुद्धिमभिधातुमिहाखिलेषु
व्याख्यायते बहुविधामपि समस्तमेऽयम् ॥ २ ॥

षष्ठाध्यायान्तेऽचरमशुद्धिप्रतिपादनेन बुद्धिस्थामवशिष्टद्रव्यशुद्धिं विवक्षुः सप्तमाध्यायमारभते ।

तत्राध्यायार्थं वक्तुं प्रतिजानीते ।

**अथातो द्रव्यशुद्धिस्तु पराशरवचो यथा ।**
**दारवाणां तु पात्राणां तक्षणाच्छुद्धिरिष्यते ॥ १ ॥**

अथाचरसशुद्धिप्रतिपादनानन्तरमवशिष्टद्रव्यशुद्धिरवश्य वर्णनीया । अतोऽसौ यथा पूर्वपराशरवचनमभिधीयते तत्र दारुमयानां पात्राणां लौकिकानां च स्रुवादीनामुच्छिष्टवामितानां तक्षणात्तावन्मात्रावयवापाकरणाच्छुद्धिरिष्यते पूर्वैः । तदाह बौधायनः, दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनं लोपोपहतानां तक्षणमिति । अल्पोपघाते तु मृज्जलाभ्यां गन्धलेपावपनेयौ ।

यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चादेय सर्वासु द्रव्यशुद्धिषु ॥

इति सामान्यशुद्धिविधानात् ।

स्नेहाक्तपात्रशुद्धिमाह याज्ञवल्क्यः
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणेति ।

यज्ञकाले शुद्धिविशेषमाह मनुः ।

मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु ॥
स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ।
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ॥

इति मनुस्मरणात् ।

धातुपात्रशुद्धिमाह ।

**भस्मना शुध्यते कांस्यं ताम्रमुष्णेन शुध्यति ।**
**रजसा शुध्यते नारी विकलं या न गच्छति ॥ २ ॥**

प्रतिदिनं भुक्तोच्छिष्टानुलिप्तं कांस्यं भस्मना शुध्यति ताम्रमुष्णेन शुध्यति नारीरीतिका रीतिकापित्तलं नरनारीतिधन्वन्तरिस्मरणात् । सा रजसा भूपरागेण शुध्यति । तत्रोच्छिष्टादिलेपनापनोदकानां भस्मादीनां दृष्टार्थं सार्थकता अनियमेन प्राप्तौ नियमार्थं शास्त्रमवघातादिवत् । अन्यथा

मलसंयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यद्रव्यशुद्धिकृत् ॥

इतिसामान्यशास्त्रेणैव दृष्टार्थानुवचनादशेषमपि द्रव्यशुद्धिप्रकरणमनर्थकं स्यात्, अतः सामान्यशास्त्रं चोक्तारीतिकविषयम् ।

यत्तु ।

ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥

इति मानवे यथार्हपदं तदपि यथोक्तद्रव्यपरमिति न विरोधः । वक्ष्यशुद्धेर्विषयमाह । कलाभ्यो विगतो विकलः ।

महोपघाते तु बौधायन आह तैजसानां मूत्रपुरीषासृङ्मद्यैरत्यन्तोपहतानामावर्त्तनं अल्पसंसर्गे तु परिलेखनं स्पर्शमात्रोपघाते तु त्रिःसप्तकृत्वो भस्मना परिमार्जनमतैजसानामेवं भूतानामुत्सर्ग इति । भस्मे

नेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः'' इति । तत्र संशयः, किमविदुष इव विदुषोऽप्यनियतेन केनचिद्द्वारेणोत्क्रान्तिरुत मूर्धन्यनाडीद्वारेण नियतेनैवेति । तत्र विद्वत्कलानां वचनादविभागवचक्षुष्टो वेत्यनियमवचनादनियतेनेति प्राप्ते ब्रूमः । दहरादिसगुणब्रह्मोपासकस्य मूर्धस्थानादेव निष्क्रमणं, विद्यासामर्थ्यात् । अन्यथा द्वारनियमाभावे विद्यात उत्कृष्टफलप्राप्तिर्न स्यादित्यर्थः । ननु द्वारानियमेऽप्युत्कृष्टफलप्राप्तिर्भविष्यतीत्यत आह "तच्छेषे"ति । तस्याः सगुणविद्यायाः शेषभूता या गतिर्मूर्धन्यनाडीप्रभृतिमार्गस्तस्या अनुस्मृतिर्ध्यानं तद्विधानाच्च तेनैव ध्यातेन मार्गेण निष्क्रमणं युक्तम् । अन्यथा द्वारानियमेऽपि फलप्राप्तौ मार्गध्यानविधिवैयर्थ्यं स्यात् । तस्माद्हृन्निष्ठेन ब्रह्मणा सुपासितेनानुगृहीतस्तद्भावमापन्नो विद्वान्मूर्धन्ययैव शतनाडीभ्योऽधिकया निष्क्रामति । अविद्वांस्त्वितराभिर्नाडीभिः । तथाच श्रुतिर्हार्दब्रह्मविद्यायाम् "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निस्सृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती''ति । विष्वङ् नानागतयः । तस्माद्धृदयादुद्गतया भासुरया मूर्धानं गतया सूर्यरश्मिभिरेकीकृतया ब्रह्मनाड्या विद्वान्निष्क्रामतीति सिद्धम् ॥

## रश्म्यनुसारी ॥ ४ । २ । १८ ॥

हार्ददहरब्रह्मविद्यायामेव ब्रह्मनाडीरश्मिसम्बन्धमुक्त्वा "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते'' इति पूर्वोक्तरीत्या ब्रह्मनाड्या निष्क्रामतो रश्म्यनुसारित्वमुक्तम् । तदाश्रित्य सन्दिह्यते, किं

रश्म्यनुसारित्वमहर्मृतस्यैव भवत्युन रात्रावपीति । पूर्वपक्षे रात्रौ मृतस्य सूर्योदयापेक्षा, सिद्धान्ते तदनपेक्षयैव ब्रह्मलोकप्राप्तिरिति फलम् ॥

तत्राहनि रात्रौ वा मृतो रश्म्यनुसारीति सिद्धान्ते प्रतिज्ञा । तामाक्षिप्य समाधत्ते ।

**निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ ४ । २ । १९ ॥**

अहनि सूर्यरश्मिनाडीसम्बन्धस्य सत्त्वात्तत्रैव मृतो रश्म्यनुसारी, निशि तु न भवति तदसत्त्वात्, इति चेन्न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात् । यावद्देहभावित्वं च श्रुतिर्दर्शयति "अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति । प्रतायन्ते विस्तृता भवन्ति रश्मयः । सृप्ताः सम्बद्धाः । नन्वत्र सम्बन्धः श्रुतो, न तस्य यावद्देहभावित्वम्, इत्याशङ्क्य प्रमाणान्तरसूचकः सूत्रे चकारः प्रयुक्तः । रात्रावप्यौष्ण्यस्य देहे दर्शनाद्रश्मिसम्बन्धोऽनुमेय इति । तस्मादहनि रात्रौ वा मृतो विद्वानविलम्बेनैव रश्म्यनुसारीति सिद्धम् ॥

**अतश्चायने ऽपि दक्षिणे ॥ ४ । २ । २० ॥**

किं दक्षिणायने मृतो विद्वान्विद्याफलं प्राप्नोति न वेति सन्देहे, उत्तरायणप्राशस्त्यप्रसिद्धेर्भीष्मस्य तत्प्रतीक्षादर्शनाच्च न प्राप्नोतीति प्राप्ते, अतिदिशति पूर्वन्यायं "अतश्च" इति । अत एव च कालान्तरप्रतीक्षाऽनुपपत्तेर्विद्याया नित्यवत्फलसम्बन्धश्रवणात्, दक्षिणेऽप्ययने मृतो विद्वान्फलमाप्नोत्येवेत्यर्थः । अविदुषामुत्तरायणं

प्रशस्तमित्यभिवदनरूपसदाचारे प्रवृत्त्यर्थं पितृप्रसाद-लब्धस्वेच्छामरणज्ञापनार्थं वा भीष्मस्य विदुष उत्तरायण-प्रतीक्षेति भावः ॥

ननु भगवद्गीतासु "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरत-र्षभ ॥" इति कालमेव प्रतिज्ञाय, अहरादिकालविशेष-स्यानावृत्तये नियतस्योपदेशात्, कथं रात्रौ दक्षिणायने वा मृतो विद्वाननावृत्तिमाप्नुयादित्यत आह ।

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ ४ । २ । २१॥**

योगिनः स्मार्तविद्योपासकान्प्रत्ययमहरादिकालवि-शेषः स्मर्यते स्मार्तत्वप्रत्यासत्तेः, न श्रौतदहराद्युपासका-न्प्रति । नन्वत्र योगो दहराद्युपासनमेवास्तु तत्राह "स्मार्ते" इति । ब्रह्मार्पणबुद्ध्या कृतनित्याग्निहोत्रादिःकर्मयोगः, "अनाश्रितः कर्मफलम्" इत्यादिस्मृतेः । धारणापूर्वका-कर्तृत्वानुभवः साङ्ख्यम्, "इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्" इति स्मृतेः । तथा चैते योगसाङ्ख्ये स्मार्ते एव, न श्रौतविद्यारूपे । तथा च श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः । यदि च श्रुत्युक्तदेवयान-पितृयाणयोरेवात्र स्मृतावपि प्रत्यभिज्ञानात्स्मृतौ काल शब्देन तदभिमानिदेवताग्रहणं श्रुतिसमानार्थत्वाय क्रि-यते, तदाऽहरादिकालाभिमानिदेवतानां सर्वदा सत्त्वान्न विदुषो मृतौ कालनियमापेक्षेत्यनवद्यम् । तस्माद्यदाकदा-चिन्मृतो विद्वान्विद्याफलं प्राप्नोतीति सिद्धम् ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

एवं सगुणविद्याफलप्राप्तये देवयानमार्गं वक्तुं तदङ्गोत्क्रान्तिचिन्ता कृता । सम्प्रत्यङ्गिनं देवयानमार्गं वक्तुमयं पाद आरभ्यते ।

**अर्चिरादिना तत्प्रथितेः ॥ ४ । ३ । १ ॥**

अस्ति ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः । नाडीसम्बद्धरश्मिरूपो मार्गः क्वचिच्छ्रूयते । क्वचित्तु "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" इत्यादावग्न्यादिरूपः । अन्यत्र तु "सूर्यद्वारेण ते विरजाः प्रयान्ति" इति श्रुतम् । 'विरजा' विरजसः, मार्गतत्प्राप्यफलविरोधिविधुरा इत्यर्थः । अत्र श्रुतिविप्रतिपत्त्या संशयः, किं परस्पर भिन्ना एवैते मार्गाः, उतानेकविशेषणयुक्त एक एवेति । पूर्वपक्षे येनकेनचिन्मार्गेण गमनमिति विकल्पः, सिद्धान्ते मार्गैक्याद्विकल्पाभावः, इति बोध्यम् । तत्र प्रकरणभेदान्मार्गभेदः, तथाच विदुषां मृतिकालानियमवन्मार्गानियमः, इति प्राप्ते ब्रूमः । सर्वो हि ब्रह्मलोकप्रेप्सुरर्चिरादिनैवैकेन मार्गेण गन्तुमर्हति । कुतः । तत्प्रथितेः, तस्यार्चिरादिमार्गस्य पञ्चाग्निविद्याप्रकरणे "ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती"ति पञ्चाग्न्युपासकस्यैवेतरस्यापि सगुणोपासकस्य श्रुतत्वादित्यर्थः । न च प्रकरणभेदान्मार्गभेदः, सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानाद्गन्तव्यब्रह्मलोकाभेदाच्च सर्वत्र सर्वविशेषणोपसंहारेणानेकविशेषणयुक्तमार्गैक्यावगमात् । तस्माद्ब्रह्मलोकप्राप्तिहेतुर्मार्गः सर्वेषामेक एवेति सिद्धम् ॥

**वायुमब्दादविशेषविशेषाभ्याम् ॥ ४ । ३ । २ ॥**

सर्वेषां मार्गविशेषणानां ग्रथनप्रकारः कथ्यते । "स

एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'' मिति कौषीतकिनो देवयानं मार्गमामनन्ति। स विद्वांस्तत्तल्लोकं प्राप्तस्तत्तल्लोकस्वामिनाऽग्न्यादिना नीयत इत्यर्थः । छान्दोग्यास्त्वेवमधीयते, "तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासांस्तान्,मासेभ्यः संवत्सरं संवत्सरादादित्य'-मिति । उदङ्ङादित्यो यान्षण्मासानेति तानिति योजना । अत्र श्रुतिद्वयेऽप्यग्निरादौ पठितः। अनन्तरं च कौषीतकिश्रुतौ वायुः श्रुतः । सोऽर्चिरादिमार्गे कस्मादनन्तरं ग्रथितव्य इति सन्देहे, सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानान्मार्गैक्यवत्, अग्न्यनन्तरं वायोः प्रत्यभिज्ञानात्तत्रैव तस्य प्रवेशः, इति प्राप्ते, ब्रूमः । अब्दात्संवत्सरादनन्तरमादित्यात्पूर्वं वायुमभिसंविशन्ति गन्तारः, अविशेषविशेषाभ्याम् । कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यं पूर्वत्वं वा विशेषो न ज्ञायते, तद्वाचकपदाभावात् । बृहदारण्यके त्वादित्यात्पूर्वत्वं विशेषो दृश्यते "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती''ति । पुरुषो ध्याता । लोको देहः । प्रैति, तदेति शेषः । तस्मै प्राप्ताय ध्यात्रे स वायुस्तत्र स्वात्मनि विजिहीते छिद्रं करोति, यथा रथचक्रस्यच्छिद्रम् । तेन वायुदत्तनच्छिद्रेण द्वारेणोर्ध्वमाक्रमते स ध्याता । कऊर्ध्वंस्तमाह "आदित्य''मिति । तथा च "तेने''ति श्रुत्याऽऽदित्यगमनहेतुद्वारस्य हेतोर्वायोः पूर्वत्वस्यादित्यादवगमात्, अग्न्यनन्तरपाठस्य बाधः । अत्रैवं क्रमो निष्पन्नः ।

नाडीरश्मिप्रवेशानन्तरमर्चिरादिसंवत्सरान्तं गच्छति विद्वान् छान्दोग्यश्रुत्यनुसारात् । बृहदारण्यके मासानन्तरं देवलोकश्रवणेऽपि छान्दोग्यश्रुत्या मासानन्तरं संवत्सरस्यैव प्रवेशः, तस्य मासावयवित्वेन योग्यत्वात् । संवत्सरानन्तरं देवलोकस्य देवलोकाद्वायोर्वायोरादित्यस्यादित्याच्चन्द्रमसश्चन्द्रात्तटिल्लोकस्य प्रवेशः । तथाच सूत्रे वायुपदं देवलोकोपलक्षकम् । अब्दादनन्तरं देवलोकसहितं वायुमागच्छति विद्वानिति सूत्रार्थः ॥

एवमग्न्यनन्तरश्रुतवायोः स्थानमुक्त्वा तत्रैव कौषीतकिश्रुतौ वाय्वनन्तरश्रुतवरुणादीनामर्चिरादिमार्गे स्थानमाह ।

## तटितोऽधि वरुणः सम्बन्धात् ॥ ४ । ३ । ३ ॥

किं कौषीतकिवाक्ये श्रुतो वरुणोऽर्चिरादिमार्गे सम्बध्यते न वेति सन्देहे, स्थानबोधकमानाभावान्न सम्बध्यते, इति प्राप्ते, ब्रूमः । तटितोऽधि विद्युल्लोकादुपरिष्टाद्वरुणस्सम्बध्यते । कुतः । सम्बन्धात् । तटित उपरि हि सजला मेघा दृश्यन्ते, जलाधिपतिश्च वरुणः, इति तटिद्वरुणयोः सम्बन्धादित्यर्थः । वरुणानन्तरमिन्द्रादेः प्रवेशः, कौषीतकिनां पाठक्रमे बाधकाभावादिति ॥

एवमर्चिरादीनां क्रमं निरूप्य, तेषामेव स्वरूपं निरूपयन्ति ।

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ । ३ । ४ ॥

किमेतेऽर्चिरादयो मार्गचिह्नभूताः, उत गन्तॄणां विदुषां भोगभूमयः, आहोस्विदातिवाहिकाः, इति संशयः । तत्रार्चिरादीनां वृक्षनद्यादिवन्मार्गचिह्नत्वम्, 'अग्निलोकं' 'वायुलोकं' इत्यादिलोकशब्दश्रवणाद्भोगभूमित्वं

वेति प्राप्ते, ब्रूमः । एतेऽर्चिरादय आतिवाहिकाः कार्यब्रह्मगन्तृणां विदुषां गमयितारः । कुतः । तल्लिङ्गात्, "अमानवः स एतान्ब्रह्म गमयती"त्यमानवपुरुषस्य विद्युल्लोकं प्राप्तानुपासकान्प्रति गमयितृत्वश्रवणादित्यर्थः । न च यस्य गमयितृत्वं श्रुतं तस्यैव तदिति वाच्यम्, तस्य वाक्यस्यार्चिरादिमानवपुरुषसमभिव्याहारप्राप्तमानवत्वनिवृत्तिपरत्वेन सिद्धवद्गमयितृत्वानुवादकत्वात् । अतः सिद्धवद्गमयितृत्वदर्शनाल्लिङ्गात्पूर्वेषामर्चिरादीनां पुरुषाणां नेतृत्वमिति । न च लोकशब्दमात्रेण भोगभूमित्वमिति युक्तम्, लीनेन्द्रियाणां विदुषां भोगायोगात् । तस्मादग्निस्वामिकं लोकं प्राप्य, तेनाग्निनाऽऽतिवाहिकेनाहर्दिवं प्राप्नोति, तेन च देवतान्तरमिति योज्यम् ॥

ननु लिङ्गमात्रं न पूर्वेषां नेतृत्वगमकं, न्यायाभावात्, इत्यत आह ।

**उभयव्यामोहात्तत्सिद्धेः ॥ ४ । ३ । ५ ॥**

यद्यर्चिरादयोऽचेतनास्तदा विदुषामपि निर्देहानां लीनेन्द्रियाणां ज्ञानाभावेनोभयोर्विद्वदर्चिराद्योर्व्यामोहादज्ञत्वात्कार्यब्रह्मप्राप्तिर्न स्यात् । लोके हि मूर्च्छितो यत्नहीनो यत्नवद्भिश्चेतनान्तरैर्नीयते, नाचेतनैः । अतो यत्नहीनश्चेतनश्चेतनान्तरैर्नीयत इति न्यायसहिताल्लिङ्गात्पूर्वेषामर्चिरादीनां देवानां तत्सिद्धेर्नेतृत्वसिद्धेः, न न्यायहीनं लिङ्गम् । अर्चिरादीनां देवत्वे, रात्रौ दक्षिणायने वा मृतस्य विदुषो ब्रह्मलोकगतिर्युक्ततरा भवति, देवानां सदा सत्त्वादिति ॥

ननु नार्चिरादीनां नेतृत्वं, विद्युल्लोकादमानवपुरुषस्यैव नेतृत्वश्रवणात्, वरुणादीनां नेतृत्वायोगात्, इत्यत आह ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४ । ३ । ६ ॥

अमानवः पुरुषो विद्युल्लोकमागतो वैद्युतः । तेनैव ततो विद्युत्प्राप्तेरूर्ध्वं नीयमाना विद्वांसः कार्यं ब्रह्म प्राप्नुवन्ति, 'अमानव एत्य ब्रह्मलोकान्गमयति विद्युल्लोकस्थान्' इत्यमानवस्यैव गमयितृत्वश्रवणात् । अमानवोपसर्जनत्वेन वरुणादीनां नेतृत्वं, न प्राधान्येन । अर्चिरादिविद्युदन्तानां प्राधान्येनैव नेतृत्वम् । तस्मादर्चिरादयो नेतार इति सिद्धम् ॥

एवं गन्तव्यप्राप्तिहेतुं मार्गं निरूप्य फलभूतं गन्तव्यं निरूपयन्ति ।

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४ । ३ । ७ ॥

"स एनान्ब्रह्म गमयती"त्यत्र संशयः, किं परं निर्गुणं ब्रह्म गमयत्यमानवः पुरुषः, उत कार्यं सगुणं ब्रह्मेति । पूर्वपक्षेऽर्चिरादिगत्या ब्रह्मलोकप्राप्त्यनन्तरं विदुषो लिङ्गशरीरलयेन परब्रह्मप्राप्तिः, सिद्धान्ते कार्यब्रह्मप्राप्त्यर्थमेव गतिर्न परब्रह्मप्राप्त्यर्थम्, इति मन्तव्यम् । उत्तरत्र पूर्वपक्षयिष्यन्नादौ सिद्धान्तमाह "कार्य"मिति । कार्यमेव ब्रह्म गमयतीति बादरिराचार्यो मन्यते । कुतः । अस्य कार्यब्रह्मणः परिच्छिन्नस्य गत्युपपत्तेर्गन्तव्यत्वोपपत्तेः, प्रत्यग्रूपस्यापरिच्छिन्नस्य परस्य तदनुपपत्तेः, इत्यर्थः ॥

## विशेषितत्वाच्च ॥ ४ । ३ । ८ ॥

"ब्रह्मलोकान्गमयती"ति श्रुत्यन्तरे बहुवचनेन गन्तव्यब्रह्मणो विशेषितत्वात्सावयवस्यावयवभेदेन भिन्नस्य ब्रह्मण एव गन्तव्यत्वं, न निर्विशेषब्रह्मणः । लोकशब्दाच्च भोगभूमेरेव प्राप्यत्वं, न परस्येपि चकारार्थः ॥

ननु नपुंसकस्य ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्कथं कार्यब्रह्मणि "ब्रह्म गमयती"ति व्यपदेशः, तत्राह ।

**सामीप्यात्तु तद्व्यपदेशः ॥ ४ । ३ । ९ ॥**

"तु" शब्दोऽद्यनिरासार्थः । परमेव हि ब्रह्म सत्यकामत्वादिगुणयुक्तं कार्यब्रह्मेत्युच्यते । तथा च कार्यब्रह्मणः कारणपरब्रह्मसामीप्यात्कारणे मुख्यस्य ब्रह्मपदस्य कार्ये व्यपदेशो लक्षणया प्रयोग इत्यर्थः । मुख्यासम्भवादिति भावः ॥

ननु कार्यब्रह्मप्राप्तौ तेषां न पुनरावृत्तिरिति श्रुतिविरोधः, तत्राह ।

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४ । ३ । १० ॥**

कार्यब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेण सहातः कार्यब्रह्मणः परं ब्रह्म प्राप्नुवन्त्युत्पन्नात्मसाक्षात्कारा विद्वांस इत्युक्तश्रुत्यभिधानादवगन्तव्यमित्यर्थः ॥

**स्मृतेश्च ॥ ४ । ३ । ११ ॥**

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति स्मृतिश्च ब्रह्मलोकं प्राप्तानां क्रममुक्तिं दर्शयति । अतोऽपि नानावृत्तिश्रुतिविरोधः । प्रतिसञ्चरो महाप्रलयः । तस्मिन्प्राप्ते परस्य हिरण्यगर्भस्यान्तोऽधिकारसमाप्तिः । तदा कृतात्मानः शुद्धधियो ब्रह्मलोकवासिनः परं पदं प्राप्नुवन्तीति योजना । तस्मात्कार्यब्रह्मप्राप्त्यर्थमेवार्चिरादिगतिः, न प्रत्यग्रूपपर-

ब्रह्मप्राप्त्यर्थम्, घटाकाशस्येव महाकाशप्राप्त्यर्थं गतेरफलत्वात्, इति सिद्धम् ॥

एवं सिद्धान्तमुक्त्वा पूर्वपक्षमाह ।

**परं जैमिनिर्मुख्यत्वात् ॥ ४ । ३ । १२ ॥**

नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्परमेव ब्रह्म गमयत्यमानव इति जैमिनिराचार्यो मन्यते ॥

**दर्शनाच्च ॥ ४ । ३ । १३ ॥**

"तेषां न पुनरावृत्तिः" "तयोर्ध्वमायन्नमृतत्वमेति" इति च मुक्तेर्गतिपूर्वकत्वदर्शनाच्च परमेव गन्तव्यमित्यर्थः ॥

ननु "प्रजापतेः सभां वेश्म प्रपद्ये" इति मरणकाल उपासकस्य कार्यब्रह्मप्राप्तिसङ्कल्पश्रवणान्न परं गन्तव्यमित्याशङ्क्याह ।

**न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ ४ । ३ । १४ ॥**

अयं प्रतिपत्त्यभिसन्धिः प्राप्तिसङ्कल्पः कार्ये ब्रह्मणि न, कार्यब्रह्मविषयो न भवतीति यावत् । किन्तु परब्रह्मप्राप्तिविषयक एव, "ते यदन्तरा तद्ब्रह्म"ेति परस्यैव प्रकृतत्वात् । ननु प्रकरणबलाद्वेश्मब्रह्मप्राप्तिसङ्कल्पस्य परविषयकत्वेऽपि तस्याः प्राप्तेर्गतिपूर्वकत्वं कथमिति चेत्, उच्यते । "तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयं वेश्मे"ति दहरविद्यायां हिरण्यगर्भवेश्मप्राप्तेर्गतिपूर्वकत्वावगमात्, अस्या अपि परब्रह्मवेश्मप्राप्तेर्गतिपूर्वकत्वमनुमीयते, वेश्मप्रतिपत्तित्वसामान्यात् । यद्वा "प्रजापतेः सभां वेश्मे"त्यत्रैव पदेर्गत्यर्थत्वाद्गतेश्च मार्गसाध्यत्वान्मार्गसाध्यगतिपूर्वकत्वं परवेश्मप्राप्तेरिति पूर्व-

पक्षः । अन्यर्थस्तु । तत्तत्र ब्रह्मलोके न केनाप्यविदुषा पराजितेत्यपरजिता पूरस्ति । ब्रह्मणा हिरण्यगर्भस्य तेनैव प्रभुणा निर्मितं हिरणमयं वेश्म चास्ति तत्प्रतिपद्यते ब्रह्मचर्यसम्पत्तिर्विद्वानिति । अत्र पूर्वपक्षे मुख्यत्वादर्शनाचेति हेतुद्वयं पूर्वमेव दूषितम् । यत्तु प्रकरणाद्वेश्मप्राप्तिसङ्कल्पः परविषय इति तत्र "प्रजापतेः सभां वेश्म प्रपद्ये" इतिवाक्यश्रुतिभ्यां दुर्बलप्रकरणविच्छेदेन वेश्मप्राप्तिसङ्कल्पस्य कार्यब्रह्मसभाविषयकत्वावगमात्स्तुत्यर्थत्वेन वाऽस्य परप्रकरणे कीर्तनम् । सगुणविद्या हि गतिमपेक्ष्य प्रजापतिसभादिप्राप्तिफलहेतुः । इयं तु परविद्या गतिनिरपेक्षैव निरतिशयफलहेतुः । अतो "महती"ति स्तुतिः । तस्मात्कार्यब्रह्मप्राप्त्यर्थैव गतिरिति सिद्धम् ॥

एवमर्चिरादिगत्या गन्तव्यं निरूप्य गन्तॄन्निरूपयति ।

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ ४ । ३ । १५ ॥**

किममानवपुरुषः सर्वानुपासकान्ब्रह्मलोकं प्रापयत्युत प्रतीकोपासकभिन्नानिति संशयः । तत्र नियामकाभावात्सर्वानिति प्राप्ते, ब्रूमः । प्रतीकोपासकभिन्नान्सर्वानुपासकान्नयत्यमानव इति बादरायण आचार्यो मन्यते । ननु तर्हि "अनियमः सर्वासा"मित्यत्र सर्वोपासनेषु मार्गोपसंहारोक्तिविरोधः, तत्राह "उभयथे"ति । कांश्चिदुपासकान्नयति कांश्चिन्नेत्युभयथा चाभ्युपगमे दोषाभावादित्यर्थः । अनियमन्यायस्य प्रतीकभिन्नविषयत्वादिति भावः । नियामकमाह "तत्क्रतुश्चे"ति । क्रतुरुपासनम् । कार्यब्रह्मविषयकः क्रतुर्यस्योपासकस्यास्ति स त-

त्क्रतुः। तथा च यो यदुपासकः स तत्प्राप्नोतीति श्रुतिस्मृतिसिद्धत्वात्तदुपासकानामेव कार्यब्रह्मप्राप्तिरित्यर्थः। प्रतीकोपासनेषु नामब्रह्मेत्यादिषु ब्रह्मणः प्रतीकं प्रति विशेषणत्वेन प्रतीकस्यैव प्राधान्यान्न तदुपासकानां ब्रह्मोपासकत्वम्। पञ्चाग्न्युपासकानां त्वब्रह्मोपासकत्वेऽपि श्रुतिबलाद्ब्रह्मप्राप्तिरिति॥

## विशेषं च दर्शयति॥ ४। ३। १६॥

किञ्च "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवती"ति नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्युपासनानामुत्कृष्टफलविशेषं दर्शयति श्रुतिः "वाग्वाव नाम्नो भूयसी"त्याद्या। अयं फलविशेषः प्रतीकानामुत्कर्षापकर्षवतामुपास्यत्वे युज्यते, न तु सर्वत्रैकस्य ब्रह्मण उपास्यत्वे। तस्माद्ब्रह्मोपासकानामेव ब्रह्मप्राप्तिः, न प्रतीकोपासकानामिति सिद्धम्॥

इति चतुर्थाध्यायस्य तृतीयः पादः॥

---

एवं सगुणब्रह्मविदां प्राप्यमुक्त्वा निर्गुणब्रह्मविदां प्राप्यमाह।

## सम्पद्याविर्भावः स्वेन शब्दात्॥ ४। ४। १॥

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते। तत्र संशयः, यथा सुकृतिनः स्वीयेन रूपान्तरेणाफलेनाभिनिष्पत्तिस्तथा निर्गुणविदोऽभिनिष्पत्तिः, उतात्ममात्रेणाभिनिष्पत्तिरिति। पूर्वपक्षे स्वर्गमोक्षयोरविशेषः, सिद्धान्ते विशेष इति फलम्। अत्र फलनिरूपणादध्यायपादसङ्ग-

त्याः स्फुटत्वम् । तत्र स्वर्गवन्मोक्षस्याभिनिष्पत्तिः, फलस्याविशेषात्, इति प्राप्ते ब्रूमः । संपद्य स्वप्रकाशमात्मानं साक्षादनुभूय तेनैवात्ममात्रेणाविर्भावोऽवस्थानवान्भवति मुक्तः । कुतः । "स्वेन रूपेणाभिनिष्पद्यते" इति स्वशब्दादित्यर्थः । फलत्वहेतुकानुमानं मोक्षनित्यत्वश्रुतिबाधितमिति ॥

ननु स्वरूपात्मकमोक्षस्य सदा सत्त्वात्कः पुनः पूर्वावस्थातो विशेष इत्यत आह ।

मुक्तः प्रतिज्ञानात् ॥ ४ । ४ । २ ॥

यः स्वरूपेणाभिनिष्पद्यते स सर्वानर्थविनिर्मुक्तः स्वप्रकाशनिरतिशयानन्दात्मनाऽवतिष्ठते । पूर्वत्र तु, अवस्थात्रयकलुषितः संसारी वेति विशेषः । ननु स्वरूपाभिनिष्पन्नो मुक्त इति कुतोऽवगम्यते, तत्राह "प्रतिज्ञाना"दिति । "य आत्माऽपहतपाप्मे"त्युपक्रम्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति सकलदोषमुक्तस्यैवात्मनो व्याख्येयत्वेन प्रतिज्ञानादित्यर्थः ॥

ननु कार्यज्योतिरुपसम्पन्नस्य कथं मुक्तत्वमित्यत आह ।

आत्मा प्रकरणात् ॥ ४ । ४ । ३ ॥

अत्र ज्योतिरात्मैव, न भौतिकं तेजः, "य आत्माऽपहतपाप्मे"त्यात्मप्रकरणादित्यर्थः ॥

अविभागेन दृष्टत्वात् ॥ ४ । ४ । ४ ॥

परं ज्योतिरुपसङ्गम्य मुक्तो विद्वानित्युक्तम् । तं मुक्तमुपजीव्य सन्दिह्यते, किं मुक्तो ब्रह्मभिन्नत्वेनावतिष्ठते, उत ब्रह्माविभागेनेति । तत्र भिन्नत्वेनेति भ्रान्तिं

वारयति "अविभागेने"ति । निरतिशयानन्द ब्रह्मात्मनै-वावतिष्ठते मुक्तः । कुतः । दृष्टत्वात् "ब्रह्मैव सन्ब्रह्मा-प्येति" "तत्त्वमसी" त्यादि श्रुतिष्वभेदस्य दृष्टत्वा-दित्यर्थः ॥

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४ । ४ । ५ ॥**

पूर्वसिद्धं ब्रह्माभिन्नं मुक्तमुपजीव्य सन्दिह्यते, स मुक्तो ब्रह्मात्मकः किं सत्येन सर्वज्ञत्वादिप्रपञ्चेन सहाव-तिष्ठते, उत शशविषाणवदसन्नेव सर्वज्ञत्वादिरिति सच्चिन्मात्रेणावतिष्ठते, आहोस्विद्वस्तुतो निष्प्रपञ्चोऽपि व्यावहारिकसर्वज्ञत्वादिमानिति । अत्राद्यपूर्वपक्षमाह "ब्राह्मेणे"ति । ब्रह्मसम्बन्धिना सत्येन सर्वज्ञत्वादिना सहावतिष्ठते ब्रह्मात्मको मुक्त इति जैमिनिराचार्यो मन्यते । कुतः । उपन्यासविधिव्यपदेशेभ्यः । उपन्यास-उद्देशः । स च "सोऽन्वेष्टव्य" इत्यादिविधानार्थमागतो "य आत्माऽपहतपाप्मे"त्यादिरूपः । विधिरज्ञातज्ञाप नम् । स च "तस्य सर्वेषु लोकेषु कामचारो भवती" त्यादिरूपः । उद्देशविधिविलक्षणो व्यपदेशः । स च 'सर्वज्ञः सर्वेश्वर" इत्यादिरूपः । अयं हि नोद्देशः, विध्यभा-वात् । नापि विधिः, सिद्धवन्निर्देशात् । अत एभ्यो हेतुभ्यः सप्रपञ्च एवात्मेति ॥

अधुना द्वितीयं पूर्वपक्षमाह ।

**चितितन्मात्रेण तदात्मकत्वादित्यौडु-लोमिः ॥ ४ । ४ । ६ ॥**

जीवात्मनस्तदात्मकत्वाच्चिदेकरसत्वाच्चितितन्मा-त्रेण चैतन्यमात्रात्मनाऽवस्थिते मुक्ते, ब्रह्मात्मनि "सर्वज्ञ"

इत्यादि शब्दा निरर्थका एव प्रयुज्यन्ते, इत्यौडुलोमिराचार्यो मन्यते। सर्वज्ञत्वादिधर्माणामसम्भवाद्धर्मिस्वरूपादत्यन्तभिन्नत्वेऽत्यन्ताभिन्नत्वे वा तेषां गवाश्वधर्मिवच्च धर्मत्वानुपपत्तेरिति प्राप्ते-॥

सिद्धान्तयति ।

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः,॥ ४ । ४ । ७ ॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि पूर्वोक्तोपन्यासादिभ्यः पूर्वस्य ब्रह्मस्वरूपस्य सर्वज्ञत्वादेर्व्यावहारिकस्य भावाद्ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरविरोधं बादरायण आचार्यो मन्यते, आविद्यकसर्वधर्माणां सर्वज्ञत्वादीनामुपपत्तेः न तेषां तुच्छत्वमिति । अत एव सर्वात्मनाऽविद्यानिवृत्तौ विदेहकैवल्यं निष्प्रपञ्चमेव । एतदभिप्रेत्योक्तं भगवता भाष्यकारेण "व्यवहारापेक्षये"ति । न ह्यौपनिषदानां मोक्षेऽपि व्यवहृतिर्मता, मूलाभावात्, इति भावः ॥

एवं परविद्याफलमभिधायापरविद्याफलं प्रपञ्चयितुमुपक्रमते ॥

**सङ्कल्पादेव तु तच्छ्रुतेः ॥ ४ । ४ । ८ ॥**

दहरविद्यायां श्रूयते "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती"त्यादि । तत्र संशयः, किं ब्रह्मलोकस्थस्य विदुषो भोगहेतवः पित्रादयः सङ्कल्पादेव सिध्यन्ति, उत यत्नान्तरसहकृतात्सङ्कल्पादिति । तत्र लोके भोगसाधनस्य प्रयत्नसाध्यत्वदर्शनादत्रापि यत्नमापेक्ष्येच्छात एव ब्रह्मभूतस्य विदुषो विभूतिसिद्धिः, न केवलेच्छातः, इति प्राप्ते, ब्रूमः । सङ्कल्पादेवास्य विदुषः पित्रादिविभूतिप्राप्तिः । कुतः । साधनान्तरनिरपेक्षश्रुतेः । श्रुत्या च लौकिकानु-

मानस्य बाध इति । किञ्च यदि सङ्कल्पः साधनान्तरसापेक्षस्तर्हि तदभावे विदुषो वन्ध्यसङ्कल्पत्वापत्तौ सत्यसङ्कल्पत्वं न स्यात् । सङ्कल्पानुगुणसाधनान्तरमिष्टमेवेति ॥

## अत एव चानन्याधिपतिः ॥ ४ । ४ । ९ ॥

अत एव सत्यसङ्कल्पत्वादेव विद्वाननन्याधिपतिर्भवति । यदि विदुषः कश्चनाधिपतिः स्यात्तर्हि तदधीनभोगस्य सङ्कल्पमात्रसाध्यत्वाभावात्सत्यसङ्कल्पत्वं न स्यात् । तस्मादीश्वरात्मकस्य विदुषः सङ्कल्पादेव सर्वैश्वर्यप्राप्तिरिति सिद्धम् ॥

## अभावं बादरिराह ह्येवम् ॥ ४ । ४ । १० ॥

"सङ्कल्पादेवे"ति श्रुत्या विदुषस्तावन्मनोऽस्तीत्यवगतम् । शरीरेन्द्रियाणि सन्ति, उत न सन्ति, आहोस्वित्सन्ति न सन्ति च, इति सन्देहे, यथा "सङ्कल्पादेवे"त्यवधारणश्रुत्या साधनान्तराभावस्तथा बादरिराचार्यः शरीरेन्द्रियाणामभावं मन्यते । आह ह्येवमाम्नायः "मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इति । यदि विदुषः शरीरादिकं स्यात्तदा मनसेति विशेषणमन्ययोगव्यवच्छेदकमवधारणपरं पीड्येतेत्येकः पूर्वपक्षः ॥

पूर्वपक्षान्तरमाह ।

## भावं जैमिनिर्विकल्पामननात् ॥ ४ । ४ । ११ ॥

शरीरेन्द्रियाणां मनस इव भावं सत्तां जैमिनिराचार्यो मन्यते "स एकधा भवति त्रिधा भवती"त्यादिना विदुषोऽनेकधाभावविकल्पामननात् । न हि शरीरभेदं विना कदाचिदेकधाभावः कदाचित्त्रिधाभाव इत्याद्यनेकधाभावविकल्पः सम्भवतीति भावः ॥

॥ ओः ॥

# जैनेन्द्रव्याकरणस्य प्रस्तावः ।



भास्कराचार्यकृतलीलावत्यामन्ते

"अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः
षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः ।
रत्नानां त्रितयं द्वयं च बुबुधे मीमांसयोरन्तरं
सद्ब्रह्मैकमगाधबोधमहिमा सोऽस्याः कविर्भास्करः॥" (१)

इति पद्यं दृष्ट्वा कान्यष्टौ व्याकरणानीति विवेचयन् कविकल्पद्रुमाभिधे धातुपाठे बोपदेवेनोक्तम्

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"

इदं पद्यमवलोक्य एतान्येवाष्टौ व्याकरणानीति निश्चितवान् । ततो जैनेन्द्रव्याकरणमन्विष्यन् चिरेण वाराणस्यामेकस्य जैनस्य पुस्तकसंग्रहे देवनन्दिमुनिकृतस्य जैनेन्द्रव्याकरणस्याभयनन्दिमुनिकृतमहावृत्तिसहितस्यैकं पुस्तकमुपलब्धवान् किन्त्विदं पुस्तकं प्राचीनं स्थलविशेषेषु

(१) कलिकातास्थस्कूलबुक्सोसाइटीसमाजद्वारा मुद्रिते पुस्तके द्रष्टव्यम् । प्रक्षिप्तमिदं पद्यं न तु भास्कराचार्येण कृतमिति केचन मन्यन्ते । तथात्वे ऽपि केनचिद्बहुज्ञेन रचितमिति नास्त्यत्र शङ्कावकाशः ।

भूयो विन्दुमात्त्वरमशुद्धिबहुलमपि चैकेनैवादर्शपुस्तकेन संशोधनं सम्यङ् न भवतीत्यपि सुनिश्चितमेव तथापि दुर्लभस्यास्य व्याकरणस्य सुलभत्वविधानाय सहसा तथाविधेनैव पुस्तकेन काशीविद्यासुधानिधौ मुद्रणेन प्रकाशयितुमयमारम्भः । अत्राननुभूतश्रमेणाहं याथातथ्येन शोधनकार्यं कृतवान् तदत्र स्खलितं विद्वद्भिः पुस्तकान्तर-संवादेन परिहरणीयं क्षन्तव्यं चेति भूयो भूयोऽभ्यर्थय इति शिवम् ।

गवर्नमेंटसंस्कृतकालेज<br>पुस्तकालय–बनारस<br>२३ मार्च १९१० ई० } विन्ध्येश्वरीप्रसादद्विवेदी ।



ओं नमः परमात्मने ।

# जैनेन्द्रव्याकरणम् ।

## देवनन्दिमुनिकृतम् ।

## अभयनन्दिमुनिकृतमहावृत्तिसहितम् ।

देवदेवं जिनं नत्वा सर्वसत्त्वाभयप्रदम् ।
शब्दशास्त्रस्य सूत्राणां महावृत्तिर्विरच्यते ॥ १ ॥
यच्छब्दलक्षणमसुव्रजपारमन्यै-
रव्यक्तमुक्तमभिधानविधौ दरिद्रैः ।
तत्सर्वलोकहृदयप्रियचारुवाक्यै-
र्व्यक्तीकरोत्यभयनन्दिमुनिः समस्तम् ॥ २ ॥

शिष्टाचारपरिपालनार्थमादाविष्टदेवतानमस्कारलक्षणं मङ्गलमिदमाहाचार्यः ॥

**लक्ष्मीरात्यन्तिकी यस्य निरवद्यावभासते ।**
**देवनन्दितपूजेशे नमस्तस्मै स्वयम्भुवे ॥ १ ॥**

लक्ष्मीः श्रीः सैव विशिष्यतेऽन्तमतिक्रान्तः कालोऽत्यन्तः तत्र भवा आत्यन्तिकी अविनश्वरी आत्मस्वभावाधीना केवलज्ञानादिविभूतिरित्यर्थः । अवद्यात् गर्ह्यान्निष्क्रान्ता निरवद्या निर्दोषा अवभासते शोभते यस्य भगवतः यस्येति सर्वनामपदस्य सामान्यवाचित्वेऽपि अन्य-

स्यैवंविधा श्रीर्न सम्भवतीति पारिशेष्यादर्हद्भट्टारकस्य ग्रहणम्। यच्छब्दाभिहितोऽर्थस्तच्छब्देन परामृश्यत इति तस्मै देवनन्दितपूजेशे स्वयम्भुवे नमः अस्तित्वत्यध्याहारः देवाः सुराः तैर्नन्दिना अभिवर्द्धिता सा चासौ पूजा च तस्या ईष्टे इति क्विपि कृते देवनन्दितपूजेट् तथा स्वयमात्मना भवतीति स्वयम्भूः नमःशब्दयोगे सर्वत्र ङेर्भवति ॥

लोके प्रसिद्धसाधुत्वानां शब्दानामन्वाख्यापनार्थमिदमारभ्यते। अन्वाख्यानं च प्रकृत्यादिविभागेन सामान्यविशेषलक्षणेन शब्दानां व्युत्पादनम्। तच्च शब्दार्थसम्बन्धान्तरेण न सम्भवति। शब्दार्थसम्बन्धसिद्धिश्चानेकान्ताधीनेत्यत आह ॥

## सिद्धिरनेकान्तात् ॥ १ ॥

प्रकृत्यादिविभागेन व्यवहाररूपा श्रोत्रग्राह्यतया परमार्थतापेता प्रकृत्यादिविभागेन च शब्दानां सिद्धिः अनेकान्ताद्भवतीत्यर्थोऽधिकार आशास्त्रपरिसमाप्तेर्वेदितव्यः। अस्तित्वनास्तित्वनित्यत्वसामान्यसामानाधिकरण्यविशेषणविशेष्यादिकोऽनेकः अन्तः स्वभावो यस्मिन् भावे सोऽयमनेकान्तः अनेकात्मा इत्यर्थः। तस्यावग्रहेहावायधारणात्मकं प्रत्यक्षं तद्व्यवहारान्यथानुपपत्तेरितीदमनुमानंच साधकम्। अथास्तित्वनास्तित्वादीनां परस्परविरुद्धानां कथमैक्याधिकरण्यमसङ्कीर्णरूपता च। यथा भवतामेकत्र हेतौ अन्वयव्यतिरेकयोः जनकयोरपि वा जन्यमानरूपरसापेक्षयोः सहकारित्वासहकारित्वयोः। अथ हेतौ सपक्षविपक्षापेक्षया रूपद्वयं रसे च सभागा-

सभागकार्यापेक्षया । अत्रापि तर्हि स्वरूपपररूपापेक्षया-स्तित्वनास्तित्वे । द्रव्यपर्यायापेक्षया च नित्यत्वानित्यत्वे । द्रव्यपर्याययोश्चान्वयव्यतिरेकाभ्यां सिद्धिरित्यास्तां तावदेतत् । अनेकान्तादितीदमेव ज्ञापकं हेतौ कापि भवति । तेनानित्यः शब्दः कृतकत्वादित्यादि सिद्धम् । उत्तरसूत्रैकदेशाद्याचापेऽधिकार (?) इति वक्ष्यति । सस्थान-क्रियं स्वमिति । एतच्च वस्तुना साधर्म्यवैधर्म्यात्मकेऽनेकान्ते सत्युपपद्यते । तथाहि अकाराकारयोः ह्रस्वदीर्घकाल-भेदेन वैधर्म्येऽपि तुल्यस्थानकारणत्वेन साधर्म्यमस्तीति स्वसञ्ज्ञाव्यवहारः सिद्ध्यति । यदि हि साधर्म्यमेव स्यात् तदास्तित्वेनेवान्यैरपि धर्मैः साधर्म्ये सर्वमेकं प्रसज्येत । यदि च वैधर्म्यमेव तदा कस्यचिदस्तित्वम-परस्य नास्तित्वमन्यस्य चान्यत् । अधुमृदिति अन्वय-व्यतिरेकाभ्यामर्थवच्छब्दरूपं मृत्सञ्ज्ञकमनेकान्तात् सि-द्ध्यति । तथाहि विभक्त्यन्तस्य च शब्दस्य प्रयोगादर्थे ज्ञानमुत्पद्यत इति सङ्घाता अर्थवन्तो दृष्टाः । तदवयवा-नामप्यन्वयव्यतिरेकाभ्यामर्थवत्ता जायते । वृक्षावित्यत्र विसर्जनीयाभावादेकत्वार्थो निवृत्तः । औकारभावाद् द्वित्वं जातम् । अकारान्तवृक्षशब्दान्वयाज्जातिरन्व-यिनी प्रतीयते । अन्वयव्यतिरेकौ च भावावेकान्तवादे न स्तः । तथाह्यपाये ध्रुवमपादानमित्यादिषट्कारकी नित्यक्ष णिकपक्षयोर्नोपपद्यते व्यपायध्रौव्याद्यभावात् । उक्तं च

इदं फलमियं क्रिया करणमेतदेष क्रमो
व्ययोऽयमनुषङ्गजं फलमिदं दशेयं मम ॥
अयं सुहृदयं द्विषत्प्रयतदेशकालाविमा-
विति प्रतिवितर्कयन् प्रयतते बुधो नेतरः ॥

## सस्थानक्रियं स्वम् ॥ २ ॥

स्थानं ताल्वादि क्रिया स्पृष्टतादिका समाना स्थाने क्रिया यस्य सामर्थ्यात् स्थानमपि समानं लभ्यते । अथवा समानं स्थानक्रियं यस्य समानस्येति योगविभागात् सादेशः । तत्स्थानक्रियं स्वसंज्ञं भवति । आत्मलाभमापद्यमाना वर्णास्तिष्ठन्त्यस्मिन्निति स्थानं वर्णोत्पत्तिस्थानमित्यर्थः । तदष्टविधम् ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥ इति

द्रव्यस्य देशान्तरप्राप्तिहेतुरान्तरः परिस्पन्दः क्रिया । सा चतुर्विधा । स्पृष्टता ईषत्स्पृष्टता विवृतता ईषद्विवृतता चेति । ध्वनावुत्पद्यमाने यया स्थानानि स्पृशति सा-स्पृष्टता । मनाक्स्पर्शे ईषत्स्पृष्टता । दूरेण स्पर्शे विवृतता । समीपेन स्पर्शे ईषद्विवृतता । कस्य पुनः किं स्थानम् । अकुहविसर्जनीयाः कण्ठ्याः । हविसर्जनीयावुरस्यावेकेषाम् । जिह्वामूलीयो जिह्व्यः ॥ सर्वं मुखस्थानमवर्णमेके मन्यन्ते । इचुयशास्तालव्याः । एदैतौ कण्ठतालव्यावेकेषाम् । उपूपध्मानीया ओष्ठ्याः । ओदौतौ कण्ठोष्ठ्यावेकेषाम् । वकारो दन्तोष्ठ्यः । सृक्कस्थानमेके वाञ्छन्ति । ऋटुरषा मूर्द्धन्याः । रेफो दन्तमूल्य एकेषाम् । ऌतु एकेषाम् । ऌतुलसा दन्त्याः । नासिक्योऽनुस्वारः । ञमङणनाः स्वस्थानाः । नासिकास्थाना एकेषाम् । तेषां स्वसञ्ज्ञाप्राप्तिर्दोषः । स्पृष्टिः स्पृष्टं स्पृष्टानुगतं करणं कृतिरुच्चारणमेषामिति स्पृष्टकरणा वर्गाः । ईषत्स्पृष्टकरणा अन्तस्थाः । ईषद्विवृतकरणा ऊष्माणः । विवृ-

त्करणाः स्वराः । तेभ्य एदोतौ विवृततरौ । तेन ॰दध्येतत् मध्वोदनमिति स्वेऽको दीत्वाभावः । ताभ्यामैदौतौ विवृततरौ । तेन दिश्यैन्द्रयां मध्वौषधम् । ताभ्यामवर्ण इति । तेन पित्रर्थः दध्यत्र मध्वत्र । अन्ये संवृतमकारमिच्छन्ति लोके । शास्त्रव्यवहारे तु विवृतम् । एतच्चायुक्तं लोकशास्त्रयोरुच्चारणं प्रत्यविशेषात् । अयं च प्रपञ्चश्चिन्तनीयः । स्वरेभ्यो विवृततराः अवर्णैच इत्यपि निर्देशे न दोषं पश्यामः । अ अ अ इत्यकारः उदात्तोऽनुदात्तः स्वरितः । स प्रत्येकं ङसञ्ज्ञकः । एवं प्रः । एवं दीः । एवं पः । एवं अष्टादशप्रभेदोऽवर्णः । तथा इवर्णः । तथा उवर्णस्तथा ऋवर्णः तथा लृवर्णः । कथं लृकारो द्विमात्रः अशक्तिजानुकरणापेक्षया । सन्ध्यक्षराणां प्रा न सन्ति । तान्यतो द्वादशप्रभेदानि । अन्तस्था यवला द्विप्रभेदाः । नासिक्येतरभेदात् । एवमर्थं चैतेऽण्सु पठ्यन्ते । अण् स्वं गृह्णातीति यथा स्यात् । रेफोष्मणां स्वा न सन्ति । वर्ग्यः स्ववर्ग्येण स्वसञ्ज्ञो भवति । उदाहरणं लोकाग्रम् । मुनीशः । स्थानग्रहणं किम् । कचटतपानां समानक्रियाणां भिन्नस्थानानां मा भूत् । तर्प्ता तर्प्तुमित्यत्र झरो झरि स्वे इति पकारस्य तकारे स्वं प्रसज्येत । क्रियाग्रहणं किम् । इचुयशानां समानस्थानानां भिन्नक्रियाणां मा भूत् । तत्र को दोषः अकुरश्च्योततीत्यत्र झरो झरि स्वे इति शकारस्य चकारे स्वं प्रसज्येत । ऋकारलृकारयोः स्वसञ्ज्ञा वक्तव्या ॥ * ॥ पितृ लृकारः पितॄकारः । स्वप्रदेशाः स्वेऽको दीरित्येवमादयः । शास्त्रलाघवार्थं संज्ञाकरणम् ॥

**हलोऽनन्तराः स्फः ॥ ३ ॥**

हलोऽनन्तराः विजातीयैरज्भिरव्यवहिताः सम्बन्धो-

चारणाः स्फसंज्ञा भवन्ति । समुदायवाक्यपरिसमाप्ति-राश्रीयते तेन प्रत्येकं स्फसञ्ज्ञा न भवति । हल इति जात्यपेक्षो बहुत्वनिर्देशः तेन द्वयोर्बहूनां च स्फसञ्ज्ञा । शर्मकर्मेति रमौ । इन्द्रश्चन्द्र इति नद्राः । हल इति किम् । तितउः । ततेर्डउः सन्वच्चेति डउः । अत्राकारोक-रावनन्तरौ ॥ स्फान्तत्वं प्रसज्येत । अनन्तरा इति किम् । पचति पनसम् । आद्यं रूपं प्रत्युदाहरणम् । पनसमि-त्यत्र स्फादेःस्कोऽन्ते चेति सत्वं स्यात् । स्फइति वर्णपि-ण्डेन सञ्ज्ञाकरणं किम् । एवंरूपः समुदायः स्फसञ्ज्ञो यथा स्यादित्येवमर्थम् । स्फप्रदेशाः स्फे रुः । लिङस्फात् किदि-त्येवमादयः ॥

## नासिक्यो ङः ॥ ४ ॥

नासिकायां भवो वर्णः ङः सञ्ज्ञो भवति । नासि-कायाश्चावर्णनगरयोर्नसादेशो ये विहितः । ञमङणना उदाहरणम् । परस्परं स्वसञ्ज्ञा स्यात् इति चेत् नैवम् । स्वस्थानप्रभवा एवामी उपचारान्नासिक्यत्वम् । यथा मुखप्रभवोऽपि स्वर उपचाराद्वंशे भवो वंश्य इत्यु-च्यते । तथापि सति मुख्येऽनुस्वारे नासिक्ये कथमुपचरि-तग्रहणम् । तस्य ङसंज्ञायां प्रयोजनं नास्तीत्यग्रहणम् । ङसञ्ज्ञाकार्यं शान्तो दान्त इति ङस्य क्भिझलोःक्ङि-तीति दीत्वम् । नासिक्य इति किम् । तप्तम् । अनुदात्तोप देश इत्यादिना पुः खञ्च प्रसज्येत । पक्वः पक्ववान् इत्यत्र ङस्य क्भिझलोरिति दीत्वं स्यात् । वत्वस्य चासिद्ध-त्वात् अनुदात्तोपदेश इत्यादिना पुः खंच प्रसज्येत ॥

## अघु मृत् ॥ ५ ॥

घुवर्जितमर्थवच्छब्दरूपं मृत्सञ्ज्ञं भवति । घोरर्थ-

वतः पर्युदासाचार्थवत्त्वं लभ्यते । अर्थश्चाभिधेयो भावाभावरूपः । तत्र भावरूपो जातिगुणक्रियाद्रव्यभेदेन चतुर्विधः । गौः । शुक्लः । पाचकः । द्रव्यविवक्षायां जात्यादिनार्थवत्त्वम् । द्रव्याभिधाने तु द्रव्यगुणलिङ्गसंख्याकर्मादयः व्युपदिश्यन्ते । तेषां द्योतनार्थं टाबादयः स्वादयश्चोत्पद्यन्ते । एवं डित्थो डवित्थः । कुण्डं पीठम् । अभावरूपाभिधाने । अभावो विनाशः । शशविषाणम् । अध्विति किम् । अहन् । मृत्त्वे नत्वं स्यात् । पर्युदासादर्थवदिति किम् । धनं वनम् । नकारावधेर्मृत्सञ्ज्ञया नत्वं प्रसज्येत । लूः पूरिति क्व्यन्तस्य धुत्त्वेपि कृदन्तत्वात् मृत्सञ्ज्ञा । मृत्प्रदेशाः ङ्याम्मृद इत्येवमादयः ॥

## कृद्धृत्साः ॥ ६ ॥

कृदन्तं हृदन्तं ससञ्ज्ञकञ्च मृत्सञ्ज्ञं भवति ॥ कृत् । ज्ञाता । ज्ञातव्यम् । हृत् । प्राजापत्यः । आकम्पनिः । सः । जिनधर्मः । साधुवृत्तम् । सिद्धे सत्यारम्भो नियमार्थः । नियमश्च विधिमुखप्रतिषेधफलमिति त्यान्तेषु कृद्धृदन्तस्यैव मृत्संज्ञा । इह मा भूत् । असिचन् । अभवन् । उत्पन्नानां स्वादीनामेकत्वादिनियम इत्यस्मिन् दर्शने स्वाद्युत्पत्तिः स्यात् । इह च काण्डे कुड्ये रमते राजकुलमिति प्रो नपीति मृत्त्वात्प्रादेशः स्यात् । सग्रहणमपि नियमार्थम् । अर्थवत्संघातानां ससंज्ञकस्यैव मृत्संज्ञा वाक्यस्य मा भूत् । साधुर्द्धर्मं ब्रूते इति सुपो धुमृदोरिति सुपः उप्प्रसज्येत । सग्रहणात् तुल्यजातीयस्यैव सुबन्तसमुदायस्य वाक्यस्य निवृत्तिर्न प्रकृतित्यससमुदायस्य । तेन वा सुपो बहुःप्राक्तु इति वहौ के अकचि कृते बहुतृणं कुमारिका उच्चकैः पठतीति मृत्वं न निव-

र्तते । ननु च सुप्तिङन्तं पदमित्यत्रान्तग्रहणादन्यत्र संज्ञाविधौ त्यग्रहणात्तदन्तविधिर्नास्तीत्युक्तं तत्कथं कृदन्तहृदन्तग्रहणम् । नायं संज्ञाविधिः पूर्वेण विहितायाः मृत्संज्ञायाः नियमोऽयम् । अथवा सादिति षत्व प्रतिषेधादिह तदन्तविधिर्ज्ञायते । अन्यथा सादित्येतस्य केवलस्य मृत्वेनाद्यत इत्यनेनैव प्रतिषेधः सिद्धः स्यात् । अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति कृद्ग्रहणं समुदायविध्यर्थं न नियमार्थम् । तेन देवदत्तेन कृतमित्यादेः समुदायस्य मृत्वात् सुपोधुमृदोरिति सुपः उप्प्रसज्यते । नैष दोषः । साधनं कृता बहुलमित्यस्यानर्थक्यप्रसङ्गात् । सर्वशब्दानां व्युत्पत्तिरस्तीति अस्मिन् पक्षे पूर्वसूत्रे नास्त्युदाहरणं संज्ञार्थमेव तत् ॥

## प्रो नपि ॥ ७ ॥

मृदिति वर्तमानमर्थात्तान्तं सम्पद्यते । प्रादेशो भवति नपि वर्तमानस्य मृदः । नबिति नपुंसकलिङ्गस्य संज्ञा पूर्वेषाम् । श्रियमतिक्रान्तं अतिश्रि । अतिरि । अतिवधु कुलम् । अतिनु जलम् । ईकारैकारौ तालव्यौ । ऊकारौकारौ च ओष्ठ्यावस्माकन्तत्स्थानेऽन्तरतम इति परिभाषया अन्त्यस्याचः प्रादेशः । नपीति किम् । राजकुमारी । अग्रणीः । मृद इति किम् । रमते कुलम् । नन्वलिङ्गत्वादाख्यातस्यात्र प्रादेशाप्राप्तिरत एवात्रापि न प्रादेशः काण्डीभूतमिति । इह तर्हि मा भूत् काण्ड्ये तिष्ठतः कुड्ये तिष्ठत इति । अत्र मृदधिकारात् मृदमृदोरेकादेशो मृद्वन्न भवति ॥

## स्त्रीगोर्नीचः ॥ ८ ॥

न्यग्भूतो यः स्त्रीत्यः गोशब्दश्च तदन्तस्य मृदः

प्रादेशो भवति। स्त्री इति स्वरितचिन्हितनिर्देशात् स्त्रियामित्येवं विहितस्य ग्रहणम् । निष्कौशाम्बिः। निर्मथुरः। उभयगतिरिह शास्त्रे। तेन एकविभक्तित्वादप्रधानत्वाच्च शास्त्रीयं लौकिकञ्च न्यत्त्वं गृह्यते । त्यग्रहणे यस्मात्स तदादेरितीयं परिभाषा स्त्रीन्यग्रहणात् नेष्यते। तेन अतितिलपीडनिः। अतिराजकुमारिः। चित्रगुः स्वेतगुः चोक्तत्वादप्रधानत्वाच्च न्यत्वम्। स्त्री इति स्वरितचिन्हितग्रहणं किम्। अतिलक्ष्मीः। अतिश्रीः। नीच इति किम्। साधु विद्या। सुगौः। इह राजकुमारीपुत्रः सुगोकुलमिति यदपेक्षं न्यत्त्वं तत्प्रति तदन्तत्वं नास्तीति न प्रादेशः। मृद इत्यधिकारः किमर्थः। कुमारीपुत्रः गोकुलं वोक्तं न्यगिति प्रादेशः प्रसज्येत ॥ ईयसो वसे प्रतिषेधो वक्तव्यः ॥ * ॥ बह्व्यः श्रेयस्यो यस्य बहुश्रेयसी पुरुषः। विद्यमानश्रेयसी। सान्तो विधिरनित्य इति ऋन्मोरिनि कवपि न भवति ॥

## हृदुप्युप् ॥ ९ ॥

स्त्रीग्रहणं नीच इति चानुवर्तते । हृदुपि सति स्त्रीत्यस्य नीच उब्भवति ॥ आमलकम् । कुवलम्। बदरम् । आमलक्याः अवयवः फलं नित्यं दुशरादेरिति मयट्। इनराभ्यां प्राग् द्रोरण्। तयोरुप्फल इत्युप्। स्त्रीत्यस्य पूर्व्वेण प्रादेशे प्राप्ते उबनेन क्रियते। तस्य परेऽचः पूर्व्वविधाविति स्थानिवद्भावः यस्य ङ्यां चेत्यकारस्य खं प्राप्तमीविधिं प्रति स्थानिवद्भावप्रतिषेधान्न भवति। एवं पञ्चेन्द्रः। पञ्चशष्कुलः । पञ्चेन्द्राण्यो देवता अस्य हृदर्थइति षसःसंख्यादीरश्चेति रसंज्ञः प्राग्द्रोरण् तस्य रस्योवनपत्य इत्युप्। स्त्रीत्यस्योपि संन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इत्यानुक्तो निवृत्तिः। पञ्चभिः

शष्कुलीभिः क्रीतः आर्हादणः राद्वुवस्वावित्युप। हृदिति किम्। गौरीपुत्रः। सुप उवत्र। उपोति किम्। गार्गीत्वम्। नोच इत्येव। अवन्ती कुन्ती कुरूः। अवन्तेरपत्यं स्त्री विकुरुनाथजादसाञ्यः इति ञ्यः। तस्य कुन्त्यवन्तीकुरुभ्यः स्त्रियामित्युप्। इतो मनुष्यजातेरिति ङी। ऊङुत इति ऊङ्। अत्र उपि सतीत्युच्यमाने प्रसज्येत॥

इद्गोण्याः॥ १०॥

इकारादेशो भवति गोण्या हृदुपि सति॥ पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः। आर्हादणो राद्वुवस्वावित्युपि कृते स्त्रीत्यस्य पूर्व्वेणापि प्राप्तेऽनेन इकारः। गोण्या इति सूत्रे प्रकृतप्रादेशेन सिद्धे इद्वचनं किम्। क्वचिदन्यत्रापि यथा स्यात्। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः। सप्तसूचिः॥

आकालो ऽच् प्रदीपः॥ ११॥

आ इति मात्रिकद्विमात्रिकत्रिमात्राणां संहितया निर्देशः। प्रदीप इति सूत्रेऽस्मिन्सुब्विधिरिष्ट इति जसः स्थाने सुः। अ आ अ ३ इत्येवं काल इव कालो यस्य सोऽच यथासंख्यं प्रदीप इत्येवं संज्ञा भवति। अकालः। दधि। मधु। पितृ। आकालः। खट्वा। गौरी। वामोरूः। आ ३ कालः। आगच्छ भो माणव जिनदत्तान् इत्यादयः। कालग्रहणं प्रत्येकं परिमाणार्थम्। ततः अकाल इति विशेषणात् भिन्नकालयोर्दीपयोर्ग्रहणं न भवति। अज्ग्रहणं किमर्थम्। हलचां सङ्घातनिवृत्त्यर्थम्। प्रतद्य। तितउ च्छत्रमिति। प्रदीपप्रदेशाः प्रो नपीत्येवमादयः॥

अचश्च॥ १२॥

परिभाषेयम्। अचः स्थाने ते प्रदीपसंज्ञका भवन्ति॥

प्रोनपीति। अतिनु। अतिश्रि। इच्छातो विशेषणविशेष्य-भाव इति अजन्तस्य प्रादेशः। अच इति किम्। सुवाक्पूतकुलम्। हलः प्रो न भवति। दीरकृद्इति चीयते स्तूयते। अच इति किम्। भिद्यते। शमित्यामदोदीरित्यत्र गृह्यमाणेन शमादिनाज्विशिष्यत इत्यनजन्तस्यापि दीत्वम्। शाम्यति। वाक्यटेः प इत्यत्रापि गृह्यमाणेन टिना अज्विशिष्यते। आगच्छ भो माणव जिनदत्तान्। अच इति किम्। धर्मवित्। नकारस्य मा भूत्। चकारः किमर्थः संज्ञाविधाने नियमार्थः। इह मा भूत्। द्यौः पन्थाः स शुभ्यां शुभिः॥

## उच्चनीचावुदात्तानुदात्तौ ॥ १३ ॥

अजिनिवर्तते। उच्चैरुपलभ्यमानोऽच् उदात्तसंज्ञो भवति। नीचैरुपलभ्यमानोऽनुदात्तसंज्ञो भवति॥ स्थानकृतमुच्चत्वं नीचत्वंच गुणः संज्ञिनो विशेषणम्। समान एव स्थाने ऊर्द्धभागनिष्पन्नोऽच् उदात्तसंज्ञो भवति नीचभागनिष्पन्नोऽनुदात्त इति॥ नित्याः शब्दार्थसम्बन्धा इति यैरिष्यन्ते तेषां निरवयवस्य नित्यस्य शब्दस्य अवयवोपचयापचयाभावात् उदात्तादिव्यपदेशो न घटते सावयवत्वे च तेषामनित्यत्वं प्राप्नोति। न च नित्यस्य स्थानकारणव्यापारविशेषाद्विशेषः प्रसज्यते। क्षणिकपक्षेऽपि नैका नित्या स्वरजातिरस्ति यामपेक्ष्यायमत्रोच्चैरयं नीचैरिति परस्परापेक्षो व्यवहारो भवेत् तस्मादुक्तमनेकान्तमाश्रित्योदात्तादयः समर्थनीयाः। न च लोकप्रतीतेषु शब्देषु विभागेनोदात्तादयः प्रतीयन्ते केवलं शास्त्रे व्यवहारार्थं प्रति संज्ञायन्ते। भू इति उदात्तत्वादिट भविता। एध स्पर्द्ध इत्येतयोरन्तोऽनुदात्तइति ङनुदात्तेतो द इति दो भवति।

एधते। स्पर्द्धते। उदात्तानुदात्तप्रदेशेषु उच्चनीचगुणविशिष्टस्य ग्रहणं प्रत्येतव्यम् ॥

व्यामिश्रः स्वरितः ॥ १४ ॥

उच्चनीचगुणव्यामिश्रोऽच् स्वरितसंज्ञो भवति॥ पच यजइत्यन्तस्य स्वरितत्वात् अस्वरितेतःकर्त्र्यप्येफल इति दो भवति। पचे। यजे। स्वरितप्रदेशाः स्वरितेनाधिकार इत्येवमादयः॥

आदैगैप् ॥ १५ ॥

प्रत्येकवाक्यपरिसमाप्तिराश्रीयते। प्रत्येकमादैचां वर्णानामैबित्येषा संज्ञा भवति। पारिशेष्यात्संज्ञासंज्ञिसम्बन्धो ज्ञायते। तथाहि नानर्थकमिदमाचार्यप्रामाण्यात्। साधनानुशासनमपि न सम्भवति। आदैचां प्रत्याहारे उपदेशात्। ऐप्शब्दस्यापि मृत्संज्ञा सिद्धा। नापि पूर्वापरप्रयोगनियमार्थम्। सावैम्म इत्यन्यथापि प्रयोगदर्शनात्। स्थान्यादेशार्थमपि न सम्भवति। अवयात् रायोहलि नावोरात् मृजेरैबिति च उभयदर्शनात्। लिङ्गाभावान्नागमागमिभावः। विशेषणविशेष्यभावोऽपि प्रतीतपदार्थयोर्भवति नीलोत्पलवत्। एवमन्यस्यार्थस्यासम्भवात् संज्ञासंज्ञिसम्बन्धः। लघ्वक्षरा संज्ञा। आदैचामैपा भावितानामतद्भावितानाञ्च सामान्येन ऐप्संज्ञा। तद्भावितानामुदाहरणम्। नाडायनः। दैवदत्तिः। औपगवः। अतद्भावितानाम्। मालामयम्। रैमयम्। नैमयम्। विकाराऽर्थे नित्यं दुशरादेरिति मयट्। आदिति तपरकरणमैजर्थम्। तादपि परस्तपर इति। तेन तवैषा महौषधिरित्यादिषु त्रिमात्रचतुर्मात्राणां निवृत्तिः। आदैगैवित्यत्र सूत्रेऽस्मिन्

सुब्विधिरिष्ट इति जसः स्थाने सुः। ऐप्प्रदेशा मृजेरैबिति एवमादयः ॥

## अदेङेप् ॥ १६ ॥

अदेङां वर्णानां प्रत्येकमेबित्येषा संज्ञा भवति ॥ अत्राप्यतद्भावितानां तद्भावितानामदेङामेप्संज्ञा । अतद्भावितानाम् । पचन्ति । पचे । एधन्ते । पद इति पररूपम् । तद्भाविनानाम् । कर्ता । तरति । चेना । स्तोता । ऋकारस्यैवैप्प्रसङ्गे स्थानतोऽन्तरतमौ अकाराकारौ भवतः। तौ च प्रसज्यमानावेव रंतौ । अदिति तपरकरणं दीपनिवृत्त्यर्थं एङर्थंच । तेन मालेयं खट्वोढा ॥ त्रिमात्रचतुर्मात्राणां निवृत्तिः । एप्प्रदेशा मिदेरेबित्येवमादयः ॥

## इकस्तौ ॥ १७ ॥

परिभाषेयम् । ऐबेपौ संज्ञया विधीयमानौ इक एव स्थाने भवतः । स्थानिनियमोऽयं न विधिरिति । कुत एतत् । सक्थ्यस्थिदध्यक्ष्णामिनीको निर्देशात् । एबैपोर्लक्षणान्तरेण विधानाच्च। प्रत्यासत्ते पूर्वमेवुदाहरणे वक्ष्यति । गार्ग्यः । करोति । नयति । भविता । सार्वैस्मो अकार्षीत् । अनैषीत् । अहार्षीत् । इच्छातो विशेषणविशेष्यभावः । मिदेरेबित्यत्र गृह्यमाणेन मिदादिना इग विशिष्यते । तेनानन्त्यस्य भवति । जुसि गार्ग्योरिति च गृह्यमाणमिका विशिष्यते इतीगन्तस्य भवति । इक इति किम् । आत्सध्यक्षरव्यञ्जनानां मा भूत् । यानम् । ग्लायति । उम्भिता । अजित्यनुवर्तनादैबेपोः सम्बन्धे सिद्धे तौ ग्रहणं संज्ञाविधाने नियमार्थम् । द्यौः । पन्थाः । सः । यत्र स्थानी निर्दिश्यते तत्र नेदं व्याप्रियते । यथा ञ्णित्यच इति ॥

## न धुखे ऽगे ॥ १८ ॥

प्रतिषेधसामर्थ्यादेकदेशो धुर्वर्तते। घोः खं यस्मिन्नगे स धुखः। तन्निमित्तावेबैपौ न भवतः॥ लोलुवः। पोपुवः। मरीमृजः। यङन्तेभ्यः पचाद्यच् यङोऽचीति यङ उप। अतः खात् प्रागेव च यङ उबेषितव्यः। अन्यथा देध इत्यत्र अखमजादेश इति कृत्वा तस्य स्थानिवद्भावात् दीङोऽचि ङ्किति युडिति युट् प्रसज्येत। धुग्रहणं किम्। लूञ। लविता। खविधिर्वलवानिति प्रागेव धुसंज्ञाया अनुबन्धनाशः। अत्रागनिमित्तं खं नास्तीति ह्यङ्गवैकल्यं नाशङ्कनीयम्। यतो धुग्रहणे सति वसो लभ्यते घोः खं यस्मिन्निति। वसेन अग इत्यस्य विशेषणं किम्। क्नूयी। क्नोपयति। अत्र पुकमाश्रित्य यखं नागनिमित्तमिति न प्रतिषेधः। वसे तु प्रसज्येत। अग इति किम्। रोरवीति। गनिमित्त एब्भवत्येव। अत्रापि यङ्खमगनिमित्तं न भवतीति ह्यङ्गवैकल्यं न मन्तव्यम् यतो ऽगग्रहणे सति धुखनिमितत्वं लभ्यते इक इत्येव। अभाजि। रागः॥

## क्ङिङ्ति ॥ १९ ॥

गिति किति ङिति च निमित्तभूते यावेबेपौ प्राप्तुतस्तौ न भवतः॥ गिति। ग्लाभूजिस्थः ग्स्नुरिति। भूष्णुः। जिष्णुः। किति। चितम्। स्तुतम्। भिन्नम्। मृष्टम्। ङिति। चिनुतः। चिन्वेति। मृष्टः। मृजन्ति। इक इत्येव। कामयते। अचिनवमित्यत्र लङो ङित्वात्कस्मान्न प्रतिषेधः। सुभवत्योर्मिङिति अभूत्। भवतेर्हलादौ मिङ्येप्प्रतिषेधवचनं ज्ञापकं ङितो लकारास्यादेशो ङिन्न भवति इति। यासुटो ङित्करणंच ज्ञापकम्॥

जाते: । व्याघ्रवान् । सप्तम्यां । दण्डा अस्यां सन्ति दण्डवती शाला । इतिकरणो विषयनियमार्थ: सर्वत्र सम्बध्यते । तेन क्वचिद्भवत्यपि । कार्यो । कार्यिक: । तण्डुली । तण्डुलिक: ॥

## व्रीह्यादिभ्यश्च । ५ । २ । ११६ ॥

व्रीही । व्रीहिक: । न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते किं तर्हि शिखामालासंज्ञादिभ्य इनि: यवखदादिभ्य इक: अन्येभ्य उभयम् ॥

## तुन्दादिभ्य इलच्च । ५ । २ । ११७ ॥

चादिनिठनौ मतुप् च । तुन्दिल: । तुन्दी । तुन्दिक: । तुन्दवान् । उदर पिचण्ड यव व्रीहि । स्वाङ्गाद्विवृद्धौ । विवृद्ध्युपाधिकात् स्वाङ्गवाचिन इलजादय: स्यु: । विवृद्धौ कर्णावस्य कर्णिल: । कर्णी । कर्णिक: । कर्णवान् ॥

## एकगोपूर्वाठञ् नित्यम् । ५ । २ । ११८ ॥

एकशतमस्यास्ति ऐकशतिक: । ऐकसहस्रिक: । गौशतिक: । गौसहस्रिक: ॥

## शतसहस्रान्ताच्च निष्कात् । ५ । २ । ११९ ॥

निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिकाट्ठञ् स्यान्मत्वर्थे ॥ नैष्कशतिक: । नैष्कसहस्रिक: ॥

## रूपादाहतप्रशंसयोर्यप् । ५ । २ । १२० ॥

आहतं रूपमस्यास्तीति रूप्य: कार्षापण: । प्रशस्तं रूपमस्यास्ति रूप्यो गौ: । आहतेति किम् । रूपवान् ॥ अन्येभ्योऽपि दृश्यते ॥ * ॥ हिम्या: पर्वता: । गुण्या ब्राह्मणा: ॥

### अस्मायामेधास्रजो विनिः । ५ । २ । ११२ ॥

पूर्वेण नित्यग्रहणेन तथासंबद्धमप्यन्यतरस्यांग्रहणं मतुप्स-मुच्चयार्थमिह संबध्यत एव । तथा मत्वर्थ इति सूत्रे यशस्वानिति भाष्योदाहरणात् । प्रकृत्यैकाजिति सूत्रे स्रग्वनरइति भाष्योदाहरणाच्च । यशस्वी । यशस्वान् । मायावी । मायावान् । व्रीह्यादिपाठादिनिठनौ ॥ मायी । मायिकः । मेधावी । क्विन्नन्तत्वात्कुः । स्रग्वी ॥

### बहुलं छन्दसि । ५ । २ । १२२ ॥

मत्वर्थे विनिः स्यात् ॥ छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् ॥ * ॥ शुनमष्ट्राव्यचरत् । मेखलावी । द्वयावी । मंहिष्ठमुभयाविनम् । रुजावी । हृदयावी । द्वयोभयहृदयानां दीर्घत्वं प्रयोजयति । अन्येषां स्वत एव दीर्घत्वात् ॥ मर्मणश्चेति वक्तव्यम् ॥ * ॥ मर्मावी ॥ सर्वत्रामयस्येति वक्तव्यम् ॥ * ॥ आमयावी ॥ शृङ्गवृन्दाभ्यामारकन् ॥ * ॥ शृङ्गारकः । वृन्दारकः ॥ फलबर्हाभ्यामिनच् ॥ * ॥ फलिनः । बर्हिणः ॥ हृदयाच्चालुरन्यतरस्याम् ॥ * ॥ अन्यतरस्यांग्रहणं इनिठनोः प्राप्त्यर्थम् । चकारस्य चुटू इतीत्संज्ञा । एवमन्यत्रापीति हरदत्तः । तेन हृदयालुशब्दोऽन्तोदात्तः । हृदयालुः । हृदयी । हृदयिकः । हृदयवान् ॥ शीतोष्णतृप्रेभ्यस्तदसहने ॥ * ॥ शीतं न सहते शीतालुः । उष्णालुः । स्फायितंचीति रक् । तृप्रः पुरोडाशः । तन्न सहते तृप्रालुः । तृप्रं दुःखमिति माधवः ॥ हिमाच्चेलुः ॥ * ॥ हिमं न सहते हिमेलुः ॥ बलादूलः ॥ * ॥ बलं न सहते बलूलः ॥ वातात्समूहे च ॥ * ॥ वातं न सहते वातस्य समूहो वा वातूलः ॥ तप्पर्वमरुद्भ्याम् ॥ * ॥ पर्वतः । मरुत्तः ॥

**ऊर्णाया युस् । ५ । २ । १२३ ॥**

सित्वात्पदत्वम् । ऊर्णायु. । अत्र छन्दसीति केचिदनुवर्तयन्ति । युक्तञ्चैतत् । अन्यथा हि अहंशुभमोरित्यत्रैवोर्णाग्रहणं कुर्य्यात् ॥

**वाचो ग्मिनिः । ५ । २ । १२४ ॥**

वाग्मी । कुत्वे जश्त्वे च गद्वयस्य श्रवणम् । द्वित्वं तु दुर्लभम् । दीर्घादाचार्याणामिति निषेधात् । अथापि द्वयोरेकस्य वा श्रवणे विशेषाभावस्तथापि यरोऽनुनासिके प्रत्यये भाषायां नित्यमनुनासिकः स्यात् ॥

**आलजाटचौ बहुभाषिणि । ५ । २ । १२५ ॥**

कुत्सित इति वक्तव्यम् । कुत्सितं बहु भाषते वाचालो वाचाटः । यस्तु सम्यग्बहु वदति तत्र वाग्मीत्येव ॥

**स्वामिन्नैश्वर्ये । ५ । २ । १२६ ॥**

ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् ॥ स्वामी ॥

**अर्शआदिभ्योऽच् । ५ । २ । १२७ ॥**

अर्शांस्यस्य विद्यन्ते स अर्शसः । आकृतिगणोऽयम् ॥

**द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । ५ । २ । १२८ ॥**

द्वन्द्वः । कटकवलयिनी । शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । गर्ह्यं निन्द्यम् । ककुदावर्ती । काकतालुकी । प्राणिस्थात्किम् । पुष्पफलवान् घटः ॥ प्राण्यङ्गान्न ॥ * ॥ पाणिपादवती । अत इत्येव । चित्रकललाटिकावती । सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम् ॥

**वातातीसाराभ्यां कुक् च । ५ । २ । १२९ ॥**

चादिनिः । वातकी । अतीसारकी ॥ रोगे चायमिष्यते ॥ * ॥ नेह । वातवती गुहा ॥ पिशाचाच्च ॥ * ॥ पिशाचकी वैश्रवणः ॥

**वयसि पूरणात् । ५ । २ । १३० ॥**

पूरणप्रत्ययान्तान्मत्वर्थ इनिः स्याद्वयसि द्योत्ये ॥ मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः । ठन्बाधनार्थमिदम् । वयसि किम् । पञ्चमवान् ग्रामः ॥

**सुखादिभ्यश्च । ५ । २ । १३१ ॥**

इनिर्मत्वर्थे । सुखी । दुःखी । माला क्षेपे । माली ॥

**धर्मशीलवर्णान्ताच्च । ५ । २ । १३२ ॥**

धर्माद्यन्तादिनिर्मत्वर्थे । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

**हस्ताज्जातौ । ५ । २ । १३३ ॥**

हस्ती । जातौ किम् । हस्तवान्पुरुषः ॥

**वर्णाद्ब्रह्मचारिणि । ५ । २ । १३४ ॥**

वर्णी ॥

**पुष्करादिभ्यो देशे । ५ । २ । १३५ ॥**

पुष्करिणी । पद्मिनी । देशे किम् । पुष्करवान् हस्ती ॥ बाहूरूपूर्वपदाद्बलात् ॥ * ॥ बाहुबली । ऊरुबली ॥ सर्वादेश्च ॥ * ॥ सर्वबीजी ॥ अर्थाच्चासंनिहिते ॥ * ॥ अर्थी । सन्निहिते तु अर्थवान् ॥ तदन्ताच्च ॥ * ॥ धान्यार्थी । हिरण्यार्थी ॥

**बलादिभ्यो मतुबन्यतरस्याम् । ५ । २ । १३६ ॥**

बलवान् । बली । उत्साहवान् । उत्साही । पक्षे प्रकृतेनेनिना बाधान्न ठन् ॥

**संज्ञायां मन्माभ्याम् । ५ । २ । १३७ ॥**

मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे । प्रथिमिनी । दामिनी । म । होमिनी । सोमिनी । संज्ञायां किम् । सोमवान् ॥

**कंशंभ्यां बभयुस्तितुतयसः । ५ । २ । १३८ ॥**

कशमिति माता । कमित्युदकसुखयोः । शमिति सुखे । आभ्यां सप्त प्रत्ययाः स्युः ॥ युसुयसोः सकारः पदत्वार्थः । कंवः । कम्भः । कयुः । कन्तिः । कन्तुः । कन्तः । कंयः । शंवः । शम्भः । शंयुः । शन्तिः । शन्तुः । शन्तः । शंयः । अनुस्वारस्य वैकल्पिकः परसवर्णः । वकारयकारपरस्यानुनासिको वयो ॥

**तुन्दिवलिवटेर्भः । ५ । २ । १३९ ॥**

वृद्धा नाभिस्तुन्दिः । मूर्द्धन्योपधोयमिति माधवः । तुण्डिभः । वलिभः । वटिभः । पामादित्वाद्वलिनोऽपि ॥

**अहंशुभमोर्युस् । ५ । २ । १४० ॥**

अहमिति मान्तमव्ययमहङ्कारे । शुभमिति शुभे । अहंयुः अहङ्कारवान् । शुभंयु शुभान्वितः । इति मत्वर्थीयाः ॥

**इति श्रीव्याकरणदीपिकायां वृत्तौ पञ्चमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥**



# अथ पञ्चमाध्यायस्य तृतीयः पादः ।

## प्राग्दिशो विभक्तिः । ५ । ३ । १ ॥

दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥ अथ स्वार्थिकाः प्रत्ययाः । समर्थानामिति प्रथमादिति च निवृत्तम् । वेति त्वनुवर्तत एव ॥

## किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः । ५ । ३ । २ ॥

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशो ऽधिक्रियते ॥ बहुग्रहणे संख्याग्रहणं कर्तव्यम् ॥ * ॥ इह मा भूत् बहोः सूपात् । बहो सूपे इति ॥

## इदम इश् । ५ । ३ । ३ ॥

प्राग्दिशीये परे ॥

## एतेतौ रथोः । ५ । ३ । ४ ॥

इदम्शब्दस्य एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे ॥ इशोऽपवादः ॥

## एतदो ऽन् । ५ । ३ । ५

योगविभागः कर्तव्यः । एतदः । एतेतौ स्तो रथोः । थमु प्रत्ययः एतद उपसंख्येयः । ततोऽन् । एतद इत्येव । अनेकाल्त्वात्सर्वादेशः । नलोपः प्रातिपदिकान्तस्य ॥

## सर्वस्य सोऽन्यतरस्यां दि । ५ । ३ । ६ ॥

प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् ॥

## पञ्चम्यास्तसिल् । ५ । ३ । ७ ॥

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् स्याद्वा ॥ कुतिहोरिति किम. कुः । कुतः । कस्मात् । यतः । ततः । इतः । अतः । अमुतः । बहुतः । द्व्यादेस्तु द्वाभ्याम् ॥

## तसेश्च । ५ । ३ । ८ ॥

किंसर्वनामबहुभ्यः परस्य प्रतियोगे पञ्चम्यास्तसे. अपादाने चाहीयरुहोरिति वक्ष्यमाणस्य तसेस्तसिलादेशः स्यात् । कुत आगत. ॥ तत. । मतः । स्वरार्थं विभक्त्यर्थे च वचनम् ॥

## पर्यभिभ्यां च । ५ । ३ । ९ ॥

आभ्यां तसिल् स्यात् ॥ सर्वोभयार्थाभ्यामेव । * ॥ परितः सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । ॥ ...षः ।

## सप्तम्यास्त्रल् । ५ । ३ । १० ॥

कुत्र । यत्र । तत्र । अत्र । बहुत्र ॥

## इदमो हः । ५ । ३ । ११ ॥

त्रलोऽपवादः । इशादेश । इह ।

## किमोऽत् । ५ । ३ । १२ ॥

वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल् । क्वातीति क्वादेशः । क्व । कुत्र ॥

## वा ह च छन्दसि । ५ । ३ । १३ ॥

कुह स्थः । कुह जग्मथुः ॥

## इतराभ्योऽपि दृश्यन्ते । ५ । ३ । १४ ॥

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते ॥

दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् ॥

**सर्वैकान्यकिंयत्तदः काले दा । ५ । ३ । १५ ॥**

सप्तम्यनुवर्तते नत्वितराभ्य इति । सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन्काले सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् । सर्वत्र देशे ।

**इदमो र्हिल् । ५ । ३ । १६ ॥**

सप्तम्यन्तात्काले इत्येव । दस्यापवादः । अस्मिन्काले एतर्हि । काले किम् । इह देशे ॥

**अधुना । ५ । ३ । १७ ॥**

इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे अधुना प्रत्ययः स्यात् । इश् । यस्येतिलोपः । अधुना ॥

**दानींच । ५ । ३ । १८ ॥**

इदानीम् ॥

**तदो दा च । ५ । ३ । १९ ॥**

तदानीम् । तदो दा वचनमनर्थकम् विहितत्वात् ॥

**तयोर्दार्हिलौ च छन्दसि । ५ । ३ । २० ॥**

इदन्तदोर्यथासङ्ख्यं स्तः । इदा हि व उपस्तुतिम् । तर्हि ॥

**अनद्यतने र्हिलन्यतरस्याम् । ५ । ३ । २१ ॥**

कर्हि । कदा । यर्हि । यदा । तर्हि । तदा । एतस्मिन्काले एतर्हि ॥

**सद्य· परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्यु रन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्यु रुत्तरेद्युः । ५ । ३ । २२ ॥**

एते निपात्यन्ते । समानस्य सभावो द्यस् चाहनि । समानेऽहनि सद्यः । पूर्वपूर्वतरयोः परः उदारौच संवत्सरे । पूर्वस्मिन्वत्सरे परुत् । पूर्वतरे वत्सरे परारि । इदम इश् । समसण् प्रत्ययश्च सवत्सरे । अस्मिन्वत्सरे ऐषमः । परस्मादेद्यव्यहनि । परस्मिन्नहनि परेद्यवि । इदमोऽश् द्यश्च । अस्मिन्नहनि अद्य । पूर्वादिभ्योऽष्टभ्योऽह्न्येद्युस् । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । उभयोरन्होरुभयेद्युः । द्युश्चोभयाद्वक्तव्यः । उभयद्युः ॥

**प्रकारवचने थाल् । ५ । ३ । २३ ॥**

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे ॥ तेन प्रकारेण तथा । यथा ॥

**इदमस्थमुः । ५ । ३ । २४ ॥**

थलोऽपवादः ॥ एतदोऽपि वाच्यः ॥ * ॥ अनेन एतेन वा प्रकारेण इत्थम् ॥

**किमश्च । ५ । ३ । २५ ॥**

केन प्रकारेण कथम् ॥

**था हेतौ च छन्दसि । ५ । ३ । २६ ॥**

किमस्था स्याद्धेतौ प्रकारे च । कथा ग्रामं न पृच्छसि । कथा दाशेम । प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ॥

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः । ५ । ३ । २७ ॥**

सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः प्रत्ययः स्यात् ॥ अस्ताति चेति पूर्वस्य पुरादेशः। पुरस्ताद्वसति। पुरस्तादागतः। पुरस्ताद्रमणीयम्। दिशिरूढेभ्यः किम्। पूर्वस्मिन्गुरौ वसति ॥

**दक्षिणोत्तराभ्यामतसुच्। ५। ३। २८॥**

अस्तातेरपवादः। दक्षिणतः। उत्तरतः॥

**विभाषा परावराभ्याम्। ५। ३। २९॥**

परतः। अवरतः। परस्तात्। अवरस्तात्॥

**अञ्चेर्लुक्। ५। ३। ३०॥**

अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् ॥ लुक्तद्धितलुकि। प्राच्यां प्राच्याः प्राची वा दिक् प्राक् उदक्। एवं देशे काले च ॥

**उपर्युपरिष्टात्। ५। ३। ३१॥**

अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशो रिल्रिष्टातिलौ च प्रत्ययौ ॥ उपरि उपरिष्टाद्वा वसति। आगतो रमणीयं वा।

**पश्चात्। ५। ३। ३२॥**

अपरस्य पश्चभावः आतिश्च प्रत्ययोऽस्तातेर्विषये ॥ दिक्पूर्वपदस्य च। दक्षिणपश्चात्। दक्षिणस्या अपरस्याश्चान्तरालं दिक् तस्यामित्यादिरर्थः ॥ अर्द्धोत्तरपदस्य चापरस्य दिग्वाचकैः समासे पश्चभावो वक्तव्यः ॥ * ॥ दक्षिणपश्चार्द्धः ॥ विनापि पूर्वपदं अपरस्यार्द्धे पश्चभावो वक्तव्यः ॥ * ॥ पश्चार्द्धः ॥

**पश्च पश्चा च छन्दसि। ५। ३। ३३॥**

अपरस्यास्तात्यर्थे निपातौ। अपरस्य पश्चभावः अकाराकारौ च प्रत्ययौ। पश्च हि सः। नो ते पश्चा ॥

**उत्तराधरदक्षिणादातिः । ५ । ३ । ३४ ॥**

उत्तरात् । अधरात् । दक्षिणात् ॥

**एनबन्यतरस्यामदूरेऽपञ्चम्याः । ५ । ३ । ३५ ॥**

उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये पञ्चम्यन्तं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् ॥

**दक्षिणादाच् । ५ । ३ । ३६ ॥**

अस्तातेर्विषये ॥ दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः । चकारोऽञ्चूत्तरपदाजाहियुक्ते इत्यत्र विशेषणार्थः ॥

**आहि च दूरे । ५ । ३ । ३७ ॥**

दक्षिणात् दूरे आहिः स्यात् चादाच् ॥ दक्षिणाहि । दक्षिणा । अपञ्चम्या इत्येव । दक्षिणादागतः ॥

**उत्तराच्च । ५ । ३ । ३८ ॥**

उत्तराहि । उत्तरा । अपञ्चम्या इत्येव । उत्तरादागतः ॥

**पूर्वाधरावराणामसि पुरधवश्चैषाम् । ५ । ३ । ३९ ॥**

अपञ्चम्या इति निवृत्तम् । एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात् पुर् अध् अव् इत्यादेशाः स्युः ॥

**अस्ताति च । ५ । ३ । ४० ॥**

अस्तातौ परे पूर्वादीनां पुरादयः स्युः ॥ पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः पुरस्तात् । अधः । अधस्तात् । अवः । अवस्तात् ॥

**विभाषावरस्य । ५ । ३ । ४१ ॥**

अवरस्यास्तातौ परेऽव् स्याद्वा । अवस्तात् । अवरस्तात् । अत्र देशे काले च । अस्ताति चेति ज्ञापकादसिरस्ताति न बाधते ।

**संख्याया विधार्थे धा । ५ । ३ । ४२ ॥**

क्रियाप्रकारे वर्तमानात्सङ्ख्याशब्दात्स्वार्थे धा स्यात् ॥ चतुर्धा । पञ्चधा ॥

**अधिकरणविचाले च । ५ । ३ । ४३ ॥**

द्रव्यस्य सङ्ख्यान्तरापादने सङ्ख्याया धा स्यात् ॥ एकं राशिं पञ्चधा कुरु ।

**एकाद्धो ध्यमुञन्यतरस्याम् । ५ । ३ । ४४ ॥**

ऐकध्यम । एकधा ॥

**द्वित्र्योश्च धमुञ् । ५ । ३ । ४५ ॥**

आभ्यां धा इत्यस्य धमुञ् वा स्यात् ॥ द्वैधम् । द्विधा । त्रैधम् । त्रिधा । धमुञन्तात्स्वार्थे डदर्शनम् । पथि द्वैधानि ॥

**एधाच्च । ५ । ३ । ४६ ॥**

द्वेधा । त्रेधा ॥

**याप्ये पाशप् । ५ । ३ । ४७ ॥**

कुत्सितो भिषक् भिषक्पाशः ॥

**पूरणाद्भागे तीयादन् । ५ । ३ । ४८ ॥**

द्वितीयो भागः द्वितीयः । दृष्ट मामेत्यत्र तीयादीकगुक्तो न विस्मर्तव्यः ॥

**प्रागेकादशभ्यो छन्दसि । ५ । ३ । ४९ ॥**

'पूरणप्रत्ययान्ताद्भागे अन् । चतुर्थः । पञ्चमः ॥

**षष्ठाष्टमाभ्यां ञ च । ५ । ३ । ५० ।**

चादन् । षष्ठो भागः षष्ठः । षाष्ठः । अष्टमः । आष्टमः ॥

**मानपश्वङ्गयोः कन्लुकौ च । ५ । ३ । ५१ ॥**

षष्ठाष्टमाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये ॥ षष्ठको भागः मानं चेत् । मानं व्रीहिपरिमितं सुवर्णमिति हरदत्तः । अष्टमो भागः पश्वङ्गं चेत् । ञस्य अनो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठः । षाष्ठ । अष्टमः । आष्टमः । महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञानौ नित्याविति ज्ञापयति ॥

**एकादाकिनिच्चासहाये । ५ । ३ । ५२ ॥**

चात्कन्लुकौ । एकः । एकाकी । एककः ॥

**भूतपूर्वे चरट् । ५ । ३ । ५३ ॥**

आढ्यो भूतपूर्वः आढ्यचरः ॥

**षष्ठ्या रूप्य च । ५ । ३ । ५४ ॥**

षष्ठ्यन्ताद् भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । कृष्णचरः । तसिलादिषु रूप्यस्यापरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्वा गौः शुभ्रारूप्यः ॥

**अतिशायने तमबिष्ठनौ । ५ । ३ । ५५ ॥**

अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः ॥ अयमेषामतिशयेनाढ्यः आढ्यतमः । लघुतमो लघिष्ठः ॥

**तिङश्च । ५ । ३ । ५६ ।**

तिङन्तादतिशयेऽर्थे तमप्स्यात् ॥ तदन्तात्किमेत्तिङेति वक्ष्य-

माण आमुः । पचतितमाम् । इष्ठन् तु नोक्तः । अजादी गुणवचना-
देवेति नियमात्

**द्विवचनविभज्योपपदे तरबीयसुनौ । ५ । ३ । ५७ ॥**

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः ।
पूर्वयोरपवादः । अयमनयोरतिशयेन लघुः लघुतरः । लघीयान् ।
पचतितराम् । उदीच्याः प्राच्येभ्यः पटुतराः । पटीयांसः ॥

**अजादी गुणवचनादेव । ५ । ३ । ५८ ॥**

इष्ठन्नीयसुनौ गुणवचनादेव स्तः । नेह । पाचकतरः ।
पाचकतमः ॥

**तुश्छन्दसि । ५ । ३ । ५९ ॥**

तृन्तृजन्तादिष्ठन्नीयसुनौ स्तः । तुरिष्ठेमेयस्स्विति तृशब्दस्य
लोपः । अतिशयेन कर्ता करिष्ठः । दोहीयसी धेनुः ।

**प्रशस्यस्य श्रः । ५ । ३ । ६० ।**

अस्य श्रादेशः स्यादजाद्योः । प्रकृत्यैकाजिति प्रकृतिभावः ।
श्रेष्ठः । श्रेयान् ॥

**ज्य च । ५ । ३ । ६१ ॥**

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः परतः । ज्येष्ठः । ज्यादा-
दीयसः । आदेः परस्य । ज्यायान् ॥

**वृद्धस्य च । ५ । ३ । ६१ ॥**

ज्यादेशः स्यादजाद्योः । ज्येष्ठः । ज्यायान् ॥

**अन्तिकबाढयोर्नेदसाधौ । ५ । ३ । ६३ ॥**

अजाद्योः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधीयान् ॥

**युवाल्पयोः कनन्यतरस्याम् । ६४ । ३ । ६४ ॥**

एतयोः कनादेशो वा स्यात् इष्ठेयसोः । कनिष्ठः । कनीयान् । पक्षे यविष्ठः । अल्पिष्ठ इत्यादि ॥

**विन्मतोर्लुक् । ५ । ३ । ६५ ॥**

विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ।

**प्रशंसायां रूपप् । ५ । ३ । ६६ ॥**

सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तं पचति पचतिरूपम् ।

**ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । ५ । ३ । ६७ ॥**

ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम् । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् । पचतिदेश्यम् । पचतिदेशीयम् ।

**विभाषा सुपो बहुच्पुरस्तात्तु । ५ । ३ । ६८ ॥**

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद् बहुच्वा स्यात् स च प्रागेव न तु परतः । ईषदूनः पटुः बहुपटु । पटुकल्पः । सुपः किम् । यजतिकल्पम् ॥

**प्रकारवचने जातीयर् । ५ । ३ । ६९ ॥**

प्रकारवति चायं स्यात् तु प्रकारमात्रे । पटुप्रकारः पटुजातीयः ।

**प्रागिवात्कः । ५ । ३ । ७० ॥**

इवे प्रतिकृताविव्यतः प्राक्काधिकारः ।

**अव्ययसर्वनाम्नामकच् प्राक् टेः । ५ । ३ । ७१ ॥**

तिङश्चेत्यनुवर्तते ॥

जातिविशेषाणामप्यव्याप्यवृत्तित्वे ऽविरोधात्(१)। परस्परव्यभिचारिजात्योः सामानाधिकरण्यस्य बाधकविरहे सत्तर्कप्रमाणसिद्धस्यानभ्युपगममात्रेण निराकरणायोगात् अत एव ककारादिषु सर्वेषु तारादाकारानुगमनमतिरूपपद्यते। एकस्यैव तारत्वादेः ककारादिवृत्तित्वात्। उपपद्यते च मार्दपाषाणसौवर्णघटादावनुगताकारानुगतमतिरिति स्वतन्त्रः पन्थाः। अथ नीलाद्येकमात्रावयवावच्छेदेनेन्द्रियसन्निकर्षे चित्रं चित्रत्वं वा किं न गृह्यते इति चेन्न विजातीयनानारूपवत्त्वग्रहस्य तत्र हेतुत्वात्। यादृशि यादृशि चित्रे येन येन रूपेणासमवायिकारणत्वं तादृशचित्रग्रहे तत्त्वग्रहे वा तेन रूपेण चित्रत्वग्रहे वाश्रयग्रहः तदवान्तरजातिग्रहो वा हेतुरिति युक्तः पन्थाः त्रसरेणुश्च(२) यदि तत्तद्दिगवच्छेदेन नीलपीतादिरूपवत्तयानुभूयते भवति च तदपाकजचित्ररूपवानपि नो चेत् तदा तच्छून्य एव इति संक्षेपः। ये तु चित्ररूपादिमति नीलादिकं न स्वीकुर्वते स्वीकुर्वते च द्व्यणुकादिकं तेषामवयवजातीयनानारूपवत्त्वग्रह एव चित्रस्य तद्वत्त्वस्य वा ग्रहे हेतुः। अत एव त्रसरेणोश्चित्रं रूपं तत्र तद्वत्त्वं वा न गृह्यत इत्याचार्याः। वस्तुतस्तु त्रसरेणोश्चित्ररूपाग्रहे तदारब्धचतुरणुकादिषु तद्ग्रहो न स्यादिति नैवं पन्थाः। किन्तु नीलावयवावच्छेदेनेन्द्रियसन्निकर्षावयवनीलादिगतनीलत्वादग्रहप्रतिबन्धकदोषाभावाश्च तत्र हेतव इति त्रसरेणोरपि चित्ररूपग्रहो नानुपपन्न इत्यपर

(१) बाधकाभावात्—पा० ३ पु०।

(२) त्रुटिश्च—पा० २ पु०।

इति क्रमकृतविचारेण ॥

(३८ । २) ननु नीलपीताद्यवयवैरारब्धे स्वस्वावच्छेदेन नीलपीतादिनानोत्पत्तिवत् सर्वैर्नीलैरवयवैरारब्धे ऽवयविन्यपि स्वस्वावच्छेदेन नानानीलोत्पत्तिः स्यादित्यत आह । सर्वैरिति ॥

(३८ । ६) असमवायीति । स्वस्वावच्छेदेन नीलपीतादिना नोत्पत्तिवत्सर्वैर्नीलैरारब्धे कारणत्वस्यात्माश्रयादिदोषेण कारणतानवच्छेदकत्वादिति भावः । ननु भावकार्यत्वस्यासमवायिकारणजन्यत्वव्याप्यत्वादेकस्यासमवायिकारणजन्यत्वं सेत्स्यतीत्यत आह । भावेति । अप्रयोजकतया तथा व्याप्तिरेव नास्तीति भावः । एवं द्वित्वादेरपि नासमवायिकारणकत्वम् । न च द्वयोरेव द्वित्वमुत्पद्यते न त्रिष्वित्यादिनियमरक्षार्थं तत्तदेकत्वे हेतुत्वमुपेयमिति युक्तं तावतापि समवायिन एव विशेषतो हेतुताया युक्तत्वात् तत्तत्प्रागभावविरहादन्यत्र तदनुत्पत्तेरिति केचित् । द्वित्वादिकमप्याश्रयोत्पत्तेरनन्तरमेवोत्पद्यते तन्नाशादेव नश्यति नित्यद्रव्यमात्रवृत्तिद्वित्वादिकं तु नित्यमेव । ननु सामानाधिकरण्यवदेकत्वबुद्धिरूपापेक्षाबुद्धिरुत्पद्यते तन्नाशान्नश्यति अपेक्षाबुद्धिश्च तुरीयक्षण एव नश्यति नातो द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यसाक्षात्कारानुपपत्तिः । अहं सुखीत्यादिवद्द्वे द्रव्ये इत्यादिबुद्धेरपि विशेषणांशे ऽलौकिकत्वमेवेति न युक्तं मानाभावात् अपेक्षाबुद्धिशून्येन तदग्रहणस्यापेक्षाबुद्धेस्तद्व्यञ्जकत्वेनाप्युपपत्तेः । तत्तत्काले तत्तत्पुरुषापेक्षाबुद्धिजन्यानन्तकोटिद्वित्वादिकल्पनागौरवप्रसङ्गात् । एकपुरुषीयापेक्षाबुद्धिजन्यद्वित्वादेरपेक्षाबुद्धिशून्यपुरुषान्तरेणाग्रहणात् तत्तत्पुरुषी-

थापेक्षाबुद्धिजन्य द्वित्वादि तेन गृह्यत इति स्वभावकल्पने गौरवाच्च अत एव द्वे द्रव्ये इत्यादिविशिष्टवैशिष्ट्यबोधोपि सूपपादः । वस्तुतः पुनरेकमेकमित्यनुगतमतेरेकत्वं सकलैकद्रव्ये कमेव सदातनं कल्प्यते लाघवाद्बाधकाभावाच्च । इत्थं च द्वित्वादयोपि व्याख्याता इति नव्याः । नाश एवेति एवकारेण समवाय्यसमवायिकारणनाशस्य हेतुत्वं व्यवच्छिद्यते(१) । नित्येति । तच्च परमाणुसमवेतं त्रुटिसमवेतं वेत्यन्यदेतत् । विद्यमानविभक्तावयवकघटादिनाशे चेत्यपि द्रष्टव्यम् । समवायिनाशस्थले च द्वितीयक्षणे ऽसमवायिकारणीभूतसंयोगनाशस्तदनन्तरं तृतीयक्षण एव द्रव्यनाशः कार्यकारणभावान्तरकल्पनापेक्षया क्षणविलम्बकल्पनायाः समुचितत्वादिति भावः । न चासमवायिकारणत्वस्यैकस्याभावात् कथं सामान्यतो हेतुहेतुमद्भाव इति वाच्यम् जन्यद्रव्यारम्भकतावच्छेदकसंयोगगतजातिविशेषस्यैव तत्त्वात् कर्मादिजन्यतावच्छेदकं तु तद्व्याप्यं जन्यतावच्छेदकाननुगमस्यादोषत्वात् । वस्तुतो द्रव्यासमवायिकारणसंयोगः कर्मज एव न संयोगजः । किमत्र विनिगमकमिति चेत् परमाणोस्त्रसरेणोर्वा समवेतद्रव्यं प्रति असमवायिकारणस्य संयोगस्य संयोगजत्वासम्भवादित्यस्मत् पितृचरणाः । अत्रेदं प्रतिभाति । एकद्रव्यासमवायिकारणनाशेपि द्रव्यान्तरानाशात् तत्तद्द्रव्यानाशं प्रति तत्तद्व्यक्तित्वेनैवासमवायिकारणनाशस्यापि हेतुत्वं वाच्यम् । तथा च समवायिकारणनाशेपि द्रव्यान्तरानाशात् तत्तद्द्रव्यनाशं प्रति तत्तद्व्यक्तित्वेनैवासमवायिकारणनाशस्यापि

(१) समवायिकारणनाशस्य प्रयोजकत्वं व्यवच्छिद्यते–पा० २ पु० ।

हेतुता धाच्या तथा च समवायिकारणनाशस्यापि तत्र तत्र तेन तेन रूपेण हेतुत्वं कल्पनीयम् । समवायि([1])कारणस्यासमवायिकारणस्य च नाशयोरेकशक्तिमत्त्वेन कारणत्वम् एकावयवनाशोत्पत्तिसमये यत्रावयवान्तरे द्रव्यान्तर([2])संयोगविभागोत्पत्तिस्तत्र तदधीनानामवयविन्यनन्तसंयोगादीनां कल्पनमपेक्ष्य एकस्याः शक्तेः कल्पनाया एव समुचितत्वात् ॥

(४१ । १) स्पर्शवत्त्वमेवेति । एवकारेण रूपवत्त्वव्यवच्छेदः निःस्पर्शप्रभादेः स्पार्शनविरहात् स्पर्शस्तत्र प्रयोजको न तु रूपमिति भावः । प्रयोजकजनकलाघवेन स्पर्शवत्त्वेनैव हेतुताया युक्तत्वात् । प्रयोजकं जनकतावच्छेदकम् विषयहेतुताया अनेनैव रूपेणावच्छेदादित्यपि केचित् । अत एवेति । अन्यथा रूपस्य तत्र प्रयोजकत्वे विशेष्यस्यायोग्यत्वात् तदनुपपत्तिरेव स्यादिति भावः । अस्पार्शनत्वेति । वस्तुतः स स्पार्शन एवेति तुशब्देन सूचितम् । प्रकृष्टतमं त्रुटिपरिमाणावधिकप्रकर्षात्मकजातिविशेषवत् । गौरवादित्यादेः रूपं न तत्र प्रवेशनीयमित्यनेनान्वय । प्रामाणिकं च नेदमित्याह । मानाभावादिति । अनन्यथासिद्धान्वयाद्यनुविधानमेव मानमित्यत आह । त्वगिति । तत्र स्पार्शनप्रयोजके । ननु वायोरध्यक्षत्वे तद्गतसंख्यादयोपि प्रत्यक्षाः स्यु योग्यमात्रसमवायेनैव ([3]) तेषां योग्यत्वादित्यत आह । फूत्कारेति । स्फुटतरेति तद्विषयकप्रत्यक्षत्वेनानुभूयमानप्रत्यक्षविषया इत्यर्थः । अन्य-

(१) हेतुत्वं केन बारणीयम् । अस्तु वा समवायि-पा० २ पु० ।

(२) अवयवान्तर-पा० २ पु० ।

(३) संयोगादिनैव-पा० २ पु० ।

र्थापि वायौ गृह्यमाणे तत्संख्यादिप्रत्यक्षं भवत्येव परं तु न दोषात् स्फुटमिति भावः । तथा प्रयोजकम् । अन्यथा वाय्वादेर-चाक्षुषता न स्यादिति भावः । नेति । निःस्पर्शस्य पिशाचादे-रचाक्षुषताया रूपविरहेणैवोपपत्तेरिति भावः । तादृशयोग्य-धर्मेसुखदुःखादिमत आत्मनो न तादृशं प्रत्यक्षम् । अत उक्तम् अनात्मसमवेतेति । इदं तु नित्यस्य स्वरूपयोग्यस्य फलावश्यंभाव इत्यभ्युपेत्य अन्यथा चाक्षुषस्पार्शनरूपविशेष-कारणरूपस्पर्शविरहादेव तस्य तादृशप्रत्यक्षविरहोपपत्तेः सर्वविशेषणवैयर्थ्यापत्तेरित्यवधेयम् । शब्दवदीश्वरवारणाय शब्देतरेत्युक्तम् । योग्यरसवतो रसनगतपित्तद्रव्यत्रसरेणोर्वा-रणाय रसेतरत्वम् वायूपनीतसुरभिभागत्रसरेणोर्वारणाय गन्धे-तरेति । पृथिवीत्वादिमत्तयोक्तातिप्रसङ्गतादवस्थ्यमतो जातीत-रेति । समवायेन तद्वत्त्वलाभाय समवायित्वेति । नातः कालिकविशेषणतया घटादिरूपवदीश्वरे स एवातिप्रसङ्गः । ननु शब्देतरेति व्यर्थम् ईश्वरात्मसमवेतस्यानात्मसमवेतेत्यनेनैव वार-णादित्यत आह । सुखादीनि । नेश्वरेति । तत्र सुखदुःखा-नुत्पत्तेरिति भावः । तदीयस्येति । ईश्वरीयेत्यर्थः । विषयि धर्मासमानाधिकरणेति विवक्षणीयसाधारणायोग्यपदव्यावर्त-नीयमाह । पिशाचेति । पिशाचादेरवारणे तदवयवस्य प्रत्य-क्षतापत्तेरिति भावः । ननु रूपस्पर्शघटितविशेषसामग्रीविर-हादेव पिशाचाद्यवयवादीनां प्रत्यक्षता न भविष्यतीत्यत आह । आदीति । पिशाचारम्भकचतुरणुकतदारम्भकसंयोगादिकं तदर्थः । तदवारणे तदनस्त्रसरेणोरध्यक्षतापत्तेर्नित्यस्येत्यादि-

व्याप्तेरिति भावः । लाघवमभिप्रेत्याह । विषयीति । न च लाघवेन ज्ञानासमानाधिकरणेत्येव युक्तं ज्ञानत्वस्य जातित्वादिति वाच्यम् । इच्छाकृत्यसमानाधिकरणत्वादिना सह विनिगमकाभावात् कार्यकारणभावत्रयापत्तेः । यद्यपि विषयिधर्मासमानाधिकरणत्वस्यापि तैः प्रत्येकं विनिगमकाभावाल्लाघवात्तान्येव वक्तुमुचितानि तथापि तादृशसामानाधिकरण्यानां समनियमात् तदवच्छिन्नप्रतियोगिताक एव भेदः प्रतियोग्यविशेषितो निवेशितः प्रतियोगी च तत्र परिचायक इति लाघवमकिञ्चित्करमित्यवधेयम् । वस्तुतोऽस्मदादिज्ञत्वादेः समयविशेषावच्छेदेन ज्ञानासमानाधिकरणत्वाद्विषयीत्याद्युक्तम् । तच्च न तत्र तेषां सर्वदा संस्कारसमानाधिकरणत्वादिति युक्तमुत्पश्यामः । अत्र रसनगतपित्तद्रव्यादिव्यतिरेकवारणाय रूपेतरत्वाद्युपादानं न युज्यते तैरपि कदाचित् पाकजरूपस्पर्शवद्भिः रूपस्पर्शवद्द्रव्यारम्भेन तेषामपि कदाचित् प्रत्यक्षत्वादिति वदन्ति । अस्मदादीति । अस्मदादेः परिमाणशून्यत्वं नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्त्वमितिमते त्वित्यर्थः । वायूष्मनीलसुरभिभागादेश्च परिमाणाभावादिति भावः । टीकाकृतैव केवलमस्मदात्म(१)परिमाणप्रत्यक्षाभ्युपगमात् नयनसंसृष्टपित्तद्रव्यस्य परिमाणवत्तायाः केनाप्यनुपलम्भात् । रूपवत्त्वस्य च परिमाणव्याप्यत्वे मानाभावात् मत इत्युक्तम् । न च नयनगतपित्तद्रव्यं गृह्यत एव न परन्तु तत्र रूपमेवेति वाच्यम् । द्रव्यचाक्षुषप्रत्यक्षं प्रति रूपस्य हेतु-

(१) केवलमस्मदादरव्यात्म-पा० २ पु० ।

त्वात् नयनगतपित्तद्रव्यीयचतुष्टैः रूपवत्त्वेऽचाक्षुषत्वानुपपत्तेः युज्यते च तावदस्मदादेः परिमाणशून्यत्वं केनापि तदनुपलम्भात् । न तु नयनगतपित्तद्रव्यपरिमाणवत्त्वं केनाप्यनुपलम्भादत आह । यद्वेति । तथा च तस्य परिमाणशून्यत्ववत्ता-ह्यप्रत्यक्षशून्यत्वान्न व्यभिचार इति भावः । नन्वेवं पीतः शङ्खः इत्यारोपो न स्यात् नयनगतपित्तद्रव्येऽनुभूयमानस्यैव पीतरूपस्य शङ्खादावारोपसम्भवात् पीतान्तरस्य तदानीमसन्निकर्षादित्यत आह । स्मर्यमाणेति । इदन्तु चिन्त्यते समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षत्ववदसमवेतेन्द्रियजन्यप्रत्यक्षत्वादिवत् चक्षुरितरेन्द्रियजन्यप्रत्यक्षत्वादिवच्च समवेतेन्द्रियजन्य-द्रव्यप्रत्यक्षत्वमपि न कार्यतावच्छेदकं मानाभावात् । इत्थं च द्रव्येतरप्रत्यक्षत्वमिव द्रव्यप्रत्यक्षत्वमपि न तथेति । शब्देति । अत्र शब्देतरत्वेन ईश्वरस्य रसेतरत्वेन रसनगतपित्तद्रव्यस्य गन्धेतरत्वेन वायूपनीतसुरभिभागस्य जातीतरत्वेन तेषां योग्यत्वेनेश्वरादीनां व्युदासः । अस्मदादेः परिमाणवत्त्वे तु परिमाणवत्त्वमेव तथेति मन्तव्यम् । अथ रसगन्धेतरत्वं न युज्यते रसगतपित्तद्रव्यवायूपनीतसुरभिभागयोरध्यक्षत्वादत आह । रसनेति । तथा च न चक्षुषा न वा त्वचा तद्ग्रह इति भावः । रसनेनैव तद्ग्रहो भविष्यतीत्यत आह । रसनेति ।

(४७ । ५) एतेनेति । सोऽपि न रूपस्पर्शवान् प्राणं च न द्रव्यग्राहकमित्यप्रत्यक्ष एवेति भावः ॥

(४८ । २) तस्य घटत्वत्वस्य घटेतरासमवेतत्वे सति घट-निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपस्यातीन्द्रियघटेत-

रादिघटितत्वेनातीन्द्रियत्वात् योग्यधर्ममात्रावच्छिन्नयोग्य मात्रवृत्तिप्रतियोगिताकत्वेनैवाभावस्य योग्यत्वादिति भावः एवं न जातिश्चेनेति । तस्यापि नित्यानेकसमवेतत्वरूपस्या तीन्द्रियत्वादिति भावः । आदिपदेन समवेतत्वादिपरिग्रहः । समवायत्वस्य नित्यसम्बन्धत्वरूपस्यायोग्यत्वान्नानासमवायवादिनो ग्रन्थकारस्य नये त्वखण्डोपाधिरूपस्यायोग्यवृत्तित्वादिति भावः । सर्वथैवेति । पटत्वादिसामान्याभावः समवेतसामान्याभावस्य न क्वापि प्रत्यक्ष इति भावः । अत्र च घटत्वादिनिरूपितसमवायेन घटाद्यवच्छिन्नप्रतियोगिताको घटत्वादेरभावो गृहीतुं शक्यत एवेति चिन्त्यम् । वस्तुतो लाघवादभावचाक्षुषादेरभावत्वव्याप्येन चाक्षुषादिमात्रे वा भावाभावसाधारणेन शक्तिविशेषेण विषयहेतुतावच्छेदान्न तेषां योग्यत्वं तथा सति द्रव्यचाक्षुषं प्रति रूपादेः कारणत्वं विलीयेतेति चेद्विलीयताम् किं तत । सर्वमिदं सिद्धान्तविरुद्धं न्यायविदामिति चेत् । न न वयं नैयायिकनयमनुरुन्धानाः पदार्थतत्त्वं विवेचयामो यदमीषामुक्तमेव युक्त्या निरूपयितुमुत्सहामहे(१) तथा सति निःकर्षनिरासप्रसङ्गादिति सूक्ष्ममीक्षामहे ।

(४८ । ४) सत्ता चेति । सद्व्यवहारप्रयोजक इत्यर्थः जातित्वावच्छेदेन द्रव्यगुणकर्मसु समवेतानां चित्वेनाभाव इति भावः । ननु सद्व्यवहारवशादेव सा सेत्स्यतीत्यत आह । जात्यादेरपीति । तत्र च जातेरभावादिति भावः । ननु

(१) यदमीषामुक्तमेव युक्ततया निरूपयितुमुत्सहामहे-पा० २ पु० ।

त्युक्तत्वात् । न चानुभवादृते परामर्शः सम्भवति । सुषुप्तावहङ्कारानुभवे जाग्रतीवाहमित्यनुभूयेताविशेषात् । चिद्रूपात्मात्वावृतत्वादभिव्यञ्जकान्तःकरणाभावाच्च न तदा विशिष्य प्रकाशते । तस्मादहमिति ज्ञानविषयो न स्वद्रष्टा, तस्मिन्प्रकाशमानेप्यप्रकाशमानत्वात्, घटादिवत् । न चासिद्धिः । अहमाकारानुभवस्य सुषुप्तावननुभवपराहतत्वात् । सुखमहमस्वाप्समिति चाहङ्काराश्रय एव विषयात्माभेदारोपाद्विषयतया प्रतीयते । अहङ्कारांशज्ञानस्मृतित्वे कारणाभावस्य बाधकस्योक्तत्वात् । न चास्याभाससमता । अनुकूलतर्कयुक्तत्वात् । अहङ्कारातिरिक्तात्मनः सिद्धसिद्धिपराहतत्वात्तस्य ॥

सुषुप्तावहङ्कारानुभवेन तत्परामर्शः स्यात्तदनुभवश्च किं जन्यज्ञानमुत नित्यमथवा स्वप्रकाशरूपो ऽहङ्कार एव सर्वथाप्यसम्भव इत्याह । तदसदित्यादिना । सुषुप्ताव हङ्कारानुभवो ऽनुपलब्धिपराहतश्चेत्याह । सुषुप्ताविति । ननु स्वप्रकाशचिद्रूपात्मनस्तदा सत्त्वात्त्वन्मते ऽहमेतावद्य इत्यनुभवः किं न स्यादिति तत्राह । चिद्रूपेति । एवमाचार्यानुमानमपि निरवद्यमित्याह । तस्मादिति । अत्र प्रकाशमानत्वं प्रकाशप्रयुक्तसंशयाद्यगोचरत्वं तदभावो ऽप्रकाशमानत्वं सुषुप्तौ चाहङ्कारसंशयाभावो न तत्प्रकाशप्रयुक्तस्तदा तदभावात्तन्निरूपितप्रकाशस्याप्य-

भावात्, किं तु धर्मिज्ञानादिविरहादिति न विशेष्यासिद्धिः । न च ब्रह्मणि व्यभिचारः । स्वव्यवहारहेतुप्रकाशानाश्रयत्वस्य प्रकाशात्मकब्रह्मण्यपि सत्त्वात् । न च विशेषणवैयर्थ्यम् । अहङ्कारस्यात्माभेदे तत्प्रकाशदशायामप्रकाशमानत्वस्यायोगादिति हेतोरप्रयोजकत्वनिरासार्थत्वादिति पराभिमतात्मत्वनिषेधान्न निषेध्याप्रसिद्धिर्दोषायेत्युक्तमित्यहङ्कारस्याननुभवे कथं परामर्शविषयत्वप्रतीतिरित्याशङ्क्य विषयात्माभेदारोपादित्याह । एवमहमिति । अहङ्कारश्चासौ परामर्शस्याश्रयो ऽहङ्काराश्रयः । कारणाभावस्येति । पूर्वानुभवाभावस्येत्यर्थः । ननु त्वदभिमत आत्मा स्वव्यतिरिक्तद्रष्टको वस्तुत्वादित्याभाससमता भेदानुमानस्येत्याशङ्क्य वैषम्यमाह । न चास्येति । आभासानुमानस्य धर्मिग्राहकबाध आश्रयासिद्धिर्वा दोषः, स चात्र नास्तीत्याह । अहङ्कारेति ॥

अहङ्कार आत्मा ज्ञानाश्रयत्वादिति यदुक्तं, तदप्यप्रयोजकं, भेदानुमानस्यानुकूलतर्कयुक्तत्वादित्याह । अत एवेति ।

(अहङ्कारस्यात्मात्वसाधकानुमानप्रतिक्षेपः ।)

अत एव प्रतिपक्षानुमानमप्यप्रयोजकम् । अस्मन्मते सपक्षे ब्रह्मणि हेतोरभावेनासाधारण्यमसिद्धिर्वा । न च द्वितीये साध्ये जीवान्तरेणेश्वरेण वार्थान्तरता । तद्भेदनिराकरणार्थत्वादेतस्य । अहमनुभवे प्रकाशमानः स्वव्यतिरिक्तद्रष्टृक इति वा साध्यम् । अपि चास्ति तावन्नीलोत्पलपलाशश्यामलमरविन्द-

लोचनमिन्दिरारमणमनवरतमनुचिन्तयतामा-प्रहरं घटादिज्ञानधारावतामपि तावत्कालीन-चित्तवृत्तिगोचरं तावत्कालीनात्मगोचरज्ञानुस-न्धानमेतावन्तं कालमिदमनुभवन्नेवासमिति । तत्कथमहङ्कारात्मवादे सङ्गच्छताम् । धाराम-ध्यपतिततत्तद्विज्ञानानां तत्तत्कालीनात्मनश्च पूर्वकालीनानुभवगोचरत्वेनेदानीमनुसन्धानानु-पपत्तेः । न च सामान्यप्रत्यासत्त्या तदनुभवः । तदाश्रयव्यक्तेरसन्निकर्षात् । न च स्मरणानुव्य-वसाय एव तदाश्रयो ऽस्तीति वाच्यम् । अद्रा-क्षमित्यादौ तदभावात् । अतिप्रसङ्गात् सामा-न्यप्रत्यासत्तेर्निरसिष्यमाणत्वात् । इदानीमसतां च तेषामनुव्यवसायायोगाच्च ॥

किञ्च ज्ञानपदेन जन्यं ज्ञानं विवक्षितमुताजन्यम् । आद्ये ऽसाधारणता, द्वितीये पक्षे ऽसिद्धिरित्यभिप्रेत्याह । अस्मन्मत इति । स्वव्यतिरिक्तद्रष्टृक इति साध्यमात्म-नानात्वेऽप्युपपन्नमित्याशङ्क्य लाघवतर्कविरोधान्मैवमि-त्याह । न च द्वितीय इति । देवदत्तो ऽहमनुभवविषयस्त-स्यैवाहमनुभवे प्रकाशमानस्वव्यतिरिक्तद्रष्टृक इति विव-क्षितत्वाद्वा नार्थान्तरतेत्याह । अहमनुभव इति । एवम-हङ्कारातिरिक्तमात्मानं प्रसाध्य तस्यावस्थात्रयसाक्षिचै-तन्यात्मकतां वक्तुं ज्ञानधारानुसन्धानानुपपत्त्या स्वतन्त्र-

ज्ञानं निरूपयति । अपि चेति । मानसस्य चाक्षुषस्य वा वाह्यविषयस्य धारावाहिकज्ञानस्य तत्कालीनाहमर्थस्य वानुसन्धानं दृश्यते, एतच्च तत्तत्कालीनस्वसमानविषयानुभवमन्तरेणानुपपन्नं, तदनुभवश्च वेद्यज्ञानवादे ऽनुपपन्नस्तस्माद्धाराकालीनः स्वतन्त्रो ऽनुभव एषितव्य इत्यर्थः । ननु धारान्तिमज्ञानगतघटज्ञानस्य सामान्यप्रत्यासत्तिजन्यमिदं ज्ञानं तावज्ज्ञानगोचरमनुव्यवसायरूपं न तदनुसन्धानमित्याशङ्क्य घटिकादिव्यवधानेप्यस्यदर्शनान्नायमनुभव इत्याह । न च सामान्येति । समयान्तरे घटस्मरणे सति तदनुव्यवसायो जायते । तत्र घटानुभवत्वस्य सत्त्वात्तत्प्रत्यासत्त्या धारानुभव इति तत्राह । न च स्मरणेति । अत्राद्यमिति स्मरणानुव्यवसाये चाक्षुषत्वाभावाद्धारागतचाक्षुषत्वानुसन्धानं न स्यादित्यर्थः । किञ्च जन्मान्तरोयघटज्ञानस्यापि प्रत्यासत्त्याश्रयत्वात्तस्याप्यनुसन्धानप्रसङ्गः । न चेष्टापत्तिः । एतावन्तं कालमिति विशेषणायोगादित्यभिप्रेत्याह । अतिप्रसङ्गादिति । सामान्यस्य प्रत्यासत्तित्वमपि नास्तीत्याह । सामान्येति । असन्निकृष्टानुव्यवसायं निराकरोति । इदानीमिति ॥

ननु तत्तज्ज्ञानानां तत्तदनन्तरभाविमानसज्ञानविषयत्वात्समयान्तरे ऽनुसन्धानमिति चोदयति । नन्विति ।

(समयान्तरे ऽनुसन्धानस्य चोद्यपरिहारौ) **ननु तत्तज्ज्ञानानन्तरमेवोत्पन्नानुव्यवसायात्मज्ञानाभ्यां संस्काराधानादिदानीमनुसन्धानं स्यादिति चेन्न । तथासति विजातीयज्ञानव्यवधानेन ध्यानत्वादेरनुपपत्तेः ।**

वेद्यज्ञानवाद उत्पन्नस्य ज्ञानस्यावश्यवेद्यत्वा-भावेन मध्ये ऽनुव्यवसायकल्पनायोगाच्च। जिज्ञा-सितश्रीवेङ्कटाचलनायककमनीयलीलाविग्रह-बुद्धिधारासामग्र्यां सत्यामपि मानसज्ञानकल्प-नायां सर्वत्र बाह्यज्ञानविलोपप्रसङ्गात्। ज्ञान-धारानुपरमप्रसङ्गाच्च । ननु यज्ज्ञानमुद्भूतं तदेव ग्राह्यमनुद्भूतं त्वयोग्यत्वादग्राह्यमिति ज्ञानधाराविच्छेद इति चेन्न। ज्ञानानुद्भूतत्वे प्रमाणाभावादनुद्भूतत्वस्य मूर्तविशेषगुण-मात्रवृत्तित्वाच्च । एकव्यक्तेर्गुणत्वावान्तरजात्यै-कजातिमदुद्भूतानुद्भूतानाश्रयत्वनियमेना-त्मन उभयविधज्ञानानुपपत्तेश्च । न च निर्वि-कल्पकमेवानुद्भूतं ज्ञानं, तर्हि तद्विषयविशि-ष्टज्ञानमावश्यकं सामग्रीसत्त्वात् ॥

धारानुपपत्त्या दूषयति । नेति । ज्ञायमानसत्ताक-त्वनियमाभावान्मध्ये ऽनुव्यवसायनिममे प्रमाणाभाव इत्याह । उत्पन्नस्येति । किञ्च जिज्ञासितबाह्यज्ञानसाम-ग्रीस्थले मध्ये आन्तरज्ञानकल्पने आन्तरज्ञानसामग्रीत्वे-नैव बलवत्त्वं वाच्यं, तथा च धाराविच्छेदो ऽनुव्यवसा-यानुपरमश्च स्यादित्याह । जिज्ञासितेति । अनुव्यवसायो-परम इति शङ्कते । ननु यज्ज्ञानमिति । किमनुद्भूतत्वमु-द्भूतत्वाभावो जातिविशेषो वा निर्विकल्पकत्वं वा । आद्य

उद्भूतत्वस्य मूर्तविशेषगुणमात्रनियततया तदभावस्य शब्दादिसाधारणतया प्रत्यक्षत्वाप्रतिबन्धकत्वात् । न द्वितीयः सविकल्पकज्ञानमात्रस्य प्रत्यक्षत्वयोग्यतया तादृशजातिसत्त्वे मानाभावादित्याह । न ज्ञानेति । अनुद्भूतत्वस्य जातित्वे ऽपि रूपादिनिष्ठमेवेत्याह । अनुद्भूतत्वस्येति । किञ्च यस्मिन्नात्मन्यनुद्भूतं ज्ञानं वर्त्तते तस्मिन्नुद्भूतज्ञानसमवायो न स्यादित्याह । एकव्यक्तेरिति । प्रदीपप्रभादेर्गुणत्वेन सजातीयोद्भूतानुद्भूतगुणद्वयाश्रयत्वं दृष्टं तद्व्यावृत्त्यर्थं गुणत्वावान्तरेति । न चैकस्मिन् परमाणौ तादृशगुणद्वयमस्तीति वाच्यम् । परमाणूनामेवासत्त्वात्, सत्त्वे च तद्गुणेष्वनुद्भूतत्वे मानाभावात्, तदप्रत्यक्षत्वस्यान्यथाऽपि सम्भवादिति भावः । तृतीयं दूषयति । न चेति । ज्ञानविषयनिर्विकल्पकाङ्गीकारे ज्ञानविषयसविकल्पकमावश्यकं तत्सामग्रीसत्त्वादन्यथा निर्विकल्पकस्याप्यभावापातादित्याह । तर्हीति ॥

असमवायिकारणोपरमादनुव्यवसायोपरम इति शङ्कते । ननु संयोगेति ।

(संयोगविशेषस्यानुव्यवसायहेतुत्वखण्डनम्)

**ननु संयोगविशेषो ऽनुव्यवसायहेतुरिति तद्विच्छेदादेव तद्विच्छेद इति चेत्, किं संयोगविशेषोजातिरुत वाह्यज्ञानजननायोग्यत्वमुपाधिः । नाद्यः, साह्यन्यतरकर्मप्रयोज्या वाच्या, आत्ममनः संयोगे ऽन्यस्या असम्भवात् । सा च सर्वात्ममनः संयोगसाधारण्येवेति न तद्विरहाद्विज्ञानविरहः । नापि तद्व्याप्यजाति-**

विशेषः । तत्प्रयोजकाभावान्मानाभावाच्च । द्वितीयेऽनुव्यवसायमात्रोच्छेदप्रसङ्गः । घटादिज्ञानोत्पादकसंयोगान्यसंयोगजनिपूर्वमेव घटादिज्ञानस्य विनष्टत्वात् । न च तावत्पर्यन्तं ज्ञानं स्थायि । धारास्थले ऽपि ज्ञानैकत्वापत्तेः । न च विनश्यदवस्थसंयोगनिष्पन्नव्यवसायस्य स्वसज्ञानक्षणोत्पन्नसंयोगादनुव्यवसाय इति वाच्यम् । विशेषणज्ञानकाले तस्यापि नष्टत्वात् । न चानुव्यवसायस्य न विशेषणज्ञानजन्यत्वमिति वाच्यम् । अन्यस्यापि तदभावप्रसङ्गात् । न चानुव्यवसाये विषयो विशेषणं तज्ज्ञानं च व्यवसाय एवेति वाच्यम् । विशिष्टज्ञानस्य विषयीभूतयावद्विशेषणज्ञानजन्यत्वाभावे ऽन्यत्रापि तत्प्रसङ्गात् ॥

विशेष एव दुर्निरूप इति दूषयति । किमिति । आद्ये ऽपि सा किं संयोगत्वस्य साक्षाद्व्याप्यजातिः, व्याप्यव्याप्या वा । आद्य आह । सा हीति । अन्यस्येति । उभयकर्मादिप्रयोज्याया इत्यर्थः । ततः किमित्यत आह । सा चेति । द्वितीयं पक्षं दूषयति । नापि तद्व्याप्येति । व्यञ्जकाभावाज्जातिसाधकानुगतबुद्धेरभावाच्चेति हेतुमाह । तत्प्रयोजकेति । विशेषस्योपाधित्वपक्षे वाह्यज्ञानजनकसंयोगादनुव्यवसायानुपपत्तेस्तदर्थमनसि क्रियादिपूर्वं संयोगा-

न्तरमारम्भणीयं, ततः पूर्वं व्यवसायनाशादनुव्यवसाया-योग इत्याह। द्वितीय इति। ज्ञानस्य चतुः पञ्चक्षणावस्था यित्वान्नोक्तदोष इत्याशङ्क्यापसिद्धान्ताद्धाराया एक ज्ञानत्वापतेश्च नेति दूषयति। न च तावदिति । ननु व्यव सायस्तज्जनकसंयोगनाशश्चैकक्षण एवोत्पद्येते, व्यवसाय-स्थितिक्षणे ऽनुव्यवसायहेतुसंयोगान्तरमुत्पद्यते, व्यवसा यस्यतृतीयक्षण एवानुव्यवसाय इति नोक्तदोष इत्याशङ्क्य ज्ञानत्वविषयनिर्विकल्पकोत्पत्तिसमये तस्य नष्टत्वान्नानु व्यवसाय इत्याह। न च विनश्यदिति। विशेषणज्ञास्यान-पेक्षितत्वान्न तेन व्यवधानमित्यत आह। न चेति। अन्य-स्येति । व्यवसायस्येत्यर्थः । व्यवसायस्यैव विशेषणज्ञान-त्वान्न तन्निर्विकल्पापेक्षेत्यत आह । न चानुव्यवसाय इति । अनुव्यवसाये ज्ञानत्वस्यापि विशेषणतया भाना-त्तज्ज्ञानमपि वक्तव्यमन्यथानेकविशेषणवति वस्तुन्येक-विशेषणज्ञाने तावद्विशेषणविशिष्टप्रत्ययापातादित्याह । विशिष्टज्ञानस्येति ॥

नन्वनुव्यवसाये ज्ञानत्वं स्वरूपेण भासते न तु विशेषणतया, ततस्तज्ज्ञानानपेक्षितमित्याशङ्क्य तथात्वे मयि घटविषयं किञ्चिदिति प्रतीत्यापात इत्याह। न चेति।

(अनुव्यवसाये ज्ञानत्वस्य स्वरूपतो भाने ऽपि दोषः) न च ज्ञानत्वांशेनुव्यवसायो निर्विकल्पक एव, न हि तदेवं भवान्मयि ज्ञानमिति तत्र हि ज्ञानत्वं प्रकारस्ततो विलक्षणज्ञानत्वप्रकारकज्ञानादर्शनात्। निर्विकल्पकत्वसविकल्पकत्वयोर्विरुद्धयोरेकत्र वृत्तित्वानु-

पपत्तेश्च । समवायिनोप्यविनश्यदवस्थस्यैव जनकत्वादेवमपि संयोगस्थितिक्षणोत्पन्नव्यवसायस्यानुव्यवसायप्रसङ्गात् । संयोगस्य स्वरूपविशेषाभावे किञ्चिद्बाह्यज्ञानजननयोग्यं किञ्चिन्नेत्यस्यैव दुर्वचत्वात् । ननु बुभुत्सितं ज्ञानं गृह्यते नानुबुभुत्सितमिति चेन्न । बुभुत्साया अपि बुभुत्सितसामान्यज्ञानाधीनतयान्योन्याश्रयादिप्रसङ्गात् । बुभुत्साहेतुधर्मिभावेन बुभुत्सितज्ञानस्य विनष्टत्वेन तदनुव्यवसायायोगात् । उत्पन्नायां बुभुत्सायां तद्विषयज्ञानसामग्र्याः सत्त्वेन बुभुत्सितज्ञानानुपपत्तेः । बुभुत्साघटितज्ञानसामग्रीबलतीति चेन्न । तथासत्युदाहृतस्थले तद्घटितबाह्यज्ञानसामग्र्याः सत्त्वेनाननुव्यवसायप्रसङ्गात् । अबुभुत्सितज्ञानग्रहणाच्च ॥

ज्ञानत्वांश इति । निर्विकल्पत्वस्य साक्षात्त्वव्याप्यजातित्वादव्याप्यवृत्तित्वापात इत्याह । निर्विकल्पकत्वेति । तन्तुवत्तन्तुसंयोगस्याप्यविनश्यदवस्थस्यैव जनकत्वाद्विनश्यदवस्थसंयोगाद्व्यवसायोत्पत्तिरपि न सम्भवतीत्याह । समवायिनोपीति । द्रव्यासमवायिन एवायं नियम इत्याशङ्काङ्गीकारेण धारायां द्वितीयादिज्ञानानुव्यवसायप्रसङ्ग इत्यभिप्रेत्याह । एवमपीति । योग्यता-

वच्छेदकानिरूपणादपि नायमुपाधिरित्याह। संयोगस्येति। बुभुत्सोपरमादनुव्यवसायोपरम इति शङ्कते। नन्विति। ज्ञानबुभुत्साया ज्ञानविषयधर्मिज्ञानादिसाध्यत्वात्तस्य बुभुत्साधीनत्वे परस्पराश्रयादिकं स्यादिति दूषयति। न बुभुत्साया इति। बुभुत्सोत्पत्तिसमये ऽनुव्यवसायस्य नाशान्न तयापि तदनुव्यवसाय इत्याह। बुभुत्साहेत्विति। सत्यां बुभुत्सायां तद्विषयज्ञानोदयान्नान्यस्यावकाश इत्याह। उत्सन्नायामिति। बुभुत्साज्ञानसामग्र्या दुर्बलत्वान्न तज्ज्ञानमिति चोदयति। बुभुत्सेति। एवं सति वेङ्कटाधिपतिलीलाविग्रहस्यैव बुभुत्सितत्वात्तद्दारासमये तदनुव्यवसायायोग इत्याह। न तथा सतीति। दुःखादिज्ञानस्याबुभुत्सितस्यापि गृह्यमाणत्वान्न तस्याः ज्ञानग्रहणकारणतापीत्याह। अबुभुत्सितेति॥

जिज्ञासितज्ञानात्पूर्वमेव धर्मिज्ञानजिज्ञासयोरुत्पत्तेर्न ताभ्यां व्यवधानमितीयमपि कुकल्पनानुपपन्नेत्याह। एतेनेति।

**एतेन सामान्याकारेण सर्वज्ञानं कदाचिज्ज्ञातमिति तद्गोचरा स्मृतिस्ततो जिज्ञासाज्ञानमात्रविषया जायते ततो घटज्ञान मुत्पद्यते तच्च जिज्ञासागोचर एवेति द्वितीयक्षण एव तद्विषयानुव्यवसाय इति नान्योन्याश्रयादिरिति प्रत्युक्तम्। जिज्ञासां विना तस्यैवानुपपत्तेः। ज्ञानजिज्ञासानन्तरमजिज्ञासितबाह्यज्ञानोत्पत्तौ तत्र जानामीत्यनुव्यवसायानुपपत्तेश्च।**

ननु वयं नियमं न ब्रूमः क्वचिज्जिज्ञासितं गृह्यते क्वचिद्विपरीतं क्वचिन्न नैव गृह्यत इत्यभ्युपगम्यत इति चेन्न। त्वदभ्युपगमस्य व्यवस्थापकाभावेन निर्मूलत्वात्। अजिज्ञासितस्यापि ग्रहणे क्वचिद्विरहः कथमिति वर्ण्यताम्। न च बाह्यज्ञानसामग्रीप्रतिबन्धात् कदाचिद्वित्तिधाराविरम इति वाच्यम्। बाह्यविषयत्वेन तस्या बलवत्त्वे जाग्रत्यनुव्यवसायमात्रविलोपप्रसङ्गात्। सर्वदा बाह्यज्ञानसामग्रीसम्भवात्प्रवर्त्तकबाह्यज्ञानसामग्री बलवतीति चेन्न। तादृशज्ञानसामग्र्यां सत्यामेवेदमहञ्जानामीत्यनुव्यवसायदर्शनात्।

तस्यैवेति। ज्ञानमात्रविषयप्रथमज्ञानस्येत्यर्थः। किञ्चोक्तप्रकारेण ज्ञानमात्रजिज्ञासाजनकस्मरणज्ञानस्यापि तज्जिज्ञासाविषयत्वात् स्मरणज्ञानसामग्र्या जिज्ञासाघटिततया बलवत्त्वात्तज्ज्ञानमेव स्यान्नाजिज्ञासितबाह्यविषयज्ञानं, तथाचोक्तानुव्यवसायायोग इत्याह। ज्ञानजिज्ञासेति। जिज्ञासायाः सर्वत्राकारणत्वान्नान्योन्याश्रयादिरिति चोदयति। ननु वयमिति। त्वदभ्युपगमस्य नियामकाभावाद्धेयतेत्याह। न त्वदभ्युपगमस्येति। अनियमपक्षेऽप्यनुव्यवसायानुपरम इत्याह। अजिज्ञासितस्येति। सामग्र्यां सत्यामपि प्रतिबन्धकदशायामनुव्यवसायोपरमात्तदुपरम इत्याशङ्क्याह। न च बाह्येति। किं बाह्यज्ञान-

सामग्रीत्वेन प्रतिबन्धकत्वमुत प्रवर्तकज्ञानसामग्रीत्वेन । आद्ये आह । बाह्यविषयत्वेनेति । सर्वदेति । त्वगिन्द्रियस्य स्पर्शवद्द्रव्येण संयोगस्य जाग्रत्यवर्जनीयत्वाच्छरीरव्यापि त्वचो मनःसंयुक्तत्वाच्चेत्यर्थः । द्वितीयं शङ्कते । प्रवर्तकेति । इन्द्रियस्येष्टवस्तुसंयोगे सत्यपि तदनुव्यवसायदर्शनान्न तदित्याह । न तादृशेति ॥

नन्वदृष्टस्यापिज्ञानकारणत्वात्तदभावादेव वित्तिधारोपरम इति चेन्न । दृष्टसामग्रीसम्पादनेनैवादृष्टस्य कार्यहेतुत्वादित्यभिप्रेत्य साक्षाद्धेतुत्वेदोषमाह । अदृष्टस्येति ।

(अदृष्टस्य न साक्षाज्ज्ञानहेतुता) अदृष्टस्य च नियामकत्वे सहकारिवैकल्यात्कदाचिदपि ज्ञानाभावानुभवायोगात् । नियामकं विनापि नियमाङ्गीकारे सहकारिवादविलोपप्रसङ्गाच्च । किञ्च प्रत्यक्षं हि स्वसमानकालीनं विषयीकरोति घटोऽस्ति जानामीति प्रत्यक्षयोर्विषयस्य वर्त्तमानतावभासनात् । न चानुव्यवसायकाले व्यवसायस्य वर्त्तमानतास्ति । ननु विषयस्य प्रत्यक्षनिमित्ततया पूर्वक्षणवर्त्तित्वमेवापेक्ष्यते न तु तत्कालीनत्वमपि, वर्त्तमानताऽवभासस्तु स्थूलोपाधिमादायापि भवतीति चेन्न । प्रत्यक्षविषयस्य तत्काले वर्त्तमानत्वनियमाभावे क्वचिदपि निष्कम्पप्रवृत्त्यनुप-

पत्तेः । विषयस्य वर्तमानतानिश्चयस्य तद्धेतुत्वात् । स्थूलकालमादाय प्रयोगसाधुत्ववर्णनेऽपि प्रत्यक्षस्य तथा विवक्षानुपपत्तेः । तस्मादनुव्यवसायासम्भवाद्द्वारान्तःपातिप्रथमादिज्ञानानां विनष्टानामनुव्यवसायायोगाच्च कथमपि वेद्यज्ञानवादेऽभिहितानुसन्धानं सङ्गच्छते । अनुमेयं ज्ञानमिति वादे तु नतराम् ॥

सहकारिवैकल्यादिति । सहकारिणोऽदृष्टस्य वैकल्यमभावो यस्मिन्ननुपलम्भे स तथा तस्मादित्यर्थः । अयमर्थः । अभावाधिकरणे तर्कितप्रतियोगिसत्त्वविरोध्यनुपलम्भस्याभावधीहेतुत्वाज्ज्ञानानुपलम्भस्य चात्मनि सत्यपि ज्ञाने तदुपलम्भकादृष्टवैकल्यादप्युपपत्तेरित्यन्यथासिद्धिशङ्कया ततो ज्ञानाभावनिश्चयो न स्यादिति । ननु स्वभावादेव किञ्चिज्ज्ञानं गृह्यते किञ्चिच्च न गृह्यत इति तत्राह । नियामकमिति । किञ्च प्रत्यक्षज्ञानकाले विषयसत्त्वनियमादनुव्यवसाये च तदसम्भवान्नासावङ्गीकार्य इत्याह । किञ्चेति । प्रत्यक्षज्ञानकाले विषयसत्त्वनियमाभावे बाधकाभावान्नोक्तदोष इति शङ्कते । ननु विषयस्येति । बाधकाभावोऽसिद्ध इत्याह । न प्रत्यक्षेति । यच्चोक्तं स्थूलकालमादाय वर्त्तमानतावभास इति तत्राह । स्थूलेति । कालमिति विवक्षायाः शब्दधर्मत्वादनुभवे यथावभासं विषयसत्ताया अभ्युपेयत्वादित्यर्थः । उक्तानुसन्धानस्यान्यथोपपत्त्यभावमुक्तमुपसंहरति । तस्मादिति । भेदमतेऽप्यनुसन्धानानुपपत्तिरित्याह । अनुमेयमिति ।

तन्मते पक्षाद्यनेकज्ञानव्यवधाने धाराविच्छेदादेः सत्त्वादित्यर्थः ॥

एवं मध्येऽनुव्यवसायाङ्गीकारे धाराविच्छेदो दूषणमुक्तमिदानीं मध्ये ऽनुव्यवसायकल्पने संख्यानुसन्धानानुपपत्तेर्न तत्कल्पनमित्याह । किञ्चेति ।

(अनुव्यवसायाङ्गीकारे संख्यानुपपत्तिः) किञ्च नैरन्तर्य्येण द्वादशनामानि शृण्वतो द्वादशनामानि क्रमेण श्रौषमिति यत्रानुसन्धानं तत्र न मध्ये ऽनुव्यवसायः कल्पयितुमपि शक्यते । अनुव्यवसायसामग्रीमात्रोत्पन्ननाम्नो ऽनुभवासम्भवेन द्वादशत्वानुसन्धानानुपपत्तेः । ननु द्वादशनामानुभवानन्तरं द्वादशनामगोचरा स्मृतिर्जन्यते स्मृत्याच तत्कारणमनुभवमनुमाय तद्गोचरानुसन्धानमेवं बुद्धिधारास्थलेऽपि ति चेन्न। मध्ये ज्ञानकल्पने प्रमाणाभावाद्गौरवाच्च। ज्ञानान्तरस्य स्मृतित्वानुसन्धानाभावेन ततो मूलानुभवानुमानानुपपत्तेः। परिशेषात्स्मृतित्वावधारणमिति चेन्न। एवम्प्रणाडीमविदुषोपि वर्णितप्रतिसन्धानदर्शनात् । अनुभवस्य स्मृतिहेतुत्वाज्ञानसंशयविपर्यासदशायामप्यनुसन्धानदर्शनादनुमानानुपपत्तेः । एवमिष्टविषयज्ञानानन्तरमेव सुखं जायते न तु तदनुव्यवसा-

यात् । इष्टज्ञानस्यैव तद्धेतुत्वात् । सुखं चोत्पन्नमवश्यं ज्ञातव्यमिति कथमिष्टज्ञानानुसन्धानं भवेत् ॥

अयमर्थः । केशवादिद्वादशनामसु नैरन्तर्य्येण पठ्यमानेषु तत्र मते आद्यवर्णस्थितिसमये तद्विषयकत्वादिनिर्विकल्पज्ञानं द्वितीयवर्णोत्पत्तिश्च । तत्सविकल्पसमये द्वितीयस्य स्थितिः । तदनुव्यवसायसमये द्वितीयस्य नाशः । तदनन्तरं द्वितीयग्रहणायोगात्तृतीयस्य चतुर्थस्य वा ग्रहो वक्तव्यः । एवमुत्तरत्रापि केषांचिद्वर्णानां तत्संख्याया वा ग्रहणायोगान्मध्येऽनुव्यवसायकल्पने द्वादशनामश्रवणानुपपत्तिस्तदकल्पने चाश्रौषमित्यनुसन्धानानुपपत्तिरिति कष्टां दशामापन्नोऽयमनुसन्धानतपस्वी हि । न च नैरन्तर्येण वर्णानामुत्पत्तिरसम्भविनी । बहुवक्तृकेषु तत्सम्भवात् । मध्ये मध्येऽनुव्यवसायाभावेऽपि सर्ववर्णज्ञानानुभवोऽनुमानात्सिध्यतीति शङ्कते । ननु द्वादशेति । घटादिधारायामप्येवमेवानुसन्धानमित्याह एवमिति । अनुसन्धानात्पूर्वमनुमितिज्ञानमनुपलब्धिपराहतमिति दूषयति । न मध्य इति । पक्षाद्यनेकज्ञानकल्पने गौरवञ्चेत्याह । गौरवाच्चेति । अनन्तरं स्मरामीत्यनुभवाभावाल्लिङ्गज्ञानमपि नास्तीत्याह । ज्ञानान्तरस्येति । अनन्तरभाविनामज्ञानस्येन्द्रियाद्यजन्यत्वात्स्मृतित्वज्ञानमिति शङ्कते । परिशेषादिति । परिशेषमजानतो हि प्रतिसन्धानसत्त्वान्नैवमित्याह । न, एवमिति । ज्ञातेऽपि स्मृतित्वे व्याप्तिनिश्चयस्यानियतत्वान्न नियमेनानुमितिरित्याह । अनुभवस्येति । इष्टज्ञानसुखयोः कार्यकारणभावग्रहानुप-

पत्तिरप्यलौकिकानुभवे मानमिति वक्तुं परमत इष्टज्ञानानुभवो न सम्भवतीत्याह । एवमिति ॥

नन्विष्टज्ञानमेवानुव्यवसायानन्तरं सुखमुत्पादयतीति शङ्कते । ननु सुखादिति ।

ननु सुखात्पूर्वमिदमिष्टज्ञानानुसन्धानमिति चेन्न । अनुव्यवसायकाले विनष्टस्येष्टज्ञानस्य सुखाहेतुत्वात् । इष्टज्ञाने सत्यपि सुखानुत्पत्तौ तस्य तदहेतुत्वप्रसङ्गात् । न च सुखानन्तरं विनश्यदवस्थेष्टविषयज्ञानात्तदनुव्यवसाय इति वाच्यम् । सुखस्यावश्यवेद्यत्वनियमेन तज्ज्ञानात्पूर्वं तस्य नष्टत्वात् । न च ज्ञानसुखयोः समूहालम्बनम् । तयोः सहोपस्थितिनियमे पौर्वापर्य्यस्य दुर्ग्रहतया कार्यकारणत्वस्य दुर्ग्रहत्वात् । परिशेषस्य दुरवधारणतयेष्टदर्शनार्थिप्रवृत्त्यनुपपत्तेः । न च सुखमिष्टज्ञानजन्यम् । तद्विषयकृतिजन्यत्वात् संयतवदित्यपि । एवमपि कृत्यनन्तरभावीष्टज्ञानस्य कारणत्वासिद्धेः । व्यभिचारादप्रयोजकत्वाच्च । कृतिपूर्वज्ञानस्यापि कृतिकार्ये न हेतुत्वमिति वक्ष्यते । एतेन सुखानुमितेष्टज्ञानमनुसन्धीयत इति निरस्तम् ॥

इष्टज्ञानस्य निर्विकल्पद्वारेणानुव्यवसायोत्पत्तिसमये नष्टस्यानन्तरं न सुखजनकत्वमित्याह । न, अनुव्यवसा-

[1]तुष्टोऽस्मि राम भद्रन्ते कर्मणा [2]त्वद्भुतेनवै ।
प्रीतिदायञ्च दास्यामि सर्वाण्यस्त्राण्यशेषतः ॥ २ ॥
[3]यान्यहं वेद्मि काकुत्स्थ पात्रं ह्येषां मतोऽसि मे ।
ब्रह्मास्त्रं प्रथमं राम दिव्यमेतद्ददामिते ॥ ३ ॥
त्रयाणामपि लोकानां पिण्डितानां भयावहम् ।
तथैव दण्डमस्त्रं ते प्रजासंहारकारकम् ॥ ४ ॥
ददामि [4]राम शत्रूणां येना धृष्यो भविष्यसि ।
धर्म्मास्त्रं च महाबाहो कालकल्पं ददामि ते ॥ ५ ४
कालास्त्रमपि [5]चाशक्यं ददामि दयितं [6]प्रभो ।
विष्णुचक्रं च ते दिव्यमिन्द्रचक्रं च [7]दुर्जयम् ॥ ६ ॥
वज्रमस्त्रं च दुर्धर्षं शैवं शूलवरं तथा ।
अस्त्रं ब्रह्मशिरश्चोग्रमैशिकं च ददामि ते ॥ ७ ॥

---

1 For this Sl. B 2 परितुष्टोऽस्मि भद्रन्ते राजपुत्र महायशः । प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥ 2 G 2, त्वत्कृतेन वै but P has, त्वद्भुतेन वै । 3 For this, and the following 5 Slokas B 37 देवासुरगणान्वापि सगन्धर्वोरगान् (a) भुवि । यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥ तानि दिव्यानि भद्रन्ते ददाम्यस्त्राणि सर्वशः । दण्डचक्र महद्दिव्य तव दास्यामि राघव ॥ धर्मचक्र ततो वीर कालचक्र तथैव च । विष्णुचक्रं (b) तथात्युग्रमैन्द्रञ्चक्र तथैवच ॥ वज्रमस्त्रं नरश्रेष्ठ शैवं शूल (c) वरं तथा । अस्त्र ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥ ददामि ते महाबाहो (d) ब्राह्ममस्त्रमनुत्तमं । गदे द्वे चैव काकुत्स्थ मोदकी शिखरी (e) शुभे ॥ (a) S. युधि (b) V. अथात्युग्र &c (c) S and V, वर &c (d) V. ब्रह्म &c (e) V उभे. 4 P. तेच &c 5 G 6 चासह्य &c 6 G 6 विभो, but P has प्रभो 7 G 6. दारुण. but P. has दुर्जय ॥

शङ्कराम्लं च दीप्तास्यं गृहाणेदं मयोद्यतम् ।
गदाह्वयं चाप्रतिमं गृहाणारिभयावहम् ॥ ८ ॥
[1]कौमोदकीं चाप्रतिमां तथेमां लोहितामुखीम् ।
धर्मपाशं तथैवास्त्रं कालपाशं च दुर्जयम् ॥ ९ ॥
[2]वारुणं चापि ते पाशं ददामि [3]परमार्चितम् ।
शुष्कार्द्रे चाशनी राम गृहाणेमे मयोद्यते ॥ १० ॥
[4]पिनाकमपि तेचास्त्रमस्त्रं नारायणन्तथा ।
आग्नेयमपि चासह्यं वायव्यं च ददामि ते ॥ ११ ॥
[5]प्रमर्दनं प्रमथनं तथैवारिविदारणम् ।
अस्त्रं हयशिरश्चैव कूटास्त्रं चापराजितम् ॥ १२ ॥
[6]शक्ती च द्वे गृहाणेमे [7]बलामतिबलान्तथा ।
तथैव काममुषलं कङ्कालमथ किङ्किणीम् ॥ १३ ॥

1 For this Sl. B. 8 प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज धर्मपाशमहं राम कालपाशं तथैव च ॥ 2 For this Sl. B. 9 वारुणं पाशमस्त्रं च ददाम्यहमनुत्तमम् । अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ॥ 3. G. 10 परमाद्भुत 4 For this Sl. B. 10 (a) ददामि चास्त्र पैनाकमस्त्रं नारायणं तथा । आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥ (a) V ददाम्यस्त्रं च पैनाकं &c. G. 11 पैनाकमपि &c. but P has पिनाकमपि &c. 5 For this Sl. B. 11 वायव्यं (a) प्रथमं (b) नाम ददामि तव चानघ अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥ (a) V मथन &c. (b) S राम &c. 6 For this Sl. B. 12 शक्तिद्वयं च काकुत्स्थ ददामि तव राघव । कङ्कालं मुषलं (a) घोरं कपालमथ किङ्किणीं ॥ (a) S. चैव &c. 7. G. 13 अमोघां विजयां तथा । but P has बलामतिबला &c. ॥

[1]प्रस्वापनं [2]मोहनं च स्तम्भनं च ददामि ते ।
[3]वर्षणं शोषणं चैव तथैवारिनिकृन्तनम् ॥ १४ ॥
[4]मदनोन्मादनं चैव कन्दर्पदयिते [5]प्रभो ।
गन्धर्वास्त्रं तथैवेदं मोहनं च ददामिते ॥ १५ ॥
तेजोद्युतिहरं [6]चैव शत्रुपक्षप्रतापनम् ।
[7]रुधिरामिषादं पैशाचं कौवेरञ्च ददामिते ॥ १६ ॥
[8]राक्षसं चापि[9] सैन्यानां श्री धृतिप्राणनाशनम् ।
मूर्छनं [10]तापनं चास्त्रं कम्पनं [11]चापि कर्षणम् ॥१७॥
संवर्तमपि चावर्तं मौषलं च ददामि ते ।
सत्यं चैवानृतञ्चास्त्रं महामायास्त्रमेव च ॥ १८ ॥

1. For this and the following 26 Slokas B 13 21 अथाय रक्षमा यानि ददाम्यं तानिसर्वश । वैद्याधर मह स्त्र च नन्दन नाम नामत ॥ अ मरव महाबाहो ददामि नृपात्मज । गान्धर्वमस्त्र दयित (a) मोहन नाम नामत ॥ (b) प्रस्वापन प्रशमनं दक्षि- सौम्य च राघव । वर्षण शोषण चैव सन्तापनविलापने । (c) मादन चैव दुर्धर्ष (d) कन्दर्पदयित तथा । (e) गान्धर्वमस्त्रं दयितं मानव नाम नामत. ॥ पैशाचमस्त्रं दयितं मोहनं नाम नामत. । (f) प्रतीच्छ नरशार्दूल राजपुत्र महायश ॥ तामसं नरशार्दूल सौमन च (g) महाबल । सवर्त चैव दुर्धर्ष मौषलं च नृपात्मज ॥ सत्यमस्त्र महाबाहो तथा माया (h) मय परं । सौर तेजः प्रभ नाम परतेजापकर्षण ॥ सोमास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्र (j) सुदारुण । दारुण च भगस्यापि शीतेषु (k) मथमानद ॥ एतान् राम महाबाहो कामरूपान् महाबलान् । (a) V मानवास्त्र च &c (b) V. प्रस्वापनप्रशमने &c (c) S मदन (d) V अस्त्रं कन्दर्प दैवत (e) This line is wanting in V (f) V प्रतीच्छे etc (g) V महाबल । (h) V परं etc (j) V. सुदामन (k) V मपि etc    2 G 14 प्रशमनं etc, but P has मोहनंच etc    3 P has the alternative reading वर्षण रोषणं चैव सन्तापन विलेपने on the margin    4 G 15 मदनोन्मादनंचैव etc, but P has मदनोन्मादन etc    5 G 15 विभो, but P has प्रभो    6 G. 16 सौरं etc    7 G 16 रक्तामिषाद पैशाचं etc P रुधिरामिष पैशाच etc    8 P. रक्षसां etc    9 G 17. शत्रूणां etc., but P has सैन्याना etc.    10. G 17. ताडनं etc, P पतनं etc    11. G 17 चारि etc ॥

अमोघं तैजसं चैव परतेजोऽपकर्षणम् ।
सोमास्त्रं शिशिरं [1]राम त्वाष्ट्रं [2]चापि व्यथाकरम् ॥१९॥
मानवं चास्त्र[3]मजिनं दैत्यदानवमेवच ।
एवमादीनि [4]चान्यानि ददानि दयितोऽसिमे ॥ २० ॥
[5]गृहाणैतानि मत्तस्त्वमस्त्राणि नृवरात्मज ।
अथासौ प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ॥ २१ ॥
[6]ददौ रामाय सुप्रीतो [7]मन्त्रग्राममनुत्तमम् ।
[8]जपतोऽथ मुनेस्तस्य मन्त्रग्राम[9]मशेषतः ॥ २२ ॥
[10]उपतस्थु र्महास्त्राणि मूर्तिमन्ति नृपात्मजम् ।
ऊचुश्चैनं ततोऽभ्येत्य तान्यस्त्राणि समन्ततः ॥ २३ ॥
[11]प्राञ्जलीनि महाबाहो शाध्यस्मानिति राघवम् ।
तान्यवेक्ष्य ततो रामः समालभ्य च पाणिना ॥ २४ ॥

---

1 G 19 नाम etc 2 G 19 चारि etc 3. G 20 मजित etc 4 G 20 चास्त्राणि ददामि etc, 5 For this Sl B 21-22 गृहाण परमोदारान् क्षिप्रमेव नृपात्मज ॥ स्थितस्तु प्राङमुखोभूत्वा शुचिर्मुनिवरस्तदा । 6 Between the 2 lines of this Sl of our text B. (23) reads सर्वसंग्रहणा येषा दैवतैरपि दुर्लभ तान्यस्त्राणि तदाविप्रो राघवाय न्यवेदयत् ॥ 7 G 22 ह्यस्त्रग्राम etc, but P has मन्त्रग्राम etc 8 For this line, B 24 जपतस्तुमुनेस्तस्य विश्वामित्रस्य धीमत । 9 P विशेषतः 10 For this Sl. B 24 25 उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघव ॥ ऊचुश्च मुदिता राम सर्वे प्राञ्जलयस्तदा । 11, For this and the following 2 lines B 25-27 (a) इमे च परमोदार किंकरास्तवराघव ॥ यद्यदिच्छसि भद्रं ते तत्सर्वं करवाम (b) वै। ततो रामः प्रसन्नात्मा तैरित्युक्तो महाबलं ॥ प्रतिगृह्य च काकुत्स्थ समालभ्यच पाणिना । मानसा मे भविष्यध्वमिति तान्यभ्यचोदयत् ॥ (a) V इमे स्म etc (b) V. किं ॥

मां भजध्वं स्मृतानीति सर्वाण्यैवाभ्यभाषत ।
[1]तान्यवाप्य ततो रामो विश्वामित्रं महामुनिम् ।
प्रणिपत्य यथान्यायं गमनाय मनो दधे ॥ २५ ॥

आदौ रामायणे अस्त्रप्रदानम् ।

## XXXI

[2]प्रतिगृह्य ततोऽस्त्राणि दिव्यानि [3]प्रीतमानसः ।
गच्छन्नेव ततो रामो विश्वामित्र[4]मुवाचह ॥ १ ॥
[5]गृहीतास्त्रोऽस्मि भगवन्नजेयस्त्रिदशैरपि ।
अस्त्राणां [6]च ममैतेषां संहारं [7]वक्तुमर्हसि ॥ २ ॥
[8]इत्युक्तवति रामेऽथ विश्वामित्रोमहामुनिः ।
आचख्यौ परमास्त्राणां [9]सरहस्यनिवर्तनम् ॥ ३ ॥
[10]उक्त्वा संहारमस्त्राणां रामायामिततेजसे ।
ददौ मन्त्रं जम्भकाणां वशीकरणमुत्तमम् ॥ ४ ॥
[11]सत्यवाक् सत्यकीर्तिश्च धृष्टो रभस एव च ।
प्रणिपातरसो राम अवाङ्मुखपराङ्मुखौ ॥ ५ ॥

---

1 For this Sl B 28 तत प्रीतमना रामो विश्वामित्र महामुनिं । अभिवाद्य महातेजागम नायोपचक्रमे ॥ 2 For this Sl B XXVIII 1 प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचि । गच्छन्नेवच काकुस्थो विश्वामित्रमथाब्रवीत् ॥ 3 P प्रीतिमानस 4. P मवो चत 5 For this Sl B 2 गृहीतास्त्रोऽस्मि भगवन् दुराधर्ष. सुरैरपि । अस्त्राणां त्वहमिच्छामि महारान्मुनिपुंगव ॥ 6 G 2 तु etc 7 P कर्त्तुमर्हसि. 8 For this Sl B 3 एव ब्रुवति काकुत्स्थे विश्वामित्रो महातपाः । संहारान्व्याजहाराथ धृतिमान्सुव्रतः शुचिः ॥ 9 P सरहस्य etc 10 This Sl is wanting in B This Sl and the following 3 lines are wanting in P. 11 For this Sl B 4 सत्यवन्तं सत्यकीर्तिं धृष्ट रभसमेवच । प्रतिहारतरं नाम परा-

[1]वृषाख्यो वृषकर्मा च रेणुकः पुरुषादकः ।
दशाक्षो दशवक्त्रश्च शतशीर्षः शतोदरः ॥ ६ ॥
[2]पद्मनाभो महानाभः सुनाभो दुन्दुभिस्वनः ।
ज्योति र्भानुः [3]क्रथः कुम्भो मकरः [4]क्रकरोऽङ्गदी ॥ ७ ॥
[5]युगन्धरस्तथानिद्रो भेत्ता प्रमथनः स्थिरः ।
[6]धनधान्यः कुण्डधरो रतिर्भूरतिरेव च ॥ ८ ॥
[7]कामरूपी कामगमः कामहा काममर्दनः ।
जम्भकः स्वर्णलाभश्च स्यन्दनो [8]धावनस्तथा ॥ ९ ॥
[9]कृशाश्वतनया ह्येते जम्भकाः कामरूपिणः
[10]भास्वरा रिपुसैन्यानां तेजोद्युतिहरास्तथा ॥ १० ॥

---

मुखमवाङमुख ॥ 1 For this Sl., B 5 लक्ष्यालक्ष्याविमौ चैव दृढनाभसुनाभकौ । दशाक्षशतवक्त्रौच दशशीर्षशतोदरौ ॥ 2 For this Sl B 6 पद्मनाभ महानाभौ दुन्दुनाभ (a) स्वनाभकौ । ज्योतिष शकुनश्चैव (b) नैरास्यविमलावुभौ ॥ (a) V सुनाभकौ (b) V नैराश्य etc 3 P कृश etc 4 P क्रकरो etc 5 For this Sl B 7 and 8 योगधर (a) विनिद्रौ च दैत्यप्रमथनौ तथा । शुचिबाहुर्महाबाहुर्निष्कलिर्विरुचस्तथा ॥ सार्चिमाली धृतिमाला वृत्तिमान् रुचिरस्तथा। (b) पित्र्य· सौमनसश्चैव विधूतमकरावुभौ ॥ करवीर रति चैव धनधान्यो च राघव ॥ (a) S सनिद्रौ etc (b) V चन्द्रसौमनसश्चैव etc 6 G 8 धरो धन्य. कम्भ धरो etc , P वखे धरो · कुण्डधरो etc 7 For this Sl B 9 (a) कामरूप कामरुचि मोहमावरणं तथा । जृम्भक (b) सर्पनाथ च (c) पथानवरुणौतथा ॥ (a) This line is wanting in V (b) V सर्वनाभ etc (c) V मधानवरुणावुभौ S मंथान वरुणौ तथा 8. P धारणास्तथा 9 For this, and the following Sl B 10. (a) कृशाश्वतनयान राम भास्वरान कामरूपिण प्रतीच्छ (b) मम मद्गते पात्रभूतोऽसिराघव ॥ (a) V भशा श्व etc (b) S राम etc 10 P भासुरा etc.

विनायका विघ्नकराः प्रयोक्तुर्विजयावहाः ।
एतानपि गृहाण त्वं [1]सयोगं च निवर्तनम् ॥ ११ ॥
[2]इत्युक्तो वाढमित्युक्त्वा विश्वामित्रात्तपोधनात् ।
जग्राह तानपि तथा जम्भकान् रिपुजम्भकान् ॥ १२ ॥
[3]दिव्यमूर्तिधरास्तेहि दिव्याभरणभूषिता.
ऊचुः प्राञ्जलयो रामं [4]तथा मधुरभाषिणः ॥ १३ ॥
[5]इमे स्म वशगा राम शाधि नस्त्वमिहस्थितान् ।
गम्यतां स्वागतं वोऽस्तु कृत्यकाल उपैष्यथ ॥ १४ ॥
स्मृतामामुपतिष्ठध्वमिति रामोऽभ्युवाचतान् ।
इत्युक्त्वा राममामन्त्र्य कृत्वा [6]चापि प्रदक्षिणम् ॥१५॥
एवमस्त्विति चैवोक्त्वा प्रतिजग्मुर्यथागतम् ।
[7]तान्विसृज्य ततो रामो विश्वामित्रं महामुनिम् ॥१६॥
गच्छन्नेव पुनर्वाक्यं मधुराक्षरमब्रवीत् ।
किमेतन्मेघसङ्काशं पर्वतस्याविदूरतः ॥ १७ ॥

---

1 G 11 सप्रयोगनिवर्त्तनान् P सप्रयोगनिवर्त्तितान. 2 For this Sl B 11. वाढमित्येव, काकुत्स्थ प्रहृष्टे नान्तरात्मना । 3 for this Sl B 11-13 दिव्यभास्वरदेहाश्च मूर्त्तिमन्त. सुख प्रदाः ॥ केचिदङ्गारसदृशा केचिद्धूमोपमास्तथा । चन्द्रार्कसदृशा. केचित् प्रह्वाञ्जलिपुटास्तथा ॥ राम प्राञ्जलयो भूत्वा ब्रुवन्मधुरभाषिणः ॥ 4. G. 13 तदा etc 5 For this Sl, and the following 3 lines, B 13 15 इमे स्म नरशार्दूल शाधि किं करवामते ॥ गम्यतामिति तानाह यथेष्ट रघुनन्दन । मानसाः कार्यकालेषु (a) साहाय्य मे करिष्यथ ॥ अथतेराममामंत्र्य कृत्वा चापि प्रदक्षिणं । एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतं ॥ (a) V and S सहाय etc 6 P चापि etc 7 For this, and the following line, B 16 स च तान् राघवो [illegible] विश्वामि महामुनि । गच्छन्नेवाथ मधुर श्लक्ष्णं वचनमब्रवीत् ॥

[1]वनमाभाति सुमहत् कस्यैतदमरद्युते ।
आभाति रमणीयं हि वनमेतन्मनोहरम् ॥ १८ ॥
विनादितं [2]वल्गुवाग्भिर्नानामृगगणा[3]युतम् ।
नि मृताः स्म मुनिश्रेष्ठ कान्ताराल्लोमहर्षणात् ॥१९॥
अनेनैवा[4]धिगच्छामि देशोऽयं [5]सुसुखोदयः ।
सुव्यक्तं चापि भवतः सिद्धाश्रमपदं वयम् ॥
सम्प्राप्ता यत्र तौ पापौ यज्ञ विघ्नकरौ तव ॥ २० ॥

इत्यादिकाण्डे जम्भकप्रदानम् ।

---

## XXXII

[1]अथ रामाय स मुनिस्तद्वनं परिपृच्छते ।
विश्वामित्रो महातेजा आख्यातुमुपचक्रमे ॥ १ ॥

---

1 For this and the following 3 Slokas B 17-23 वृक्षखण्डमितो भाति पर कौतुहल हि मे ॥ दर्शनीय मृगाकीर्णं मनोहरमतीव च । नानाप्रकारैः शकुनैर्वल्गुभाषैरलङ्कृत ॥ नि मृता स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् । अनयात्ववगच्छामि देशस्य सुखवत्तया ॥ सर्वमेतन्मम भगवन कस्याश्रमपदन्त्विद । सम्प्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ॥ तवयज्ञस्य विघ्नाय दुरात्मानो महामुने । भगवस्तस्य को देशः सा यत्र तव याज्ञिकी ॥ रक्षितव्या क्रिया ब्रह्मन् मया वध्याश्च राक्षसाः । एतत् सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यह प्रभो ॥ 2 P पक्षिवाग्भि॰ etc 3 G 19 न्वितम्, but P has युतम्. 4. G 20 वगच्छामि etc, but P has धिगच्छामि etc. 5 P सुसुखावहः
1 For this Sl B XXIX 1 अथ तस्याप्रमेयस्य वचन परिपृच्छतः । विश्वामित्रो महातेजा (a) व्याख्यातुमुपचक्रमे ॥ (a) S व्याहर्तुमुप etc G 1. अथ तस्याप्रमेयस्य etc Between this and the following Sl. of our text, B (2-3) reads the lines इह राम महाबाहो विष्णुर्देवनमस्कृतः । वर्षाणि (a) सुबहूनीह तथा युगशतानि च ॥ तपश्चरणयोगार्थमुवास सुमहातपाः । (a) S सुबहून्यत्र etc G (3)

एष पूर्वाश्रमो राम वामनस्य महात्मनः ।
सिद्धाश्रम इति ख्यातः सिद्धो [1]यत्र महायशाः ॥ २ ॥
[2]अभिभूयहि देवेन्द्रं पुरा वैरोचनिर्बलिः ।
त्रैलोक्यराज्यं बुभुजे बलोन्मादसमन्वितः ॥ ३ ॥
[3]ततो बलौ तदा यज्ञं यजमाने भयार्दिताः ।
इन्द्रादयः सुरगणा विष्णुमूचुरिहाश्रमे ॥ ४ ॥
[4]बलिर्वैरोचनिर्विष्णो यजतेऽसौ महाबलः ।
कामदः सर्वभूतानां महर्द्धिरसुराधिपः ॥ ५ ॥

---

reads, between Slokas 2 and 3 of our text, the lines विष्णुर्वामनरूपेण तप्यमानो महत्तप । त्रैलोक्यराज्येऽपहृते बलिने द्रस्य राघव ॥ 1 B 4 ह्यत्रमहातपाः । 2 For this Sl B 4 5 एतस्मिन्नेवकालेतु राजा वैरोचनि(a)र्बलि ॥ निर्जित्य दैवतगणान्सेन्द्रान्सरुमरुद्गणान् । कारयामास तद्राज्य त्रिषुलोकेषु(b)विश्रुतः ॥(a) S बली (b) S विश्रुत 3 For this Sl B 6 यज्ञ चकार सुमहा नसुरेंद्रो महाबलः । बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ॥ समागम्य स्वय चैव विष्णुमूचुरिहाश्रमे ॥ 4 For this, and the following 5 Slokas, B 7-18 बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमं । (a) असमाप्तव्रते तस्मिन् स्वकार्यमभिपद्यताम ॥ येचैनम भिवर्त्तते याचितार इतस्ततः । यच्च यत्र यथावच्चसर्वं तेभ्य' प्रयच्छति॥ सत्व सुरहितार्थाय म यायोगमुपाश्रितः । वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमं ॥ एतस्मिन्नतरे राम कश्यपोऽग्निसमप्रभः । अदित्यामहितो राम दीप्यमान इवौजसा ॥ देवीसहायो भगवान (b) दिव्य वर्षसहस्रक। व्रतं समाप्य वरद तुष्टाव मधुसूदनं ॥ तपोमय तपोराशिं तपोमूर्त्ति (c) तपात्मकं । तपसात्वा सुतप्तेन पश्यामि (d) पुरुषोत्तमं ॥ शरीरे तवपश्यामिजगत्सर्वमिद प्रभो । त्वमनादिरनिर्देश्यस्त्वामह शरण गत' ॥ तमुवाच हरिः प्रीत कश्यप धूतकल्मष । वरं वरय भद्रं ते वाराहोऽसि मतो मम ॥ तच्छ्रुत्वा वचनं तस्य मारीच कश्यपोऽब्रवीत् । अदित्या देवताना च मम चैवानु (e) याचितं ॥ वरं वरद सुप्रीतो दातुमर्हसि सुव्रत । पुत्रत्व गच्छ भगवन्नदित्या मम चानघ ॥ भ्राता भव यवीयास्त्व शक्रस्यासुरसूदन । शोकार्त्ताना तु देवाना साहाय्य कर्त्तुमर्हसि ॥ अय सिद्धाश्रमो नाम प्रसादात्ते भविष्यति । सिद्धेकर्मणि देवेश उत्तिष्ठ

तं त्वं वामनरूपेण गत्वा भिक्षितुमर्हसि ।
विक्रमांस्त्रीन् महाबाहो दाता हि नियतं सते ॥ ६ ॥
भिक्षितो विक्रमानेतां स्त्रीन् वीर्यबलदर्पितः ।
परिभूय जगन्नाथं तुभ्यं वामनरूपिणे ॥ ७ ॥
ये ह्येनमभियाचन्ते लिप्समानाः स्वमीप्सितम् ।
[1]तान् कामैरीप्सितान् सर्वान् योजयत्यसुरेश्वरः ॥८॥
स त्वं त्रैलोक्यराज्यं नो हृतं भूयो जगत्पते ।
दातुमर्हसि निर्जित्य विक्रमैर्भूरिभिस्त्रिभिः ॥ ९ ॥
अयं सिद्धाश्रमो नाम सिद्धकर्मा भविष्यति ।
तस्मिन् कर्म्मणि संसिद्धे तव सिद्धपराक्रम ॥ ११ ॥
[2]एवमुक्तः सुरैर्विष्णुर्वामनं रूपमा[3]श्रितः ।
वैरोचनिमुपागम्य त्रीनयाचत[4] विक्रमान् ॥ ११ ॥
लब्ध्वा च त्रीन्क्रमान् विष्णुः कृत्वा रूपमथाद्भुतम् ॥
[5]त्रिविक्रमैस्तथा लोकानाजहार त्रिविक्रमः ॥ १२ ॥
एकेन हि पदा कृत्स्नां पृथिवीं सोध्यतिष्ठत ।
द्वितीयेनाव्ययं व्योम[6]द्यां तृतीयेन राघव ॥ १३ ॥

भगवच्चित ॥ (a) S असमाप्ते &c , V असमाप्ते क्रतौ &c (b) V दिव्य &c (c) V तपोधन (d) V and S पुरुषोत्तमं (e) V याचितः 1 P ततकामैं &c 2 For this, and the following 3 Slokas, B 19-21 अथविष्णुर्महातेजा अदित्या समजायत । वामनरूपमास्थाय वैरोचनिमुपागमत् ॥ त्रीन् पदानथभिक्षित्वा प्रतिगृह्य च (a)मेदिनीं । आक्रम्य लोकान् लोकार्थी सर्वलोकहिते रत ॥ महेंद्राय पुन प्रादान्नियम्य बलिमोजसा । त्रैलोक्य समहातेजाश्चक्रे शक्रवश पुनः ॥ (a) V वामनः 3 G 12 स्थितः 4 P. सक्रमान् 5 G 13. त्रिभि क्रमैस्तदा &c , P त्रिभिः क्रमै. पदा &c 6 P तृतीयेन स्थिरालयम् ।

[1]तं च बद्धा बलिं विष्णुः पातालतल[2]वासिनम् ।
त्रैलोक्यराज्यमिन्द्राय ददावुद्धृत्य कण्टकम् ॥ १४ ॥
[3]तेनैष पूर्वाध्युषित आश्रमः पुण्यकर्मणा ।
मयापि भक्त्या तस्यैव वामनस्य निषेव्यते ॥ १५ ॥
[4]अत्र तौ राक्षसौ वीर यज्ञविघ्नकरौ मम ।
हन्तव्यौ स्वेन वीर्येण त्वया नरवरात्मज ॥ १६ ॥
[5]एतदेवाभिगच्छामः सिद्धाश्रमपदं वयम् ।
स्वमाश्रमपदं राम तवाप्येतद्यथा मम ॥ १७ ॥
[6]तं दृष्ट्वाभ्यागतं रामं सिद्धाश्रमनिवासिनः ।
प्रत्युद्गम्य महात्मानं विश्वामित्रमपूजयन् ॥ १८ ॥
[7]प्रविष्टाय ददुश्चास्मै पाद्यार्घ्यासनसत्क्रियाम् ।
रामलक्ष्मणयो श्चापि सत्क्रियां प्रददुर्द्विजाः ॥१९॥

---

1 G 15 तंचासुबलिकृत्वा &c but P has तंच बद्ध्वा &c 2 P मास्थितं 3 For this Sl B 22 तेनैव पूर्वमाक्रात आश्रम श्रमनाशन· । (a) मयापिभक्त्या तस्यैव वामनस्योपभुज्यते ॥ (a) V मया तु &c G 16 तंनैव &c 4 For this Sl. B 23 (a) एनमाश्रममायाति राक्षसा विघ्नकारिणः । अत्रते पुरुषव्याघ्र हतव्या दुष्ट- चारिणः ॥ (a) V एतम &c P तत्र तौ &c 5 For this Sl B 24-25 अद्यागच्छामहे राम सिद्धाश्रममनुत्तमम । तदाश्रमपद तात तवाप्येतद्यथा मम ॥ (a) इत्युक्त्वा परम प्रीतो गृह्य रामं सलक्ष्मणं । प्रविशन्नाश्रमपद व्यरोचत महा- मुनिः ॥ शशीव गतनीहार. पुनर्वसुसमन्वितः ॥ (a) This line is wanting in V. 6 For this Sl B 26 तदृष्ट्वा मुनय सर्वे सिद्धाश्रमनिवासिन । उत्पत्योत्पत्य- सहसा विश्वामित्रमपूजयन् ॥ G 19 तान् दृष्ट्वाभ्यागतान् दूरात् &c 7 For this Sl. B 27 यथार्हं चक्रिरे पूजा विश्वामित्रायधीमते । तथैव राजपुत्राभ्यामकुर्वं नतिथिक्रियाम ॥

[1]मुहूर्त मथ विश्रान्तौ [2]तावुभौ रामलक्ष्मणौ ।
तमूचतुर्मुनिवरं विश्वामित्रं कृताञ्जली ॥ २० ॥
अद्यैव दीक्षां प्रविश भद्रन्ते मुनिपुङ्गव ॥
सिद्धाश्रमोऽयं [3]सिद्धोऽस्तु संसिद्धे तव कर्मणि ॥ २१ ॥
[4]तयोरेतद्वचः श्रुत्वा विश्वामित्रो [5]महामनाः ।
[6]प्रविवेश तथेत्युक्त्वा दीक्षां तदहरेव [7]ताम् ॥ २२ ॥
[8]रामोऽपि तां तत्र निशा मुषित्वा सहलक्ष्मण ।
प्रभातकाले चोत्थाय विश्वामित्रमवन्दत ॥२३॥

आदि काण्डे सिद्धाश्रमनिवासः ।

---

## XXXIII

[1]तदा च देशकालज्ञोरामः सत्यपराक्रमः ॥
कालयुक्तमिदं वाक्य विश्वामित्रमुवाच ह ॥ १ ॥

---

1 For this Sl B. 28 मुहूर्त मथविश्रान्तो राजपुत्रावरिंदमौ । प्राञ्जलोमुनिशार्दूलमूचतू रघुनंदनौ ॥ 2 G. 21 ततस्तौ &c 3 B 29 सिद्धः स्यात सत्यमस्तु वचस्तव ॥ 4 For this Sl B 30. एवमुक्तो महातेजा विश्वामित्रो महानृषि. । प्रविवेश तदा दीक्षा नियतो नियतेंद्रियः ॥ 5 G 23 महामुनि , but P has महामना. 6 G, 23 आदिदेश &c 7 G 23 तु 8. For this Sl B 31 and 32 कुमाराविव ता रात्रिमुषित्वा सुसमाहितौ । प्रभातकाले चोत्थाय पूर्वां सध्यामुपास्य च ॥ प्रशुची परमं जाप्य समाप्यनियमेन च । हुताग्निहोत्रमासीन विश्वामित्रमवन्दताम् ॥ 1 For this Sl B XXX 1 अथतो देशकालज्ञो राजपुत्रावरिंदमौ । देशे काले च वाक्यज्ञावब्रूता कौशिकं वचः ॥ G 1 अथार्थदेश &c., but P has तदा च देश &c.

[1]भगवन् श्रोतुमिच्छामि कस्मिन् काले निशाचरौ ॥
मया तौ प्रतिषेद्धव्यौ यज्ञविघ्नकरौ तव ॥ २ ॥
[2]रामस्य तद्वचः श्रुत्वा विश्वामित्रादयस्तदा ॥
सर्वे ते मुनयः प्रीताः प्रशशंसु[3]रथाब्रुवन् ॥ ३ ॥
[4]अद्य प्रभृति राम त्वं षड्रात्रं रक्ष तत्परः ॥
[5]दीक्षां गतोह्येष मुनिर्मौनं सङ्कल्पयिष्यति ॥ ४ ॥
[6]तेषामेतद्वचः श्रुत्वा मुनीनां भावितात्मनाम् ।
उद्यम्य कार्मुकं तस्थौ रामस्तत्र सलक्ष्मणः ॥ ५ ॥
अनिद्र एव षड्रात्रं[7]संरक्षन् स मुनेः क्रतुम् ।
रक्षसागमनाकाङ्क्षी निश्चलः स्थाणुवत् स्थितः ॥६॥
[8]कालेऽथाभ्यागते तस्मिन् षष्ठेहनि महात्मनः ।
[9]स्थापयाञ्चक्रिरे वेदीं मुनयः संशितव्रताः ॥ ७ ॥

---

1 For this Sl B. 2 भगवञ्छ्रोतुमिच्छाव यस्मिन्काले निशाचरौ । संरक्षणीयौ तौ ब्रूहि नातिवर्त्तेत तत्क्षणं ॥ 2 For this Sl B 3 एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया । सर्वेते मुनयः प्रीता प्रशशंसुर्नृपात्मजौ ॥ P रामस्यैतद्वच &c 3. P र्यथाब्रुवन् 4 For this Sl B 4 अद्यप्रभृति षड्रात्र रक्षतां राघवौ युवा । दीक्षागतो ह्येषमुनिर्मौनित्व च गमिष्यति ॥ 5 P. दीक्षागतो &c 6 For this, and the following Sl B 5. and 6 तौतु तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ । (a) अनिद्रं षडहोरात्र तपोवनमरक्षतां ॥ उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ । ररक्षतुर्मुनिवरं विश्वामित्र(b)मरिंदमम् ॥ (a) V अनिद्रौ &c (b) V. and S मरिंदमौ 7 G 6 स संरक्षन् &c, but P. has संरक्षन् स &c. 8 For this Sl B 7. अथ काले गते तस्मिन् षष्ठेऽहनि (a) तथागते । सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥ (a) V समागते 9 P गोपायांचक्रिरे &c

[1]मन्त्राज्यवांश्चविधिवत् सयज्ञः[2]समपद्यत ।
प्रजज्वाल च सावेदी सोपाध्यायसमाहिता ॥ ८ ॥
[3]अथाकाशे समभवत् सहसैव महास्वनः ।
नीलाम्बुदस्य[4]गगने प्रावृषीवाभि[5]गर्जितः ॥ ९ ॥
[6]तथा मायां प्राकुर्वाणौ राक्षसावभ्यधावताम् ।
मारीचश्च सुबाहुश्च तयोरनुचरास्तथा ॥ १० ॥
[7]सतानापततो दृष्ट्वा रुधिरौघप्रवर्षिणः ।
उवाच लक्ष्मणं वाक्यं रामो राजीवलोचनः ॥ ११ ॥

---

1 For this Sl B 8 and 9 रामस्यैव ब्रुवाणस्य त्वरितस्य युयुत्सया प्रजज्वाल ततो (a) वेदि सोपाध्यायपुरोहिता ॥ सदर्भचमसस्रुक्कासमित्कुसुमोच्चया । विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥ (a) S वेदी &c P मंत्रानुत्राच विधिवत etc 2 G 8 समवर्तत, but P has समपद्यत 3 For this Sl B 10 मन्त्रवच्च यथान्याय यज्ञोऽसैा सप्रवर्ततो । (a)आकाशे च महाञ्छब्दः प्रादुरासीद्भयानकः ॥ (a) Before this line S has the additional line एवं प्रवर्त्तिते यज्ञे विश्वामित्रस्य धीमत । 4 P गमने &c. 5 G 9 गर्जतः, but P has गर्ज्जित. 6 For this Sl B 11 and 12 आवार्य गगन मेघो यथा प्रावृषि दृश्यते । तथा माया(a)विकुर्वाणैा राक्षसावभ्यधावता ॥ मारीचश्च सुबाहुश्च तयोरनुचरास्तथा । आगम्य भीमसङ्काशा रुधिरौघानवासृजन् ॥ (a) S प्रकुर्वाणा &c 7 For this Sl B 13 and 14 ता तेन रुधिरौघेन वेदीं वीक्ष्य समुक्षिता । सहसाभि(a)द्रुतो रामस्तानपश्यत्ततोदिवि ॥ तावापतंतैा सहसा दृष्ट्वा राजीवलोचनः । लक्ष्मणं त्वभिसम्प्रेक्ष्य रामोवचनमब्रवीत् ॥ (a) V. द्रुता &c.

[1]पश्य लक्ष्मण मारीचं महाशनिसमस्वनम् ।
सपदानुगमायान्तं सुबाहुं च निशाचरम् ॥ १२ ॥
एतावद्य मया पश्य नीलाञ्जनचयोपमौ ॥
अस्मिन् क्षणे समाधूतावनिलेनाम्बुदाविव ॥ १३ ॥
मानवास्त्रं ततो रामः प्रगृह्यास्त्रविशारदः ।
मारीचोरसि चिक्षेप नातिकोपसमन्वितः ॥ १४ ॥
[2]स तेन परमास्त्रेण मानवेन समाहतः ॥
सम्पूर्णं योजनशतं क्षिप्तो[3]वेगानिषेवितः ॥ १५ ॥
[4]स तेन शरवेगेन नीतः सागरमूर्द्धनि ।
पपाताचलशङ्काशो भीवेपथुसमन्वितः ॥ १६ ॥
[5]विचेतनं घूर्णमानं मानवास्त्रबलेरितम् ।
मारीचं पतितं दृष्ट्वा रामो लक्ष्मणमब्रवीत् ॥१७॥
[6]पश्य लक्ष्मण मारीचं[7]मानवास्त्रसमाहतम् ।
मोहयित्वानयद्दूरं न च प्राणैर्व्ययोजयत् ॥ १८ ॥

1. For this, and the following 2 Slokas, B 15-17 पश्य लक्ष्मण दुर्वृत्तान् राक्षसान पिशिताशनान् । मानवास्त्रसमाधूतान ननिलेन यथा घनान् ॥ करि॰ष्यामि न संदेहो नोत्सहे हन्तुमादृशान् । इत्युक्त्वा वचनं रामश्चापेसधाय वेगवान्। (a) मानत्र परमोदारमस्त्र परमभास्वर । चिक्षेप परमक्रुद्धो मारीचोरसि राघवः॥ (a) Before this Sl S reads 2 additional Slokas राघवौश्यामहेमाभौ ताव-पश्यत्तदादिवि । दृष्ट्वा तेजस्विनौ तौच अवधूतश्चतेजसा ॥ अवज्ञाय सतौविप्रान् प्रधर्षयितुमारभन् तमापतत रामस्तु प्रहसन् लीलया ततः otet These, however, were marked as interpolations by the late owner of the Ms 2. This Sl is wanting in G But P has it 3 B 18 सागरसप्लुवे 4 This Sl is wanting in B 5. For this Sl. B 19 विचेतनं विघूर्णतं शीतेषुबलपीडितं । निरस्त्रं दृश्य मारीच रामो लक्ष्मणमब्रवीत् ॥ P विचेतस &c 6 For this Sl B 20 पश्य लक्ष्मण शीतेषु मानवं मनुसंहित । मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ॥ 7. G 17.मानवेनसमाहतम् P. मानवास्त्रसमाहितं

[1]इमां स्त्वन्यान् हनिष्यामि सुबाहुप्रभृतीन् [2]रुषा ।
यज्ञघ्नान् राक्षसान् घोरान् रुधिरामिषभोजनान् ॥१९॥
[3]प्रगृह्यास्त्रमथोदिव्यमाग्नेयं रघुनन्दनः ॥
सुबाहूरसि चिक्षेप स विद्धो न्यपतद्भुवि ॥ २० ॥
अन्यान्यपि च वायव्यमस्त्रमादाय राघवः
निजघान सरक्षांसि मुनीनां वर्धयन्मुदम् ॥ २१ ०
[4]एवं हत्वा स रक्षांसि तत्र रामो महायशाः
समेत्य मुनिभिः सर्वैर्विश्वामित्रादिभिस्तदा ॥२२॥
पूजितोऽभिष्टुतश्चैव जयेन च सभाजितः ।
विस्मिताश्चाभवन् सर्वे मुनयो रामकर्मणा ॥२३॥
[5]तस्मिन् यज्ञे समाप्तेऽथ विश्वामित्रो महायशाः ॥
दृष्ट्वाश्रमं कृतक्षेमं काकुत्स्थमिदमब्रवीत् ॥ २४ ॥
[6]कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ॥
सिद्धाश्रमपदं चेदं भूयः सिद्धतरं कृतम् ॥ २५ ॥

आदिकाण्डे विश्वामित्र यज्ञः ॥

---

1. For this Sl B 21 इमानपि बधिष्यामि निघृणान्दुष्टाचारिणः । राक्षसान् पापकर्मस्थान् यज्ञघ्नान् रुधिराशनान् ॥ 2 P. क्रमात् 3 For this, and the following Sl B 22 and 23 इत्युक्त्वा लक्ष्मणं चाशु लाघव दर्शयन्निव । (a) विगृह्यसुमहच्चास्त्रमाग्नेयं रघुनदन । सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि । शेषान वायव्यमादाय निजघान महायशाः ॥ (b) राघवः परमोदारो मुनीनां मुदमावहन् ॥ (a) V सगृह्य &c (b) This line is wanting in V. 4. For this, and the following Sl B 24. (a) सहत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनंदनः ॥ ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ (a) This Sl is wanting in V. 5 For this Sl B 25 अथ यज्ञे समाप्ते तु विश्वा मित्रो महामुनिः । निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ॥ 6. For this Sl. B 26. कृतार्थोऽस्मि ..स्त्वया । सिद्धाश्रममिद सत्य कृतं वीर महायशः ॥ सहि रामं प्रशस्यैवं ताभ्या संध्यामुपागमत् ॥

त्यस्मरजसोरुपलक्षण तेनोपघातमहत्वे ताम्रादिषु तयोरव्यावृत्तिः कार्या यत्तु नारी स्त्री मनसा व्यभिचाररता रजोदर्शनेनैव शुध्यति "रजसा स्त्रीमनोदुष्टेति मानवात् । या च विकल प्रतिलोमजं न गच्छति सापि वक्ष्यमाणप्रायश्चित्तेन शुध्यति तद्गमने तु त्याग एव ।

चतस्रस्तु परित्याज्याः गुरुगा शिष्यगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

इतिवसिष्ठस्मरणात् । जुङ्गितः प्रतिलोमजः । ननु यजतिषु ये यजामह करोति नानुयाजेष्विति, अत्रानुयाजपर्युदासवद्विकलगामिनी-पर्युदासेन नार्या रजसा शुध्यभिधानादिदमेकमेव वाक्यमस्तु, निमित्तान्तर-परत्वे वाक्यभेदादिति चेन्नैवम् । प्रसक्त्यभावेन पर्युदासायोगात् । तथाहि यजतित्वेनानुयाजेष्वपि प्राप्ते ये यजामहेऽनुयाजव्यतिरिक्तेषु यजतिष्विति पर्युदासः सम्भवति न तथा प्रकृते रजसा नारी शुद्धः । नच मानसव्यभि-चारविषयिण्याः कायिकव्यभिचाररूपे विकलविषयेऽपि मानसव्यभिचा-रसत्वाद् रजसा शुद्धिः प्राप्नोतीति तदभावबोधनाय पर्युदास इति वाच्यम् । तत्र प्रायश्चित्तविशेषास्मरणाद् व्यभिचारे गमनपदाप्रयो-गाच्च । न च मनसा भर्तुरतिचारे त्रिरात्र यावक क्षीरोदनं च भुञ्जानाधः शयीत ऊर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात् पूता भवतीति विज्ञायत इति वासिष्ठ मनसा नीचगमनविषयमेवान्यत्र रजसैव शुद्धिरिति वाच्यम् । निवृत्तरजस्कादीनां मानसव्यभिचारे शुध्य-भावप्रसङ्गेन वासिष्ठस्य तद्विषयत्वावश्यम्भावादिति । तत्र द्रव्यशुद्धिप्र-स्तावे स्त्रीशुध्यभिधानस्यासङ्गतत्वात् ।

कलौ मानसपापानुत्पत्त्या तत्प्रायश्चित्ताभिधानस्य सुतरामसङ्ग-तत्वाच्च । तस्माद्यथोक्तमेव साधीयः । अथवा परपुरुषसमर्गे तु रजोद-र्शनेनैव शुध्यति प्रायश्चित्ताधिकारिणी भवति तदनन्तरमेव प्रायश्च-त्तास्नानात् । तथा च चतुर्विंशतिमते ।

रजसा शुध्यते नारी परपुंसाभिगामिनी ।
तथापि मुनिना प्रोक्तं प्रायश्चित्त समाचरेदिति ॥

नद्युपहतौ शुद्धिमाह ।

**नदी वेगेन शुध्येत लेपो यदि न दृश्यते ।**

शवाद्यमेध्योपहता नदी वेगेन जलप्रवाहेण शुध्यति यद्यमेध्य-लेपो न परिदृश्यते परिदृश्यमाने तु तस्मिन्तावन्मात्रं तीर्थं परित्यजेत् तदाह देवलः ।

अक्षोभ्यानि तटाकानि नदीवापीसरांसि च ।
कश्मलाशुचियुक्तानि तीर्थं तत्परिवर्जयेदिति ॥

नदीलक्षणं च स्मृत्यन्तरेऽभिहितम् ।

धनुःसहस्राण्यष्टौ तु गतिर्येषां न विद्यते ।
नैते नदीशब्दवहा गर्त्तास्ते परिकीर्तिताः ॥
आद्वादशतोऽल्पनदा उपनदो भवत्याचतुर्विंशात् ।
तदुत्तरं महानद्यः फलमेकद्वित्रिकमिह इति ॥

अक्षोभ्यानीति विशेषणादल्पतटाकादीनां सर्वथा परित्याग एव । तदाह देवलः ।

अक्षुद्राणामपां नास्ति प्रभूतानां च दूषणम् ।
स्तोकानामुद्धृतानां च कश्मलं दूषणं भवेदिति ॥

वाप्याद्युपहतौ शुद्धिमाह ।

**वापीकूपतडागेषु दूषितेषु कथञ्चन ॥**
**उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुध्यति ॥ ३ ॥**

वापीकूपतडागेषु कथचनोपानद्रक्तादिदूषितेषु कथञ्चन उद्धृत्य वै कुम्भशतं पञ्चगव्येन कथं स कुम्भानां शतं परिमाणमस्य तत्कुम्भशतं जलमुद्धृत्यावशिष्टं पञ्चगव्येन शुध्यति । तदाहतुः संवर्त्तापस्तम्बौ ।

वापीकूपतडागानां दूषितानां च शुद्धये ।
अपां घटशतोद्धारः पञ्चगव्येन शोधनम् ॥
उपानद्रक्तविण्मूत्रस्त्रीरजोमद्यदूषिते ।
जलाशये च कूपे च कुम्भानां शतमुद्धरेदिति ॥

शवतरणाद्युपहतौ हारीतोक्ता शुद्धिः कार्या ।
वापीकूपतडागेषु मानुषः शीर्यते यदि ॥
अस्थिचर्मविनिर्मुक्तैर्दूषितैश्च खरादिभिः ।
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम् ॥

विष्णुः ।

वन्हिप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्तत्र तत्तोयं च ततो द्विरेदिति ॥
बहु जले तु न दोषः । तदाह विष्णुः ।
जलाशयेषु स्वल्पेषु स्थावरेषु महीतले ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणमिति ॥

अनुपहतमिति । अनुपहतमपि गोतृप्तिकरमेव जलं शुचि नाल्पम् । तदाह मनुः ।

आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् ।
अव्याप्ता चेदमेध्येन गन्धवर्णरसान्विताः ॥ इति ।
नवोदके तु दशाहाच्छुद्धिमाह यमः ।
अजा गावो महिष्यश्च नार्यश्चैव प्रसूतिकाः ।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकमिति ॥

तदुभयमपि न साम्प्रतं "गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया नवोदके दशाहे चेति" कलिवर्ज्यस्मरणात् ।

इदानीं स्त्रीषु शुद्धिमाह ।

**अष्टवर्षा भवेद्गौरी नववर्षा तु रोहीणी ॥**
**दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ ४ ॥**

अष्टवर्षादिकालीनदानविधेः फलसाधनतया गौर्यादिनामव्यपदेशः ।

अत एव मरीचिः ।

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलामिति ॥

अत एकादशादशाद्दूर्ध्वं द्वादशे वर्षे इति व्याख्येयम् । दशवर्षादूर्ध्वं विवाहस्मरणात् । तथा चाश्वलायनः ।

ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा ।
गान्धारी स्यात्समुद्वाह्या चिरञ्जीवितुमिच्छति ॥
अत एव द्वादशवार्षिक्या वृषलीत्वमाह सवर्त्तः ।
अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली मता ॥ इति ।

यत्तु त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीमिति मानवं तद्रजोदर्शनाभावे तस्या अपि विवाह्यत्वप्रतिपादनार्थं प्राग्रजोदर्शनादिति स्मरणात् । अत एव गौतमः । कन्याप्रदानं प्रागृतोरिति । रजस्वला रजसः सम्भावितत्वादिति । अत एव गौतमः । प्रयच्छेन्नग्निकां कन्यामृतुकालभयादिहेति । अनेनाष्टवर्षादीनां गौर्यादिनामनिर्देष्टानां शुद्धिर्द्वादशवार्षिक्या वृषलीरजस्वलादिनामनिर्देशादशुद्धिरभिहिता भवति । तामेवाशुद्धिं दर्शयितुमदातुर्निन्दामाह ।

**प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ॥**
**मासि मासि रजस्तस्याः पिबन्ति पितरोऽनिशम् ॥५॥**

यो द्वादशवार्षिकीमपि कन्यामागताय सगुणाय निर्गुणाय वा वराय न ददाति तस्या मासिमासि सम्भूतं रजो ऽदातुः पितरो निरन्तरं पिबन्ति । अत एव बौधायनः ।

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥ इति ।

यत्तु ।

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ॥
नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ।

इति मानवम् ।

तत्सगुणावश्यकताबोधनाय न निर्गुणनिषेधायेति च ध्येयम् ।

किञ्च ।

**माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ॥**
**त्रयस्ते नरकं यान्ति दृत्वा कन्यां रजस्वलाम् ॥ ६ ॥**

मात्रादिपरिगणेन यो यदा कन्यादानाधिकारी तदा तस्य प्रत्यवाय इत्युच्यते तत्रयाणामेवेति । अत एव याज्ञवल्क्यः ।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्य त्वभावे दातॄणा कन्या कुर्यात्स्वयंवरमिति ॥
अदातारं निन्दित्वा वोढारमपि निन्दति ।

**यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ॥**
**असंभाष्योऽपांक्तेयश्च स विप्रो वृषलीपतिः ॥ ७ ॥**

यो ब्राह्मणो मदेन कामातिशयेनाक्रान्तचित्तस्तां रजस्वला कन्यां समुद्वहति स वृषल्या रजस्वलाकन्यायाः पतिरिति हेतोरसम्भाष्योऽपाङ्क्तेयश्च भवति

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥

इति मनुस्मरणात् ।

कथ चिदतिक्रान्तनिषेधस्य वोढुस्सकृदपि तद्गमने प्रायश्चित्तमाह

**यः करोत्येकरात्रेण वृषलीसेवनं द्विजः ॥**
**स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति ॥ ८ ॥**

उक्तलक्षणया वृषल्या एकरात्रमपि गमने वर्षत्रय यावद्भैक्ष्य भुक्त्वा गायत्रीं नित्यं जपन् शुध्यति । यद्यपि जपे मन्त्रविशेषो न श्रुतस्तथापि

यत्र यत्र च सङ्कीर्णमात्मान मन्यते द्विजः ।
तत्र तत्र तिलैर्होमैर्गायत्र्या वाचन तथा ॥

इति याज्ञवल्क्यपरिभाषयात्रापि सैव ग्राह्येति ।

रात्रौ चण्डालादिस्पर्शे शुद्धिमुपदिदिक्षुराह ।

**अस्तङ्गते यदा सूर्ये चाण्डालपतितं स्त्रियम् ॥**
**सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥ ९ ॥**

जातवेदःसुवर्णं च सोममार्गं विलोक्य च ॥
ब्राह्मणानुमतश्चैव स्नानं कृत्वा विशुध्यति ॥ १० ॥

सूर्यास्तानन्तर चण्डालपतितसूतिकाश्चकाराद्रजस्वला च यः स्पृशति स जातवेदाश्च सुवर्णं च जातवेदःसुवर्णं सोममार्गं च विलोक्य ब्राह्मणानुमतस्सचैल स्नात्वा शुध्यति। अत्राय क्रमः शुक्लपक्षे सति सम्भवे सोम तदभावेऽग्नि तस्याप्यभावे सुवर्णं तस्याप्यभावे सोममार्गं विलोकयेदिति। कृष्णपक्षे यदा सोमो न दृश्यते तदा सोममार्गं विलोकयेदिति।

कृष्णपक्षे यदा सोमो न दृश्येत कदाचन।
या दिश व्रजते सोमस्ता दिश चावलोकयेत्॥
इतिवचनेन सोमाभाव एव प्रत्याम्नायाम्नानात्।
रजस्वलयोर्ब्राह्मण्योरन्योन्यस्पर्शे शुद्धिमाह।

स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मण्या ब्राह्मणी तथा ॥
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति ॥ ११ ॥

रजस्वलयोर्ब्राह्मण्योरन्योन्यस्यस्पर्शे सति यावत्स्नानमुपवासश्चति त्रिरात्रोपवासश्च प्रथमदिनस्पर्शे, तृतीयदिनस्पर्शे तु काश्यपोक्तम्।

रजस्वला तु सम्पृष्टा ब्राह्मण्या यदि कामतः।
एकरात्र निराहारा पञ्चगव्येन शुध्यति॥

इतिद्रष्टव्यम्। सगोत्रयोश्च सद्यः स्नानमेव तथा च वृद्धवसिष्ठः।

स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे चैकभर्तृके।
कामादकामतो वापि सद्यः स्नानेन शुध्यति॥

इति।

ब्राह्मणीक्षत्रिययोः शुद्धिमाह।

स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा।
अर्द्धकृच्छ्रं चरेत्पूर्वा पादमेकं त्वनन्तरा ॥ १२ ॥

रजस्वलयोर्ब्राह्मणीक्षत्रिययोरन्योन्यस्पर्शे ब्राह्मण्याः कृच्छ्रार्द्धं क्षत्रियायाः पादकृच्छ्रं यावत्स्नानमुपवासो वर्तत एव स्नानानन्तरं चेद प्रायश्चित्त कार्यं शुद्धेरङ्गत्वात्।

ब्राह्मणीवैश्ययोः शुद्धिमाह ।

**स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यया तथा ।**
**पादहीनं चरेत्पूर्वा पादमेकमनन्तरा ॥ १३ ॥**

रजस्वलयोर्ब्राह्मणीवैश्ययोरन्योन्यस्पर्शे ब्राह्मण्याः पादहीन कृच्छ्र-प्रायश्चित्तं वैश्यायाः पादकृच्छ्रं प्रायश्चित्तम् ।

ब्राह्मणीशूद्रयोः शुद्धिमाह ।

**स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रया तथा ।**
**कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुध्यति ॥ १४ ॥**

रजस्वलयोर्ब्राह्मणीशूद्रयोरन्योन्यस्पर्शे प्रायश्चित्तमिदम् । क्षत्रियादिषु त्वेयम् । तदाह वसिष्ठः ।

स्पृष्ट्वा रजस्वलान्योन्य क्षत्रिया शूद्रयापि च ।
उपवासैः स्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योन्य वैश्या शूद्रा तथैव च ।
त्रिरात्राच्छुध्यते पूर्वा उत्तरा तु दिनत्रयात ॥

एतच्च सर्वं कामतः स्पर्शे विधिरेष सनातन इति वृद्धवसिष्ठस्मरणात् । अकामतस्तु विष्णूक्तम् । रजस्वला हीनवर्णा रजस्वला स्पृष्ट्वा सद्यः स्नात्वा शुध्यतीति । कामतः चण्डालादिस्पर्शे वृद्धवसिष्ठ आह

चण्डालान्त्यश्वपाकेन सस्पृष्टा चेद्रजस्वला ।
नात्यहानि व्यतिक्रम्य प्रायश्चित्त समाचरेत् ॥
प्रथमेऽन्हि त्रिरात्र स्यात् द्वितीये द्व्यहमेव तु ।
अहोरात्र त्रितीयेऽन्हि परतो नक्तमाचरेत् ॥
व्यतिक्रम्योपोष्य । अकामतो बौधायन आह ।
रजस्वला तु सस्पृष्टा चण्डालान्त्यश्ववायसैः ॥
तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यतीति ।
भोजनकाले स्पर्शे तु स एवाह ।
रजस्वला तु भुञ्जाना चान्त्यजादीनूपस्पृशेत् ।
गोमूत्रयावकाहारा गोमूत्रेण विशुध्यति ॥
अशक्तौ काञ्चन दद्याद्विप्रेभ्योऽपि हि भोजनमिति ।

उच्छिष्टस्पर्श त्वाहात्रिः ।

उच्छिष्टोच्छिष्टमस्पृष्ट्वा कदाचित् स्त्रीरजस्वला ।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानैरुपोषितैः ॥

क्षत्रियावैश्ययोः पादादूनकृच्छ्रौ वेदितव्यौ । तत्रैव चण्डालादि दर्शनेऽपि उक्तम् ।

रजस्वला तु भुञ्जाना चण्डालं यदि पश्यति ।
उपवासं ततः कृत्वा प्राजापत्यं तु कामतः ॥
उदक्या यदि वा भुक्तौ दृष्ट्वान्या तु रजस्वलाम् ।
आस्नातकाम नाश्नीयाद्ब्रह्मकूर्चं ततः पिबेदिति ॥
शवादिस्पर्शपूर्वकभोजने चात्रिशातातपौ ।
आर्तवाभिप्लुता नारी स्पृशेच्चेच्छ्वसूतकम् ।
ऊर्ध्वं त्रिरात्रात्स्नातां तां त्रिरात्रमुपवासयेत् ॥
आर्तवाभिप्लुता नारी मृतसूतकयोः स्पृशेत् ।
भुक्त्वा पीत्वा चरेत्कृच्छ्रं स्पृष्ट्वा तु त्र्यहमेव त्विति ॥
बन्धुमरणग्रहणादिनिमित्ते स्नाने तु प्रकारविशेषमाह व्यासः
स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथं चन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वस्त्रं च धारयेदिति ॥

इदानीं रजोनिमित्तां शुद्धिमाह ।

**स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति ।**
**कुर्याद्रजोनिवृत्तौ तु देवपित्रादिकर्म च ॥ १८ ॥**

रजस्वला स्त्री रजोदर्शनदिनादारभ्य त्रिरात्रमशुचिः चतुर्थेऽहनि प्रभाते षष्ठिवारं मृत्तिकाभिः शौचं कृत्वा दन्तधावनपूर्वकं प्रातःस्नानं यथाविधि । सगवे वा मृदद्भिश्च शौचं कृत्वा-रजस्वलाशुध्यति रजसो निवृत्तौ च दैवपित्र्यपाकादिकर्मसु युज्यते । अनेन यावद्रजोनिवृत्ति दैवादिकर्मयोग्यत्वं नास्तीत्युक्तं भवति । रजोऽनिवृत्तौ तु पंचमदिन एव शुध्यति तदाहापस्तम्बः ।

शुद्धा भर्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवकर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यतीति ॥

आरब्धदीर्घव्रता तु रजस्वलापि तदनुतिष्ठेदेव । तदाह जातूकर्ण्यः ।

आरब्धदीर्घतपसा नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कथञ्चन ।
स्वभाव एव नारीणां ज्ञेयो मूत्रपुरीषवत् ।
अतोऽर्थाच्च प्रदुष्येयू रजसा तपसि स्थिता ॥

रजसो विशेषेणाशुद्धेरपवादमाह ।

**रोगेण यद्रजःस्त्रीणामन्वहं तु प्रवर्तते ॥**
**नाशुचिः सा ततस्तेन तत्स्याद्वैकालिकं मलम् ।१६।**

रोगेण धातुवैषम्येन यद्रजोऽन्वहं निरंतरं प्रवर्तते । तुशब्दाद्रागेण-द्रव्येण च कादाचित्कमपि तेन रजसा सा स्त्री ततो हेतोर्नाशुचिर्भवति यतस्तद्वैकालिकं विकाले विरुद्धकाले भवं मलमेव नित्यस्तदेवाशुद्धिहेतु-रिति । तदाह बृहस्पतिः ।

रागजं रोगजं चैव द्रव्यजं कालजं तथा ।
यद्रागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः ।
कालजं तु रजःसत्रं तस्मात् तेनैव साऽशुचिः ।
आर्वाक् प्रसूतेरत्यन्तं मेध्यो वृष्यांगनासु यत् ।
तद्रागजमिति प्रोक्तं प्रजोद्भेदसमुद्भवम् ।
पित्तादिदोषवैशम्यात्सकृत्तत्सप्रवर्तते ।
रोगजं तत् समुद्दिष्टमथद्रव्यजमुच्यते ।
भक्ष्यद्रव्यस्य वैषम्याद्धातुवैषम्यसंभवम् ।
द्रव्यजं रजं इत्युक्तं तत्कादाचित्कसंभवम् ।
आरभ्य चार्तवदिनादेकविंशतिवासरान् ।
मासार्द्धेऽथ रजो यस्याः स्तत्कालजमुदाहृतम् ।
रजस्वला यदा स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ।
एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ॥

विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचित्वापवादो गतयौवनायाः ।
ऋतुस्नाता तु याप्रौढा पुनरेव रजस्वला ।
स्नानात्सप्तदशाहे तु शौचेनैव शुचिर्भवेत् ।
अष्टादशाहे त्वेकाहं द्व्यहमेकोनविंशतौ ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेद् ॥

इति कश्यपस्मरणात् ।

अप्रौढा गतयौवना । वक्ष्यति चैतन्मूलकारोऽपि द्वादशे अष्टदशदिनादर्वागिति । युवत्यास्तु विशेषमाह कश्यप एव ।

त्रयोदशदिनादूर्ध्वं रजो दृष्टवती यदा ।
अष्टादशाहात्प्राग्वापि युवत्या स्यात् त्रिरात्रकम् ।
एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिनोदितमिति ।

एतेन गर्भिण्या अपि प्राक् प्रसवाद्रजोदर्शने कालरजोवद्दिनत्रयमेवाशौचमिति निरस्तम् । बृहस्पतिवचनविरोधात् । मूलोक्तहेतुविरोधाच्च द्रव्यजे विशेषमाहाङ्गिरा ।

आद्वादशाहं नारीणां मूत्रवच्छौचमिष्यते ।
अष्टादशाहात्स्नानं स्यात्त्रिरात्रं परतोऽशुचिः ।
एतत्तु द्रव्यजे विद्याद्रोगजे पूर्वमीरितमिति ।
रोगजेऽपि विशेषमाह ऋष्यशृङ्गः ।
रोगजे वर्तमानेऽपि काले निर्यातकालजम् ।
तस्मात्काले प्रमत्ता स्यादन्यथा सकरी भवेदिति ।
सूतिकाया विशेषमाह प्रजापतिः ।
प्रसूतिका तु या नारी स्नानतो विंशतेः परम् ।
आर्तवा रजसा प्रोक्ता प्राक् नैमित्तिकं रजः ।
ननु नैमित्तिके न स्यात् रजसा स्त्रीरजस्वला ।
रजस्युपरते तस्याः स्नानेनैव शुचिर्भवेत् ।
अन्यत्र गर्भविश्लेषात्पतनाद्वा रजस्वला ।
गर्भस्रावेऽपि सा स्नानाद्विंशतेः परतोऽशुचिः ।

गर्भस्य पतने चैवं स्नानं स्यात्तु लयेदधः ।
रजसो ज्ञानाज्ञानसंदेहेषु निर्णयमाह स एव
अविज्ञाते मने सा चेन्मलवद्वसना यदि ।
छूते गेहेषु जुष्टं स्याच्छुद्धिस्तस्या स्त्रिरात्रतः ॥
निःसन्दिग्धे परिज्ञाते आर्तवे शुद्धिकारणम् ।
सन्देहमात्रे स्नानं स्यादित्युवाच प्रजापतिरिति ।
रजःकालनिर्णयमाह कात्यायनः ।
रात्रौ तृतीयभागात्प्राग् यदि नारी रजस्वला ।
पूर्वेण स्नानतः शुध्येदूर्ध्वं चेदुत्तरेण त्विति ॥
भागद्वये पूर्वदिनं तृतीयभागे परदिनमित्यर्थः ।
उक्तस्याशौचापवादस्य विषयविशेषं परिशेषयितुमाह ।

**साध्व्याचारा न तावत्स्याद्रजो यावत्प्रवर्तते ।**
**रजोनिवृत्तौ रम्या स्याद् गृहकर्मणि चैव हि ॥ १७ ॥**

रागरोगद्रव्यैर्निमित्तैर्यावद्रजोऽनुवर्तते तावत् स्त्री साध्व्याचारा साधु दैवापि आदिराचारो यस्याः सा साध्व्याचारा दैवपित्र्यादिकर्मयोग्या न भवति । तोतऊर्ध्वमपि राजसि निवृत्त एव पुरुषगमनार्हा भवति गृहकर्मणि नित्यपाकादौ च योग्या भवति एतेन दैवपित्र्यपुरुषोपभोगगृहपाकादिव्यतिरिक्तेषु कार्येषु शुद्धिरिति पूर्ववाक्यस्य विषयो दर्शित इति ।

यदुक्तं चतुर्थेऽहनि शुध्यतीति तत्राद्ये दिनत्रये शुध्यभावमाह ।

**प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥**
**तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ १८ ।**

रजस्वला त्रिरात्रमशुचिरित्येतावतैवार्थसिद्धौ चण्डालादिनामभिर्व्यवहारस्तत्तद्दिनेषु रजस्वला सम्पर्के चण्डालादिसंपर्कोक्तशुद्धिप्राप्त्यर्थः । तथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यग्निहोत्रनामनिर्देशो नित्याग्निहोत्रधर्मातिदेशार्थ इति सा च शुद्धिः पूर्वाध्याये रजकी चर्मकारी चेत्यादिनोपवर्णिता । यत्तु चण्डालादिगमनप्रत्यवायप्राप्त्यर्थस्तन्नामनिर्देश इति । तन्न प्रायश्चित्तवैलक्षण्यात् तथाहि त्रिरात्रान्ते घृतं प्राश्य गत्वो-

दक्ष्या विशुध्यतीत्यादिगमनप्रायश्चित्तं तु चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छतीत्यादिविलक्षणमेव तस्माद्यथोक्तमेव साधीय इति। रजस्वला चतुर्थेऽह्नि स्नाता शुध्यतीत्युक्तम्। तत्र ज्वराद्यभिभूतायाः स्नानाशक्तौ कथमित्यत आह।

**आतुरे स्नान उत्पन्ने दशकृत्वोह्यनातुरः।**
**स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुरः॥१६॥**

रजस्वलासाचिव्यादभिहिता अप्यस्याः शुद्धिः सर्वसाधारण्यबोधनायातुरशब्देनोपादानं तस्मिन् रजस्वलासूतिकादीनां नियतनैमित्तिके स्नाने प्राप्ते ऽन्योऽनातुरो दशवारं द्वादशवारं स्नात्वा स्नात्वा स्पृशेत्प्रतिस्नानं वातुरस्य वासो विपरिवर्तयेत्ततो यथा शक्ति दानं दत्वा स आतुरः शुध्यतीति। तदाहोशनाः।

**ज्वराभिभूता या नारी रजसा च परिप्लुता।**
**कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा॥**

चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम्।
सा सचैलावगाह्यापः स्नात्वा चैव पुनः स्पृशेत्।
दशद्वादशकृत्वो वा आचमेच्च पुनः पुनः।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति।
अङ्गिरा अपि।
आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः।
स्पृष्ट्वास्पृष्ट्वा वगाहेत स विशुध्येत आतुरः।
वासोभिर्दशभिश्चैव परिधाय यथा क्रमम्।
दद्यात्तु शक्तितो दानं पुण्याहेन विशुध्यतीति।
रजस्वलायाः सहगमनविधिस्तु स्मृत्यन्तरेऽभिहितः।
यदा म्रियेतामुदक्यायातः प्राणान् परित्यजेत्।
द्रोणमेकं तण्डुलानामवहन्याद्विशुध्यये।
मुसलाभिघातैस्तदसृक् स्रवते योनिमण्डलात्।
विरजस्कामन्यमाना स्वे चित्ते तदसृक्क्षयम्।

दृष्ट्वा शौच प्रकुर्वीत पञ्चमृत्तिकया पृथक् ।
त्रिंशद्विशद्दशपञ्चगवा दत्वा त्र्यह : क्रमात् ।
विप्राणा वचन लब्ध्वाममारोहेद्धुताशनम् ।
नारीणा सरजस्कानामिय शुद्धिरुदाहृतेति ।
रजस्वलादाहेऽपि विशेषस्तत्रैव ।
पञ्चभि स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरवृता कृत्वा दाहयेद्विधिपूर्वकम् ॥ इति ।
तत्र प्रायश्चितमुक्तम् धर्मप्रदीपे ।
कारयेयुः स्त्रियः स्नानमुदक्यासु तथैव च
तस्याः पापविशुध्यर्थं कृच्छ्रान् पञ्चदशाचरेदिति ।
सूतिकादाहेऽविशेषमाह प्रजापतिः ।
उदक्या सूतिका वापि मृता स्याद्यदि सा तदा ।
अशौचेत्वनतिक्रान्ते दाहयेदन्तरा यदि ।
उद्धृतेन तु तो येन स्वापयित्वा तु मन्त्रतः
आपोहिष्ठेतितिसृभिः हिरण्यवर्णाचतसृभिः ।
पवमानानुवाकेन यदन्तीति च सप्तभिः ।
ततोयज्ञपवित्रेण मार्जयेदथ च द्विजः ।

स्नापयित्वान्यवासेनाच्छाद्य शवधर्मतः ।
दाहादिकं ततः कुर्यात्प्रजापतिवचो यथेति ॥
अत्र प्रतित्र्यहं प्रायश्चित्तमाह व्यासः ।
सूतिका तु यदा साध्वी विख्यातामरणं गता ॥
त्रिवर्षपूर्तिपर्यन्त शुध्येत्कृच्छ्रेण सर्वदा ।
सूतिका तु यदा नारी रजसैव परिप्लुता ॥
म्रियते वै तदा सा तु द्विवर्षं कृच्छ्रमाचरेत् ।
सूतिका तु यदा साध्वी विख्याता मरण गता ॥
अब्दकृच्छ्रेण शुध्येत व्यासस्य वचन यथेति ।
अशक्तौ पक्षान्तरमाह स एव
त्रिषण्णवदिनादर्वागेकाब्देन विशुध्यतीति ।
दशाहानन्तरं मासाभ्यन्तरे तु विशेषमाह ।
सूतिका तु यदा नारी प्राणाश्चैव परित्यजेत् ।

मासमेकोऽवधिर्यावत्त्रिभिः कृच्छ्रैर्विशुध्यतीति ॥

अत्र सा तु द्विवर्णकृच्छ्रमाचरेदिति सूतिकायाः कर्त्तव्यताश्रवणेऽपि विप्रतिषेधात्तस्याः पापविशुध्यर्थं कृच्छ्रान्यवदशाचरेदिति लिङ्गाच्च क्रियाकर्तुरेव प्रायश्चित्तकर्तृत्वं ज्ञेयम् ।

उच्छिष्टस्य द्विजस्योष्ट्रादिस्पर्शे शुद्धिमाह ।

**उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण यः पुनः ॥**
**उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ २० ॥**

उच्छिष्टश्चासावुच्छिष्टसंस्पृष्टश्च स्वयमुच्छिष्ट एवान्योच्छिष्टेन सस्पृष्ट इति यावत् समस्तमप्युच्छिष्टपद बुध्या विच्छिद्य शूद्रादिपदेन मबन्धनीय तेनोच्छिष्टो द्विजोऽन्येनोच्छिष्टेन द्विजेन शुना शूद्रेण वा सस्पृष्टश्चेदेकाहमुपोष्य परेऽहनि पञ्चगव्येन शुध्यतीति ।

यत्तु रजनीपदमहिम्ना रात्रिभोजनमात्रस्यैव परित्याग इति । तच्च उपवासपदस्य भोजनद्वयपरित्यागे रूढत्वेन रात्रिपदस्योऽहोरात्रपरत्वावश्यम्भावात् । उपवासाशक्तस्य दशवार गायत्रीजपमाहात्रिः ।

उच्छिष्टोच्छिष्टसस्पृष्टो ब्राह्मणो ब्राह्मणेन वा ।
दशरूपं जपेत्पश्चाद्गायत्र्याः शोधनं भवेदिति ॥
अनेकश्वस्पर्शे विशेषमाह सवर्तः ।
कृतमूत्रपुरीषो वा भुक्तोच्छिष्टो ऽथ वा द्विजः
श्वभिः स्पर्शे जपेद्देव्याः सहस्र स्नानपूर्वकमिति ॥

उच्छिष्टानुच्छिष्टयोर्द्विजयोरुच्छिष्टानुच्छिष्टशूद्रस्पर्शे शुद्धिमाह ।

**अनुच्छिष्टेन शूद्रेण स्पर्शे स्नानं विधीयते ॥**
**तेनोच्छिष्टेन संस्पृष्टः प्राजापत्यं समाचरेत् ॥२१॥**

अनुच्छिष्टस्य द्विजस्यानुच्छिष्टशूद्रस्पर्शे स्नानमुच्छिष्टशूद्रस्पर्शे स्नानमुच्छिष्टस्योच्छिष्टशूद्रस्पर्शे प्राजापत्य विहितम् । यद्यपि द्विजविशेषणमुच्छिष्टत्वादि न श्रूयते तथाप्युच्छिष्टशूद्रस्पर्शे पंचगव्योपवासविधानात्स्नानमनुच्छिष्टविषयं कृच्छ्रं चोच्छिष्टविषयं पर्यवस्यति ।

यदुक्तं भस्मना शुध्यते कांस्यमिति तत्र विशेषमाह ।

**भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ॥**
**सुरापात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेपनैः ॥ २२ ॥**

यत्कांस्यं सुरामूत्रपुरीषैर्नोपहन्यते तस्योक्ता भस्मनैव शुद्धिर्भवति । सुरायामतिसादृश्य तत्सुराया यस्य तत्सुरा मात्र मूत्रपुरीषादि । अज्ञानात्तु सुरा प्राश्य रेतो विण्मूत्रमेव चेति साम्याभिधानात् ।

तेन सुरामूत्रपुरीषेणोपहत तदग्नितापनोपलेपनाद्घर्षणतक्षणैः शुध्यतीति । तथाच स्मृत्यन्तरम् ।

भस्मना शुध्यते कांस्य सुरया यन्न लिप्यते ।
सुरामूत्रपुरीषैस्तु शुध्यतेऽग्न्युपलेखनैः ॥
आमिषेण सुधाल्लिप्त पुनर्दाहेन शुध्यतीति ।

किञ्च ।

**गवा घ्रातानि कांस्यानि श्वकाकोपहतानि च ॥**
**शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च ॥२३॥**

गोश्वकाकशूद्रैर्घ्रातानि श्वकाकोपहतानि च भुक्तोच्छिष्टानि कांस्यानि दशवारमावर्तितैः क्षारैर्भस्मभिः शुध्यन्ति । तदाह शातातपः ।

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिश्वकाकोपहतेषु चेति ॥

किञ्च ।

**गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ॥**
**षण्मासान् भुवि निक्षिप्य उधृत्य पुनराहरेत् ॥ २४ ॥**

मुखपादक्षालनजलाभ्यामुपहत कांस्य मासषट्कं भूमौ निक्षिप्य पुनरुद्धर्षणेन तदाकारं कुर्यात् । तदाहाङ्गिराः ।

गण्डूषं पादशौचं च कृत्वा वै कांस्यभाजने ।
षण्मासं भुवि निःक्षिप्य पुनराकारमादिशेदिति ॥

आयसादिशुद्धिमाह ।

**आयसेष्वायसानां च सीसस्याग्नौ विशोधनम् ॥**

आयसानां पात्राणामयोमयेषु घर्षणसाधनेषु घर्षणं विशोधनम् ।

आयसयहणमश्मनोऽप्युपलक्षणं तयायसाना तापेन अश्मघर्षणेन चेति मार्कण्डेयस्मरणात् ।

सीसपात्रस्य निर्लेपस्याद्भिर्विशोधन सूतिकाद्युपहतस्याग्नौ प्रक्षेपः । तथाच ब्रह्मपुराणम् ।

कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च ।
निर्लेपान्येव शुध्यन्ति केवलेन जलेन च ॥
सूतिकाशवविण्मूत्ररजस्वलाहतानि च ।
प्रक्षिप्तव्यानि चैतान्यग्नौ द्रव्य मलापहे ॥ इति ।

गजदन्तादीना शुद्धिमाह ।

**दन्तमस्थि तथा शृंगं रौप्यं सौवर्णभाजनम् ॥२५॥**
**मणिपात्राणि शंखश्चेत्येते प्रक्षालयेज्जलैः ॥**
**पाषाणे तु पुनर्घर्षः शुद्धिमेषामुदाहृता ॥ २६ ॥**

दन्तो गजदन्तस्तन्मयमस्थि गजादीनामेव तन्निर्मितं शृङ्गं खड्गमहिषादिशृङ्गनिर्मितं रौप्य राजतमय च यद्भाजनं मणिपात्राणि स्फटिकमरकतादिनिर्मितानि शङ्खश्चकाराच्छुक्तिश्चेत्येतानि निर्लेपानि जलैः प्रक्षालनीयानि सलेपानि पाषाणघर्षणेन शोधनीयानि । तथा च मनुः ।

निर्लेप काञ्चन भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममय चैव राजत चानुपस्कृतम् ॥

शातातपः ।

सुवर्णं रजतं ताम्रं त्रपुकृष्णायसं तथा ।
रीतिका सीसलोहानि शुध्यन्त्येतेऽश्मघर्षणाद् ॥ इति ॥

अश्मघर्षणेन लेपापनयनात्सलेपविषयमिदमर्थात्सिध्यति यत्तु तक्षणं दारुशृङ्गास्थ्नामिति तदश्मघर्षणापनयनेयलेपविषयमिति ।

मृन्मयादिशुद्धिमाह ।

**मृन्मयोदहनाच्छुद्धिर्धान्यानां मार्जनादपि ॥ २७ ॥**

शक्त्या चन्द्रत्वसूर्यत्वप्रकारकबोधस्तत्र शक्यतावच्छेदकत्वं व्यासज्यवृत्ति तथात्रापि लक्ष्यतावच्छेदकत्वं व्यासज्यवृत्ति । यथा वा तत्र केवलचन्द्रत्वादिप्रकारकबोधो न लक्षणया तथात्रापि केवलक्षत्रित्वप्रकारकबोधो न लक्षणया किन्तु शक्त्येति । काकपदं तु दध्युपघातके काकविडालादौ लाक्षणिकमिति । यत्तु जहदजहत्स्वार्था तु यत्र विशिष्टवाचकपदमेकदेशं परित्यज्य परदेशे वर्त्तते तत्रैव यथा तत्त्वमसीत्यादौ तत्र हि तत्पदवाच्यस्य सार्वज्ञादिविशिष्टस्य त्वंपदवाच्येनान्तःकरणविशिष्टेनैक्यासम्भवात्तत्रैक्यार्थं स्वरूपे लक्षणा तथा च तत्पदत्वंपदयोर्विशेष्ये ब्रह्मणि लक्षणेत्याहुस्तत्र शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्पदार्थत्वंपदार्थयोरन्वयबोधे क्षतिविरहात्। अयं भावः। घटो नित्य इत्यत्र योग्यतावलान्नित्यत्वान्वयो घटत्वे न तु घटे तत्त्वमसीत्यत्र योग्यतावलादभेदान्वयश्चैतन्ये न तु विशिष्टे इति । वस्तुतस्तु शक्यांशे किञ्चित्परित्यागे सत्यशक्यपुरस्कारे जहदजहल्लक्षणा उदाहरणं तु निरुक्तं काकेभ्यो दधिरक्षतामित्यादिकमेव तत्र शक्यस्य काकत्वस्य परित्यागस्य पुनरशक्यस्य दध्युपघातकविडालादेः पुरस्कारस्य सत्त्वात् । तर्ह्यजहत्स्वार्थापरिलोपापत्तिरितिचेत् जहदजहत्स्वार्थास्थलेप्यजहत्स्वार्थायाः सत्त्वात् यष्टीः प्रवेशयेत्यत्राजहत्स्वार्थाया एव वक्तुं शक्यत्वाच्च तत्र हि यष्टिपदं यष्टिधरे लाक्षणिकं भोजनतात्पर्येण यष्टिधरप्रवेशस्यैवौचित्यात्। एवमनादिप्रयोगानुसारिणी लक्षणा निरूढलक्षणा साप्यजहत्स्वार्थैव यथा नीलो घट इत्यादौ । नीलादिपदस्य नीलगुणविशिष्टबोधकत्वात् । अत्र प्राञ्चः । लाक्षणिक पदं नानुभावकं अन्वयप्रतियोग्युपस्थित्यजनकत्वात् । तथा च गङ्गापदेन तीरमुपस्थाप्यते। तीरस्मृत्या च तीरमुपस्थाप्यत इति । तत्र सम्यगङ्गापदस्य तीरोपस्थापकत्वाभावे विभक्त्यर्थान्वयानुपपत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाद् इति। एवं मण्डपं भोजयेदित्यत्र मण्डपपदस्य योगार्थान्वये सत्यपि रूढिपूर्विकलक्षणा भोजने रूढ्यर्थगृहस्यान्वयासम्भवाद् रूढ्यर्थगृहसंबन्धिचैत्रादयो लक्ष्यन्ते । न च मण्डपपदान्म-

गङ्गपानकर्त्तार योगार्थमादाय कुतो न बुध्यत इति वाच्यम्। योगार्थापेक्षया रूढ्यर्थस्य शीघ्रोपस्थितिकत्वेन रूढेर्योगापहारितया बलवत्त्वात्। अत एव योगार्थे सत्यपि पङ्कजपदात् कुमुदत्वप्रकारकबोधः किन्तु रूढ्या पद्मत्वप्रकारकबोध इति। न चावयवमहिम्ना पद्मत्वप्रकारकबोधः कुतो नेति वाच्यम्। अवयवानां पद्मत्वप्रकारकबोधे सामर्थ्याभावात्। न च विना रूढिं योगार्थमर्यादया पङ्कजनिकर्तृत्वप्रकारकबोधः कुतो नेति वाच्यम। रूढिज्ञानेन प्रतिबन्धात्। रूढेः प्रतिबध्यप्रतिबन्धकभावस्त्वेवं। पङ्कजपदं पद्मे रूढमित्येतादृशरूढिज्ञानत्वेन प्रतिबन्धकता पद्मत्वानवच्छिन्नपद्मभिन्नविशेष्यताशालिपङ्कजनिकर्तृत्वप्रकारकशाब्दत्वेन प्रतिबध्यता। यदा कुमुदे पद्मत्वप्रकारकशक्तिभ्रमस्तदा पद्मभिन्नविशेष्यकतादृशशाब्दबोधस्य जायमानत्वात्पद्मत्वानवच्छिन्नेति। नापि पद्ममिश्रितकुमुदत्व धर्मितावच्छेदकीकृत्य कुमुदबोध इति पद्मभिन्नेति। परे तु नियमेन रूढ्युपस्थापित पद्ममेव इप्रत्ययेनोपस्थाप्यते। तथा च रूढिज्ञानस्य पद्मत्वविशिष्टविशेष्यकशाब्दबोधत्व कार्यतावच्छेदक कुमुदे तु रूढिज्ञानाभावाच्च तादृशशाब्दबोध इत्याहुः। तन्न सुन्दरं। सामान्यसामग्र्या यथा रूढिज्ञानाभावकाले पङ्कजनिकर्तृत्वेन कुमुदभान तथा रूढिज्ञानकालेऽपि स्यात्। न च रूढिज्ञानकालीनपङ्कजनिकर्तृत्वप्रकारकबोधं प्रति समानविशेष्यतया रूढिज्ञानोपस्थितिः कारणं रूढिज्ञानाभावकालीनतादृशबोधं प्रति रूढिज्ञानाभावो हेतुरिति सामान्यसामग्रीविरहादेव नोक्तदोष इति वाच्यम्। तथासति अस्मदुक्तरीत्या रूढिज्ञानस्य प्रतिबन्धकत्वमेवोच्यतामिति सङ्क्षेपः। ननु गङ्गापदस्यतीरे शक्तिः प्रवाहे तु लक्षणेत्येवोच्यतामिति चेन्न। भूरिप्रयोगस्यैव शक्तिकल्पकत्वेन भूरिप्रयोगस्य प्रवाहे दृश्यमानत्वात्प्रवाहे शक्ति नं तु तीरे तत्र भूरिप्रयोगाभावात्। यत्रोभयत्रैव भूरिप्रयोगस्तत्रोभयत्रैव शक्तिः यथा। सैन्धवपदस्य तुरगलवणयोः वेलापदस्य तीरनीरयो मत्सरपदस्य मत्सरमात्सर्य्ययोरिति।

**ननु यद्येते एव वृत्ती कथन्तर्हि राजपुरुष इत्यादौ षष्ठ्यर्थलाभः न हि राजपदं सम्बन्धशक्तं।**

अथ सम्बन्धोऽन्वयविधया भासते नीलो घट इत्यत्राभेद इवेति चेन्न । राजापुरुष इत्यत्रापि तदापत्तेः । अथ नामार्थयोरभेदेनैवान्वयो न त्वन्यथा तथैवव्युत्पत्तेः राज्ञः पुरुष इत्यत्र तु न नामार्थयोरन्वयः किन्तु विभक्त्यर्थनामर्थयोरिति चेत्तर्हि राजपुरुष इत्यत्र कथन्तयोस्तथान्वय इति स्वयमेव विभावय । अथ सम्बन्धे लक्षणैवेति चेन्न । तथापि राजसम्बन्धः पुरुष इतिवदनन्वयः स्यादिति तद्दोषतादवस्थ्यात् ।

ननु शक्तिलक्षणान्यतररूपैव वृत्तिर्यदि तदा राजपुरुष इत्यादौ संबन्धभान न स्यात् । न तावच्छक्त्या तद्भान राजपदस्य राजसंबन्धे शक्त्यभावात् । नापि लक्षणया शक्यसंबन्धाभावात् । यतो हि राजपदशक्यो राजा तत्संबन्धो न राजसंबन्धो । किञ्च राजपदस्य राजसंबन्धलाक्षणिकत्वे राजसंबन्धः पुरुष इति बोधापत्तेस्तस्माद्वृत्यन्तरमेवाद्रियतामित्यभिप्रायवानाह । नन्विति एते शक्तिलक्षणे । ननु शक्यस्याप्यन्वयस्य संसर्गमर्यादया भाने बाधकाभावान्नीलो घट इत्यादावभेदान्वय इवेत्याह अथेति । तदापत्तेः संबन्धभानापत्तेः । ननु राजपुरुष इत्यत्राभेदेनान्वयो वाच्यः स च नोपपन्नः । नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वाद् इत्याह अथेति । नामार्थयोः निपातातिरिक्तनामार्थयोः । तेन चैत्रो न मैत्र इत्यादौ चैत्रादेर्नञर्थेन सम साक्षादन्वयेऽपि न क्षतिः । यद्वा निपातातिरिक्तेति न देयमेव । नचैव चैत्रो न मैत्र इत्यत्र नञर्थेन समं चैत्रादेरन्वयो न स्यादिति वाच्यम् तत्र चैत्रपदस्य चैत्रप्रतियोगित्वे लाक्षणिकत्वेन नञपदस्याभाववल्लाक्षणिकत्वेन चान्वयबोधात् । नन्विदं कथ सिद्धमत आह तथैवेति । व्युत्पत्तेः कार्यकारणभावात् । अयं भावः भेदसंसर्गकनिपातातिरिक्तनामार्थप्रकारकबोधत्वावच्छिन्नं प्रति प्रत्ययजन्यो-

पस्थितिः कारणं । यत्राभेदसंसर्गकान्वयबोधस्तत्र तदुपस्थितेर्न कारणत्वमिति तथा च राजापुरुषयोर्विभक्त्यर्थद्वारैव भेदान्वय इत्याह राज्ञ इति । नन्विदमस्माकं साधकं न तु बाधकमित्यत्राह तर्हीति । तर्हि नामार्थयोर्भेदान्वयाभावे हि । तयान्वयः भेदान्वयः । अथेति । यद्यपि सम्बन्धे लक्षणा नोपपद्यते । राजसम्बन्धे राजपदशक्यसम्बन्धाभावात्तथापि राजसबध इत्यत्रापि राज्ञः सम्बन्ध इति व्युत्पत्त्या राजसम्बन्धेऽपि राजनिरूपितस्वरूपराजसम्बन्धस्य सत्त्वात् । अथ यदि सम्बन्धे लक्षणा तर्हि राजसम्बधाभिन्नः पुरुष इति बोधः स्यादिति राजसम्बन्धपुरुषयोर्भेदान्वयोऽवश्य वाच्यः स चानुपपन्नस्तयो र्नामार्थत्वेन तद्दोषतादवस्थ्यादित्याशयवानाह तथापीति यद्वा राजपदस्य राजसवन्धे लक्षणास्वीकारे राजसम्बन्धः पुरुष इत्याकारकान्वयबोधः स्यादिति न सम्बन्धे लक्षणा । तथा च लक्षणाया अप्यभावेन राजपुरुष इत्यत्र सम्बन्धभान न स्यादिति तद्दोषतादवस्थ्यादित्याह तथापीति ।

अथ राजपुरुषात्मकसमुदाय एव राजसम्बन्धिपुरुषलक्षणेति चेन्न । शक्तिविरहे लक्षणाया अयोगात् स्वशक्यसम्बन्धो हि लक्षणेत्युक्तं । उच्यते राजपदं राजसम्बन्धिलक्षकं तथाचाभेदेनैव पदार्थद्वयान्वयः । नचैवं कर्मधारयापत्तिः । समासपूर्वदशायां पदयोस्तुल्यार्थत्वाभावात् । अन्येतु लुप्तषष्ठ्यैवान्वयं बोधयन्ति षष्ठीलोपमजानतस्तु तत्रान्वयप्रत्ययः शक्तिभ्रमाद्राजपदलक्षणया वेति स्वीचक्रुः । वैयाकरणास्तु समासस्थशब्दसमुदायस्य विशिष्टार्थे शक्तिरेव । नचैवं राजपदशक्तिमविदुषोऽपि राजपुरुषादिपदादन्वयः स्यादिति वाच्यम् । समस्तशक्तिग्रहो ह्यनुशासनात् न

चावयवशक्तिग्रहेऽनुशासनग्रहः संभवतीति तत्-शक्तिग्रहस्य समुदायग्रहे हेतुत्वादित्याहुस्तन्न । अवयवलक्षणयैवोपपत्तौ समुदायशक्तौ मानाभावात् तदुक्तं जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति तस्मादन्यथोपपत्तौ समासे शक्तिरयुक्तेति सङ्क्षेपः ।

अथेति । तथा च राजपुरुषात्मकसमुदायनिरूपिता राजसम्बन्धिपुरुषे लक्षणेत्यर्थः । शक्तिविरहे वाक्ये शक्तिविरहे । वाक्ये शक्तिविरहे कुतो न लक्षणेत्यत आह स्वशक्येति । तथो चेति । राजसम्बन्ध्यभिन्नः पुरुष इत्यभेदान्वयबोध इत्यर्थः । एव राजसम्बन्धिनि लक्षणास्वीकारे । समासपूर्वदशाया विग्रहदशायां । तुल्यार्थत्वाभावादिति । तथा च नीलं च तदुत्पलं चेति समासव्यासयोः तुल्यो बोधस्तत्र कर्मधारयः । यत्राभेदबोधार्थं लक्षणा क्रियते तत्र तत्पुरुष इति । अथ राजपुरुष इत्यादौ षष्ठीविभक्तेः स्मरणं कल्पनीयमिति कस्यचिन्मतमाह अन्येत्विति । लुप्तषष्ठ्येव लुप्तस्मृतषष्ठ्येव । लुप्तास्मृतविभक्तेर्बोधो न स्यादित्यत आह षष्ठीलोप इति । शक्तिभ्रमात् राजसम्बन्धिनि शक्तिभ्रमात् । ननु वृत्त्यन्तरासम्भवे भ्रमो वाच्य इत्यत आह राजपदेति । यद्वा । नन्वेवं तत्पुरुषापेक्षया कर्मधारये लघीयस्त्वं न स्यात् । तत्पुरुषेऽपि षष्ठीस्मरणाङ्गीकारेण । स्मरणाभावस्थले शक्तिभ्रमाङ्गीकारेण च सम्बन्धिनि लक्षणाविरहादित्यत आह राजपदेति । अन्यत्त्वित्यत्र लक्षणास्वीकारस्यावश्यकत्वाल्लुप्तषष्ठीस्मरणकल्पने गौरवमित्यस्वरसबीजम् ।

समासस्य शब्दसमुदायस्य राजपुरुषादिपदसमुदायस्य विशिष्टार्थे राजसम्बन्धिपुरुषरूपविशिष्टार्थे । शक्तिरेवेत्येवकारेण वृत्त्यन्तरव्यवच्छेदः । एव समुदायस्य विशिष्टार्थे शक्तिकल्पने राजपुरुषादीति । तथा चावयवशक्त्यग्रहेऽपि समुदाये शक्तिग्रहः स्यादिति भावः । समस्तशक्तिग्रहः समुदायशक्तिग्रहः । अनुशासनात् । अर्थवदादिसूत्रेण प्राति-

पदिकसञ्ज्ञा विधाय सुप्सुपेति सूत्रात्। अनुशासनग्रह इति । तथा च रा-जपदशक्तिग्रहमन्तरेण न राजपुरुषशब्दसमुदाये प्रातिपदिकसञ्ज्ञापूर्वकानुशासनग्रह इति भावः । तच्छक्तिग्रहस्य अवयवशक्तिग्रहस्य । अवयव-लक्षणयैव राजपदरूपावयवलक्षणयैव समुदायशक्तौ। राजपुरुषादिशब्द समुदायशक्तौ । मानाभावादिति तथा च समासस्यार्थवत्त्वेनार्थवदिति सूत्रात्प्रातिपदिकत्वे सिद्धे कृत्तद्धितसमासाश्चेति सूत्रे समासग्रहणं व्यर्थं स्यादिति भावः । नन्वेव पङ्कजादिपदेष्वपि मास्तु समुदाये शक्तिः अवयवलक्षणा तु भवत्येवेत्यत आह जहदिति जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधीनीति पाठः जहल्लक्षणा तु भवत्येवेत्यत आह जहदिति जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति पाठः जहत्स्वार्था अवयवल-क्षणा तत्रैव यत्र विरोधिनी रूढिरस्ति तथा च पङ्कजपद पङ्कजे रूढमिति प्रसिद्धिरूपा रूढिरस्तीति न तत्रावयवलक्षणा। रूढेरवयवार्थबोधविरोधात् राजपुरुष इत्यत्र तु राजपुरुष इति वाक्यं राजसम्बन्धिपुरुषे रूढमिति रूढिरूपप्रसिद्धेरभावात् तत्रावयवलक्षणा भवत्येव किं तु जहत्स्वार्था तथा च सर्वत्र जहत्स्वार्थलक्षणा राजपुरुषादौ राजपदेऽपि भविष्यतीत्यत-आह जहदिति । तथा च राजपदस्य राजसम्बन्धिनि लक्षणाया विरो-धिनी रूढिर्नास्ति । मण्डपादिस्थले त्ववयवार्थविरोधिनी रूढिरस्तीति तत्र न जहत्स्वार्थेति । ननु पङ्कजपदलक्षणयैव पद्मत्वप्रकारकबोधसम्भवे पङ्कजादिपदानामपि पद्मत्वादिविशिष्टे रूढिर्न स्यादित्यत आह । जहत्स्वार्था तु तत्रैव यत्र रूढिर्बलीयसीति । तथा च पङ्कजपदस्य पद्मत्व विशिष्टबलवत्तररूढेः सत्त्वाच तत्र जहतत्स्वार्थरूपा लक्षणेति भावः । अत एव पङ्कजपदाल्लक्षणया कुमुदत्वप्रकारको बोधः क्वचिज्जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति पाठः तथा चावयवार्थेन सम रूढेर्वि-रोधाभावाच जहत्स्वार्था । न च रूढ्या पद्मत्वप्रकारकबोधवल्लक्षणया पङ्कजनिकर्तृत्वप्रकारकबोधः पद्मेपि स्यादिति वाच्यम् । युगपद्वृत्तिद्वय-विरोधात् । राजपुरुष इति समुदायस्य राजसम्बन्धिपुरुषे रूढेरभावः

अवयवलक्षणयैव तत्र निर्वाहात् । समुदायशक्तौ मानाभावात् रूढ्या सम विरोधाच्च जहत्स्वार्थेति दिक् । ननु यथा पङ्कजपदस्य कुमुदे जहत्स्वार्था तथाऽत्रापि स्यादित्यत आह । जहत्स्वार्थेति । अन्यथोपपत्तौ लक्षणयोपपत्तौ

स्यादेतत् मास्तु तत्पुरुषे शक्तिर्बहुव्रीहौ तु चित्रगुपदे चित्रगोस्वामिनि शक्तिरावश्यकी न हि तत्र लक्षणया निर्वाहः तथा हि किं गोपदं गोस्वामिलक्षकं चित्रपदं वा चित्रस्वामिलक्षकं नाद्यः न हि चित्रस्य गवान्वयः संभवति तस्य पदार्थैकदेशत्वात् अत एव नान्त्योऽपि गवानन्वयापत्तेः । अथ गोपदं चित्रगोस्वामिलक्षकं चित्रपदं तु तात्पर्यग्राहकमिति चेन्न । चित्रपदं चित्रगोस्वामिलक्षकं गोपदं तु तात्पर्यग्राहकमिति विनिगन्तुमशक्यत्वात्तस्माद्विनिगमकाभावात्समुदाये शक्तिरेवेति चेत् अत्रोच्यते विनिगमकाभावादस्तु पदद्वये लक्षणा न तु समुदाये-शक्तिरन्यलभ्यत्वात् । मीमांसकास्तु समुदाय एव लक्षणा । नच समुदायस्य शक्त्याभावाल्लक्षणानुपपत्तिः स्वबोध्यसम्बन्धो हि लक्षणा अस्ति च वाक्यस्यापि विशिष्टं बोध्यं अन्यथा कागतिर्गभीरायां नद्यां घोष इत्यादौ न हि नदीपदं तीरलक्षकं गभीरायामित्यनन्वयापत्तेः नहि तीरं गभीरं नापि गभीरपदं तीरलक्षकं नद्यामित्यनन्वयापत्तेः न हि तीरं नदी तस्मादनन्यगतिकतया वाक्यमेव गभीरनदीतीरलक्षक-

मित्याहुः । अत्रोच्यते वाक्यं न विशिष्टार्थबोधकन्त-द्बोधकतावच्छेदकशक्तेरभावादतस्तत्र बोध्यसम्बन्धो-लक्षणेति रिक्तं वचः ।

ननुमानाभावान्मास्तु तत्पुरुषे शक्तिः बहुव्रीहौ तु भविष्यत्येवेत्याह स्यादेतदिति नर्हीति यदि गोपद गोस्वामिलक्षक तदा गोस्वामिरूप एव गोपदार्थस्तदेकदेशभूता गौस्तत्र चित्रान्वयासम्भवात् । तस्य गोः । पदार्थ.ते । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन। इतरथा गौर्नित्य इत्यत्र मुख्यप्रयोगापत्तेः । तत्र मते नित्यत्वस्य गोत्वरूपैकदेशेन सहान्वयसम्भवात् । अस्मन्मते तु गोपदस्य लक्षणयैव निर्वाहादिति भावः । न च चैत्रस्य नप्तेत्यत्र नप्तपदस्य पुत्रपुत्रार्थत्वेन पुत्ररूपैकदेशेन सम चैत्रस्य कथमन्वय इति वाच्यम् । ससम्बन्धिस्थलेऽन्यथानुपपत्त्या तथैवान्वयस्वीकारात् । अत एव एकदेशान्वयास्वीकारादेव। गवेति । चित्रस्यैकदेशत्वेन चित्रे गवानन्वयापत्तेरित्यर्थः । ननु चित्रपदं व्यर्थमित्यत आह चित्रेति । समुदाये चित्रगोः स्वामिरूपे समुदाये । पदद्वय इति । गोपदं चित्रगो.स्वामिलक्षकं चित्रपदमपि चित्रगोःस्वामिलक्षकमित्यर्थः अन्यलभ्यत्वात् । लक्षणया लभ्यत्वात् । बहुव्रीहौ । सर्वत्रान्त्यपद एव लक्षणाऽन्यथाचित्रगुमानयेत्यत्र चित्रपदानन्तरं कर्मत्वबोधकविभक्तेरसत्त्वात्कर्मत्वान्वयो न स्यादिति । नव्यमतमाहान्त्यपद एवेति । प्रत्ययार्थेति । प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वमिति व्युत्पत्तेः प्रथमपदोत्तर प्रत्ययाभावेन प्रथमपदार्थस्य प्रकृत्यर्थत्वाभावात्प्रत्ययो न स्यादिति भावः । समुदाये समासस्थशब्दसमुदाये। ननु समासस्थपदसमुदायनिरूपितविशिष्टार्थे शक्त्यभावात् कथ तत्र लक्षणेत्याह न चेति । स्व चित्रगुरित्यादिवाक्यं तद्बोध्या चित्रत्वविशिष्टागौस्तत्सम्बन्धश्चित्रगोः स्वामिनीत्यर्थः। ननु लक्षणा पदवृत्तिः वृत्तित्वात् शक्तिवदित्यनुमानात्पदवृत्तित्वसिद्धौ क्व वाक्ये लक्षणेत्यत आह अन्यथेति । यद्वा गभीरायां नद्या घोष इत्यादौ नदीपदवाच्यप्रवाहे घोषस्यानन्वयाल्लक्षणावश्यकी सा तु न पदे

वक्ष्यमाणदूषणगणावासादित्यभिप्रायवानाह अन्यथेति । अन्यथा वाक्यलक्षणानङ्गीकारे । तथा च गभीरनद्योरन्वयबोधानन्तर गभीरायां नद्यामित्यात्मकवाक्यबोध्यस्य गभीरनदीपदार्थस्य तीरे सम्बन्धाद्गभीरायां नद्यामिति वाक्यस्य गभीरनदीतीरे लक्षणा वाच्येति भावः । पदे लक्षणाङ्गीकारे बाधकमाह न हीत्यादिना । अनन्वये बीजं दर्शयति न हि तीरं गभीरमिति । पदे लक्षणाया अभावाद् वाक्यलक्षणाभिप्रायेणोपसंहरति । तस्मादिति वाक्यमेव गभीरायां नद्यामिति वाक्यमेव । न विशिष्टार्थबोधकं न गभीरनदीतीरादिविशिष्टार्थबोधकं । ननूक्तमेव स्वबोध्यसम्बन्धरूपलक्षणया वाक्यं विशिष्टार्थबोधकमित्यत आह तद्बोधकतावच्छेदकेति । स्वबोध्यत्वमित्यत्र शक्त्या स्वबोध्यत्वं वाच्यम् अन्यथा लक्षणायां शक्तिमूलकत्वं न स्यात् । यद्वा । न विशिष्टार्थबोधकं । न गभीरनदीति विशिष्टार्थबोधकं कुत इत्यत आह तद्बोधकेति । गभीरायामितिवाक्यस्य गभीरनद्यां शक्त्यभावादित्यर्थः । रिक्तं निरर्थकम् ।

**किञ्च गभीरायां नद्यामिति विभक्त्यन्तभागस्य न तीरे लक्षणा तदाधारताप्रत्ययानापत्तेः । नापि गभीरायां नदीति भागस्य तस्याबोधकत्वात् बोधकत्वे वा लक्ष्ये विभक्त्यर्थानन्वयापत्तेः प्रत्ययानां प्रकृतार्थान्वितबोधकत्वात् । न हि सभागः प्रकृतिर्येन तदर्थे विभक्त्यर्थान्वयः स्याद् गभीरायामिति सप्तम्यनापत्तेश्च । अथ विभक्त्यन्तस्यैव गभीरनदीतीराधारत्वलक्षकत्वमिति चेन्न । अशक्यत्वात्तस्मात्पदद्वय एव विनिगमकाभावाद्विशिष्टनदीतीरे लक्षणा । न चैकपदवैयर्थ्यं परस्य तात्पर्यग्राहकत्वादिति सम्प्रदायः । विस्तरस्त्वस्माकं मणिमरीचिनिबन्धतात्पर्यदीपकयोरनुसन्धेयः ।**

ननु वाक्यं विशिष्टबोधकं तद्बोधकतावच्छेदकवृत्तेः सत्त्वात् । लाक्षणिकपदवदित्यनुमानाद्विशिष्टार्थबोधकत्वमेव साध्यतामित्यतो दूषणान्तरमाह किन्त्वति । तदाधारतेति । विभक्त्यन्तलाक्षणिकवाक्योत्तरमाधारताबोधकविभक्त्यभावेन घोषाधारताप्रत्ययो न स्यादिति भावः । विभक्त्यन्तं पदं पदसमूहो वाक्यं नदीति भागस्य पदत्वाभावेन गभीरायां नदीति भागस्य पदसमूहत्वाभावाद्वाक्यत्वाभावेनैव बोधकत्वाभावादित्यभिप्रायेणाह तस्येति । तस्य गभीराया नदीति भागस्य विभक्तिशून्यस्य ननु विभक्त्यन्तं पदमिति न ब्रूमोऽपितु वृत्तिमत्पदमिति । तथा चास्य पदसमूहत्वरूपवाक्यत्वसत्त्वेन बोधकत्वे किमवशिष्यन्त इत्यत आह बोधकत्वे वेति । यद्वा प्रत्ययशून्यप्रकृतिभागस्य न बोधकत्वमित्याशयवानाह तस्येति । निरुक्तनियमे मानाभावादाह बोधकत्वे वेति । लक्ष्ये गभीरनदीतीरे । ननु विभक्त्यर्थोऽन्वयः कुतो नेत्याह प्रत्यानामिति केवलप्रत्ययैः कर्मत्वकर्तृत्वादिकं न बोध्यते सामर्थ्याभात् किन्तु प्रकृत्यर्थान्वितेन तथासति गभीराया नदीति भागस्य प्रकृतित्वाभावात्कथं सप्तम्या अधिकरणबोधकत्वमिति भावः । स्वार्थबोधजनकत्वं प्रत्ययार्थबोधकत्वं सभागः गभीराया नदीति पदमिति भावः । तदर्थे गभीरनदीतीररूपलक्ष्यार्थे नदीपदोत्तरसप्तम्या अनन्वये गभीरायामिति विशेषणविभक्त्यर्थानन्वयमाह गभीरायामिति विभक्त्यन्तस्यैव गभीराया नद्यामिति विभक्त्यन्तस्यैव । अशक्यत्वादिति । वाक्ये शक्तेरभावेन शक्यसम्बन्धरूपा लक्षणा नास्तीत्यर्थः । न च स्वबोध्यसम्बन्धस्यैवास्त्विति प्राच्यम् । स्वबोध्यमित्यत्र बोधकतावच्छेदकशक्तेरभावात् । न च नापेक्षित शक्तिमूलकत्वं वाक्यलक्षणाया किं तु लक्षणामूलकत्वमिति वाच्यम् । आत्माश्रयात् । तथा हि । स्वङ्गभीराया नद्यामिति वाक्यं । तद्बोध्यः गभीरनदीरूपो वाक्यर्थः तत्सम्बन्धो गभीरनदीतीरे इत्यर्थः । तत्र स्वबोध्यत्वं न वाक्यार्थे शक्त्या वाक्ये शक्तेरभावात् । किं तु स्वबोध्यसम्बन्धरूपलक्षणया । तथा चात्माश्रय इति भावः । एवं स्वबोध्यत्वं लक्षणया सापि स्वबोध्यत्वघटिता

तत्रापि स्वबोध्यत्व लक्षणयेत्यनवस्थापि । एवं च वाक्ये शक्तिलक्षणयोरभावेन नोक्तसम्प्रतिपत्तः । अत एव रिक्तं वच इति साधुसङ्गच्छत इति । विशिष्टनदीतीरे गभीरत्वविशिष्टनदीतीरे परस्येति । नदीपद गभीरनदीतीरे लाक्षणिकमित्यत्र गभीरपद तात्पर्यग्राहक एवं गभीरपदं गभीरनदीतीरलाक्षणिकमित्यत्र नदीपदं तात्पर्यग्राहकमित्यर्थः सम्प्रदायविद इत्यत्रारस्वरसस्तु पदद्वये न लक्षणा किं त्वन्यपदेऽन्यथा विशेषणविभक्तेःसाधुत्वार्थकत्वेनाधिकरणत्वाबोधकत्वाद्गभीरपदोत्तरमधिकरणत्वबोधकविभक्तेरभावादधिकरणत्वानन्वयः स्यात् । यद्वा चित्रगुमानयेत्यत्र चित्रपदोत्तरविभक्तेरभावेन कर्मत्वानन्वयापत्त्यान्यपदलक्षणा वश्यकीत्येकत्रान्यपदे क्लृप्तान्यत्रापि तथैवास्तामित्यस्वरसः सम्प्रदायविद इत्यत्र बोध्यः । विस्तरार्थस्तु चैत्रस्य नप्तृत्यादिवदेकदेशान्वयः स्वीक्रियते तदा नदीपदं नदीतीरे लाक्षणिक गभीरपदार्थस्य नदीतीरकपोयः पदार्थस्तदेकदेशनद्यासहान्वय इत्यादि रूपो बोध्यः ।

**उपकुम्भमर्धपिप्पलीत्यादावप्युत्तरपदलक्षणयैवोपपत्तौ न शक्तिरुपेयतेऽन्यलभ्यत्वात् । समाहारद्वन्द्वे पाणिपादमित्यादौ पाणिपदं पाणिप्रतियोगिकं पादपदं पादसमाहारं लक्षयति न पाणिपादसमाहारे शक्तिः समाहारश्च तुल्यवदेकक्रियान्वयित्वरूपम् साहित्यं सेनावनादिवदपेक्षाबुद्धिविशेषविषयत्वं वा नन्वेवं पाणिपादं वादय इत्यत्रानन्वयः समाहारे वादनकर्मत्वाभावादिति चेत्परम्परया तत्र कर्मत्वान्वयादित्येके। समाहारोत्तरविभक्त्यर्थकर्मत्वादेः समाह्रियमाण एवान्वयः पदव्युत्पत्तिवैचित्र्यादित्यन्ये ।**

पाणिपादं वादयेत्यत्र पाणिपादमात्रप्रतीतेर्न समाहारे लक्षणा शक्तिर्वा। नचैवं द्विवचनापत्तिरसाधुत्वात्। इहेतरेतरसमाहार संज्ञातु नदीवृद्ध्यादिवत्पारिभाषिक्येवेति तत्वम्। इतरेतरद्वन्द्वे तु धवखदिराविति स्वरूपद्वयप्रतीतेर्न्न लक्षणा शक्तिर्वा

उपकुम्भमिति । कुम्भस्य समीपे तात्पर्य्यादयं पूर्वपदार्थप्रधानोऽव्ययीभावः । उपकुम्भमित्यत्राव्ययं विभक्तिसमीपेत्यनेन समासः । अर्धपिप्पलीत्यादौ त्वर्धं नपुंसकमित्यनेन समासः उत्तरपदस्य सम्बन्धिनि लक्षणा तथा च कुम्भसम्बन्धिसमीपमिति बोधः । अर्धपिप्पलीतिपिप्पल्या अर्धे तात्पर्य्यादयमपि पूर्वपदार्थप्रधानः। परन्तु तत्पुरुषः उत्तरपदस्य च सम्बन्धिनि लक्षणा तथा च पिप्पलीसम्बन्ध्यर्धमिति बोधः । इदमुपलक्षण निपातातिरिक्तेति विशेषणावामार्थयोरत्र भेदेनान्वयेपि क्षतिविरहादिति शक्तिः कुतो नेत्यत आह अन्यलभ्यत्वादिति लक्षणया लभ्यत्वादित्यर्थः । पाणिप्रतियोगिकमिति। तथा च पाणिप्रतियोगिकपादसमाहार इत्यर्थः। न पाणिपादसमाहारे न पाणिपादप्रतियोगिकसमाहारे । तुल्यवदिति । अनुकूलतुल्यव्यापारवदेकक्रियान्वयित्वमित्यर्थः। एकक्रियानुकूलतुल्यव्यापारवत्त्वमिति फलितार्थः । यत्र चैत्रः किञ्चिद्व्यापारवान् मैत्रः सपूर्णव्यापारवाँस्तत्र मैत्रेण चैत्रः पचतीत्येव प्रयोगस्तत्रमैत्रश्चैत्रश्च पचत इति वारणाय तुल्यवदिति । पाणिपादं वादय पश्येत्यादौ तादृशसाहित्यासम्भवादाह सेनेति। पाणिपादसमाहारकर्मकवादनासम्भवमाशङ्कते नन्विति । अनन्वयः। समाहारे वादनकर्मत्वान्वयाभावः। परम्परया स्वाश्रयवृत्तित्वादिना । तत्र समाहारे । समाह्रियमाणे समाहाराश्रयीभूते। तत्र का वा युक्तिरित्यत आह । व्युत्पत्तीति । तथा च समाहाराश्रयीभूतपाणिपादकर्मक वादनमित्यर्थः । कार्यकारणभावरूपव्युत्पत्तिबलात्प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधकत्त्वमितिनियमे सङ्कोच इति भावः । पाणि-

पादं वादयेत्यत्र पाणिपादमात्रस्यैव प्रतीयमानत्वात्समाहारस्याप्रतीयमानत्वेन लक्षणाया मानाभावादिति मतद्वयेप्यस्वरसो बोध्यः । एव समाहारस्याविषयत्वे । द्विवचनापत्तिरिति । समाहारप्रसक्तिकृत्वाभावादिति भावः । कथं तर्हिसमाहारसञ्ज्ञत्यत आह इहेतरेतरसमाहारेति । इह पाणिपादमित्यादौ । नदीति यथा यूस्त्र्याख्या नदीत्यनेन वृद्धिरादैवेत्यनेन च यथा यथा पारिभाषिकी नदीवृद्धिसञ्ज्ञा तथा ऽत्रापीत्यर्थः । एवं पञ्चमूलीत्यादावपि बोध्यम् । धवखदिराविति । धवखदिरौ छिन्धीत्यत्र धवखदिरयोर्विभक्त्यर्थद्वित्वे प्रकारतयान्वयबोधो न तु खदिरपदं धवसहितखदिरे लाक्षणिकं साहित्यमन्तरेणापि गोत्वाश्वत्वयोर्विन्ध्याचलहिमाचलयोश्चान्वयबोधदर्शनादिति भावः । ननु द्वन्द्वे लक्षणावश्यवच्या तथा हि । पितरावित्यत्र पितृपदे जनकदम्पत्योः श्वशुरावित्यत्रापि श्वशुरपदे स्त्रीपुरुषजनकदम्पत्योर्लक्षणा । एवं शिवौ नमुस्कुर्यादित्यत्र नस्कारविषयस्य शिवान्तरस्याभावाच्छिवः शिवा च बुध्यत इति कथं द्वन्द्वे न लक्षणेति चेन्न । विरूपैकशेषेऽगत्या स्वीकारात्तद्भिन्नस्थली यद्वन्द्वे लक्षणाया मानाभावादिति । साहित्यस्य समासवाक्यजन्यबोधाविषयत्वं दर्शयति । स्वरूपेति प्रतीतेः । भिन्नतया स्वरूपद्वयप्रतीतेरित्यर्थः । न शक्तिः न धवसहितखदिरे शक्तिः लक्षणापि तत्र नेति ।

मीमांसकास्तु अत्रापि धवखदिरसाहित्याश्रये लक्षणा तदाहुः साहित्ये द्विवचनबहुवचने द्वन्द्वसमासो वेति साहित्यं च तुल्यवदेकक्रियान्वयित्वं अत एव यत्कर्त्तव्यं तदनया सहेत्यत्र यत्न्याः सहभावमात्रं न तु साहित्यं यागादौ पत्न्या अनुमतिद्वारा ऽन्वयेन तुल्यवदनन्वयादित्याहुः । नीलोत्पलमित्यादौ नीलाभेदस्यान्वयविधयैवात्र भासनोपपत्तेः कर्मधारये न शक्तिर्नवा लक्षणा अत एव तत्पुरुषात्कर्मधारयो

**लघीयान् तत्र हि पूर्वपदे सम्बन्धिलक्षणेत्युक्तम् । नञ्तत्पुरुषेप्यघटः पट इत्यत्र घटपदं घटसम्बन्धिपरं नञ्पदं चान्योन्याभावे शक्तमेव ।**

ननु धवखदिरयोर्धवत्वखदिरत्वधर्मितावच्छेदकत्वस्वीकारेण द्वित्वान्वये धवद्वयस्य खदिरद्वयस्य च बोधापत्तेः धवखदिरसाहित्य धर्मितावच्छेदकीकृत्य तत्र द्वित्वान्वयोऽवश्यं वाच्य इत्यभिप्रायवतां मीमांसकाना मतमाह मीमांसकास्त्वित्यादिना । लक्षणा । अन्त्यपदे वाक्य वा लक्षणा । साहित्य धर्मितावच्छेदकीकृत्य द्वित्वान्वये द्वन्द्व करणे न वैयाकरणसम्मतिमाह । तदाहुरित्यनेन अत एव साहित्यस्येदृशनिर्वचनादेव । साहित्याभावं दर्शयति । यागादावित्यनेन । आहुरित्यस्वरसोद्भावन । तथा हि । विनैव लक्षणा धवखदिरयोस्समूहालम्बनस्मृतौ द्वित्वान्वयात् । बन्वेव धवद्वयखदिरद्वयबोधापत्तिरिति चेन्न वय धवत्व खदिरत्वं च धर्मितावच्छेदकीकृत्य द्वित्वान्वय ब्रूमो येनोक्त दोषः स्यादपितु धवखदिरयोर्धर्मितावच्छेदकद्वित्वप्रकारेण बोधमिति अत एव चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला । मुखाप्रमादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितमित्यादौ समूहालम्बनस्मृतिविषये कलङ्कादौ बहुत्वान्वय इति । अन्वयविधयैव सम्बन्धविधयैव । अत एव शक्तिलक्षणयोरभावादेव । अथ निषादस्थपति याजयेदित्यादौ कर्मधारय एव न तत्पुरुषः लक्षणापत्तेः । न च षष्ठीतत्पुरुषे निषादानामीश्वरस्त्रैवर्णिक एवावगम्यते न तत्र विद्याप्रयुक्तिकल्पनमपि । कर्मधारये तु निषादाभिन्नेश्वर एवावगम्यते इति तत्र विद्याकल्पने गौरवमिति वाच्यम् । लाघवेन कर्मधारयेण निषादाभिन्नस्थपतिरूपेश्वरविषयकबोधे सिद्धे विद्याप्रयुक्तिकल्पने फलमुखगौरवस्यादोषत्वादित्यभिसन्धायाह अत एवेति । तत्र तत्पुरुषे नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वे । निपातातिरिक्तेति विशेषणादानाभिप्रायेणाह घटपदमिति । तथा चाघट इत्यत्र घटसम्बन्ध्यभिन्नान्योन्याभाववानित्यर्थः ।

नवीनमते संसर्गाभावेऽन्योन्याभावे च नञः शक्तिः । अघट इत्यत्रान्योन्याभाव एव बुध्यत इत्यभिप्रायेणाह नञ्पदमिति ।

**संसर्गाभाववाचकं नञ्पदं नान्योन्याभावशक्तमिति चेन्न । लाघवेन विनिगमनाविरहेण चाभावमात्र एव तच्छक्यत्वावधारणात् । ननु न घटः पट इति वदभावघटयोरन्वयेोपपत्तेर्न घटपदेऽपि लक्षणा युक्तेति चेन्न । नामार्थयोरभेदान्वयस्य व्युत्पत्तेः कथन्तर्हि न घटः पट इत्यत्रान्वय इति चेत् घटपदस्य घटप्रतियोगिके लक्षणेति गृहाण प्रथमाया वा षष्ठ्यर्थे लक्षणा ।**

अथ संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वं अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं तथा च प्रागभावादित्रयाणां सथाहकत्वलाघवेन नञः संसर्गाभावे शक्तिर्नान्योन्याभाव इति मणिकारसम्मतमाह संसर्गेति । तथा च नञः संसर्गाभाववाचकत्वेन नञोऽन्योन्याभावे लक्षणेति भावः । तन्मतं दूषयति । लाघवेनेति । यद्वा नञ्तत्पुरुष इत्यादिनाऽन्योन्याभावे नञः शक्तिरिति कस्यचिन्मते । मतान्तरे तु संसर्गाभावे नञः शक्तिरित्युक्तं तदेकोक्त्या द्वयमपि दूषयति । लाघवेनेति । शक्यतावच्छेदकलाघवेनेत्यर्थः । नन्वेवमन्योन्याभावभिन्नाभावत्वापेक्षया द्रव्यादिषट्कान्योन्याभावत्वस्य गौरवमस्ततया क्व लाघवमित्यत आह विनिगमनेति । संसर्गाभावे नञः शक्तिर्नान्योन्याभाव इत्यत्र विनिगमनाविरहेणेत्यर्थः । अभावमात्र इति । अभावत्वं शक्यतावच्छेदकमित्यर्थः । तच्चाखण्डोपाधिरूपमिति हृदयम् । अत्र संसर्गाभावत्वमन्योन्याभावत्वं च स्वरूपसम्बन्धविशेष अखण्डोपाधिर्वेति तदुभयं शक्यतावच्छेदकमिति शिरोमणिचरणाः । ननु विग्रहे यथा न घटः पट इत्यत्र घटघटाभावयोरन्वयस्तथाऽघटः पट इत्यत्राप्यभावघ-

टयोरन्वयोऽस्तु कि सम्बन्धिनि लक्षणेत्याह नन्विति घटपद इति। घटपदनिरूपिता लक्षणेत्यर्थः। नामार्थयोरिति। तथा चाघटः पट इत्यत्र घटघटाभावयोर्नामार्थयोर्भेदेनान्वयस्य प्रकारीभूतविभक्त्यर्थोपस्थिति विनाऽनुत्पत्तेरित्यर्थः। तर्हि नामार्थयोर्भेदनान्वयस्याव्युत्पन्नत्वे। घट-प्रतियोगिक इति। तथा च न घटः पट इत्यत्र घटप्रतियोगिकान्यो-न्याभाव इत्यर्थः। अथ घटस्याभावेनान्वयं व्युत्पादयितुं प्रकारान्तरमाह प्रथमाया इति। प्रथमा षष्ठ्यर्थे लाक्षणिकीत्यर्थः तथा च भेदेनापि घटस्य प्रतियोगिकत्वलक्षणसम्बन्धविधयाऽभावान्वयस्य सुवचत्वादिति।

**ननु सुविभक्तौ न लक्षणेति चेत् तर्हि कथं षष्ठीतः कर्मताप्रत्ययः कथं वा एकस्यां दारा इति बहुवचनं आनुशासनकीयं लक्षणा इष्टैवेति चेत्तुल्यं तदिदमाहुः नियतप्रतियोगा हि केचिदव्यया इति तथापि नञर्थपटयोः कथमाश्रयाश्रयिभावेनान्वयः। नञुत्तरलुप्तषष्ठीस्मरणादिति चेन्न। षष्ठीलोपमजा-नतोऽर्थप्रत्ययात् नञपदमभावबल्लाक्षकमिति चेन्न घटस्याभावेऽनन्वयापत्तेस्तस्य पदार्थैकदेशत्वात् मैवं ससम्बन्धिकस्थले एकदेशेऽप्यन्वयस्वीकाराद् यथा चैत्रस्य पितेत्यदौ चैत्रस्य जनकत्वेऽन्वयः।**

अथैवं व्याकरणविरोधं शङ्कते। नन्विति। तर्हि सुविभक्तौ लक्षणाया अभावे। षष्ठीतः व्यासस्य कृतिः। भारतस्य श्रवणमित्यादिषष्ठीतः। कथं कर्मताप्रत्यय इत्युपलक्षणं कथं कर्तृता प्रत्यय इत्यपि बोध्यम्। तथा चात्र व्यासकर्तृका कृतिः भारतकर्मकं श्रवणमिति षष्ठीतः कर्तृत्व कर्मत्वबोधात् षष्ठी कर्तृत्वे कर्मत्वे लाक्षणिकी कथमुपपन्नेत्यर्थः। अघट-पट इत्यादौ प्रथमायाः प्रकृताभिप्रायेण प्रथमायामपि लाक्षणिकत्व

## ईदूदेद्द्विर्दिः ॥ २० ॥

ईत् ऊत् एत् इत्येवमन्तो यो द्विः स दिसंज्ञो भवति । अग्नी इति । वायू इति । खट्वे इति । तद्वदित्यनेन द्वेरद्वेश्चैकादेशो द्विग्रहणेन गृह्यत इतीदाद्यन्तश्च भवति व्यपदेशिवद्भावेन । मुख्यरूपेणायं द्विरेकारान्तः पचेने इति । पचेथे इति । सत्यां दिसंज्ञायां प्रकृत्याऽचि दिपा इति प्रकृतिभावः। ईदूदेदिति किम् । वृक्षावत्र । तपरकरणमसन्देहार्थम् । मणीवादिषु नेष्यते । मणीव । दम्पतीव । रोदसीव शोभेते । संज्ञाविधौ त्यग्रहणे तदन्तविधिर्नास्तीति अशुक्ले शुक्ले सम्पन्ने शुक्लयास्तां वस्त्रे इति त्यखे त्याश्रयन्यायेन दिसंज्ञा न भवति ॥

## द्मः ॥ २१ ॥

एदिति निवृत्तम् । दकारस्य स्थाने यो मकारस्तस्मात्परावीदूतौ दिसंज्ञौ भवतः । अमी आसते । अमी अत्र । अमू आसाते । अमू अत्र । बहावीरेत इति मत्वमीत्वं च । दादुर्दो मो ऽदसो ऽसेरिति मत्वम् । द्विमात्रस्य श्रौकारस्य द्विमात्र ऊकारः। आश्रयात्मकारादीनां सिद्धिः। द इति किम् । सम्यत्र । दाडिम्यत्र । म इति किम् । द इति तानिर्देशपक्षे ते ऽत्रेत्यत्र दकारादेशस्य परेणादेपि कृते स्थानिवद्भावात्तद्भावाच्च दिसंज्ञा प्रसज्येत । कानिर्देशपक्षे चतुःपद्यर्थं इत्यत्र स्यात् । ईदूदित्येव । इमे ऽत्र । एकयोगनिर्दिष्टानामेकदेशो ऽनुवर्तने निवर्तते चैकदेश इति । एद्ग्रहणं निवृत्तमिति । अन्यथा अमुके ऽत्रेत्यत्रानुवर्तनसामर्थ्यादुकारककाराभ्यां व्यवधाने ऽपि वचनप्रामाण्याद्दिसंज्ञा प्रसज्येत ॥

## निरेकाजनाङ् ॥ २२ ॥

निसंज्ञ एकाजनाङ् दिसंज्ञो भवति ॥ अ अपेहि। इ इन्द्रं पश्य । उ अपसर । निरिति किम् । चकारात्र । अन्वयव्यतिरेकाभ्यां प्रकृतेस्त्यस्य च विभागः । अपायिना ह्यनुबन्धलिङ्गेन निरनुबन्धलिङ्गेन निरनुबन्धादकाराद्भियते खल्व् । एकश्चासावच्च एकाजिति किम् । प्राश्नाति । अनाङिति किम् । आ उदकान्तात् । ओदकान्तात् । ङित्करणं किम् । एष्वर्थेषु ङिदयं वर्तते तत्र प्रतिषेधो यथा स्यादन्यत्र दिसंज्ञैव भवति ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

यथाक्रमम् । आ उष्णं ओष्णम् । आ इहि एहि । आ उदकान्तात् ओदकान्तात् । आ अर्भकेभ्यः आर्भकेभ्यः । आर्भकेभ्यो यशः प्रतीतम् । वाक्यपूरणे स्मरणे चार्थे ङित्वाभावाद्दिसंज्ञा । आ एवं नु मन्यसे । आ एवं किल तत् ॥

## ओत् ॥ २३ ॥[1]

अनेकाजर्थ आरम्भः । ओदन्तो निर्दिसंज्ञो भवति । अहो इति । उताहो इति । अत्र ओदिति प्रधानं वचनात्तु प्रधानेनापि तदन्तविधिः । तेनेह लाक्षणिकत्वान्न भवति । अदो ऽभवत् । तिरो ऽभवत् । अनुपदेशे ऽदस्तिरोन्तर्द्धाविति निसंज्ञा इह तु गौणत्वान्न भवति । अगौर्गौः सम्पन्नो गो ऽभवत् । स्वविधिडाजूर्यादिरिति निसंज्ञा । गौणत्वा-

(१) आदर्शपुस्तके २३, २४ सूत्रद्वयस्य विलुप्तत्वात्तदर्थानुसन्धानेनानुमितम् ।

वाहीके गोशब्दस्य कथमैवादिकार्यमिति चेत् ? सामान्येन संस्तुतस्य पदस्य प्रयोगाददोषः ॥

कौ वेतौ ॥ २४ ॥

क्विनिमित्तो य ओकारस्तदन्त इतौ परतो वा दिसंज्ञो भवति । पटो इति । पटविति । साधो इति । साधविति । काविति किम् । गवित्ययमाह । गौरिति वक्तव्यमशक्तया गो इत्युक्तमनुक्रियत अनेकान्ताश्रयणात् । अनुकार्यानुकरणयोरभेदविवक्षायामसत्यर्थवत्वे विभक्त्यनुत्पादः । इताविति किम् । पटो ऽत्र ॥

उञ् ॥ २५ ॥ (¹)

उञित्येनस्य वा दिसंज्ञा भवतीतौ परतः । उ इति । विति । निरेकाजनाङिति नित्यं दिसंज्ञा प्राप्ता । सानुबन्धकनिर्देशः किमर्थः । अहो इति । उताहो इति । निसङ्घातपक्षे निरनुबन्धस्यास्य मा भूत् ॥

उञः ऊम् ॥ २६ ॥

उञः ऊमित्ययमादेशो भवतीतौ परतः । इति द्विमात्रो नासिक्यो दिसंज्ञकश्च ऊं इति यद्यपठितोऽपि निसंज्ञको ऽस्ति तस्येतावेव प्रयोगो यथा स्यादित्यारम्भः ॥

दाधाभ्वपित् ॥ २७ ॥

दा धा इत्येवं रूपा धवो भुसंज्ञका भवन्ति पितौ वर्जयित्वा । दारूपाश्चत्वारः । प्रणिददाति । दाण् । प्रणिदाता । प्रणिदयते । प्रणिद्यति । धारूपौ द्वौ । प्रणिदधाति ।

(१) आदर्शपुस्तके २५ । २६ इति सूत्रद्वयं विलुप्ताक्षरं तदर्थानुसन्धानेन कल्पितमादर्शान्तरसंवादेन परिशोधनीयम् ॥

प्रणिधयति । दैपः पित्करणं ज्ञापकम् । अत्र प्रतिपदोक्तपरिभाषा नाश्रीयते । भुसंज्ञाकार्यं नेर्गदनदेत्यादिना णत्वं भुमेत्यादिना हलीत्वं च । दीयते । धीयते । धीतं वत्सेन । अपिदिति किम् । दायते बर्हिः । अवदायते भाजनम् । भुप्रदेशाः भुस्थोरित्येवमादयः ॥

क्तक्तवतु तः ॥ २८ ॥

क्तश्च क्तवतुश्च तसंज्ञौ भवतः । रूपसंज्ञेयम् । कृतः । कृतवान् । भूत इति वर्त्तमाने न इति क्तक्तवतुरूपौ त्यौ भवतः । कारितः । कारितवान् । ते सेटीति णेः खम् । भिन्नः । भिन्नवान् । द्रान्तस्य तो न इति नत्वम् । ककारः कित्कार्यार्थः । उकार उगित्कार्यार्थः । तप्रदेशाः ते सेटीत्येवमादयः ॥

संज्ञा खुः ॥ २९ ॥

संज्ञाशब्दवाच्योऽर्थः खुसंज्ञो भवति । खुप्रदेशाः खावन्यपदार्थ इत्येवमादयः ॥

भावकर्म्म ङिः ॥ ३० ॥

भावकर्म्मशब्दवाच्योऽर्थो ङिसंज्ञो भवति । ङिप्रदेशाः जिङावित्येवमादयः । तत्र भावकर्मणोर्ग्रहणं प्रत्येतव्यम् ॥

शि धम् ॥ ३१ ॥

शि इत्येतद्धसंज्ञं भवति । शि इति नपुंसके जस्शसोरादेशस्यार्थवतो ग्रहणम् । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । धप्रदेशाः धेकावित्येवमादयः ॥

सुडनपः ॥ ३२ ॥

सुडिति प्रत्याहारेण स्वौजसमौटां ग्रहणम् । सुट् घसंज्ञो भवति नपुंसकलिङ्गादन्यस्य । राजा । राजानौ । राजानः । राजानम् । राजानौ । घेकाविति दीत्वम् । सुडिति किम् । राज्ञः पश्य । अनप इति किम् । सामनी । वेमनी । अनप इति पर्युदासात् स्त्रीपुंसम्बन्धिनः सुटो घसंज्ञा नपुंसके न विधिर्न प्रतिषेधः । तत्र पूर्व्वेण जसिशसोरादेशस्य शेर्घसंज्ञा भवत्येव । ननु व्यक्तं स्त्रीपुंसग्रहणमेव कर्त्तव्यम् । एवं तर्ह्यनप इति निर्देशात् सापेक्षस्यापि नसः मविधिर्भवतीति ज्ञाप्यते । तेन अश्राद्धभोज्यलवणभोजीत्येवमादयः सिद्धाः ॥

## कतिः संख्या ॥ ३३ ॥

कतिशब्दः संख्यासंज्ञो भवति । कतिकृत्वः । कतिधा । कतिकः । किं परिमाणमेषां किमः संख्यापरिमाणे डतिश्चेति डतिः । कति वारान् भुङ्क्ते । कतिभिः प्रकारैः । कतिभिः क्रीत इति । यथाक्रमं संख्याया अभ्यावृत्तौ कृत्वम् । संख्याया विधार्थे धा । संख्यायाः कोऽतिशत इति क इत्येते भवन्ति । ननु प्रदेशेषु संख्याग्रहणेनान्वर्थविज्ञानात् संख्यायतेऽनयेति कृत्वा कतिशब्दस्यापि ग्रहणे सिद्धे किमर्थमिदम् । नियमार्थम् । अनिर्ज्ञातेषु कतिशब्दस्यैव संख्यारूपना । तेन भूरिप्रभूतादीनां निवृत्तिः संख्यावाड्डोऽबहुगणादित्यत्र बहुगणयोः प्रतिषेधाद्भवति संख्याग्रहणेन ग्रहणम् । बहुकृत्वः । गणकृत्वः । वैपुल्य सङ्घयोर्न संख्यात्वम् । वतोर्वैडिति वचनं ज्ञापकं भवति वत्वन्यस्य संख्याग्रहणेन ग्रहणम् । तावतिकः । तावत्कः । संख्याप्रदेशाः संख्यायाः कोऽतिशत इत्येवमादयः ॥

## ष्णान्तेल् ॥ ३४ ॥

कतिः संख्येति वर्तते । षकारनकारान्ता संख्या कतिशब्दश्च इल्संज्ञौ भवतः । ष्णान्तेति पदस्य संख्यापेक्षः स्त्रीलिङ्गनिर्देशः । कतेरनुवर्त्तनसामर्थ्यादिल्संज्ञा । षट् । पञ्च । सप्त । कति तिष्ठन्ति । उबिल इति जस उप् ष्णान्तेति संख्याविशेषणं किम् । विप्रुषः पामान इति अन्तग्रहणं वसनिर्देशेन संख्याप्रतिपत्यर्थमुपदेशिकार्थं च । तेन शतानीत्यादौ न भवति । इल्प्रदेशा उबिल इत्येवमादयः ॥

## सर्वादि सर्वनाम ॥ ३५ ॥

सर्वादयः शब्दाः प्रत्येकं सर्वनामसंज्ञा भवन्ति । सर्वे । सर्वस्मै । सर्वेषाम् । स्त्रियाम् । सर्वस्यै । विश्वे । विश्वस्मै । उभशब्दस्य सर्वनाम्नोभावेत्येवमर्थः पाठः । उभाभ्यांहेतुभ्यां उभयोर्हेत्वोर्वसति । द्विवचनटाप्परश्चायम् । उभौ पक्षौ । उभे कुले । उभे विद्ये । उभयस्मिन् । उभयेषाम् । जसि प्रथमचरमादिविकल्पात् पूर्वनिर्णयेनायमेव विधिः । उभये इति । डतरडतम इति स्यौ । कतरस्मै । इतर अन्य अन्यतर । इतरस्मै । अन्यस्मिन् । अन्यतरस्मै । त्वमित्ययं शब्दो ऽन्यवाची । त्वे । त्वेषाम् । नेम । नेमस्मिन् । जसि वक्ष्यमाणो विकल्पः । नेमे । नेमाः । समशब्दः सर्वशब्दास्यार्थे । समे । समस्मिन् । अन्यत्र यथासंख्यं समाः । समे देशे तिष्ठतीति भवति । सिमः । सिमस्मै । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अतरं वहिर्योगोपसंव्यानयोः । त्यद् तद् एतद् अदस इदम् एक द्विः । अत्वविधिं प्रति

द्विपर्यन्ता त्यदादयः। युष्मद् अस्मद् भवत् किम् । त्यदादीनां यद्यत्परं तत्तदुभयवाचि । सर्वनामेत्यन्वर्थसंज्ञाविज्ञानात् संज्ञोपसर्जनानां न भवति । सर्वानाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय। पूर्वपदात् स्वाऽग इति णत्वं न भवति । सर्वनामप्रदेशा आम्यात्सर्व्वनाम्न इत्येवमादयः ॥

## वा दिक्सवे ॥ ३६ ॥

दिगुपदिष्टे से वसंज्ञके सर्वादीनि वा सर्वनामसंज्ञकानि भवन्ति। न वे इति प्रतिषेधे प्राप्ते वचनम्। दक्षिणपूर्वस्यै दक्षिणपूर्वायै। उत्तरपूर्वस्यै। उत्तरपूर्वायै । दक्षिणस्याश्च दिशोर्यदन्तरालमिति प्रदाय दिशोऽन्तराल इति वसः। सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः। उत्तरपदस्य स्त्रांगोर्नीच इति प्रः। पुनष्टाप् । प्रतिपदोक्तस्य दिक्सस्य ग्रहणादिह नास्ति विकल्पः। दक्षिणैव पूर्वा अस्य मुग्धस्य दक्षिणपूर्वाय देहि । दक्षिणा च सा पूर्वा च सा अस्मिन्नपि विग्रहे परत्वाद्दिशोऽन्तराले इतीयं प्राप्तिर्न राज्ञा दण्डवारितेति कर्तव्यमेवेदं सूत्रम् । दिग्ग्रहणं किम्। न वे इति प्रतिषेधं वक्ष्यति तस्य प्रतिषेधस्यास्य च विकल्पस्य विषयज्ञापनार्थम् । सग्रहणं किम् । साधिकारविहिते वसे विकल्पो यथा स्यादातिदेशिके मा भूत। दक्षिणदक्षिणस्मै देहि। आबाध इति द्वित्वम्। ववदतिदेशश्च न व इत्यत्रापीदं सग्रहणमनुवर्तते नापि न प्रतिषेधः। वग्रहणं किम्। दक्षिणोत्तरपूर्वाणाम् । द्वन्द्वे विकल्पो मा भूत्। ननु प्रतिपदोक्तस्य ग्रहणमत्रोक्तं ततो द्वन्द्व इत्येव प्रतिषेधः सिद्ध उत्तरार्थं तर्हि वग्रहणम् ॥

न वे ॥ ३७ ॥

वसे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । द्व्यन्याय त्र्यन्याय । सर्वनामसंख्ययोरिति वक्तव्ये न पूर्वनिपातः संख्यायाः । एव प्रियविश्वाय । प्रियोभाय । इदमेव प्रतिषेधवचनं ज्ञापमत्र तदन्तविधिरस्तीति । तेन परमसर्वस्मै इत्यत्रापि सर्वनामसंज्ञा । ननु सर्वनामसंज्ञायामन्वर्थविज्ञानात्संज्ञापसर्जननिवृत्तिरुक्ता सर्वोपसर्जनश्च वस इति सर्वनामसंज्ञायाः प्राप्त्यभावात्सूत्रमिदमनर्थकम् । नानर्थकमेतत् प्रयोजनसद्भावात् । त्वकं पिताऽस्य अहकं पिताऽस्य त्वत्कपितृकः । मत्कपितृकः । वसावयवस्य सर्वनामसंज्ञाविरहादग्मा भूत् । कुत्साद्यर्थे के परतस्त्येध्वांश्चेति त्वमादेशौ स इत्येव । एकैकस्मिन् । एकोववदित्यातिदेशिके वसे प्रतिषेधो मा भूत् । वाधिकारे पुनर्वग्रहणंवसगर्भे द्वन्द्वे ऽपि नित्यप्रतिषेधार्थम् । वस्त्रान्तरगृहान्तरा इति ॥

भासे ॥ ३८ ॥

भासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय । संवत्सरपूर्वाय । मासेन पूर्वः । पूर्वावरसदृशादिसूत्रेण भासः । स इतिवर्त्तमाने पुनः सग्रहणं भासार्थे वाक्ये ऽपि तत्संज्ञाप्रतिषेधार्थम् । मासेन पूर्वाय । मुख्ये च पूर्वावरेत्यादिभासे यद्वाक्यं तत्र प्रतिषेधो न साधनं कृता बहुलमिति भासे । त्वयका कृतम् । मयका कृतम् । अन्यथा त्वत्केन कृतं मत्केन कृतमित्यनिष्टं स्यात् । त्वयका मयकेति पूर्वं त्वमादेशौ ततः सुवन्तादक् । तथाह्यग्विधौ वक्ष्यति मृदः सुप इति यद्द्वयमपीहा-

नुवर्त्तते। अभिधानतश्च व्यवस्था। तत्र मृतः प्राक् टेरम्भवति। युष्मकाभिः अस्मकाभिः। युष्मकासु। अस्मकासु। युवकयोरावकयोरिति । क्वचित्तु सुबन्तस्यटेः प्राक्। त्वयका। मयका। त्वयकि। मयकि ॥

## द्वन्द्वे ॥ ३९ ॥

द्वन्द्वे से सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। कतरकतमाय। कतरकतमात्। कतरकतमानाम् ॥

## वा जसि ॥ ४० ॥

द्वन्द्वे से सर्वादयः सर्वनामसंज्ञा वा भवन्ति। कतरकतमे। कतरकतमाः। पूर्वेण नित्यप्रतिषेधः प्राप्तः। जसीत्याधारनिर्देशाज्जसि कार्यं शीभावो विभाष्यते। अक् पूर्वेणैव प्रतिषिद्धः। यदि जसि परतस्तत्संज्ञाविकल्पेत तदा संज्ञापक्षेऽभवेत्। कतरकतमके इत्यनिष्टं प्रसज्येत। कुत्साद्यर्थविवक्षायां तु के सति तेन व्यवधानान्न शीभावः। अतः कतरकतमाका इति सिध्यति। न च केऽपि सति स्वार्थे कस्य प्रकृतिग्रहणेन ग्रहणमन्यथा सर्वादौ डतरडतमग्रहणमनर्थकं स्यात् सर्व्वनाम्न एव तयोर्विधानात् ॥

## प्रथमचरमतयाल्पार्द्धकतिपयनेमाः ॥ ४१ ॥

प्रथमादयः शब्दाः जसि वा सर्वनामसंज्ञा भवन्ति। प्रथमे। प्रथमाः। चरमे। चरमाः। तय इति त्यग्रहणं तेन वचनात्संज्ञाविधावपि तदन्तविधिः। द्वाववयवावेषामिति द्वितये। द्वितयाः। संख्याया अवयवे तयडिति तयट एकदेशविकृतस्यानन्यत्वाद्विकल्पः। द्वये। द्वयाः। उभये। अमुभयशब्दः सर्वादित्वान्नित्यं सर्वनामसंज्ञः।

अल्पे। अल्पाः। अर्द्धे। अर्द्धाः। कतिपये। कतिपयाः। नेमे। नेमाः। नेमशब्दस्य प्राप्ते ऽन्येषामप्राप्ते विभाषा। अत्रापि जसः कार्य्यं प्रति विकल्पः। कुत्साद्यर्थे के कृते तेन व्यवधानात्पक्षे ऽपि सर्वनामसंज्ञा न भवति। तेन प्रथमका इत्यादि सिद्धम्॥

## पूर्वादयो नव॥ ४२॥

पूर्वादयो नव सर्वादौ व्यवस्थिता जसि वा सर्वनामसंज्ञा भवन्ति। तथाहि। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायां स्वमज्ञातिधनाख्यायामन्तरंबहिर्योगोपसंव्यानयोरिति। पूर्वे। पूर्वाः। परे। पराः। अवरे। अवराः। दक्षिणे। दक्षिणाः। उत्तरे। उत्तराः। अपरे। अपराः। अधरे। अधराः। व्यवस्थायामिति किम्। दक्षिणा इमे गाथका अपरा वादिनः। नात्र दिग्देशकालकृतो ऽवधिनियमो व्यवस्था प्रतीयते किं तर्हि प्रावीण्यमन्यार्थता च। असंज्ञायामिति किम्। उत्तराः कुरवः। व्यवस्थायामपीयं संज्ञा। तेषां स्वे शिष्याः स्वाः। यदा ज्ञातिधनयोः संज्ञारूपेण वर्तते स्वशब्दस्तदा नास्ति सर्व्वनामसंज्ञा। उल्मुकानीव स्वा दहन्ति विद्यमाना अपि स्वा न दीयन्ते। अन्तरे गृहाः। अन्तरा गृहाः। अन्तरा गृहा नगरबाह्या इत्यर्थः।

अपुरीति वक्तव्यम्।

अन्तरायाः पुरः आगतः। बाह्याया इत्यर्थः। अन्तरे शाटकाः। अन्तराः शाटकाः। उपसंव्यानमित्युत्तरीयवस्त्रस्य संज्ञा। बहिर्योगोपसंव्यानयोरिति किम्। इमे ग्रामाणामन्तराः। अयमनयोरन्तरे स्थितः। जसि कार्य

विभाष्यते अक्कु भवत्येव प्रतिषेधाभावात् । पूर्वके । पूर्वका इत्येवमादि ज्ञेयम् ॥

## ङिङस्योरतः ॥ ४३ ॥

पूर्वादयो नव चेति चानुवर्तते । अकारान्तानि नव पूर्वादीनि ङिङस्योर्वा सर्वनामसंज्ञानि भवन्ति । पूर्वस्मिन् । पूर्वे । पूर्वस्मात् । पूर्वात् । परस्मिन् । परे । परस्मात् । परादित्यादि योज्यम् । ङिङस्याश्रयं कार्य्यं विभाष्यते अक्कु भवत्येव । अत इति किम् । पूर्वस्याम् । पूर्वस्याः ॥

## तीयस्य ङिति ॥ ४४ ॥

तीयस्यान्तस्य ङिति वा सर्वनामसंज्ञा भवति । द्वितीयस्मै । द्वितीयाय । तृतीयस्याः । तृतीयायाः । इह मुखादागतः पार्श्वादागतः मुखपार्श्वतसोरीय इतीयः । मुखतीयः । पार्श्वतीयः । पर्वते जातः पर्वतीय इति । अमीषां लाक्षणिकत्वादग्रहणम् । ङितीति किम् । द्वितीयानाम् । ङिति कार्यं विकल्पते अक्कु न भवत्येव । कुत्साद्यर्थे के कृते द्वितीयकाय ॥

## इग्यणो जिः ॥ ४५ ॥

इक् यो यणः स्थाने भूतो भावी वा स जिसंज्ञो भवति । इक् यणः स्थाने भावित्वेनासत्त्वात् कथं जिसंज्ञ इति ? चेत् संज्ञिनो भावित्वात्संज्ञापि भाविनी । यथास्य सूत्रस्य शाटकं वयेति भावो । यथा षेष्यस्य पुत्रपत्योर्जिः । वसोर्जिरिति । कारीषगन्धीपुत्रः । विदुषः । यस्य शास्त्रान्तरेण भूतो यणः स्थाने इग्भूतो जिसंज्ञो यथा जेरिति

परपूर्वत्वं जेरिति दीत्वम् । ह्वता गृहीतः । यदि यणः स्थाने इक् भाव्यमानो जिसंज्ञ इहापि स्यात्, अदुह्वितराम्, अचयुभ्यामचयुवा । दुह आत्मकर्म्मणि लङ् । स्तोश्च जिश्चे ति जियकोः प्रतिषेधः । शप्तस्योप् अत्र लस्य स्थाने इदृव- कारस्य स्थान उदृतौ । ततश्च जेरिति परपूर्वत्त्वं हल इति दीत्वं च प्रसज्येत । नायं दोषः । भाविन्या संज्ञया विधी- यमानस्येको जित्वात् । कार्यकालं संज्ञापरिभाषमिति । जिप्रदेशाः षेस्य पुत्रपत्योर्जिरत्येवमादयः ॥

## तास्थाने ॥ ४६ ॥

रियेयमनुसूत्रमुच्चारिता ता सास्थान एव ज्ञातव्या । बहवो हि तार्थाः । स्वस्वामिसम्बन्धसमीपसमूहविका- रावयवस्थानादयः । तेषु प्राप्तेषु नियमः क्रियते अन्यार्थ- सम्प्रत्ययो मा भूदिति । नित्यशब्दार्थसम्बन्धविवक्षायां स्थानशब्दः प्रसङ्गवाची । प्रसङ्गश्च प्राप्ताहत्वं स्वार्थप्रत्या- पकावसरो वा । यथा गुरोः स्थाने शिष्य उपचर्य्यते इति गुरोः प्रसङ्ग इति गम्यते । एवमस्तेः स्थाने प्रसङ्गे भूर्भ- वति । भविता । भवितुम् । भवितव्यम् । ब्रुवः प्रसङ्गे वचिर्भवति । वक्ता । वक्तुम् । वक्तव्यम् । अनित्यशब्दा र्थसम्बन्धविवक्षायामपकर्षवाची स्थानशब्दः । यथा गोः स्थाने अश्वं बधान । एवमस्तेः स्थाने ऽपकर्षे भूर्भवति । अस्तेरनन्तर अस्तेः समीप इत्येवमादयो निवर्तिना भव- न्ति । यत्र ता निर्देशे सम्बन्धविशेषो न निर्ज्ञातस्तत्रेयं परि- भाषोपतिष्ठते । शास इत्येवमादिषु तु शासोय उस्तस्ये- त्यवयवयोगो निर्ज्ञात इति नेयं व्याप्रियते ॥

## स्थाने ऽन्तरतमः ॥ ४७ ॥

अन्तरः प्रत्यासन्नः। स्थाने प्राप्यमाणानामन्तरतम एवादेशो भवति। आन्तर्य्यं च शब्दस्य स्थानार्थगुणप्रमाणतः। स्थानतः। लोकाग्रम् । स्वे ऽकोदीरिति कन्ठ्य एवाकारो दीर्भवति। अर्थतः । वतण्डस्यापत्यं स्त्री वतण्डादिति यञ् तस्य स्त्रियामुवित्युप । वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः। पोटायुवतोस्तोकादिसूत्रेण षसंज्ञः षसः स्त्र्युक्तपुंसकादिना पुंवद्भावः प्राप्तो जातिश्चेति प्रतिषिद्धः पुंवद्यजातीयदेशीय इत्यर्थतो वात्तण्डाशब्दो भवति। गुणतः। पाकः। त्यागः। अल्पप्राणस्य तादृश एव शेषवतस्तादृश एव। प्रमाणतः। अमुष्मै। अमूभ्याम्। प्रस्य प्रः। दीसंज्ञकस्य दीः। स्थान इति वर्तमाने पुनः स्थानग्रणं यत्रानेकमान्तर्य्यं सम्भवति तत्र स्थानत एव भवति। चेता। स्तोता। प्रमाणातो ऽकारः प्राप्तः स्थानतो ऽन्तरतमावेकारौकारौ च। तत्र पुनः स्थानग्रहणात्स्थानकृतमेवान्तर्यं बलीय इत्येकारौकारौ भवतः। तमग्रहणं किम्। वाग्घसति हकारस्य पूर्वस्वत्वे स्वोष्मणस्सोष्मा द्वितीयः प्राप्तो नादवतोनादवां स्तृतोयः। तमग्रहणाद्यः सोष्मा नादवांश्च चतुर्था भवति॥

## रन्तो ऽण उः॥ ४८॥

स्थाने ऽण् प्रसज्यमान एव रन्तो भवति। लक्षणान्तरेण विधीयमान एवाण् विधानबलेन तत्साहायकं प्रतिपद्यमानेन रन्तो भाव्यत इत्यर्थः। अकर्तरीति निर्देशात्सर्वादेशो न भवति। कर्त्ता। किरति। गिरति। द्वैमातुरः। भरतः शात्तमातुरः। द्वयोर्मात्रोरपत्यं तस्यापत्यमित्यणि परतो मातुरुत्संख्यासम्भद्रादेरित्युकारादेशः। उरिति किम्। गेयम्। पन्थाः। अणिति किम्। मातापितरौ। सौधातकिः।

आनङुङ्कङौ । सङ्घातावेतौ नाणौ । महर्षिरित्यत्र द्वयोः स्थाने एव कथं रन्तः । यो हि द्वयोस्तानिर्दिष्टयोः स्थाने भवति सो ऽन्यतरेणापि व्यपदिश्यते । नरस्य पुत्रः । नार्याः पुत्रः । ऋकारऌकारयोः स्वसंज्ञोक्ता । तेन तवल्कारः लत्वम् । रन्त इति लणो लकाराकारेण प्रश्लेषनिर्देशात् प्रत्याहारग्रहणं तेनादोषः ॥

## अन्ते ऽलः ॥ ४९ ॥

तानिर्दिष्टस्य य उच्यते विधिः सो ऽन्ते वर्तमानस्यालः स्थाने भवति । तास्थान इति तास्थाने निर्ज्ञातस्थानेनान्त उपसंहारः क्रियते । टित्किन्मितस्त्ववयवसम्बन्धतानिर्दिष्टस्य विधीयमाना अन्तस्य न भवन्ति । इन्द्राण्याः पञ्चगोणिः । दशगोणिः । अन्तस्येद्भवति । ननु पुंसोदोयिति वर्तमाने हलि स्वमितीद्रूपस्ययो ऽन्त्यस्तस्य प्राप्नोति । नानर्थके ऽन्ते ऽलो विधिरिति न भवति । तास्थाने इत्यस्य योगस्यकिं प्रयोजनम् । यस्तानिर्दिष्टस्तस्य स्थाने आदेशो यथा स्यादधिकस्य मा भूत् । पादः पदिति । द्विपदः पद्य पादन्तस्य न भवति ॥

## ङित् ॥ ५० ॥

ङितः सर्व्वे कालः ङिच्च आदेशो ऽनेकाल् सो-ऽन्तेलः स्थाने भवति । वक्ष्यति युष्मदस्मदे एकङः स्वञ् । यौष्माकीणः । आस्माकीनः । दकारस्याकङ अकारोच्चारणसामर्थ्यात्पररूपाभावः । सिद्धे सत्यारम्भो नियमाय ङिदेवानेकालन्त्यस्य स्थाने अतो ऽन्यः सर्वस्य । अस्ति ब्रूआर्भूवचीत्येवमादयः सर्व्वादेशाः ॥

अभ्यावृत्तिर्जन्म। क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात्॥ पञ्चकृत्वो भुङ्क्ते। संख्यायाः किम्। भूरिवारान् भुङ्क्ते॥

**द्वित्रिचतुर्भ्यः सुच्। ५। ४। १८॥**

कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिः। रात्सस्य। चतुः॥

**एकस्य सकृच्च। ५। ४। १९॥**

सकृदित्यादेशः स्याच्चात्सुच्च। सकृद् भुङ्क्ते। संयोगान्तस्येति सुचो लोपः। न तु हल्ङ्याबिति। अभैत्सीदित्यत्र सिच इव सुचोऽपि तदयोगात्॥

**विभाषा बहोर्धाऽविप्रकृष्टकाले। ५। ४। २०॥**

अविप्रकृष्ट आसन्नः। बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते। आसन्नकाले किम्। बहुकृत्वो मासस्य भुङ्क्ते॥

**तत्प्रकृतवचने मयट्। ५। ४। २१॥**

प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनम्। भावेऽधिकरणे वा ल्युट्। आद्ये। प्रकृतमन्नमन्नमयम्। अपूपमयम्। यवागूमयी। द्वितीये अन्नमयो यज्ञः। अपूपमय पर्व॥

**समूहवच्च बहुषु। ५। ४। २२॥**

सामूहिकाः प्रत्यया अतिदिश्यन्ते चान्मयट्॥ मोदकाः प्रकृता मोदकिकम्। मोदकमयम्। शाष्कुलिकम्। शष्कुलीमयम्। द्वितीयेऽर्थे। मोदकिको यज्ञः। मोदकमयः॥

**अनन्तावसथेतिहभेषजाञ्ञ्यः। ५। ४। २३॥**

अनन्त एवानन्त्यम्। आवसथ एवावसथ्यम्। इतिहेति निपातसमुदायः। ऐतिह्यम्। भेषजमेव भैषज्यम्॥

## देवतान्तात्तादर्थ्ये यत् । ५ । ४ । २४ ॥

तदर्थ एव तादर्थ्यम् । स्वार्थे ष्यञ् । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् ॥

## पादार्घाभ्याञ्च । ५ । ४ । २५ ॥

पादार्थमुदकं पाद्यम् । अर्घ्यम् । अनुक्तसमुच्चयार्थश्चकारः । यथादर्शनमन्यत्रापि प्रत्ययो भवति । एष वै सप्तदशाक्षरश्छन्दस्यः । वसु । अपस् इति अप्शब्दाद् द्वितीयाबहुवचनान्तम् । ओक । कवि । क्षेम । वर्चस् । निष्केवल । उक्थ । जन । पूर्व । नव । सूर । मर्त । यविष्ठ । इत्येतेभ्यश्छन्दसि स्वार्थे यत्प्रत्ययो भवति । अग्निरीशे वसव्यस्य । अपस्यो वसानाः । द्वितीयाबहुवचनस्यालुक् । अपो वसाना इत्यर्थः । स्व ओक्ये । कव्योऽसि । क्षेम्यमध्यवस्यति । वायुर्वर्चस्यम् । निष्केवल्यं शंसति । उक्थ्यम् । जन्यम् । पूर्व्या विशः । स्तोमैर्जनयामि नव्यम् । सूर्या मर्त्यः । यविष्ठ्यः । समशब्दादावतुप्रत्ययः । समावद्वसति । य ईव ते लोके । य ईव ते ब्राह्मणाः । अत्र छान्दसो दीर्घः । य इव ते इत्यर्थः । नवस्य नू आदेशः ॥ त्नप्तनप्खाश्च प्रत्यया वक्तव्याः ॥ * ॥ नूत्नम् । नूतनम् । नवीनम् ॥ नश्च पुराणे प्रात् ॥ * ॥ पुराणे वर्तमानात्प्रशब्दान्नो वक्तव्यः । चात्पूर्वोक्तम् । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥ भागरूपनामभ्यो धेयः ॥ * ॥ भागधेयम् । रूपधेयम् । नामधेयम् ॥ मित्राच्छन्दसि ॥ * ॥ मित्रधेये यतस्व ॥ आग्नीध्रसाधारणादञ् ॥ * ॥ आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी ॥ अवयसमरुद्भ्यां छन्दस्यञ् वक्तव्यः ॥ * ॥ आवयसे वर्धन्ते । मारुतं शर्धः ॥

## अतिथेर्ञ्यः । ५ । ४ । २६ ॥

तादर्थ्य इत्येव ॥ अतिथये इदमातिथ्यम् ॥

देवात्तल् । ५ । ४ । २७ ॥

देव एव देवता ॥

अवेः कः । ५ । ४ । २८ ॥

अविरेव अविकः ॥

यावादिभ्यः कन् । ५ । ४ । २९ ॥

याव एव यावकः ॥

लोहितान्मणौ । ५ । ४ । ३० ॥

लोहित एव मणिर्लोहितकः ॥

वर्णे चानित्ये । ५ । ४ । ३१ ॥

लोहितकः कोपेन ॥ लोहिताल्लिङ्गबाधनं वा ॥ * ॥ लोहितिका। लोहिनिका ॥

रक्ते । ५ । ४ । ३२ ॥

लाक्षादिना रक्ते यो लोहितशब्दः तस्मात्कन् स्यात् ॥ लिङ्गबाधनं वेत्येव । लोहितिका । लोहिनिका शाटी ॥

कालाच्च । ५ । ४ । ३३ ॥

वर्णेचानित्ये रक्ते इति द्वयमनुवर्तते । कालकं मुखं वैलक्ष्येण । कालकः पटः । कालिका शाटी ॥

विनयादिभ्यष्ठक् । ५ । ४ । ३४ ॥

विनय एव वैनयिकः । सामयिकः ॥ उपायाद् घ्रस्वत्वञ्च ॥*॥ औपयिकः ॥

वाचो व्याहृतार्थायाम् । ५ । ४ । ३५ ॥

सन्दिष्टार्थायां वाचि विद्यमानाद्वाक्यशब्दात्स्वार्थे ठक् ॥ सन्देशवाग्वाचिकं स्यात् ॥

**तद्युक्तात्कर्मणोऽण् । ५ । ४ । ३६ ॥**

कर्मैव कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः ॥ अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम् ॥ * ॥ कुलाल एव कौलालः । वारुडः । नैषादः । कार्मारः । चाण्डालः । मैत्रः । आमित्रः । सान्नाय । आनुजावर । आनुषूक । चातुष्प्राश्य । राक्षोघ्न । वैयातक । वैकृत । वारिवस्कृत । आग्रायण । आग्रहायण । सान्तपन । अण्णन्ताश्छन्दसि भाषायां च निपात्यन्ते ॥

**ओषधेरजातौ । ५ । ४ । ३७ ॥**

स्वार्थेऽण् । औषधं पिबति । अजातौ किम् । ओषधयः क्षेत्रे रूढाः ॥

**प्रज्ञादिभ्यश्च । ५ । ४ । ३८ ॥**

प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥

**मृदस्तिकन् । ५ । ४ । ३९ ॥**

मृदेव मृत्तिका ॥

**सस्नौ प्रशंसायाम् । ५ । ४ । ४० ॥**

रूपपोऽपवादः । प्रशस्ता मृत् मृत्सा । मृत्स्ना । उत्तरचान्यतरस्यांग्रहणान्नित्योऽयम् ॥

**वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि । ५ । ४ । ४१ ॥**

स्वार्थे । यो नोदुरेवो वृकतिः । ज्येष्ठतातिं बर्हिषदम् ।

म् । गादेशो ग इव । अचिनुतम् । क्त्वादेष्प्रतिषेधः । इवेति किम् । स्थानी आदेशस्य संज्ञेति मा विज्ञायि । अत्र को दोषः । आङो यमहन इति वधेरेव दविधिः स्याद्धन्तेस्त्वाश्रयो न स्यात् । इवग्रहणादुभयत्र भवति । आहत । आवधिष्ट । आदेशग्रहणं किम् । विकारमात्रेऽपि यथा स्यात् । पचतु । पचन्तु । मिङन्तं पदं सिद्धम् । अनल्विधाविति किम् । द्यौः । पन्थाः । स्वः । द्युपथित्यदादेशा न । स्थानिवद्भावे हल्ङ्याप इति सोः खं प्रसज्येत । अलः परो विधिरयं प्राप्तः । क इष्ट इत्यत्रेकारस्य स्थानिवद्भावे हशिरेरुत्वं प्रसज्येत । अलि विधिरयम् । प्रदीव्येति क्त्वात्यस्य स्थानिवद्भावे वलाद्यगस्येट् प्रसज्येत । अलःस्थानिविधिरयम् । अलाश्रयो विधिः अल्विधिः । शाकपार्थिवादिवन्मयूरव्यंसकादित्वात्सः ॥

## परेऽचः पूर्वविधौ ॥ ५७ ॥

आदेशः स्थानीवेति वर्तते । अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानीव भवति । पटुमाचष्टे पटयति । णिनिमित्तस्य टिखस्य स्थानिवद्भावादुङोऽत इति ऐप्न भवति । अवधीत् । अगनिमित्तस्यातः खस्य स्थानिवद्भावादतोनादेर्धेरिति हलन्तलक्षण ऐब्विकल्पो न भवति । पूर्वेणानल्विधाविति प्रतिषेध उक्ते अल्विध्यर्थमिदम् । पर इति किम् । वैयाघ्रपद्यः । पादस्य खमजादेशः परनिमित्तो न भवतीति पद्भावे स्थानीव न भवति । युवतिर्जायाऽस्य युवजानिः । जायाया निङ् न परनिमित्तक इति वलि य्वो खं न प्रतिबध्नाति । अच इति किम् । प्रगत्य । प्ये परतो ङस्य खं परनिमित्तं प्रस्य तुकि कर्त्तव्ये स्थानीव न भवति । पूर्वविधाविति किम् ।

नैधेयः । निधेरपत्यं द्वच इनोऽनिञ इति ढणि परविधौ कर्त्तव्ये आत्वस्य न स्थानिवद्भावः । अन्यथा त्र्यचो ढण् न स्यात् । हे गौः । परविधौ सुखं कर्त्तव्ये ऐचो न स्थानिवद्भावः । अचोऽनादिष्टात् पूर्वविधौ स्थानिवद्भावः । इह मा भूत् । अचीकरत् । अजीहरत् । अत्र हि णौकच्युङ इति प्रादेशे कृते द्वित्वे च प्र देशस्य स्थानिवद्भावात् धौ कच्यनक्त्वे सन्वदिति सन्वद्भावो न प्राप्नोति । आदिष्टादेषोऽचः पूर्व इति स्थानिवद्भावाभावाद्भवति । वाय्वोरध्वर्य्वोरित्यत्र यत्वविधिं प्रति स्थानिवद्भावप्रतिषेधाद्धलि व्योत्वमिति यत्वं प्राप्नोति । कर्त्तव्योऽत्र यत्नः ॥

## न पदान्तद्वित्ववरेयखस्वानुस्वारदीर्घविधौ॥५८॥

पदान्तादिविधिष्वजादेशः स्थानीव न भवति । पूर्वेण प्राप्तस्य स्थानिवद्भावस्य प्रतिषेधोऽयम् । पदान्तविधौः। कौ स्तः । कानि सन्ति । श्नसः खं ङ्क्ङिन्निमित्तमावादेशे यणादेशे च कर्तव्ये स्थानीव न भवति । अथ नात्र नियमः पूर्वविधेः । स्तः कौ सन्ति कानि इत्यपि प्रयोगात् । आदिष्टाच्चाचः पूर्वमौकारादि । इदं तद्धुदाहरणम् । अभिषन्ति । निषन्ति । द्वित्वविधौ । दध्यत्र । मद्ध्वत्र । यणादेशस्य स्थानिवद्भावप्रतिषेधादनचीति धकारस्य द्वित्वं सिद्धम् । असिद्धं बहिरङ्गमन्तरङ्ग इति स्फान्तस्य खं न भवति । वरे विधौ । यायावरः । यातेर्यङन्ताद्यो यङ इति वरे कृते अतः खस्यागनिमित्तस्य स्थानिवद्भाव प्रतिषधाद्यखे च कृते अकारस्य स्थानिवद्भावादिटि चात्खमिति आत्खं न भवति । ईविधौ । आमलकम् । पञ्चदाद्विः। आमलक्यारवयवः फलं नित्यं दुशरादेरिति मयट् । तस्य उप्फल इत्युप् । हृदुप्युबिति स्त्रीत्यस्योप् परनि-

मित्तकस्तस्य स्थानिवद्भावप्रतिषेधाद्यस्य ङ्याच्चेत्यस्त्वं न भवति । पञ्चभिर्दाक्षीभिः क्रीतः राडुबखाविति ठण् । उपि स्त्रीत्यस्योप् । तस्य स्थानिवद्भावप्रतिषेधादिकारस्य स्वं न भवति । यस्वविधौ । कण्डूतिः । कण्डूयतेः क्तिचि कृतौ खाविति क्तिचि कृते अतः खस्यागनिमित्तस्य स्थानिवद्भावप्रतिषेधाद्धलि व्योः स्वमिति यस्वं भवति । उवादेशं प्रति स्थानिवद्भावः स्यादिति चेद् भवतु । च्छ्वोः शूड् भविष्यति । ततः स्वेकोदीत्वं योऽनादिष्टात्पूर्व्व इति न्यायात्पुनरुवादेशो न भवति । स्वविधौ । शिण्ढि । पिण्ढि । श्नसः खस्य स्थानिवद्भावप्रतिषेधादत्रानुस्वारस्य परस्वत्वम्भवति । अनादिष्टादचः पूर्वस्थानी नकारस्तस्यैवायं विधिः । अनुस्वारविधौ । शिंषन्ति। पिंषन्ति। नश्चापदान्तस्य झलीत्यनुस्वारे कर्त्तव्ये नकारः श्नसः खमित्यनादिष्टादचः पूर्व इत्यखं न स्थानिवद्भवति । दीविधौ। प्रतिदीव्नः। प्रतिदीव्ना । अनः खस्य परनिमित्तस्य स्थानिवद्भावप्रतिषेधात् हल्यभकुर्छुर इत्यनुवृत्तावुङोति दीत्वं सिद्धम् । वकारो हल्परोऽस्मादेव वचनात् । चर्विधौ । जक्षतुः । जक्षुः । गमहनजनखनघसोऽनङि क्ङितीत्युङः खं घकारस्य चर्त्वे कर्तव्ये स्थानीव न भवति । गिर्योरिति प्रकृतिपूर्वत्वेनान्तरङ्गे दीत्वे कर्तव्ये यणादेशो ऽसिद्धः ॥

## द्वित्वे ऽचि ॥ ५९ ॥

नपदान्तद्वित्वेत्यतो द्वित्वग्रहणमनुवर्तते । तत्कार्यविशेषणम् । द्वित्वनिमित्ते ऽचि अजादेशो द्वित्वे कर्त्तव्ये स्थानीव भवति । रूपातिदेशोऽयम् । आदुङ्णिखान्तस्थाधाद्यादेशाः प्रयोजनम् । आत्वम् । पपतुः। पपुः । इटि चात्खमिति आत्खस्य स्थानिवद्भावादेकाचो लिटि द्वित्वं सिद्धम् ।

उङः खम् । जग्मतुः । जग्मुः। गमहनजनखनघसोऽनङीत्युङः खस्य स्थानिवद्भावाद् द्वित्वं भवति । णिखम् । आटिटत् । लुङि कचि णिखे च कृते णिखस्य स्थानिवद्भावादच इति द्वितीयस्यैकाचो द्वित्वं भवति । अन्तस्थादेशः । चक्रतुः । चक्रुः । यणादेशस्य स्थानिवद्भावादेकाचो द्वित्वं भवति । अयाद्यादेशाः । अहं निनाय निनय । अहं लुलव लुलाव। अयाद्यादेशानां स्थानिवद्भावादस्य णलि नेनै लोलौ इति द्वित्वं भवति । द्वित्वनिमित्त इति किम् । दुद्यूषति । ऊठि यणादेशो धोर्नतूठ् द्वित्वनिमित्तमिति स्थानिवद्भावो न भवति । अचीति किम् । जेघ्रीयते । देध्मीयते । यङि द्वित्वनिमित्ते घ्राध्मोरीकारादेशः स्थानीव न भवति । द्वित्वे कर्त्तव्य इति किम् । जग्ले । मग्ले । धोराकारस्याचः स्थानं न भवति ॥

## ईप्केत्त्यव्यवाये पूर्वपरयोः ॥ ६० ॥

ईबिति यत्र निर्दिश्यते तत्र पूर्वस्याव्यवहितस्य कार्य्यं भवति । केति यत्र निर्दिश्यते तत्र परस्याव्यवहितस्य कार्यं भवति । ताप्रक्लृप्तिर्भवतीत्यर्थः । इति करणोऽर्थनिर्देशार्थः । ईप्केति इमे संज्ञे द्वयोर्विभक्त्योः प्रत्यायिके प्रसिद्धे । ताभ्यामितिशब्दः परः प्रयुज्यमानो विभक्तिप्रतिपाद्यो योऽर्थस्तं प्रत्याययति । ईबर्थो यत्र निर्दिश्यते कार्थो यत्र निर्दिश्यत इत्यर्थः । ईबर्थनिर्देशः । अचीको यण् । दध्युदकम् । मध्विवयत् । अव्यवाय इति किम्। धर्म्मविदत्र । कार्थनिर्देशः। अचात्। ददति । दधति । अव्यवाय इति किम् । चिकीर्षन्ति । शपा व्यवायात् झेरदादेशो न भवति ॥

नाशः खम् ॥ ६१ ॥

नाशोऽनुपलब्धिरभावोऽप्रयोग इत्यनर्थान्तरम् । एतैः शब्दैः प्रतिपाद्यमानस्यार्थस्य खमित्येषा संज्ञा भवति । इतिकरणोऽनुवर्तते । तेन नाशार्थस्य संज्ञेयं लभ्यते । स्थानिग्रहणं चानुवर्तते । प्रसङ्गवांश्च स्थानी । तेन प्रसक्तस्य नाशः खसंज्ञो भवति । भाविनो नाशस्य संज्ञित्वं संज्ञापि भाविनीति नेतरेतराश्रयदोषः । वक्ष्यति वलिव्योः खम् । दासेरः । क्षुद्राभ्यो वेति ढ्रण् । इटि चात्खम् । गोदः । यिखम् । जह्यात् । खप्रदेशा वलिव्योः ख मित्येवमादयः ।

उबुजुस् ॥ ६२ ॥

तस्यैव नाशस्य उप् उच् उस् इत्येताः संज्ञा भवन्ति । संज्ञासङ्करप्रसङ्ग इति चेत् उप् उच् उस् संज्ञाभिर्भावितस्य नाशस्य एताः पृथक्संज्ञास्तेनादोषः । नोमतागोरिति प्रतिषेधो ज्ञापकः खसंज्ञाया अत्र समावेशो भवति । ततः पञ्च सप्तेति त्याश्रयं पदत्वं सिद्धम् । क्सस्याचि खमिति वर्तमाने वोब् दुहदिहादिसूत्रे उब्वचनं ज्ञापकमुबुजुसः सर्वस्य स्थाने भवन्ति नान्तस्य । एता अपि भाविन्यः संज्ञाः । उदाहरणम् । पञ्चशष्कुलम् । पञ्चभिः शष्कुलीभिः क्रीतम् । राढुवखाविति आर्हीयस्य ठण उप् । ततो हृदुप्युबिति क्रीत्यस्योप् । जुहोति । बिभेति । उज् जुहोत्यादिभ्य इति शप उच् । तत उचि द्वित्वम् । पञ्चालाः । पञ्चालानां निवासो जनपद इत्यागतस्याणो जनपद उसिति उस् । ततो युक्तवदुसि लिङ्गसंख्ये इति लिङ्गसंख्यातिदेशः । उबुजुसप्रदेशा हृदुप्युबित्येवमादयः ।

अच इति जातिनिर्देशः । निर्द्धारणे च ता । समानजातीयस्यैव लोके निर्द्धारणं प्रसिद्धमिति द्वितीयमज्ग्रहणं लभ्यते । अचां योऽन्त्योऽच् तदादिशब्दरूपं टिसंज्ञं भवति । धर्मविदत्र इच्छब्दः । ज्ञानभुदत्र उच्छब्दः । आतामाथामित्यत्र आम्शब्दः । पचेते । पचेथे । टिद्टेरे इति टेरेत्वम् । अहं पचे इति व्यपदेशिवद्भावात्तदादित्वम् । टिप्रदेशा टिट्टेरे इत्येवमादयः । ॥

उपान्त्यालुङ् ॥ ६६ ॥

अलामन्त्यस्य समीप अलुङ्संज्ञो भवति । अन्त्यग्रहणादलां समुदायो लभ्यते । अल्समुदायापेक्षया ह्यन्ते । ऽल् भवति न केवलः । पच इत्यकारः । पाचकः । भेदकः उपान्त्य इति किम् । व्यवहितस्यान स्य च मा भूत् । अलिति किम् । समुदायस्य मा भूत् । उङ्प्रदेशा उङोऽतः य्युङ इत्येवमादयः ॥

येनालि विधिस्तद न्ताद्योः ॥ ६७ ॥

येन शब्देन यो विधिर्विधीयते स तदन्तस्य भवति । अलि यो विधिः स तदादौ भवति । योचोरासुयुव इत्यचो यविधिर्विधीयत इत्यजन्ताद्भवति । चेयम् । जेयम् । केवलाद्व्यपदेशिवद्भावेन । एयम् । अध्येयम् । आतः क इत्याकारान्तात्कः । गोदः । कम्बलदः ॥ सत्यविधौ न तदन्तविधिः ॥ * ॥ सविधौ । कष्टं परमश्रित इति इप्सो न भवति।त्यविधौ।सूत्रनडस्यापत्यं सौत्रनडिः।नडादेःफणिति फण् न भवति ॥ उगित्कार्यं वर्णकार्यञ्च तदन्तादपि भवतीति वक्तव्यम् । । भवती।अतिभवती । दाक्षिः।प्लाक्षिः। नैतद्वक्तव्यम । सुपा श्रितादयो विशिष्यन्ते न तु श्रितादिभिः

किञ्चिद्विशेषणेन च तदन्तविधिः । मृदा नडादयो विशिष्यन्ते न नडादिभिर्मृदा । उगिता च वर्णेन च मृद्विशिष्यते । अलीति वर्णनिर्देशः । अलि यो विधिः स तदादौ भवति । श्रुधुभ्रुवां य्वोरचीयुवौ । चिक्षियतुः । चिक्षियुः । व्यपदेशिवद्भावेन केवले ऽपि तदादित्वम् । चिक्षिय । येनेति करणे भा । विधिशब्दः कर्मसाधनः ॥

## अक्ष्वाद्यैब्दुः ॥ ६८ ॥

अक्ष्विति जातिनिर्देशो निर्द्धारणे चेप् । अक्षु आदिभूतोऽच् ऐप् यस्य समुदायस्य स दुसंज्ञो भवति । ऐतिकायनस्य शिष्य ऐतिकायनीयः । दोश्छ इति छः । आम्बष्ठस्यापत्यमाम्बष्ठ्यः । छित्कुरुनाद्यजादकोशलाञ्ञ्य इति ञ्यः । द्रुघणा अस्मिन्देशे सन्ति वुञ्छराकठेलादिसूत्रे अरीहणादित्वाद्वुञ् । द्रौघणके जातो द्रौघणकीयः । दोः कषोड इति छः । अक्ष्विति किम् । इलामविवक्षार्थम् । औपगवीयः । कापटवीयः । जात्यपेक्षया बहुत्वं किम् । द्व्यच एकाचश्च दुसंज्ञा यथा स्यात् । मालामयम् । वाङ्मयम् । आदिरिति किम् । सभासन्नयने जातः साभासन्नयनः । छः प्रसज्येत । ऐबिति किम् । दत्तस्यायं दात्तः । दुप्रदेशा दोश्छ इत्येवमादयः ।

## त्यदादिः ॥ ६९ ॥

त्यदादीनि शब्दरूपाणि दुसंज्ञानि भवन्ति । अक्ष्वादिरिति नेहाभिसम्बध्यते । यद्यभिसम्बन्ध्येत तदोपसर्जनत्वे सत्यपि वचनात्तदादेरेव दुसंज्ञा स्यान्न केवलानामिति । त्यदीयः । तदीयः । तवापत्यं त्वादायनिः । मादायनिः । वा वृद्धादेरिति फिञ् । त्यदादिः सर्वादेरन्तर्गण आ परिसमाप्तेः ॥

एङ् प्राग्देशे ॥ ७० ॥

अक्ष्वादेरिति वर्तते। एङ् यस्याचामादिस्तद् संज्ञं भवति प्राचो देशाभिधाने। एणीपचने जात एणीपचनीयः। एवं गोनर्दीयः। भोजकटीयः। एङिति किम्। आहिच्छत्रः। कान्यकुब्जः। प्राग्ग्रहणं किम्। देवदत्ती नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्तः। देश इति किम्। गोमती नाम नदी तस्यां भवो गौमतः। वा नाम्न इति यदा दुसंज्ञा नास्ति तदेदमुक्तम्। भिन्नलिङ्गो नदी देशोग्रामो पुरमिति ज्ञापकान्नदी देशग्रहणेन न गृह्यते। शरावती नाम नदी तस्याः पूर्वो देशः प्राग्देशः। उत्तरस्तूदीचां देशः॥

वा नाम्नः ॥ ७१ ॥

पुरुषैर्व्यवहाराय सङ्केतितः शब्दः संज्ञा नाम। नामधेयस्य वा दुसंज्ञा भवति। पद्मनन्दीयम्। पाद्मनन्दिनम्। देवदत्तीयम्। दैवदत्तम्। नाम्न इति किम्। देवैर्दत्त देवदत्त इति यः क्रियानिमित्तको देवदत्तशब्दस्तस्य काश्यादिषु पाठाट्ठकठञावेव भवतः। वेति व्यवस्थितविभाषा। तेन घृतप्रधानो रौढिः घृतरौढिः संज्ञेयम्। तस्य शिष्या घृतरौढीयाः। एवमुदनपाणीयाः। वृद्धाम्भीयाः। वृद्धकाश्यपीयाः। नित्यं दुसंज्ञा। जिह्वाकात्यहरितकात्ययोर्न भवत्येव। जैह्वाकाताः। हारितकाताः॥

अणुदित्स्वस्यात्मना ऽभाव्यो ऽतपरः ॥ ७२ ॥

अण् उदिच्च गृह्यमाणः स्वस्य ग्राहको भवति आत्मना सह भाव्यमानं तपरं च वर्जयित्वा। इदमण्ग्रहणं परेण णकारेण। ऋतःस्यादेरबिति तपरनिर्देशाज्ज्ञा-

यते । यस्य ङ्याश्च । दाक्षिः । चौलिः । दैत्यः । कौमारः ।
अस्य च्वौ । शुक्लीभवति । मालीभवति । उदित् । स्तोः
श्चुना श्चुः । ष्टुना ष्टुः । अभाव्य इति किम् । भाव्यन्ते उत्पा-
द्यन्ते त्यादेशटित्किन्मितस्ते स्वस्य ग्राहका न भवन्ति ।
अस्त्यात् । त्यदादेरः । टित् । लविता । कित् । बभूव । मित् ।
सृजिदृशोरम् । अतपर इति किम् । भिसोऽत ऐ । वृक्षैः । खट्वा-
भिरित्यत्र न भवति । तकार इद्यस्य सोऽयं तिदिति सिद्धे
परग्रहणमुभयार्थम् । तः परोऽस्मात्तपरस्तादपि परस्तपरः ।
इदमेव ज्ञापकं सविधौ केति योगविभागोऽस्ति । आदैगेप् ।
अदेङेप तपरत्वादैजेङादिषु त्रिमात्रचतुर्मात्राणां निवृत्तिः ।
अभाव्योऽतपर इति पृथग्भावान्नञुच्चारणं किम् । क्वचिद्भा-
व्योऽपि स्वं गृह्णातीति ज्ञापनार्थम् । अमूभ्याम् । संज्ञा
सूत्रमिदं न परिभाषा । साहि नियमार्था भवति । न
चाणुदितां स्वस्यास्वस्य च ग्रहणं प्राप्तं येन स्वस्यैवेति
नियमः स्यात् ॥

## अन्त्येनेतादिः ॥ १३ ॥

अत्येनेत्संज्ञकेन गृह्यमाण आदिस्तन्मध्यपतितानां ग्राहको भवत्यात्मना सह ॥ आद्यन्तौ सम्बन्धिशब्दौ । अतः सामर्थ्यादाद्यन्तव्यतीरेकेण तन्मध्यपाति वस्तु प्रत्येकसंज्ञित्वेनाक्षिप्तम् । अ इ उ इत्येतेषां प्रत्येकमणिति संज्ञा। एवमक अच अट् इत्येवमादयः । अन्त्येनेति किम् । सुडित्यत्र आदिना टा इत्येतस्य टकारेण ग्रहणं मा भूत् । अन्त्येनेतीदमेव ज्ञापकं सहार्थे गम्यमानेऽपि भा भवति ॥

## असंख्यं भि ॥ १४ ॥

संख्या एकत्वादिका सा यस्य न विद्यते तदसंख्यं

झिसंज्ञं भवति ॥ एकत्वादिनिबन्धना विभक्त्युत्पत्तिर-संख्यादप्राप्ता सुपो झेरिति वचनाद्भवति । के पुनरसंख्याः स्वर। अन्तर। प्रातर। सायम्। नक्तम्। अस्तम। वस्तोः। दिवा। दोषा। ह्यः। श्वः। कम्। शम। योर्मयः। च। न। अन्नस्। विहायसा। रोदसो। ओम्। भूः। भुवः। स्वस्ति। समया। निकषा। अन्तरा। बहिस। साम्प्रतम। अद्धा। मत्यम्। इद्धा। मुधा। मृषा। वृथा। मिथ्या। मिथो। मिथु। मिथुनम्। अनिशम्। मुहुः। अभीक्ष्णम्। मङ्क्षु। झटिति। उच्चैस्। नीचैस्। अवश्यम्। सामि। साचि। विष्वक्। अत्वक। आनुषक्। साजक्। द्राक्। प्राक। धक्क। पृथक्। धिक्। हिरुक। जोक। मनाक्। शनैः। ईषत्। जोषम्। तूष्णीम्। कामम्। निकामम्। प्रकामम्। आरात्। अरम्। वरम्। परम्। चिरम्। तिरः। नमः। स्वयम्। भूयः। प्रायः। प्रवाहुकम्। आर्यहलम। कु। अलम्। बलवत्। अतीव। सुष्ठु। दुष्ठु। ऋते। सपदि। साक्षात्। सनात्। सना। सु। सहसा। युगपत्। अपांशु। पुरा। पुरतः। पुरस्तात्। पुरः। इत्येवंप्रकारा निसंज्ञकाश्च सर्वे च वा ह अह एवम्प्रभृतयो हृतश्च तसादयस्तत इत्यादयो व्यर्थाः कृतश्च मुमाम्नुमा-दयः क्त्वाप्यादेशश्चेति। हसश्चेति केचित्पठन्ति। तत्तु चिन्त्यम्। उपाग्निकमित्यको ऽसम्भवात्। उपकुम्भम्मन्यत् इति मुमो दर्शनात्। उपकुम्भीकृत्येति ईत्वविधानाच्च। सामान्यविषया झिसंज्ञा। विशेषविषया निसंज्ञा। असं-ख्यग्रहणं किम्। यत्रासंख्यात्वं प्रतीयते तत्र झिसंज्ञा। उच्चैः। परमोच्चैः। अस्ति। स्वस्ति। उपसर्जने मा भूत्। अत्युच्चैः। अत्युच्चैसौ। अत्युच्चैसः। अत्यस्तिः। झिप्रदेशाः सुपो झेरित्येवमादयः ॥

गाङ्कुटादेरञ्णिन्ङित् ॥ ७५ ॥

गाङित्येतस्मात् कुटादिभ्यश्च धुभ्यः परे ऽञ्णितस्त्या ङितो भवन्ति ॥ विनापि वतमतिदेशो गम्यते । गाङिति-व्याख्यानादिङादेशो गृह्यते । कुटादिस्तुदादेरन्तर्गणो यावत् वृत्शब्द इति । गाङ् । अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । लुङ्लृङोर्वेति इङो गाङादेशः । भूमादिसूत्रे-णत्वम् । कुटादि । कुटिता । कुटितुम् । कुटितव्यम् । पुटिता । पुटितुम् । पुटितव्यम् । व्यचेरनसि कुटादित्वम् । विचिता । विचितुम् । विचितव्यम् । अनसीति किम् । उद्व्यचाः । अस् सर्वधुभ्य इत्यस् । अञ्णिदिति किम् । उत्कोटयति । उत्कोटो वर्तते । ङितीव ङिद्वत् । ईबन्ताद्व-दर्थो गम्यते । तेन उचुकुटिषति इत्यत्र ङनुदात्तेतो द इति दो न भवति ॥

इड्विजः ॥ ७६ ॥

अन्त्येनेतादिरित्यत आदिरिति वर्तते । विजेर्धा-रुत्तर इडादिस्त्यो ङिद्भवति ॥ उद्विजिता । उद्विजितुम् । उद्विजितव्यम् । इडिति किम् । उद्वेजनम् । उद्वेजनीयम् । विज इति किम् । लविता ॥

वोर्णोः ॥ ७७ ॥

ऊर्णोतेः पर इडादित्यो वा ङिद्भवति ॥ प्रोर्णुविता । प्रोर्णविता । अप्राप्ते विकल्पोऽयम् । दसंज्ञके तु लङ इटि परत्वान्नित्यो विधिः । प्रौर्णुवि । अञ्णिदित्येव । भिव-दिटि प्रोर्णाविष्यते । इडादिरित्येव । प्रोर्णवनम् । प्रोर्ण-वनीयम् ॥

## गो ऽपित् ॥ ७८ ॥

अपित् गसंज्ञको ङिद्भवति ॥ कुरुतः । कुर्वन्ति । चिनुतः । चिन्वन्ति । मृष्टः । मृजन्ति । ग इति किम् । कर्त्ता । मार्ष्टा । अपिदिति किम् । करोति । मार्ष्टि । अपिदिति प्रसज्यप्रतिषेधः । यद्येवं तुदानि लिखानीत्यत्र पिदपितोरेकादेशः पिद्भवतीति ध्युङ एप्प्रसज्येत । नायं दोषः । लोडादेशस्य पित्वं न चाटः । अथवायं पर्युदासः । इह तर्हि च्यवन्ते प्लवन्त इति परापेक्षपिदपितोरेकादेशस्य पितोऽन्यत्वमस्तीत्येप्प्रतिषेधः प्रसज्येत । नैष दोषः । वार्णाद्भावं बलीय इति प्रागेवैकादेशादेप् ॥

## लिडस्फात्कित् ॥ ७९ ॥

अपिदित्येव । अस्फान्तात्परोऽपिल्लिड् किद्भवति । बिभिदतुः । बिभिदुः । ममृजतुः । ममृजुः । लिडिति किम् । यष्टा । अस्फादिति किम् । ममन्थतुः । ममन्थुः । ननु ररन्धिव ररन्धिम इत्यत्रास्फाद्विहितो लिट् । नैवम् । नुम्विधावुपदेशग्रहणाश्रयणात् । एवञ्च कुण्डा हुण्डेत्यत्र सरोर्हल इति अस्त्यो भवति । अपिदित्येव । बिभेदिथ । ङिदिति वर्त्तमाने किद्ग्रहणं किम् । ईजतुः । ईजुः । ङिति जिर्न स्यात् । अयमेव किद्विषयः । ववृते । ववृधे इत्यत्र परत्वादेपि कृते स्फान्तत्वमिति चेत् इष्टवाच्चित्त्वात्परशब्दस्येत्यदोषः । अस्फादिति प्रसज्यप्रतिषेधः । न चेत् अस्फान्ताद्विहित इति पर्युदासे हि हलन्तादेव लिट् कित् स्यात् । वोर्णोरित्यतो वेति व्यवस्थितविभाषाऽनुवर्तते । ततः श्रन्थिग्रन्थिदम्भिष्वञ्जीन्धिभ्योऽपि किद्भवतीत्येके । श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः । देभतुः ।

देभुः । परिषस्वजे । परिषस्वजाते । समीधे । समीधाते । समीधिरे ॥

मृडमृदगुधकुषवदवसः क्त्वा ॥ ८० ॥

मृडमृदगुधकुषवदवस इत्येतेभ्यः परः क्त्वा त्यः किद्भवति । मृडित्वा । मृदित्वा गुधित्वा । कुषित्वा । उदित्वा । उषित्वा । सिद्धे विधिरारभ्यमाणो नियमार्थः । तुल्यजातीयस्य च नियमः सेट् क्त्वा तुल्यजातीयः । तेन मृडादिभ्य एव क्त्वा सेट किद्भवति नान्येभ्यः । देवित्वा । वर्तित्वा । सेडिति विशेषणं किम् । भुक्त्वा । मुक्त्वा । मृडादिभ्यः क्त्वैव किद्भवति इति विपरीतो नियमो नाशङ्कनीयः । एवं हि क्लिश इति कित्त्ववचनमनर्थकं स्यात् । प्रतिषेधाभावात् । गुधिकुष्योस्तु व्युङोवोहलः संश्चेति विकल्पे प्राप्ते नित्यार्थः पाठः ॥

क्लिशः ॥ ८१ ॥

परः क्त्वा सेट किद्भवति । क्लिशित्वा । पूर्वेण नियमेन कित्वे निवर्तिते व्युङोवोहलः संश्चेति विकल्पः प्राप्तः । पूर्वं सूत्रे इष्टनोऽवधारणार्थं योगान्तरम् ।

मुषग्रहिरुदविदः संश्च ॥ ८२ ॥

मुषग्रहिरुदविद इत्येतेभ्य परः संश्च क्त्वा च सेट् किद्भवति । मुमुषिषति । जिघृक्षति । रुरुदिषति । विविदिषति । मुषित्वा । गृहीत्वा । रुदित्वा । विदित्वा । ग्रहेर्मृडादिनियमान्निवृत्तौ विध्यर्थमितरेषां व्युङोवोहलः संश्चेति विकल्पे प्राप्ते वचनम् ॥

झलिकः ॥ ८३ ॥

क्त्वेति निवृत्तम् । अन्तेनेतादिरित्यत आदिरिति

वर्तते । इगन्ताड्डोः परो झलादिः सन्किद्भवति । सामर्थ्यात्सन्निहितस्य धोरिका तदन्तविधिः । चिचीषति । निनीषति । रुरूषति । चिकीर्षति । लुलूषति । यदि सनि दीत्ववचनसामर्थ्यान्मात्रिकद्विमात्रिकयोरेवभावः सिद्ध इत्यस्यानर्थक्यम् । णित्वमपि तर्हि न स्यात् ज्ञीप्सति । एतस्मिंस्तु सति चिचीषत्यादिषु सावकाशं दीत्वं परत्वाण्णित्वेन बाध्यते । झलादिरिति किम् । शिशयिषते । इक इति किम् । पिपासति । सनीत्येव । कर्ता ॥

## हलन्तात् ॥ ८४ ॥

सन् झलिक इति वर्तते । अन्तशब्दः समीपवचनः । इकोऽन्तः समीपो यो हल् तदन्ताड्डोर्झलादिः सन्किद् भवति । बिभित्सति । बुभुत्सते । विवृत्सति । अन्तग्रहणं किम् यियक्षति । जिर्न भवति । नात्रेक्समीपाद्धलः परः सन् । एवं वा सूत्रार्थः । इकः परो हलन्तो हलवयवो यो धुस्तस्मादुत्तरो झलादिः सन्किद्भवति । अन्तग्रहणं स्पष्टार्थमुक्तमस्मिन् व्याख्याने । इक इति कानिर्देशः किम् । यियक्षति । झलित्येव । विवर्द्धिषते । निरेकाजनाङ्क्तित्यत्र एकग्रहणं ज्ञापकमुक्तमन्यत्र वर्णग्रहणे जातिग्रहणमिति । तेनेह हलग्रहणेन भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं हल् जातिर्गृह्यते । ततो धिप्सतीति सिद्धम् ॥

## सिलिङ् दे ॥ ८५ ॥

सन्निति निवृत्तम् । झलिकः हलन्तादिति च वर्तते । सिश्च लिङ् च दे इको हलन्तात्परौ झलादी कितौ भवतः । सेरेव दपरत्वं विशेषणं न लिङोऽसम्भवात् । द एव हि लिङ् झलादिः । अभित्त । अबुद्ध । भित्सीष्ट । भुत्सीष्ट ।

द इति किम् । अस्राक्षीत् । कित्वे सृजिदृशोरमागमो न स्यात् । वदव्रजेत्यादिनैप । इक इत्येव । अयष्ट । यक्षीष्ट । जिः प्रसज्येत । हलन्तादित्येव । अचेष्ट । चेषीष्ट । एप्न स्यात् । झलादिरित्येव । अवर्तिष्ट । वर्तिषीष्ट । एप्न स्यात् ॥

उः ॥ ८६ ॥

अर्तेर्व्याख्यानादग्रहणम् । ऋवर्णान्ताद्धोः परौ सि लिङौ दे झलादी कितौ भवतः । अकृत । अहृत । कृषीष्ट । द्विमात्रस्य । अस्तीर्ष्टाम् । स्तीर्षीष्ट । लिङ्योर्द इत्यनिट्पक्षे इष्टव्यम् । झलादिरित्येव । अस्तरिष्ट । स्तरीषीष्ट ॥

गमो वा ॥ ८७ ॥

गमेर्धोः परौ सिलिङौ दे झलादी वा कितौ भवतः । समगत । वा गमः कित्वे अनुदात्तोपदेशेत्यादिना ङ्खं प्राद्धोरिति सेः खम् । पक्षे समगंस्त । सङ्गंसीष्ट ।

हनः सिः ॥ ८८ ॥

हन्तेर्धोः परः सिर्दे किद्भवति । आहत । आहसाताम् । आहसत । सेः कित्वान्ङस्य खम् । अन्यथा अनिदित इति उङः खस्य प्रतिषेधः स्यात् । पुनः सिग्रहणं लिङ्निवृत्त्यर्थम् । दग्रहणमनुवर्तते । एवं नित्यो वधादेश इति इह प्रयोजनं नास्ति ॥

यमः सूचने ॥ ८९ ॥

यमेर्धोः सूचनेऽर्थे वर्तमानात्परः सिर्दे किद्भवति ॥ सूचनं गन्धनमाविष्करणमित्यर्थः । उदायत । उदायसाताम् । उदायसत । अकर्मकत्वे आङो यमहन इति दः । सूचन इति किम् । आयंस्त कूपाद्रज्जुम् । सकर्मकत्वे समुदाङ्भ्यमो ग्रन्थ इति दः ॥

मिथ्या तत्वव्यवस्थाविघटनघटनोद्दण्डशौण्डीर्यचण्डो
निस्तत्वाद्वैतवादी निरुपधिककथादुर्जयो निर्जिहीते ।७४। इति

राजा—आर्य, विश्वमिथ्यात्वव्यवस्थापनो वैतण्डिकपण्डितमन्य
शून्यवादी पुनश्शून्यता प्रापयितव्यः ।

गुरुः—भद्र सावधानमभिदध्याः ।

शिष्य—किमत्रावधातव्यं । अयं खलु जननीवन्ध्यात्वप्रतिज्ञानसत्वा-
दिभिरयथार्थप्रलापैरात्मनोऽपि मौनमाजन्ममरणमुपपादयिष्यति ।

अपि च ।

परस्परविघट्टनत्रुटित तर्कशस्त्रच्छटा
तिरस्कृतचमत्कृतिस्स्वयमखण्डिवैतण्डिकः ।
किमत्र परिशिष्यते किमपि दूषणोद्भावनं
स्वतो निहतमुद्गरप्रहरणप्रयासायते ॥७५॥

---

प्रीत्यर्थं । एवं दूषणमुक्त्वा स्ववैभवमाह मिथ्येति । चिन्मात्रब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वमेव मिथ्यातत्व तस्य व्यवस्थापनमेव व्यवस्था तस्य विघटन हनन दूषणं तस्य घटनेन उद्दण्डमुच्छृङ्खलं यच्छौण्डीर्यं सामर्थ्यं तेन चण्ड. क्रूर. निरुपाधिका अकपटा या कथा तया दुर्जयः निस्तत्वाद्वैतवादी शून्यैक्यवादी माध्यमिकः निर्जिहीते निर्गच्छति । ओहाङ्गताविति धातो रात्मनेपदि लट् ॥ ७४ ॥

विश्वस्यमिथ्यात्वव्यवस्थापनवैतण्डिकेषु पण्डितंमन्यः आत्मानं पण्डितं मन्यमानः ।

जनन्याः मातुः वन्ध्यात्वस्य प्रतिज्ञानं प्रतिज्ञा तत्सत्वादिभिस्तत्तुल्यैरित्यर्थ अयथार्थैरसत्यै. प्रलापैरात्मनस्स्वस्यापि मौनमाजन्ममरण जन्मन आरभ्यमरणपर्यन्तमुपपादयिष्यति । मौनोपपादनयोरेकाधिकरणयासम्भवात् परस्परव्याहतं जननी वन्ध्यात्व प्रतिज्ञावदय वदिष्यतीति भावः ।

परस्परव्याघातेन पूर्वव पराहतस्यास्य दूषणोद्भावनं व्यर्थमित्याह अपि चेति परस्परेति—॥ परस्परं विघट्टनेनाभिघातेन दूषणेन त्रुटिताः छिन्नाः तर्का एव शस्त्राणि तेषां छटाभिस्तिरस्कृता चमत्कृति श्लाघा स्वमतप्रशंसायस्यसतथोक्त वैतण्डिकः सर्वशून्यवादित्वेन स्वाप्यपक्षाभाववान् माध्यमिकः स्वयमखण्डितखण्डित अतोत्र किं परिशिष्यते कर्तव्यतया किमपि नावशिष्यतइत्यर्थ.त दा किमपि यत्किचिद्दूषणोद्भावनंदूषणप्रकाशनं स्वतःस्वयं निहतेनं मुद्गरेण प्रहरणं प्रहारस्तस्मिन् प्रयासइव भवतीत्यर्थः ॥ ७५ ॥

**नेपथ्ये**–पिशाचाः पिशाचाः ।

**सेना**–मैव दिगम्बरास्त्वेते सौगतमतनिरसनसन्तोषविषादशबलिताः
प्रत्यक्षं परोक्षं च प्रमाणमनुरुन्धानाः प्रतारयन्ति पामरान् ।

**शिथिलोदय सप्तभङ्गिशिक्षा**
**विषमोपन्यसनव्यथाविलक्षाः**
**मलिनास्त इमे मयूरपिञ्छ**
**भ्रमणैरेव विलोभयन्तिमन्दान् ॥ ७६ ॥**

तत्प्रतिक्षेपार्थमयमनुज्ञायतामार्यः ।

**राजा**–**प्रतिक्षिप्तं विदधतां विहितं प्रतिषेधतां ।**
**कइवात्रप्रतिक्षेपः कार्यस्स्ववचनादृते ॥ ७७ ॥**

(गुरुमवलोक्य) भगवन्, अमीषामादित्यस्तम्भनपाषाणस्फोटनप्रतिमाजल्पनादिविप्रलम्भोपायानां भगवत्प्रभाव एव प्रतिक्षेपकर्त्ता ।

---

अस्मिन्नवसरेप्राप्तान्दिगंबरानवलोक्य नेपथ्यस्थितावदन्ति **पिशाचाः पिशाचा इति**–।

सौगतनिरसन जनिताभ्यां संतोषविषादाभ्यां शबलिताः ।

पदार्थानां क्षणिकत्वनिरासेन संतोषः परमाणुकारणताप्रतिक्षेपेनविषादः, परोक्षं अनुमानं च प्रमाणमनुरुन्धाना पामरान् प्रतारयन्ति वञ्चयन्ति । प्रतारणप्रकारमेवाह

**शिथिलेति**—॥ शिथिल उदय उत्पत्तिर्यस्यास्सा शिथिलोदया या सप्तभंगी-**स्यादस्तिस्यान्नास्ति स्यादस्ति च नास्ति च नास्तिचस्यादवक्तव्यं स्यादस्ति च नास्ति च नवक्तव्यंचेत्येव** रूपा तस्या याशिक्षा अभ्यासः तदर्थं विषमेण उपन्यसनेन याव्यथापीडा तयाविलक्षाः सलज्जाः मलिनाः मलधारणाः मलीमसाः त इमे जैना मयूरपिंछभ्रमणेनैव मन्दान्विलोभयन्ति ॥ ७६ ॥

**प्रतिक्षिप्तमिति**—॥ प्रतिक्षिप्तं स्यान्नास्तीतिनिषिद्धं विदधतां स्यादस्तीत्यंगीकुर्वतां विहितं स्यादस्तीत्यंगीकृतं प्रतिषेधतां स्यान्नास्तीति तत्सत्वमनंगीकुर्वतामेषांस्ववचनादृते पूर्वापरविरुद्धवचनादृतेन्यः प्रतिक्षेपः कइवनकोपीत्यर्थः । परस्परविरुद्धानितद्वचनान्येवतेषां प्रतिक्षेप इतिभावः ॥ ७७ ॥

आदित्य स्तंभनं गतिनिरोधेन निश्चलीभूयावस्थापनं पाषाणानां स्फोटनं दलनं प्रतिमाना जल्पनं एतदादयोविप्रलंभोपायाः येषां तेषां भगवतः गुरोः प्रभावएव ।

गुरुः—महाराज, तथाविधकुहकवृत्तीनां राजभिरेवदण्डो दातव्यः ।

शिष्यः—सापहासं ।

भक्ष्याभक्ष्यस्वपरसमयस्थापनादूषणादि
ष्वैकान्त्यं येजहतिविहृतिं क्वापिनैतेविदन्ति ।
देवैरेषान्निगमपदवी दूषणोदीर्णरोषै
र्दत्तो नूनं स्थिरशिरसिजोल्लुञ्चनेनैवदण्डः ॥७८॥

शेषन्तु भगवति महाराजे चायतते ।

राजा—सेनापते, आः कष्टममीषामालोकनं उत्सार्यन्तामेते दृष्टिगोचरात्

सेना—देव, भवत्प्रतापतपनप्रतिहतदृष्टयो दिवाभीता इवानार्याधिष्ठितेषु गिरिगह्वरेषु निभृतं निलीयन्ते ।

राजा—के पुनरेते क्षपणकादिवदनैगमिकनिगधारिणः किमप्युग्र व्रतमास्थाय तापसविडम्बनमत्यन्तमुपरुन्धते प्रथमगणानुकारिणःकेचित् ।

गुरुः—एतेच नैगमिकधर्मकलमोपमर्दिनः कटङ्करीया इव दूरतः परिहरणीयाः ।

---

कुहक वृत्तीनांकपटवृत्तीनां ।

भक्ष्येति—॥ भक्ष्याणि चाभक्ष्याणि च तेषु स्वपरसमयो स्थापनाद्दूषणादिषु च ऐकान्त्यं ये जहति त्यजन्तिएते क्वापिविहतिं नविन्दन्ति नजानन्ति । निगमपदवी वेदान्तोक्तमार्गः तस्य दूषणेन उदीर्णरोषैरभिवृद्धरोषैः देवैः स्थिराणां शिरसिजानां केशानां उल्लुञ्चनेनैव उन्मूलनेनैव दण्डोदत्त. ॥ ७८ ॥

अनार्यैः म्लेच्छादिभिः अधिष्ठितेषु ।

अनैगमिकानि अवैदिकानि लिङ्गानिचिन्हानि तद्धारिणः, उपरुन्धतेवारयन्ति प्रमथगणाः तदनुकारिणः तत्स्वरूपाइत्यर्थः ।

नैगमिकधर्माः वैदिकधर्माः त एव कलमाः सस्यानितदुपमर्दिनः कटंकरीयाः यूथाभ्रष्टाः सस्यभक्षकागाव इव ।

स्वयमेव दूरीभवन्तीत्येतदेवदर्शयति—यथेति ।

शिष्यः—स्वयमेवैते दूरीभवन्ति ।

यथा ।

कपिलकणादबुद्धकचलुञ्छनतन्त्रकथा
कलकलकोविदेषुकथकेषुगलन्मतिषु ।
मुनिवरसापराधजनमोहनकौतुकिना
पशुपतिना यदुक्तमपयान्त्यथतत्प्रवणाः ॥ ७६ ॥

सेना—देव, अमीपुनरार्यवचनमसहमाना दिगम्बरादिवत् केनापि विप्रलम्भोपायेन स्वसिद्धान्तश्रद्धासवर्द्धनाय प्रयतन्ते, अत्रतावदिमां प्रत्यायनामाचरन्ति, यदकाण्ड एव वर्षासमयमादिशन्ति ।

नेपथ्ये—पलायध्वं पलायध्व ।

राजा—किं किं ( इत्यवलोकयति ) ।

---

कपिलेति—कपिलादीना तंत्रेषु कचलुञ्चनो जैनः याः कथाः प्रसंगाः तासां कलकलेषु कोलाहलेषुकोविदेषु समर्थेषु कथकेषु गलन्मतिषुभ्रश्यद्बुद्धिषुसत्सुमुनिवरे गौतमे सापराधा अपराधकारिणः येजैनाः तन्मोहने कौतुकिनाइच्छावता पशुपतिना यच्चास्त्रमुक्तं पाशुपतं तत्प्रवणाः तन्निष्ठाः अपयान्ति अपसर्पन्ति । पुराकिल कदाचित् गौतमे केचिद्ब्राह्मणा किंचिदसत्कारं कृत्वा सापराधा अभवन् सचगौतमः ।

त्रिपुण्ड्रधारिणो यूयंभस्मोद्धूलनतत्पराः ।
भविष्यथत्रयीबाह्यामिथ्याज्ञानप्रवर्त्तका ॥ इति ।

तान् शशाप । पशुपतिश्चतान् मोहयितुकामः पाशुपतमकरोत् । तेचतदभ्यासेन गौतमशापवशात्त्रयीबाह्यास्तद्व्रतनिष्ठा अभवन्निति पौराणिकी कथा ॥ ७६ ॥

विप्रलंभोपायेन वञ्चनोपायेन स्वसिद्धान्ते श्रद्धासंवर्धनाय प्रत्यायनां विश्वासहेतुमाचरन्ति, अकाण्डे अकाले वर्षासमय वर्षाकालं ।

बलाहकमालामालोक्यवर्षंभविष्यतीति बुद्ध्यापलायध्वमिति वदन्ति ।

सेना—नान्यत्किञ्चित् ।

अक्ष्णोरञ्जनवर्तिकायवनिकाविद्युन्नटीनामियं
स्वर्गङ्गायमुनावियज्जलनिधेर्वेलातमालाटवी ।
वर्षाणां कबरीपुरन्दरदिशालङ्कारकस्तूरिका
कन्दर्पद्विपदर्पदानलहरी कादम्बिनीजृम्भते॥८०॥

किञ्च ।

प्रत्यग्रप्रतिबुध्यमानकलिका नीरन्ध्रनीपाटवी
निस्साधारण निस्सरन्मधु सुधासौरभ्यसारस्पृशः ।
क्रोडादम्बुमुचाङ्करन्तिकतिचित्क्रोडीकृतादन्तिभि
र्धारासिक्तवसुन्धरासुरभयो जंम्भासमीराङ्कुराः ।८१।

( सर्वेससम्भ्रमाद्द्रुतमवलोकयन्ति ) ।

---

अक्ष्णोरिति—अक्ष्णोर्नयनयोरञ्जनवर्तिका अञ्जनशलाकास्वकान्त्यानयनानाम पिनैल्य आपादयन्तिविद्युतामेवनटीना नर्तकीना यवनिका तिरस्करणीयथानर्तक्यो यवनिकायामन्तर्हिता. स्वावसरे रंगमासाद्यनृत्यन्ति तथा विद्युतोपि कालिकायामन्तर्हिता मध्येमध्येस्वात्मानं प्रकाशयन्तीति । स्वर्गंगायाः मन्दाकिन्याः यमुनानैल्याद्यमुनात्वं यथात्रभागीरथीतियमुनासंगच्छते तथाकाशगंगापि कादंबिनीपरिचुंबिनीविभातीतिभाव वियदेव जलनिधिभूतस्य वेलायां तीरेवर्त्तमाना तमालाटवी तमालवनं नभसोनैल्याज्जलधित्वरूपणं । वर्षाणा प्रावृषः कबरीकेशपाशः पुरन्दरदिशाया प्राच्या अलंकारार्थं मालिप्ता कस्तूरिकाकन्दर्प एवद्विपः तस्य दर्पदानलहरी मदजलोद्रेकप्रवाहः कादंबिनी मेघमालाजृम्भते ॥ ८० ॥

प्रत्यग्रेति—प्रत्यग्राः नवीनाः प्रतिबुद्ध्यमानाः विकसन्त्यः याः कलिकाः कोरकाः ताभिर्नीरन्ध्रानिबिडायानीपाटवी शिलिन्ध्रवनं तस्याःनिस्साधारणंभवं यथा भवति तथा निस्सरत् निर्गच्छद्यन्मधुतदेव सुधातस्याः सौरभ्यसारं स्पृशन्तीति तत्स्पृशः दन्तिभिः क्रोडीकृताः आघ्राता तदाघ्राणे हेतुः धारासक्तया वर्षधराभि स्सक्तया वसुन्धरया सुरभयः आमोदवन्तः जंभासमीराणा जंभामरुतां अंकुराः अंबुमुचा मेघाना क्रोडादुदराद्युगपदेककाले चरन्ति निर्गच्छन्तीत्यर्थ ॥ ८१ ॥

राजा—भगवन्किमस्त्येषां प्रतीकारः

गुरुः— किमस्माभिरत्रयतितव्य ।

सकैटभतमोरविर्मधुपरागजञ्झामरु
हिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्रबहुना भजद्भवपयोधिमुष्टिन्धयः
कथन्नभवतिस्वयं कपटकर्मनिर्मूलनः ॥ ८२ ॥

( सर्वे सहर्षविस्मयं ) प्रसन्नाः खल्वेतादिशोविदिशश्च ।

गुरुः—भक्तजनवत्सले भगवति प्रसेदुषिकिन्नामनप्रसीदति ।

राजा—भगवन्, अमीपुनस्सात्वतं शास्त्रमधीयानास्त्रय्यन्तवादिभिरैक्यमिवापन्ना बल्वजप्रायबहुविधविद्याजल्पविमुखीकृतमानसा बहिरन्तश्च शुद्धाः श्वेतद्वीपवासिन इव शुभंयवः पुरुषास्तामिमामौपनिषदी परिषदमुपजिगमिषन्ति ।

---

स इति—॥ कैटभ एव तम तस्य रविः तन्निरासक इत्यर्थ मधुः मधुनामासुरः सएव परागः रजः तस्य जंझामरुत् जंझामरुता हि परागप्रशाम्यति हिरण्यः हिरण्यासुरः सएवगिरिः तस्य धारणः भेदकः त्रुटितः छिन्नः कालनेमिरेव द्रुमः येन सतया कालनेमिनामा कश्चिदसुरः अत्रभगवतः आश्रितविरोधिनिवर्तकत्वे बहुनोक्तेन किं नास्यैहिकफलविरोधिनिरासकत्वमात्र अपितु मोक्षविरोधिनिवर्तकत्वमस्ती त्याह भजदिति—। भजतां भक्त्याप्रपत्या वा मामाश्रयतां भवपयोधेः संसारसागरस्यमुष्टिन्धयः मुष्टिभिः पिबतीति मुष्टिन्धयः निवर्तक इत्यर्थः एवंभूतस्सभगवान् कपटकर्माणां कृत्रिमकर्मणां निर्मूलनं कथं न भवति भवत्येवेत्यर्थः ॥ ८२ ॥

किन्नाम न प्रसीदति सर्वं प्रसदत्येवेत्यर्थ. ।

पाशुपतदूषणानन्तरं पांचरात्र प्रामाण्य समर्थनाय आरभते अमीपुनरिति पुनश्शब्दः विशेषद्योतकः सात्वतं पांचरात्रं, ऐक्यमापन्ना इवस्थिताः बल्वजाः तृणविशेषाः तत्प्रायाः तत्तुल्याः बहुविधाश्चया विद्यास्ता एव जल्पः प्रलापः तस्माद्विमुखीकृतं मानसं येषांते तथा बहिरन्तश्च शुद्धाः शुद्धवेषाः शुद्धमनसश्चात एवे श्वेतद्वीप वासिन इवस्थिताः शुभंयवः शुभवन्तः औपनिषदों उपनिषन्निष्णातां परि, षदं पारिषदानां उपनिषन्निष्ठत्वात् परिषदप्यौपनिषदी तामुपजिगमिषन्ति उपगन्तुमिच्छन्ति ।

अपि च ।

परमपुरुषप्रत्यासत्या विमुक्तपृथग्जना
स्तदभिगमनोपादानाद्यैरवन्ध्यमनोरथाः ।

परमेति-॥ परमः यस्मात्पर उत्कृष्टोनास्ति सपरमः सचासौ पुरुषश्च परमपुरुषः सचनारायणः तस्यैवपरमपुरुषत्वं श्रुति स्मृतिभ्यो ऽवगम्यते ।

विश्वतः परम नित्यं विश्वन्नारायणं हरिं ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥
ऋतं सत्यं पर ब्रह्म पुरुषं कृष्णपिङ्गलं ।
पुरुषस्सपरः पार्थभक्त्यालभ्यस्त्वनन्यया ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरस्सर्वाणिभूतानि कूटस्थोक्षरमुच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
योलोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ।
यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ॥
अतोस्मिलोके वेदेच प्रथितः पुरुषोत्तमः ।

इत्यादिभ्यः । तस्मिन् प्रत्यासत्यानन्यभक्त्या विमुक्ताः विशेषेणमुक्ताः पृथक्जनाः तदितरजनायैस्ते तथा ।

अद्यप्रभृतिहेलोको यूयं यूयं वयंवयं ।
अर्थकामपरा यूयं नारायणपरा वयं ॥
नास्तिसंगतिरस्माकं युष्माकं च परस्परं ।
वयंतु किंकराविष्णोः यूयमिन्द्रियकिंकराः ॥

इत्याद्युक्तप्रकारेण संसारिषु विमुखाः तस्याराधनरूपैः अभिगमनोपादानाद्यैः । आद्यशब्देनेज्यास्वाध्याययोगास्सगृह्यन्ते । अभिगमनादीना भगवदाराधनत्वं चोक्तं अभियुक्तैः ।

अभिगच्छन्हरिं प्रातः पश्चाद्द्रव्याणि चार्जयन् ।
अयजंश्च ततोदेवं ततो मन्त्रान् जपन्नपि ॥
ध्यायन्नपि परंदेवंकालेषूक्तेषु पंचसु ।
वर्त्तमानस्सदाचैव पांचकालिकवर्त्मना ॥
स्वार्जितैः गन्धपुष्पाद्यैः शुभैश्शक्त्यनुरूपतः ।
आराधयन्हरिं भक्त्या गमयिष्यामि वासरान् ॥

नमति दिविषद्वर्गे नाथप्रभावसमीक्षया
जहति तइमे मानाटोपं परस्परजीविताः ॥ ८३ ॥

किमेतन्मते प्रतिवक्तव्यमस्त्यार्यस्य ।

गुरु.–( मूर्धानमान्दोलयन् कर्णौपिधाय ) न खलु न खलु ।

नबाधः प्रतिरोधोवा
वेद सात्वतयोर्मिथः ।
कुदृशान्तद्भ्रमोवार्य
श्श्रुत्योरिव परीक्षकैः ॥ ८४ ॥

अवन्ध्याः सफला मनोरथाः येषां ते तथोक्ता नाथस्य भगवतः प्रभावस्य माहात्म्यस्य समीक्षया सम्यग्दर्शनेन ।

दुराचारोपि सर्वाशी कृतघ्नो नास्तिकः पुरा ।
समाश्रयेदादिदेवं श्रद्धया शरणं यदि ॥
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः ।

इत्युक्तरीत्या भगवद्वैभवदृष्ट्यादिविषटां देवानां वर्गसमूहेनमति प्रणमति सति प्रणमन्तदेवता इत्युक्तेः मानाटोपं अभिमान जन्य संभ्रमं जहति त्यजन्ति पुन कीदृशाः परस्परजीवितानि तेषां ये तथा जीवितशब्दोऽत्र प्राणवाची । ८३ ।

एतन्मते पाञ्चरात्रमतेपि

अवणानर्हवचश्रवणं माभूदिति कर्णपिधानं ।

प्रतिवक्तव्यं नास्ति खलु । वीप्सात्वरा सूचयति–नेति ॥

नेति–॥ वेदसात्वतयोः मिथ परस्परं बाध प्रतिरोधो विरोधोवानास्ति बलवता दुर्बल स्यबाधः तुल्य बलयोः विरोधः किंतुपरीक्षकैः निरूपकैः कुदृशां कुत्सित ज्ञातानां कुदृष्टीनां इत्यर्थः भ्रमः वार्यः निवर्त्यः । कथं श्रुत्योरिव । सगुणनिर्गुण श्रुत्यो विरोधभ्रम इव यद्वाभेदवादिन्या अभेदवादिन्याश्च विरोधभ्रमइव यथा ।

नित्योनित्यानां चेतनश्चेतनानमेकोबहूनां योविदधाति कामानिति काचित् जीवपरयोः भेदं वदति ।

नेहनानास्ति किंचनेति काचिदभेदमनयोर्विरोध इति केषुचित् भ्रमो जायते । जीवेश्वरयोः स्वरूपभेदपराभेद श्रुतिः ब्रह्मप्रकारतातिरेकेण पृथकभूतवस्त्वान्तराभावपरावेयंभेद श्रुतिरिति परीक्षकैः तन्निवृत्तिः क्रियते तद्वदितिभाव. ॥ ८४ ॥

शिष्यः—तदहं वारयामि, शृण्वन्तु च परमपुरुषप्रणीते पञ्चरात्रतन्त्रे तन्त्रान्तरवत्प्रादेशिकस्दोषोत्प्रेक्षकाः पण्डितंमन्याः ।

आरोहन्त्वनवद्यतर्कपदवीसीमादृशां मादृशां
पक्षे कार्तयुगे निवेशितपदाः पक्षेपतद्भ्यः परान् ।
सर्वानुश्रवसारदर्शिसशिरःकम्पद्विजिह्वाशन
क्रीडाकुण्डलमौलिरत्नघृणिभिस्सारात्रिकास्सूक्तयः ॥८५॥

कुदृशा ममोत्कर्षं इत्युक्तं गुरुणा तदेव आह शिष्यः वारयामीति—।

परमपुरुषप्रणीते भगवत्प्रोक्ते पाञ्चरात्रे । भगवत्प्रणीतत्वं च पाञ्चरात्रस्य महाभारते प्रसिद्ध—।

पंचरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयं । इति ॥

प्रादेशिकस्य क्वाचित्कस्य दोषस्य उत्प्रेक्षकाः । शृण्वन्तु इति सबन्धः । सचदोषः परब्रह्मरूपाद्वासुदेवात्संकर्षणोनाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसञ्ज्ञंमनोजायत । इत्युक्त जीवोत्पत्तिवचनं जीवात्मनस उत्पत्तिवचनं चास्योभयस्यापि विदोषत्व श्रुतिविरोधात् । नजायते म्रियते वाविपश्चित् ।

एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच ।
खंवायुर्ज्योतिरापः पृथिवीविश्वस्य धारिणी ॥

इति श्रूयते । तत्किमित्यत आह आरोहन्त्विति—।

आरोहन्त्विति—॥ अनवद्या निर्दोषा या तर्काणां पदवीमार्गः तस्यास्सीमा चरमावधि तद्दृश्य तत्पारदर्शिना मादृशामस्मादृशां कार्तयुगे कृतयुगसम्बन्धिनी कृतयुगानुष्ठेयेपक्षे निवेशितपदाः कृतपदन्यासाः । सर्वे च ते अनुश्रवाश्चसर्वानुश्रवाः तेषां सार तेषां तात्पर्यं पश्यतीति सर्वानुश्रवसारदर्शी सशिरःकम्प हर्षातिशयेन शिरःकंपसहितः सर्वानुश्रवसारदर्शिसशिरःकम्पश्चयो द्विजिह्वाशनः तस्य क्रीडाकुण्डलस्य क्रीडया कुण्डलायितस्य सर्पस्य मौलि रत्नानां फणामणीनां घृणिभिः किरणैः सारात्रिकाः सनीराजनाः सूक्तयः सात्वतसंहिताः । अत्रगरुडस्य श्लाघयाशिरः कंपवचनं । तस्यापि संहिताविशेषकर्तृत्वात् पक्षेपतद्भ्यः पक्षपातिभ्य परान् पक्षपातविधुरान् आरोहन्तु आक्रामन्तुवशीकुर्वन्त्वित्यर्थः ॥ ८५ ॥

निरूपितं हि सात्वतप्रामाण्य निखिलनिगमव्यसनव्यसनिना-मतिमन्थानिर्मथितनिगमसिन्धुसमुदितमहाभारतचन्द्रचन्द्रिकानिरवशेष मुषितभुवनभवनोदरतिमिरेण बादरायणेन भगवता नारायणेन।

तत्र च।

**स्वतस्सर्वावेक्षो श्रुतिशतशिरस्त्राणचरण**
**स्स्वभृत्यांस्त्रातुं यदिदमनघन्तन्त्रमकृत।**
**इदं श्रेयः पुण्यं हिततममितीव व्यपदिशन्**
**मुनिः पाराशर्यः प्रकटयति मानन्तदखिलं ॥८६॥**

---

नास्माभिरिदानीं तत्प्रामाण्य समर्थनीयं पूर्वमेव महर्षिणासमर्थितमित्याह निरूपितमिति–॥

निखिलानां निगमानां व्यसनं विभजनं तस्मिन् व्यसनिना अभिनिवेशवता मतिरेवमन्थः तेननिर्मथितः निगम एव सिन्धु तत्समुदितः महाभारत एव चन्द्रः तस्य चन्द्रिकया तज्जन्यज्ञानेन निरवशेषं यथाभवति तथा मुषितमपहृतं भुवनमेव भवनंतस्योदरे अभ्यन्तरे वर्त्तमानं तिमिरमज्ञानरूपं यस्य तेन बादरायणेन पराशरपुत्रेण

द्वीपे बदरिकामिश्रे बादरायणमच्युतं।
पराशरात्सत्यवती पुत्रं लेभेपरंतपं॥ इति हि।

स्मर्यते। अत्र अच्युतमित्युक्ते नारायणेनेति कथितं भवति बादरायणस्य भगवद्वतारविशेषत्वमन्यत्रापि स्मृतं।

कृष्णद्वैपायनं व्यासं विद्धिनारायणं प्रभुं।
कोह्यन्योभुवि मैत्रेय महाभारतकृत्भवेत्॥

**स्वतेति–॥** स्वतस्सर्वावेक्षी सर्ववस्तुसाक्षात्कारसमर्थः स्वतइत्यनेन विज्ञानपरायत्तमिति ज्ञायते अनेन नित्यमुक्तव्यावृत्तिः तेषा हि भगवत्प्रसादायत्तं श्रुतिशताना शिरस्त्राणमुष्णीषं चरणं यस्य स तथा अनेन सर्ववेदप्रतिपाद्यचरणत्वं सूच्यते श्रुतश्चैतत्। **सर्वेवेदायत्पदमामनन्ति** इति। यच्छब्दः प्रसिद्धिपरः। इदमित्यनेन सात्विकजनैः परिपाठ्यमानत्वं विवक्षितं। अनघं तन्त्रान्तराणां दोषवत्व व्यज्यते। तन्त्रं पांचरात्रशास्त्रं स्वभृत्यांस्त्रातुं यदकृत इदं श्रेयः श्रेयस्साधनवृन्दं पापहरं हिततममतिशयेन हितमिति व्यपदिशन् पाराशर्यः। **सहोवाचव्यासः पाराशर्य** इति श्रुतेः प्रत्यभिज्ञापनार्थोयं शब्दः मुनिः भगवद्गुणमननशीलः तत्सात्वतमखिलं प्रमाणं प्रकटयति॥ ८६॥

सेना—देव अपर इवायपाराशर्यः पञ्चरात्रतन्त्रं प्रतिष्ठापितवान् ।

राजा—भगवन्, गुरुकुमारिलमतानुसारिणः किमेतेनिरसनीया भर्त्स्यितव्या ।

गुरुः—महाराज, अमीपुनरागमाभिरक्षणप्रवृत्ता वेदान्तपरित्यागिनस्तोषयितव्या भीषयितव्याश्च ।

शिष्यः—( सापहासं )

निरस्ताखिलदोषेषु निगमान्तेषु सत्स्वमी ।
कथं सदसिमीमांसा कबन्धमनुरुन्धते ॥८७॥

अथ खल्वखिलवैदिकसदःशिखामणीनामध्यात्मविदाचिर्णयःपापवत्परित्यक्तकाम्यधर्मैर्नित्यनैमित्तिकानुष्ठाननिष्णातै विष्णुभक्तैर्भवितव्यमिति । अत एवकर्मब्रह्ममीमांसयोरैकशास्त्र्यमामनन्ति सन्तः ।

---

गुरुः प्रभाकर कुमारिलः भट्टः तन्मतानुसारिणः आगमाभिरक्षणप्रवृत्ततया तोषयितव्याः वेदान्तपरित्यागितया भीषयितव्याश्चेति ।

विवेकः तेषां वेदान्तवैशिष्ट्यापरिज्ञानं ज्ञात्वा अपहासः तदेव आह निरस्तेति—॥

निरस्तेति—॥ निरस्ताः प्रतिक्षिप्ताः अखिला दोषाः येषां तेषु निगमान्तेषु सत्सु अमी पूर्वोक्ताः सदसि विद्वत्सभायांमीमांसायाः कबन्धान् छिन्नशिरसः शरीरं अनुरुन्धते अनुसरन्ति । ब्रह्मभागस्य वेदशिरस्त्वात् तद्रहितस्य पूर्वभागमात्रस्य कबन्धत्वं ॥ ८७ ॥

विद्वन्निर्णयविरुद्धत्वाच्चाय पक्षो नग्राह्योयानित्याह अथ खल्विति—॥

अखिलानां वैदिकसदसां वैदिकगोष्ठीनां येशिखामणयः चूडारत्नानि तेषामध्यात्मविदां आत्मानं ।

चेतना चेतनात्मभूतं परमात्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मं उपनिषदः तद्विदां तत्प्रतिपाद्यब्रह्मविदा अनेन विशेषणद्वयेन भागद्वयात्मकवेदप्रतिपादिताचारनिरतत्वं प्रतीयते ।

कोसौ निर्णय इत्यत आह पापवदिति—। पापवत् ब्रह्महत्यादिपापानीव परित्यक्ताः वासनाः आभिस्सहत्यक्ताः काम्यधर्माः यैस्ते नित्याः नैमित्तिकाश्च धर्माः

राजा–(सपरितोषं) भगवन्, यथा श्रुतं यथाहृदय मुपपाद्य स्वपक्ष रक्षता परपक्षांश्च प्रतिक्षिपता प्रशमितनिगमान्तखेदेनभवदन्ते वासिना स्थूणानिखननन्यायेन स्थिरीकृतमिदं सम्यग्ज्ञानं । तथा प्यामुक्तनिगमकञ्चुकानाममुक्तबाह्यवर्त्मना कथंप्रतीकारः ।

गुरुः–(सान्तर्हासं)।

नियत्यावैयात्यान्निगमपदवीमुज्झितवतां
परेषामेतेषां परिहसनगुम्भार्हवचसां ।
पुरन्ध्रीसम्भाव्यस्वमतरुचिनीरन्ध्रितधियां
महङ्कारं सोढुं प्रभवति कथं कारमवनिः ॥८८॥

तेषु निष्णातैः निष्ठावद्भिः विष्णुभक्तैः विष्णौ चेतनाचेतनवस्तुनामात्मतया व्यापके भगवति भक्तिमद्भिः भवितव्यमिति अत्राप्याद्यविशेषणद्वयेन पूर्वभागोदितधर्मानुष्ठातृत्वं तृतीयेन ब्रह्मभागोदितभगवद्भक्तिनिष्ठत्वं च व्यञ्जितं । एवमाचारनिर्णयात् पूर्वोक्तभागात्मकवेदस्यैकशास्त्र्यं सिद्ध्यतीत्याह्यत एवेति–।

यतो भागद्वयात्मकवेदोदित कर्मानुष्ठानमेकस्मिन्नेवाधिकारिण्यवश्यं भावि अत एव हेतोरित्यर्थः । यत आमनन्तीत्यत्र सहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेति शास्त्रैकत्वसिद्धिरितिवचनमनुसन्धेयं ।

यथा श्रुतं श्रुतमनतिक्रम्य । गुरुमुखात्यथा श्रुतं तथा यथा हृदयं वेदान्ततात्पर्यमनतिक्रम्येत्यर्थः उपपादयता उपपत्तिभिः समर्थयता प्रशमितः निगमान्तानां खेदो येन तेन भवतो अन्तेवासिना शिष्येण सम्यक् ज्ञानं स्थिरीकृतं तथापि एवं सम्यक् ज्ञाने स्थिरी कृतेऽपि आमुक्तं धृतं निगम एव कंचुकं यैस्तथा अमुक्तः अत्यक्तः बाह्यानां वर्त्म मार्गः यैस्तेषां प्रतीकारः कथमिति । अन्तर्हासः मनसिहासः तत्सहितं यथा भवति तथा सान्तर्हासं ।

नियत्या इति–॥ नियत्या दैवस्य वैयात्यात् धार्ष्ट्यात् निगमपदवीं वेदोक्तमार्गं उज्झितवतां परेषां प्रतिपक्षभूतानां परिहसनानां गुंभः पारंपरी तदर्हवचसां परिहासयोग्य वाचामित्यर्थः । पुरन्ध्र्यः स्त्रियः ताभिः संभाव्यं पूज्यं यत्स्वमतं तस्मिन् रुच्या नीरन्ध्रिता सान्द्राधीः येषां तेषां अहंकारमभिमानं सोढुं अवनिः कथंकारं प्रभवति ॥ ८८ ॥

शिष्यः—महाराज, छिन्नमूलाः खल्वेते बाह्यनिरसनेन ।

तथाहि ।

गाथातााथागतानां गलतिगमनिका कापिलीका
पिलीनाक्षीणा काणादवाणी द्रुहिणहरगिर
स्सौरभन्नारभन्ते ।
क्षामाकौमारिलोक्तिर्जगति गुरुमतङ्गौरवा
द्दूरवान्तं काशङ्काशङ्करादेर्भजतियति
पतौ भद्रवेदींत्रिवेदीं ॥ ८९ ॥

अथवा, पारिप्लवविविधपरिकल्पनाकल्लोलकलहजनितसितासित-
विकल्पविप्लवेन सिद्धिकामजनमोहनप्रवृत्तान् तानिमान् प्रतिक्षिपामि ।

( सहस्तास्फालनं, विहस्य )

---

बाह्यानां साङ्ख्यादीनां निरसनेन एतेच्छिन्नमूला खलु तदेव उपपादयति तथाहीति—॥

गाथा इति—॥ यतिपतौ यतीन्द्रे त्रिवेदीं वेदत्रयरूपां भद्रवेदीं भद्रपीठं मङ्गलावह सिंहासनं भजति अधितिष्ठति सति ताथागतानां सौगताना गाथातत्प्रणीत गाथारूपं शास्त्रं गलति अध. पततिकापिली कपिलसंबन्धिनी गमनिकापद्धति क्वापिलीना काणादवाणी कणादनिबद्धो ग्रन्थः क्षीणाक्षयंप्राप्ता द्रुहिण हरयोः विरिंचिपशुपत्योः गिरः योगपाशुपतं सौरभमामोद ना रभन्ते तासा गन्धोऽपि नास्तीत्यर्थः । कुमारिलस्य भट्टाचार्यस्य उक्तिः तत्प्रणीतं तन्त्र क्षामा दिनेदिने कृशाभवति गुरोः प्रभाकरस्य मत गौरवात् गुरुत्वात दूरवान्त दूर एव उद्गीर्णं तन्मतस्यापि गुरुत्वाभावात् लघुत्वमभवदिति भावः एवमेतन्मतानां पराहतौ सत्यां शंकरादेः आदिशब्देन भास्करयादवौ गृह्येते एतदादे. कुदृष्टे. शङ्का पुरोवस्थानशङ्काऽनकापीत्यर्थः । कपिलहिरण्यगर्भ पशुपति प्रभृतीनां मतेषु विपक्षेषु तदपेक्षया अतिलघीयसः शङ्करादेरेतत् पुरोवस्थानमपि नशक्यतं इति भाव' ॥ ८९ ॥

एव बाह्यनिरसनेन कुदृशा छिन्नमूलत्वमुपपाद्यपक्षान्तरमाह अथवेति—॥

परितः प्लवन्तीति पारिप्लवाः नतु तलस्पर्शिन्यः विविधाश्च कल्पनाः प्रथनानि तासां कल्लोलाः विततयः तासा कलहः परस्पर स्पर्धा तेन जनिताः सिताश्च असिताश्चविकल्पाः सितासितत्वं नाम नानात्व तैः विप्लवः मतिकालुष्यं तेन सिद्धिकामाः मोक्षार्थिनः तेच ते जनाश्च तेषां मोहने प्रवृत्तानुद्युक्तान् इमान् प्रतिक्षिपामि । वक्ष्यमाणार्थविमर्शन सहस्तास्फलन विहसन ।

अविद्यामाहात्म्यादनहमिदमर्थं जगदिदं
गृणन्त्येते भातङ्गगन इव गन्धर्वनगरं ।
अवन्ध्यैर्व्याघातैरतिपतितविन्ध्यद्रढिमभि-
र्निबन्ध्यास्ते वन्ध्यासुतनृपति वैतालिकगणे ॥९०॥

अपि च ।

निध्यायन्त्वनसूयवश्शुभगुणन्निर्दोषमाराध्य
मित्यध्वा विश्वविशेषशून्यकथकैर्ग्प्यादितस्स्वीकृतः ।
यद्यर्थस्थितिरेतदेकशरणा सप्रत्यवायो भव
त्यध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वाहवः ॥९१॥

अतः स्थाने खलु मेघनादवदङ्कुरितविश्वव्यामोहनेन शङ्करदत्तेन केनापि मायातन्त्रेण समानाधिकरणेऽप्लवमाचरतामाचरिततमः प्रवृत्तीनामनवरतकर्बुरप्रकृतीनाङ्कुलिन्द्रस्वमीमांसकानामेतेषान्निरासाय लक्ष्मणाचार्य प्रादुर्भावः । हन्त परिगृहीत पौण्ड्रकाद्वैतानाममीषान्नित्यमुक्तवादोऽपि नित्यमुक्तवादतामापादयति ।

---

अविद्येति—॥ अनिदमहमर्थं अनिदमर्थं अनहमर्थं च ब्रह्मणि इद जगत् अविद्यायाः माहात्म्यादतिशयेन भात प्रकाशमानमित्येते मायिन. गृणन्ति वदन्ति कथमिव गगने गंधर्वनगरमिव अवन्ध्यैरमोघैरतिपतितः अतिक्रान्त विन्ध्यस्य द्रढिमादार्ढ्यं यैस्तै व्याघातैः वन्ध्यासुतो यो नृपतिः तस्य वैतालिकाना वन्दिना गणे नबन्ध्याः निबन्धव्याः निवेशितव्या इत्यर्थः । असंभाव्यमानार्थवादिनामेषा वन्ध्यासुत वैतालिकनृपतिगणनिवेशएव युक्त इति भावः ॥ ९० ॥

अभ्युपगमविरोधमाह निध्यायन्त्विति—॥

निध्यायन्त्विति—॥ अनसूयवः असूयारहिताः इदमिति शेषः निद्ध्यायन्तु अवलोकयन्तु आदितः अये प्रथमाधिकरणे विश्वविशेषैः शून्यस्य ब्रह्मणः कथकैः अशेषविशेषप्रत्यनीक ब्रह्मेति वदद्भिः निर्दोष दोषप्रत्यनीकं शुभाः कल्याणतम गुणाःयस्य तत्तया आराध्यमुपास्य ब्रह्मेति अध्वामार्गः स्वीकृतः । प्रथमसूत्रे निर्विशेष ब्रह्मेति प्रतिपाद्यगुणोपसंहारपादे सगुण ब्रह्मेति स्थापितमिति हृदयं । अत्रविरोधमाह यदिति—। अर्थस्थितिः एतदेकशरणा सगुणब्रह्मवादैकप्रवणा यदि अध्यक्षादीनि प्रत्यक्षादीनि प्रमाणानि तद्विरुद्धायाः निर्गुणकथायाः निर्वाहएव गर्वाहवः गर्वकृत आहवः सप्रत्यवायः सदोषो भवति ॥ ९१ ॥

अतः यत एते असंबद्धप्रलापाः अतः कारणात् लक्ष्मणाचार्य प्रादुर्भावः स्थाने खल्वित्यन्वयः । मेघनादवदिन्द्रजिदिवांकुरितमुत्पन्नं विश्वव्यामोहनं तेन इन्द्रजित्

तथा हि ।

मुक्तस्यनित्यमविशिष्टतनोरपूर्वां
मुक्तिंप्रकल्पयितुमात्तविचारयत्नः ।
स्वप्नप्रसूनमकरन्दरसस्यमन्ये
स्वादुत्वमन्यदुपपादयितुं क्षमेत ॥ ६२ ॥

आलक्ष्यतामथ रजनिचरवंशबान्धवाना राहुर्मीमांसकानां सुभगाभिक्षुकन्यायः यदेते निगमान्तपरित्यागिनः परानधिक्षिपन्ति प्रतिक्षिपन्तिचस्वयमेव निगमान्तान् । अतस्सभाकपाभावप्रतिपादकजडपुरुषप्रयुज्यमानभसापङ्क्ता भावचनवदपहास्यवचसाममीषा प्रतिक्षेपेप्यपत्रपामहे । श्रुतयस्तु त्रिभुवनसंरक्षणे प्रवृत्ताः प्रतिक्षिपन्ति । यदपि चैतेषां चिदचिदीश्वरयाथार्थ्यतस्कराणामन्तिमयुगमस्करिणा नित्यानित्य वस्तु विवेकादिसाधनचतुष्टयमभिदर्शित । तच्च । तत्वातत्वविवेकाभावः

---

यथायं दृष्टः उत्तरक्षणे अन्तर्हितो भवति तथेदं शकरदत्त व्यामोहनमपीत्यर्थः समाधेः ध्यानस्य करणमाचरणं तस्यापप्लवमाचरिता आचरिततमः प्रवृत्तिस्तमोगुण प्रवृत्तिः यैस्तेषां अनवरतं कर्बुरा शबला प्रकृतिस्स्वभावो येषा तेषां कलिः कलियुगं स एव ब्रह्म तत्र मीमांसकानां तदेकविचारनिरताना निवारणाय परिगृहीतमंगीकृतं पौण्ड्रकस्याद्वैतमैक्यं यैस्तेषा पौण्ड्रको वासुदेवोहमिति कृष्णेनैक्यं ब्रुवन् तस्मादेव मरणमवाप तथैतेषामपि ब्रह्माद्वैतभावेनानर्थकारिणीतिभावः । नित्यः सार्वकालिक मुक्तवादः मुक्तोस्मीति वादः नित्यं मुक्तः त्यक्तःवादोवचनं यैस्तथा तत्तां मौनित्वमुप पादयति । मुक्तोस्मीति वचनं जीवतामुक्त्यसंभवात् मुक्तवादोस्मीत्येतमेवार्थमुपपादय तीत्यर्थः । तदेवोपपादयति तथाहीत्यादिना–।

मुक्तस्येति–॥ नित्य प्रकृति विनिर्मुक्तस्यात एव विशिष्टतनोः ब्रह्मापचयविशेषविधुरस्वरूपस्यापूर्वां अभूतपूर्वां मुक्ति प्रकल्पयितुं साधयितुं आत्त स्वीकृतविचारयत्नो येन सतथा य एव विधस्सस्वप्ने यत्प्रसूनं दृष्ट तन्मकरन्दस्य अन्यत्पूर्वसिद्धादन्यत् स्वादुत्वं माधुर्यं उपपादयितुं क्षमेत शक्तस्स्यात् । नित्यमुक्तिः स्वप्नदृष्टप्रसून मकरन्दतुल्या मुक्त्यन्तरकल्पांतु तस्य माधुर्यान्तरकल्पन प्रायमितिभावः ॥ ६२ ॥

रागद्वेषादि साधनमपत् लौकिक वैदिककर्मानुष्टानवैमुख्यं बुभुक्षुत्वं चेति यथाऽनुष्ठानं विपरिणामेन परिहमन्तिमन्तः ।

**गुरुः**—भद्र, किमत्रविस्तरेण ।

---

रजनिचरवंश बान्धवाना तत्तुल्याना मपाशादिनामित्यर्थ तेहि राक्षसाइव ब्रह्माहमस्मीतिगर्वातिरेकादद्वैतवादिनः राहुर्मीमांसकाना कबन्धमीमांसकानां श्रुतिशिरोनिर्गाकारास्तेषा कबन्धमीमांसकत्व येषा । अथ सुभगाभिक्षुकन्याय आल. क्ष्यतां । अथ खलु सुभगाभिक्षुकन्यायः भिक्षार्थ गृहमागते मायावके नाय भिक्षासमय इति सुषाया वचनादपक्रान्ते तस्मिन् श्वश्रूरागत्य पुनस्तमाहूयवटो कथ भिक्षानव सरवादे अह वदामि नायं भिक्षावसरः त्व अपसरद्भूतमिति श्वश्रूनुषया यदुक्त तदेव श्वश्रूवापि उभययाप्यस्यवटो भिक्षा यथानास्ति तदेतैरुभैरपि निगमान्तनिरोध इति भावः । उक्तमेव न्याय दर्शयति य एव इति–। यच्छब्दोहेतुवचनः निगमान्तपरित्या-गिन. परान् राहुर्मीमांसकानधिक्षिपन्तिनिन्दन्ति इत्यर्थः अत एवमसंबद्धभाषिणः सभाया विद्वत्सदसिममकम्पोनास्तीति प्रतिपादकः सभाकम्पाभावप्रतिपादकः, सचा सौजडपुरुषश्च तेन प्रयुज्यमान असापंकाभाववचनमिव अपहास्यं वचोयेषां अमीषां प्रतिक्षेपोप्यत्रामहे तन्मतमनूद्यांकिलतत्प्रतिक्षेपः कार्यः– ।

अत्यन्तासंगतत्वात् तस्य प्रतिक्षेपार्थमपि तदनुवादोलज्जावह इति भावः । त्रिभुवनसं रक्षणे भुवनत्रयोदरवर्तिजनसंरक्ष णेतेषा सम्यक्ज्ञानोत्पादनद्वारा संरक्षणे प्रवृत्तास्तुश्रुतयः

नित्योनित्यानां चेतनश्चेतनानां एको बहूनां योविदधातिकामान्

ज्ञाज्ञौद्वावजावीशानीशौ द्वासुपर्णा सयुजौ
सखायौ समानंवृक्षं परिषस्वजाते । तयोरन्यः ।
पिप्पलं स्वाद्वत्यन श्नन्नन्योभिचाकशीतीति ॥
सोऽश्नुते सर्वान्कामान्सह ब्रह्मणाविपश्चिते त्यादय ॥

प्रतिक्षिपन्ति । जीव ब्रह्मणोरैक्यमितिशेष दूषणान्तरमाह यदपीति– । यदपि साधन चतुष्टयं केचिदभिदधतीत्यन्वयः । चिदचिदीश्वराणा याथात्म्यस्य तस्कराणाम· पहर्तृणामन्यथा वर्णयतामित्यर्थ· । अन्तिमयुगं कलियुग तस्मिन् मस्करिणां सन्यासिनां कलियुगानुगुणसन्यासिना नित्यानित्यवस्तु विवेकशमदमादि साधनसम्पद इहचामुत्र च फलभोगविरागः मुमुक्षुत्वचेति साधनचतुष्टय· तच्च साधनचतुष्टय· यथानुष्टानं तेषामनुष्टानमनतिक्रम्य विपरिणामेन विरुद्धपरिणामेन तत्वातत्वविचाराभावादिक-मिति सन्तः परिहसन्ति ॥

## XXXIV.

अथ[1] तौ रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ॥
ऊषतुर्मुदितौ वीरौ[2] मुनिभिः प्रतिपूजितौ ॥ १ ॥
प्रभातायां[3] च शर्वर्यां कृत[4]पूर्वाह्णिकक्रियौ ॥
विश्वामित्रमृषींश्चान्यान्[5] राघवावभ्यनन्दताम् ॥२॥
[6]अभिवाद्य मुनीन्सर्वांस्तांश्च तावमरद्युती ॥
ऊचतुर्मधुरोदारभाषिणौ रघुनन्दनौ ॥ ३ ॥
[7]इमौ[8] ते मुनिशार्दूल किङ्करौ समुपस्थितौ ॥
आज्ञापय यथेष्टं नौ[9] पुनः किं करवावहै ॥ ४ ॥
[10]एवमुक्तास्ततस्ताभ्यामृषयस्ते तपोधनाः ॥
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥
मैथिलस्य[11] रघुश्रेष्ठ जनकस्य भविष्यति ॥
यज्ञः परमधर्मिष्ठो[12] यास्यामस्तत्र वै वयम् ॥ ६ ॥
त्वं[13] चापि नरशार्दूल सहास्माभिर्गमिष्यसि
[14]रत्नं महाद्भुतं तत्र धनु[15]स्त्वं द्रष्टुमर्हसि ॥ ७ ॥

---

1 B XXXI 1 ता &c 2 B 1 प्रहृष्टेनांतरात्मना 3 B 2 तु &c 4. B 2 and G 2 पौर्वाह्णिक &c, but P has पूर्वाह्णिक &c. 5 B 2 संहितावभिजग्मतु. 6 For this Sl B 3 अभिवाद्य मुनिश्रेष्ठ ज्वलन्तमिव पावकं। ऊचतु. (a) परमोदारं वाक्य मधुरभाषिणौ ॥ (a) S and V मधुरोदार &c 7 For this Sl B 4 इमौ स्म मुनिशार्दूल किङ्करौ समुपागतौ। आज्ञापय मुनिश्रेष्ठ शासनं करवाव किं ॥ 8 G 4 द्वौ &c, but P has ते &c 9 P ब्रूहि &c. 10 For this Sl B 5 एवमुक्तेतयोर्वाक्ये सर्व एव महर्षयः। विश्वामित्रं &c. 11 B 6 नरश्रेष्ठ &c. 12 B 6 तत्र यास्यामहे &c 13 B 7 चैव &c. 14 B. 7. अद्भुत च धनूरत्न तत्रत्व &c. 15. G. 7. स्तद् &c

[1]प्राग्दत्तं किल तत्तस्य न्यासभूतं महद्धनुः ॥
[2]देवासुरैस्तथा युद्धे वृत्ते देवैः सवासवैः ॥ ८ ॥
[3]तन्न देवा न गन्धर्वा[4]न यक्षोरगराक्षसाः ॥
समापूरयितुं शक्ताः कुत एवेतरे जनाः ॥ ९ ॥
[5]धनुषः सारतां तस्य जिज्ञासन्तो नराधिपाः ॥
न शेकुरातोलयितुमपि पूरयितुं कुतः ॥ १० ॥
तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ॥
[6]यज्ञे द्रक्ष्यासि काकुत्स्थ सहास्माभिरितो गतः ॥११॥
[7]तथेत्युक्त्वा ततो रामः प्रयातुमुपचक्रमे ॥
विश्वामित्रपुरोगैस्तैर्महर्षिभिरुदारधीः ॥ १२ ॥
विश्वामित्रोऽथ भगवानामन्त्र्य[8]वनदेवताः ॥
उवाचेदं ततो वाक्यं यियासुर्मिथिलाम्प्रति ॥१३॥

---

1. For this Sl B 8. तद्धि पूर्वं नरश्रेष्ठ दत्त सदसि दैवतैः । अप्रमेयबल घोरं मखे परमभास्वरं ॥ P. has प्राग्दत्तं विश्वकोर्त्तस्य न्यासभूतंमहद्धनुः । अप्रमेयबल घोर निमेः परमभास्वरं । देवासुरे &c 2 G 8. देवासुरे तदा &c 3. For this Sl B. 9 नास्य देवा नगन्धर्वा नासुरा न च राक्षसाः । कर्त्तुमारोपणं शक्ता न कथञ्चन मानुषाः ॥ 4. P सयक्षोरग etc. 5. For this Sl B. 10. धनुषस्तस्य वीर्य हि जिज्ञासन्तो महीक्षितः । नशेकुरारोपयितुं राज(a)पुत्रा महाबलाः ॥ (a) S पुत्र etc. 6 B. 11. तत्र द्रक्ष्यसि काकुत्स्थयज्ञ च परमाद्भुतं ॥ P यत्त्वं द्रक्ष्यसि etc. After this, B. (12 and 13) reads:—तद्धि यज्ञफलं तेन मैथिले-नोत्तमंधनुः । याचितनरशार्दूल सुनाभसर्वदैवतैः ॥ आयागभूतं नृपतेस्तस्यवेश्मनिराघव । अर्चितं विविधैर्गन्धैर्धूपैश्चागुरुगन्धिभिः ॥ 7 For this and the following Sl B 14. एवमुक्त्वामुनिवरः प्रस्थानमकरोत्तदा । सर्षिसंघः सकाकुत्स्थ आमन्त्र्यवन देवता ॥ 8 P पितृदेवताः

स्वस्ति वोऽस्तु गमिष्यामि[1] सिद्धः सिद्धाश्रमा[2]दितः ॥
[3]उत्तरं जान्हवीतीरं हिमवन्तं शिलोच्चयम् ॥१४॥
[4]प्रदक्षिणमुपावृत्य ततः सिद्धाश्रमं मुनिः
उत्तरां दिशमास्थाय पन्थानमुपचक्रमे ॥ १५ ॥
[5]युक्तं ब्रह्मरथानान्तु शतमात्रंततः क्षणात् ॥
ययुर्मुनीनां भाण्डानि समारोप्यानुयायिनाम् ॥१६॥
[6]ते प्रयाता मुनिवरा बहवो वेणुपाणयः ।
शकटीशतमात्रेण विश्वामित्रपुरोगमाः ॥ १७ ॥
मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
[7]प्रयान्तमनुजग्मुस्तं विश्वामित्रं महामुनिम् ॥१८॥
[8]ते गत्वा दूरमध्वानं लाम्बमाने दिवाकरे ।
वासं चक्रुर्मुनिगणाःशोणतीर[9]मुपागताः ॥ १९ ॥
[10]गतेत्वस्तं दिनकरे स्नाताहुतहुताशनाः
विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ॥ २० ॥

---

1. P. सिद्धाः etc. 2. B. 15......दक्षं. 3. B. 15. उत्तरे जाह्नवीतीरे etc. 4. For this Sl. B. 16. (a) इत्युक्त्वामुनिशार्दूलःकौशिकः सतपोधनः । उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ (a) For this line. V. प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमं । 5. For this, and the following Sl. B. 17. तं व्रजंतं मुनिवरमन्वगादनुसारिणां । शकटीशतमात्रं तु प्रयाणे ब्रह्मवादिनाम् ॥ 6. This Sl. is wanting in G. 7. B. 18. अनुजग्मुर्महात्मानो विश्वामित्रं तपोधनं ॥ 8. For this Sl. B 19-20 निवर्तयामास ततः सर्वसंघः सपक्षिणः । तेगत्वा.... .दिवाकरे ॥ वासं......शोणाकूले समाहिताः । 9 मुपाश्रिताः, but P. has...मुपागताः 10 B 20. तेऽस्तंगते दिन etc; P. अस्तंगते दिन etc.

[1]रामोऽपि सहसौमित्ररभिवाद्यतपोधनम् ।
निषसादाभितस्तस्य विश्वामित्रस्य धीमतः ॥२१॥
[2]अथ रामोऽञ्जलिं कृत्वा विश्वामित्रमृषिन्तदा ।
पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ॥ २२ ॥
[3]भगवन् [4]कस्य देशोयं समृद्धो जनसेवितः ।
श्रोतुमिच्छामि तत्त्वेन त्वत्त एव महामुने ॥ २३ ॥
चोदितो रामवाक्येन तस्य देशस्य विस्तरम् ॥
विश्वामित्रो महातेजा [5]व्याख्यातुमुपचक्रमे ॥२४॥

आदिकाण्डे बालचरिते शोणतीरनिवासः ॥

— o —

XXXV.

[6]ब्रह्मयोनिर्महानासीत् कुशोनाम [7]जनाधिपः ।
स सुतान् जनयामास चतुरः ख्यातविक्रमान् ॥ १ ॥

---

1 For this Sl B. 21-22 (a) रामोऽपि सहसौमित्रिर्मुनीस्तानभिपूज्य च । अग्रतो निषसादाथ विश्वामित्रस्य धीमत ॥ (a) This line is wanting in S 2. For this Sl B. 22-23 अथ रामो महातेजा विश्वामित्र(a)तपोधनं ॥ पप्रच्छ. मुनिशार्दूल कौतूहल(b) समन्वितं । (a) S. तपोनिधिं (b) V and S समन्वितः। 3 For this and the following Sl B 23-24. भगवन् कोऽन्वय देशः समृद्धवनशोभितः ॥ श्रोतुमिच्छामि भद्रते वक्तुमर्हसितत्त्वत । (a) चोदितो रामवाक्येन कथयामास सुव्रतः । तस्य देशस्यनिखिलमृषिमध्ये महातपाः ॥ (a) V चोदिते. etc. 4. G. 22. कोऽन्वयदेश. समृद्धजनसेवितः । 5 G 23. व्याहर्त्तुमुप etc. 6. For this Sl. B. XXXII. 1 and 2 ब्रह्मयोनिर्महानासीत्कुशोनाममहातपाः। अक्लिष्टव्रतधर्मज्ञ सज्जनप्रतिपूजक. ॥ स महात्मा कुलीनाया (a) युक्तायां सुमहाबलान्। वैदर्भ्यां जनयामास चतुरः सदृशान् सुतान् ॥ (a) V. जायाया etc 7. G. 1 नराधिपः but P. has जनाधिपः॥

[1]कुशाम्बं कुशनाभं च अमूर्तरजसं वसुम् ।
महात्मनो दीप्तिमतः क्षत्रधर्मपरायणान् ॥ २ ॥
[2]तानुवाच कुशः पुत्रान् विनीतान् [3]श्रुतिपारगान् ।
प्रजानां पालनं पुत्राः क्रियतामिति राघव ॥ ३ ॥
[4]पितुस्ते वचनं श्रुत्वा लोकपालोपमाः सुताः
पुराण्यावासयामासुः पृथक् चत्वारि राघव ॥ ४ ॥
[5]तेषां कुशाम्बः कौशाम्बीं पुरीमावासयच्छुभाम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ५ ॥
[6]तथामूर्तरजा वीरश्चक्रे प्राग्ज्योतिषं पुरम् ।
धर्मारण्य समीपस्थं वसुश्चक्रे गिरिव्रजम् ॥ ६ ॥
[7]देशोऽयं वसुमानासीद्वसोरमिततेजसः
एते शैलवराः पञ्च प्रकाशन्ते महोच्छ्रयाः ॥ ७ ॥
सुमागधी नदी[8]चात्र[9]मागधा विश्रुता यया ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ८ ॥

---

1 For this Sl. B 3 कुशाम्ब कुशनाभच (a) अमूर्तरजसं वसु । दीप्तयुक्तान् महोत्साहान् क्षत्रधर्मचिकिर्षया । (a) S अमूर्त &c G 2 कुशाश्वं &c but P has कुशाम्ब &c 2 For this Sl. B. 4 तानुवाच कुश पुत्रान धर्मिष्ठान् सत्यशालिनः । क्रियतां पालनं पुत्रा धर्मःप्राप्स्यथ पुस्कलं ॥ 3 G 3 श्रुत &c, but P has श्रुति &c 4 For this Sl B 5 कुशस्य वचनं श्रुत्वा चत्वारो (a) लोकसत्तमाः । निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ (a) V. ऽमतविक्रमाः । 5 For this Sl B 6 कुशाम्बस्तुमहातेजा कौशाम्बीमकरोत्पुरी । कुशनाभस्तु &c G 5 तेषां कुशाश्व कौशाश्वीं &c, but P agrees with our text 6 For this Sl B 7 (a) असूर्त्तरजसोनाम धर्मारण्य महामतिः । चक्रे पुरवर राजा वसुर्नाम गिरिव्रजं ॥ (a) S अमूर्त &c 7 For this Sl B 8 एषा वसुमती (a) नाम वसोस्तस्य महात्मनः । एते शैलवराः पञ्च प्रकाशन्ते समन्तत ॥ (a) S. राम etc 8 B 9 रम्या मगधान् विश्रुता ययौ 9 G. 8 मगधा etc

[1]एषा सा मागधी नाम वसो राम महात्मनः ।
पूर्वमध्यासिता तेन सुक्षेत्रा सस्यमालिनी ॥ ९ ॥
कुश[2]नाभोऽपि राजर्षिः कन्याशतमनुत्तमम् ।
जनयामास[3]दुर्द्धर्षो घृताच्यां रघुनन्दन ॥ १० ॥
[4]रूपयैावनशालिन्यस्ताः कदाचित् स्वलंकृताः ।
उद्यानभूमिमा[5]गत्यचिक्रीडु र्विद्युतो[6]पमाः ॥ ११ ॥
गायन्त्यो नृत्यमानाश्च वादयन्त्य[7]श्च राघव ॥
आमोदं परमं जग्मु[8]र्गन्धमाल्यैरलंकृताः ॥ १२ ॥
[9]अथ ताश्चारुसर्वाङ्गी रूपेणाप्रतिमा भुवि ॥
दृष्ट्वा[10]सर्वत्रगो वायुरिदंवचनमब्रवीत् ॥ १३ ॥
अहं वः कामये सर्वा भार्या[11]भवत मेऽबलाः ॥
त्यक्त्वा[12]मानुषकं भावममरत्वमवाप्स्यथ ॥ १४ ॥

---

1 For this Sl B 10 सैषाहि मागधी (a) राम वसोस्तस्य महात्मनः। पूर्वाभि चरिता(b)राम सुक्षेत्रा सस्यमालिनी ॥ (a) and (b) V. नाम etc 2. B- 11. नाभस्तु etc. G. 10 नाभोऽथ etc, but P. has नाभोऽपि etc. 3 B 11. धर्म्मा- त्मा etc. 4. For this Sl. B 12. तास्तु यैावनशालिन्यो रूपवत्यः स्वलंकृताः। उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ 5 G 11 गम्य etc., but P. has ..गत्य etc 6 G 11 .. यथा, but P. has ..पमाः। 7. B 13... स्तु etc 8 B 13. र्वराभरणभूषिताः P र्वरमाल्यै etc 9. For this Sl B. 14 and 15. अथताश्चा- रुसर्वाङ्ग्यो रूपेणाप्रतिमाभुवि। उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ ता (a) सर्वागुणसम्पन्ना रूपयैावनसंयुताः । दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ (a) V. and S. सर्व etc. 10. G. 13 तु सर्वगो वायु etc 11. B 16 and 17 ..मम भविष्यथ। मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ चलं हि यैावनं नित्यं मानुषेषु विशेषतः । अक्षयं यैावनं प्राप्ता अमर्यश्च भविष्यथ ॥ 12 G. 14 मानुष्यकं etc.

[1]तस्य तद्वचनं श्रुत्वा वायोः परममङ्गनाः ॥
मुक्त्वा हासं ततः सर्वा वायुं वचनमब्रुवन् ॥ १५ ॥
[2]अन्तश्चरसि भूतानां सर्वेषां किल मारुत ॥
प्रभावज्ञाः स्म ते सर्वाः किमस्मानवमन्यसे ॥ १६ ॥
[3]कुशनाभसुताः सर्वाः क्षमन्ते न हि मारुत ॥
स्थानाद्भ्रंशयितुं देव रक्षामः स्वं कुलं[4] स्वयम् ॥१७॥
[5]माभूत्स कालो यद्वायो पितरं सत्यवादिनम् ॥
कामतः समतिक्रम्य [6]वरयामः स्वयं वरम् ॥ १८ ॥
[7]पितास्माकं प्रभवति दैवतं नः परं पिता ॥
अस्मान् दास्यत्यसौ यस्मै स नो भर्ता भविष्यति॥१९॥
[8]तासां तद्वचनं श्रुत्वा वायुः कोपसमन्वितः ॥
बभञ्ज कन्या मध्य ताः संप्रविश्यात्मतेजसा ॥ २० ॥

---

1. For this Sl B 18 तस्य तद्वचन श्रुत्वा वायोरक्लिष्टकर्मणः । अपहास्य ततो वाक्य कन्याशतमथाब्रवीत् ॥ 2. For this Sl B 19 अन्तश्चरसि भूताना सर्वेषा सुरसत्तम । प्रभावज्ञाश्च ते सर्वाः किमर्थमवमन्यसे ॥ 3 For this Sl B. 20 कुशनाभसुता देव (a) समस्ताः सुरसत्तम । स्थानाच्च्यावयितु (b) देवं रक्षामस्तुतपो वय ॥ (a) V समर्थाश्च सुरोत्तम etc (b) S देव etc 4 G. 17. वय 5 For this Sl B 21 माभूत्सकालो दुर्मेधः पितरं सत्यवादिनं। (a) अवमन्य स्वधर्मेण स्वय वरमुपास्महे ॥ (a) V नावमन्य etc 6 G 1 वरयेम etc, P वरयाम etc. 7 For this Sl B. 22 (a) पिता हि प्रभुरस्माक दैवतं परमं(b)च सः । यस्य नो दास्यति पिता सनो भर्त्ता भविष्यति ॥ (a) V पितैव प्रभु etc (b) V. हि etc, 8. For this Sl B 23. तासा तु वचनं श्रुत्वा हरिः परमकोपनः । प्रविश्य सर्वगात्राणि बभञ्ज भगवान प्रभु ॥

[1]ताः कन्या वायुना भग्ना विविशुर्भवनं पितुः ॥
दृष्ट्वा भग्नाश्च ता राम राजर्षिरिदमब्रवीत् ॥ २१ ॥
किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ॥
कुब्जाः केन [2]कृता यूयं[3]संप्रविश्य दुरात्मना ॥ २२ ॥
तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ॥
शिरोभिश्चरणौ[4]गत्वा कन्याशतमभाषत ॥ २३ ॥
[5]वायुरस्मानुपागम्य बलवान् काममोहितः ॥
उत्क्रम्य धर्ममर्यादां प्रधर्षयितुमुद्यतः ॥ २४ ॥
[6]सोऽस्माभिरुक्तः सर्वाभिर्वायुः कामवशं गतः ॥
पितृमत्यः स्म भगवन्न स्वच्छन्दचरा वयम् ॥ २५ ॥
पितरं नोऽभियाचस्व[7]स दाता यदि मन्यसे ॥
न वयं स्वैरचारिण्यः प्रसीद भगन्निति ॥ २६ ॥

1. For th s Sl. B 24. & 25 ताः कन्या वायुना भग्नाविविशुर्न पतेर्ग्रह । प्रविश्य च सुसम्रान्ता सलज्जा (a) सास्रलोचना ॥ सचतादयिता (b) भग्ना कन्याः परमशोभना. । दृष्ट्वा (c) दीनास्तदाराजा सम्भ्रान्त इदमब्रवीत ॥ (a) S and V साश्रु etc (b) V. दीना. etc (c) V भग्ना etc For this Sl G. 21 and 22 ताः कन्या वायुना भग्ना विविशुर्भवन पितु । प्रापतन् भुवि सम्भ्रांताः सलज्जाः साश्रुलोचना ॥ सचतादयिता दीनाः कन्याः परमशोभनाः । दृष्ट्वा भग्नास्तदा राजा संभ्रात इदमब्रवीत् ॥ but P agrees with our text 2 B 26 कृताः सर्वाश्चेष्टन्त्यो नाभिभाषथ ॥ B (27) then reads the additional line एवं राजा विनिःश्वस्य समाधि सदधे ततः which finishes the chapter 3 G 23 समाविश्य etc but P has संप्रविश्य etc 4 B. XXXIII 1 स्पृष्ट्वा etc 5. For this Sl B 2 वायुः सर्वात्मको राजन् प्रधर्षयितुमिच्छति । अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ 6 For this, and the following two Slokas, B 3 and 4 पितृमत्यः स्म भद्रं ते स्वच्छंदेनवयस्थिताः । पितरं नो वृणीष्व त्व यदिनो दास्यते तव ॥ तेन पापानुबन्धेन वचनं न प्रतीच्छता । एवं ब्रुवन्त्यः सर्वा स्म वायुनाभिहता भृश ॥ 7 G 27 न्यायतोयदि etc

इत्युक्तः कुपितो वायुः प्रविश्याङ्गानि नः प्रभो ॥
बभञ्ज बलवांस्तेन सर्वाःकुब्जीकृता वयम् ॥ २७ ॥
[1]इति तासां वचः श्रुत्वा कुशनाभो नराधिपः ॥
प्रत्युवाच ततो राम कन्याशतमिदं वचः ॥ २८ ॥
[2]यत् क्षान्तोऽतिक्रमो वायोः कृतं तन्मे महत्प्रियम्॥
पुत्र्यो मे यच्च युष्माभिः कुलच्छायाभिरक्षिता ॥२९॥
[3]अलंकारो हि नारीणां क्षमा पुत्र्यो विशेषतः ॥
देवानां च विशेषेण क्षन्तव्यमिति मे मतिः ॥ ३० ॥
[4]दुष्करं च कृतं मन्ये यद्वायोः क्षान्तमीदृशम् ॥
व्यभिचारकृतं तस्मात् प्रीतोऽहं तेन सुव्रताः ॥३१॥
प्रदानसमयं चैव मन्येऽहं वोऽद्य सर्वशः ॥
गम्यतामितः पुत्र्यश्चिन्तयिष्यामि वो हितम् ॥३२॥
[5]विसृज्य चैव ता. [6]कन्यास्ततः स नृपसत्तमः ॥
तासां प्रदानं धर्मज्ञो मन्त्रयामास मन्त्रिभि.॥ ३३ ॥

---

1 For this Sl B 5 तासा तु वचनंश्रुत्वा राजा परमधार्मिकः । प्रत्युवाच महातेजा· कन्याशतमनुत्तम ॥ 2 For this Sl B. 6 क्षान्तं क्षमावता पुत्र्य कर्त्तव्यं सुमहत् कृतं । ऐकमत्यमुपागम्य कुलं च वेक्षित मम ॥ 3 For this Sl. B 7 अलकारो हि नारीणा क्षमानु पुरुषस्य वा । दुष्करं तच्च (a) वैक्षातं त्रिदशेषु विशेषत· ॥ (a) V. व etc 4 For this, and the following Sloka B 8 and 9 यादृशीवः क्षमा पुत्र्य सर्वासामविशेषत । क्षमादानं क्षमा सत्य क्षमा (a) यज्ञाश्च पुत्रिकाः ॥ क्षमा यशः क्षमा धर्मः क्षमाया विष्ठित जगत् । (a) S and V यज्ञश्च etc G 32 सुकृत च etc, but P has दुष्कारच etc 5 For this Sl B 9-10 विसृज्य कन्याः काकुत्स्थ राजात्रिदशविक्रमः ॥ मन्त्रज्ञो मंत्रयामास प्रदानं सह मंत्रिभिः । देशे काले च कर्त्तव्य सदृशे प्रतिपादनम ॥ 6 P सर्वा etc

[1]यद्वायुना च ताः कन्यास्तत्र कुब्जीकृताः पुरा ॥
कान्यकुब्जमिति ख्यातं ततः प्रभृति तत्पुरम् ॥ ३४ ॥
[2]एतस्मिन्नेव काले तु [3]चूली नाम महानृषिः ॥
ऊर्ध्वरेता ब्रह्मचर्यं [4]चचार किल दुश्चरम् ॥ ३५ ॥
[5]तं ब्रह्मचारिणं [6]राम तप्यमानं महत्तपः ॥
सोमदा नाम गन्धर्वी [7]उर्म्मिलापदुहिता तदा ॥ ३६ ॥
[8]नियमं परमास्थाय सम्यक् परिचचारह ॥
पुत्रार्थिनी ततो राम महर्षेर्भावितात्मनः ॥ ३७ ॥
साभवत्प्रयता भूत्वा शुश्रूषणपरायणा ॥
[9]स तां कालस्य महतः प्रोवाच परितोषितः ॥ ३८ ॥
परि तुष्टोऽस्म्यहं भद्रे ब्रूहि किं करवाणि ते ॥
[10]परितुष्टं मुनिं दृष्ट्वा गन्धर्वी मधुराक्षरम् ॥ ३९ ॥
उवाच प्राञ्जलिर्भूत्वा वाक्यमात्महितं तदा ॥
[11]दीप्यसे परया लक्ष्म्या [12]ब्राह्म्या त्वमनया यथा॥४०॥

---

1 This Sl is wanting in B 2. For this Sl B 11. एतस्मिन्नेव काले तु चूलो नाम महाद्युतिः । ऊर्द्धरेताः शुभाचारा ब्राह्मतप उपागमत् ॥ 3 G 36 इलो et P वृर्णो etc 4 P चकार etc. 5 For this Sl B 12 तपस्यत मपितत्र गधर्वी पर्युपासते । सोमदानाम भद्रते ऊर्मिलातनया (a) तदा ॥ (a) S तथा. 6 P नाम 7 G. 37 ऊर्णायु etc. 8 For this Sl and the following line, B 13 सा (a) च तं प्रणता भूत्वा सुश्रूषणपरायणा । उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरु. ॥ (a) V तच etc 9 For this, and the following line, B. 14 सचता कालयोगेन प्रोवाच रघुनंदन । परितुष्टोऽस्मि भद्र ते किंकरोमि तवप्रिय ॥ 10 For this, and the following line, B 15 परितुष्ट मुनिंज्ञात्वा गंधर्वीमधुरस्वरं । उवाच परमप्रीता वाक्यज्ञा वाक्यकोविद ॥ 11. For this, and the following line, B 16 लक्ष्म्या समुदिता ब्राह्मा ब्रह्मभूता महातपा । ब्राह्मेण तपसायुक्त पुत्रमिच्छामि धार्मिक ॥ 12 P ब्रह्मस्त्वमनया etc

तथाहं पुत्रमिच्छामि त्वत्तो ब्राह्म्या [1] श्रियान्वितम् ॥
[2] स्वयं च वरये त्वाहं भर्तारमपरिग्रहा ॥ ४१ ॥
अनन्यपूर्वां भज मां याचमानां [3] धृतव्रताम् ॥
[4] तस्यै प्रसन्नो विप्रर्षिर्ददौ पुत्रं यथेप्सितम् ॥ ४२ ॥
ब्रह्मदत्त इति ख्यातः सोऽभव[5] च्चूलिनः सुतः ॥
[6] ब्रह्मदत्तः स राजर्षिः [7] पुरमध्यावसत्तदा ॥ ४३ ॥
[8] काम्पिल्यं नाम काकुत्स्थ देवराजसमद्युतिः
[9] तं श्रुत्वा परया लक्ष्म्या कुशनाभो[10] ऽन्वितंनृपम्॥४४॥
ब्रह्मदत्ताय ताः कन्याः प्रदातुमुपचक्रमे ॥
[11] स तमाहूय धर्मज्ञो ब्रह्मदत्तं [12] रघूत्तम ॥ ४५ ॥

---

1. G. 42 श्रियावृतं but P has श्रियान्वितं. 2. For this, and the following line, B 17. अपतिश्चास्मि भद्रंते भार्या चास्मि न कस्यचित् । ब्राह्मेणोपगताया(a)श्च दातुमर्हसि मेसुतं ॥ (a) V....स्त्व etc P. अहं च वरये वै त्वा etc 3 G 43. दृढव्रत, P यतव्रत 4. For this, and the following line, B 18 तस्या प्रसन्नो ब्रह्मर्षिर्ददौ (a) ब्राह्ममनुत्तम । ब्रह्मदत्त इति ख्यात मानस चूलिन सुतं । (a) V पुत्रमनुत्तम । 5 G 44 ...च्चूलिनः etc. P. च्चूलिनः etc 6 For this, and the following line B 19 सराजा ब्रह्मदत्तस्तु पुरी (a) मध्यवसत्तदा । काम्पिल्यां परया लक्ष्म्या देवराजा यथा (b) दिवम् (a) V. मध्या etc (b) V. दिवि 7 G 44 पुरीमध्या etc., but P has पुरमध्या etc. 8 G 45 काम्पिल्या etc, but P. has काम्पिल्य etc. 9 For this, and the following line, B. 20. स बुद्धि कृतवान् राजा (a) कुशनाभः सुधार्मिकः । ब्रह्मदत्ताय काकुत्स्थ दातु कन्याशत तदा ॥ (a) V. कुशनाभस्तु धा etc 10 P ...न्वित etc 11 For this, and the following line B. 21. तमाहूय महातेजा ब्रह्मदत्तं महीपति । ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना । 12 G 46 महीपति

ददौ कन्याशतं तस्मै सुप्रीतेनान्तरात्मना ॥
[1]यथाक्रमं स सर्वासां तासामनुपमद्युतिः ॥ ४६ ॥
जग्राह विधिवत् पाणीन् ब्रह्मदत्तो नराधिपः ॥
[2]तेन च पृष्टमात्रेषु [3]ततः कन्याः गतव्यथाः ॥४७॥
बभूवुः सर्वशः कन्या रूपौदार्यगुणान्विताः ॥
[4]ता दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ॥४८॥
विस्मयं परमं चक्रे मुमुदे ऽभिननन्द च ॥
कृतोद्वाहं तु राजानं ब्रह्मदत्तं [5]रघूत्तम ॥ ४९ ॥
सदारं प्रेषयामास [6]स्वपुरं परमार्चितम् ॥
[7]तं तदा सदृशैर्दारैरन्वितं पुत्रमागतम् ॥
मुमुदे सोमदा प्रीता दृष्ट्वा चाभिननन्द च ॥ ५० ॥

आदिकाण्डे ब्रह्मदत्तविवाहः

---

1 For this, and the following line B 22 यथाक्रमं तदा पाणि जग्राह रघुनन्दन । ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा । 2 For this, and the following line, B 23 स्पृष्टमात्रे तदा पाणौ विकुब्जा विगतज्वराः । युक्त परमया लक्ष्म्या (1) बभौ कन्याशतं तदा । (a) V बभु॰ etc. 3 G 48. ताः पाणिषु गत etc 4 For this, and the following line B. 24 सदृष्ट्वा वायुना मुक्ता कुशनाभो महीपति । बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ 5 B 25 महापतिं 6 B 25 सोपाध्यायगणं तदा 7 For this, and the following line, B 26 and 27 सोमदापि सुतं दृष्ट्वा पुत्रस्य सदृशीं क्रियां । यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत । स्पृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥

XXXVI

[1]कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते [2]नाराधिपे ॥
अपुत्रः कुश[3]नाभस्तु पुत्रीयामिष्टि[4]मानयत् ॥ १ ॥
[5]तस्यां च वर्तमानायां कुशनाभमुपागतः ॥
कुशो ब्रह्मसुतःपुत्रमुवाच स तदानृपम् ॥ २ ॥
[6]पुत्रस्ते सदृशः पुत्र भविता न चिरादिव ॥
[7]ममवंशे महातेजाः कौशिकोऽनुपमद्युतिः ॥ ३ ॥
एवमुक्त्वा [8]ततो राम कुशनाभं महीपतिम्
जगामाकाशमाविश्य [9]पुनरेव यथागतम् ॥ ४ ॥
कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ॥
[10]प्रजायत सुतो राम गाधिर्नाम [11]महात्मनः ॥५॥
[12]स पिता मम धर्मात्मा गाधिः सत्यपराक्रमः ॥
[13]कुशवंशेऽभवद्राजा [14]गाधिर्यो रघुनन्दन ॥ ६ ॥

---

1. For this Sl. B. XXXIV 1. कृतोद्वाहे गते तस्मिन् ब्रह्मदत्ते च राघव। अपुत्रः पुत्रलाभाय पौत्रींमिष्टिमकल्पयत् ॥ 2. P नराधिपः 3 G. 1 . .नाभोऽथ etc., but P. has नाभस्तु etc, 4. G 1. माहरत्, P मालभत 5. For this Sl. B 2 इष्ट्या तु वर्तमानाया कुशनाभ महीपतिं। उवाच परमोदारः कुशोब्रह्म सुतस्तदा। 6. For this Sl. B 3 पुत्रस्ते सदृशः पुत्र भविष्यति सुधार्मिकः। गाधि प्राप्स्यसि (a) तेनत्व कीर्त्तिं लोके च शाश्वतीं।' (a) V येन etc 7 G. 3 गाधिः प्राप्स्यसि तेनत्वं कीर्त्तिं लोकेषु शाश्वतीं। But P agrees with our text 8. B. 4 and G 4 राम etc 9 B 4 ब्रह्मलोकं सनातनं। 10. B. 5. जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः। G. 5 अजायत etc. 11 G 5. महायशा 12 For this Sl B. 6 सपिता मम काकुत्स्थ गाधिः परमधार्मिकः। कुशवंश प्रसूतोऽस्मि कौशिको रघुनंदन ॥ 13. P कुशवंशेऽभवच्चाह etc 14 G 6 गाधिजोऽह रघूत्तम ॥ P गाधिजो रघुनन्दन।

[1]अनुजा भगिनी चापि मम जज्ञे शुभव्रता ॥
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥ ७ ॥
[2]भर्तृव्रतत्वाद्भर्त्रैव सह गत्वा सुरालयम् ॥
कौशिकी परमोदारा सा प्रवृत्ता महानदी ॥८॥
[3]स्वर्ग्या पुण्योदका रम्या हिमवंतमुपाश्रिता ॥
[4]इयं पावयितुं लोकान् प्रवृत्ता भगिनी मम ॥ ९ ॥
[5]अतोऽहं हिमवत्पार्श्वे वसामि [6]निरतः सुखी ॥
भगिन्याः स्नेहतो राम कौशिक्या नियतव्रतः ॥१०॥
[7]सैषा सत्यवती पुण्या सत्य[8]व्रतपरायणा ॥
पतिव्रता महाभागा कौशिकी सरितां वरा ॥ ११ ॥
[9]अहञ्च नियमं कञ्चिदास्थातुं रघुनन्दन ॥
सिद्धाश्रममनुप्राप्तः सिद्धोऽस्मि तव तेजसा ॥ १२ ॥
एषा राम [10]ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ॥
देशस्य [11]चास्य निर्वृत्तिर्यन्मां त्वं परिपृच्छसि ॥१३॥

---

1. B. 7. पूर्वजा भगिनी चापि मम राघव सुव्रता। etc. 2 B. 8 सशरीरा गता स्वर्गं भर्तारमनुवर्त्तिनी। कौशिकी परमोदारा प्रवृत्ता च महानदी 3. B 9. दिव्या etc 4. B. 9. लोकस्य (a) हितकार्यार्थं प्रवृत्ता etc. (a) V. हितकामार्थं etc. 5. For this Sl. B. 10. ततोऽहं हिमवत्पार्श्वे वसामि नियतः सुखं। भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन। 6. P नियतं etc 7 B. 11. सातु सत्यवती पुण्या सत्येधर्मे प्रतिष्ठिता। पतिव्रता etc. 8. G. 11. धर्म etc. but P. has व्रत etc 9. For this Sl. B. 12. अहं हि नियमाद्राम हित्वा तां समुपागतः। सिद्धाश्रममनु (a) प्राप्तः etc. (a) V and S. प्राप्य etc 10 B 13 and G. 13. ममोत्पत्तिः etc. but P. has मयोत्पत्तिः etc. 11. B. 13. हि महाबाहो यन्मां etc.

[1]स्थितोऽर्द्धरात्रः काकुत्स्थ कथां कथयतो मम ॥
निद्रां भजस्व भद्रं ते[2]विघ्नोऽयमध्वनोऽस्तु नः ॥१४॥
निष्पन्दास्तरवः सर्वे[3]संलीना मृगपक्षिणः ॥
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥
[4]सूक्ष्मेणाञ्जनचूर्णेन नभः कृत्स्नमिवाञ्जितम् ॥
ग्रहनक्षत्रताराभिः काञ्चनीभिरिवावृतम् ॥ १६ ॥
[5]उदेति चासौ शीतांशुर्लोककान्तो निशाकरः ॥
अंशुभिः स्वै[6]र्जगच्छीतैर्घर्मार्तं ह्लादयन्निव ॥ १७ ॥
[7]निशाचराणि सत्वानि धृष्ट[8]प्रविचरन्ति च ॥
यक्षरक्षोगणाश्चैव ये चान्ये पिशिताशनाः ॥ १८ ॥
एवमुक्त्वा[9]महातेजा विरराम महामुनिः ॥
साधु साध्विति[10]तं सर्वे मुनयः प्रशशंसिरे ॥ १९ ॥

1 For this Sl B 14 गतोऽर्धरात्रः काकुत्स्थ कथाः कथयतो मम । निद्रामभ्येहि भद्रं ते माभूद्विघ्नोऽध्वनीह नः ॥ 2. G 14. विघ्ननाशोऽध्वनोऽस्तु न P. वर्तते शार्वरं तम 3 B 15 निलीना etc 4. For this Sl. B 16. शनै र्वि(a)सज्यते संध्या नभो नेत्रैरिवावृतं । नक्षत्रताराग्रहनं ज्योतिर्भि(b) रवभासते । (a) V. युज्यते etc. (b) V. रिव etc. 5. For this Sl B 17 उत्तिष्ठते च शीतांशुः शशी लोकतमोनुदः । ह्लादयन् प्राणिनां लोके मनांसि प्रभया स्वया ॥ 6 G. 17 जगत्स्वच्छै etc, but P has जगच्छीतै etc. 7 For this Sl B 18. नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः । यक्षराक्षससंघाश्च रौद्राश्च पिशिताशनाः ॥ 8. G 18 परिचरन्ति हि । But P has प्रविचरन्ति च । 9. G 19 तुकौशिक्या etc, but P has महातेजा etc. 10 B. 19 ते सर्वे मुनयो ह्यभ्यपूजयन् ॥ Before the next Sl of our text B. (20-22) reads कुशिकानामयं वंशो महान्धर्मपरस्सदा । ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः । विशेषेण भवानेव विश्वामित्र महायशाः । कौशिकी सरितां श्रेष्ठा कुलोद्योतकरीतव ॥ (a) मुदितैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः । निद्रामुपागमच्छ्रीमानस्तंगतइवांशुमान् । (a) V. इतितै etc. 8 मुदितो etc.

[1]रामोऽपि सहसौमित्रिः किञ्चिदागतविस्मयः ॥
[2]प्रणम्य मुनिशार्दूलं निद्रावशमुपेयिवान् ॥ २० ॥

आदिकाण्डे विश्वामित्र वंशानुकीर्तनम् ।

———o———

## XXXI

[3]ते रत्रिशेषं सुषुपुः शोणतीरे महर्षयः ॥
प्रभातायां[4]च शर्वर्यां विश्वामित्रोऽभ्यभाषत ॥ १ ॥
[5]कौशल्यामातरुत्तिष्ठ सुप्राभाता[6]निशा तव ॥
पूर्वासन्ध्यामुपास्यैनां गमनायाभिरोचय ॥ २ ॥
[7]तच्छ्रुत्वोत्थाय रामोऽपि कृत्वा[8]पूर्वाह्णिकक्रियाम् ॥
गमनं रोचयामास वचनं चेदमब्रवीत् ॥ ३ ॥
[9]अयं शोणः शुचिजलोऽगाधःपुलिनमण्डितः ॥
कतमेन पथा ब्रह्मंस्तरिष्याम इमं वयम् ॥ ४ ॥
[10]इत्युक्तः प्रत्युवाचाथ विश्वामित्र इदं वचः ॥
रामं कमलपत्राक्षं तदा संहर्षयन्निव ॥ ५ ॥

---

1. This Sl. is wanting in G, but P has it. 2 B 23. प्रशस्य मुनिशार्दूलं निद्रा समुपसेवते ॥ 3. For this Sl B XXXV. 1 उपास्य रात्रिशेषन्तु शोणाकूले महर्षिभिः । निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत । 4. P तु etc 5 For this Sl. B 2 सुप्रभाता निशा राम पूर्वा सध्या प्रवर्त्तते। उत्तिष्ठोत्तिष्ठ भद्रंते गमनायाभिरोचय ॥ 6 G 2 हि ते निशा, but P has निशा तव 7. For this Sl B 3. तच्छ्रुत्वा वचनं तस्य (a) कृतपूर्वाह्णिकक्रियः। गमन रोचयामास वाक्य चेदमुवाचह ॥ (a) V कृत्वा पौर्वाह्णिकी क्रियां P. श्रुत्वोत्थाय च रामो etc. 8 G 3 पौर्वाह्णिकी etc. but P. has पूर्वाह्णिक etc 9 For this Sl. B. 4 अयं शोणः शुभजलोऽगाधः पुलिनमण्डितः । कतरेण पथा ब्रह्मन् संतरिष्यामहे वयं ॥ 10 For this, and the following Sl B 5 एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदं । एष पथा मयोद्दिष्टो येन याति महर्षयः ॥

मृन्मयं पात्रमुच्छिष्टलेपोपहतं पुनर्दाहेन शुध्यति । तदाह बौधायनः ।

मृन्मयानां पात्राणामुच्छिष्टममन्वारब्धानामतूलवमुच्छिष्टोपहतानां पुनर्दहनं मूत्रपुरीषरेतःप्रभृतिभिस्तत्सर्ग इति । चण्डालादिस्पर्शे परित्याग एव ।

चण्डालाद्यैस्तु सस्पृष्टं धान्यं वस्त्रमथापि वा ।
क्षालनेन विशुध्येत परित्यागान्महीमयम् ॥ इतिस्मरणात्

धान्याना व्रीहियवादीनामुच्छिष्टोपहताना मार्जनमल्पाना क्षालनं बहुना प्रोक्षणमिति । तदाह मनुः ।

अद्भिस्तु प्रोक्षणं शौच बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौच विधीयते ॥ इति

वैणवादिशुद्धिमाह ।

**वेणुवल्कलचीराणां क्षौमकार्पासवाससाम् ।**
**और्णनेत्रपटानां च प्रोक्षणाच्छुद्धिरिष्यते ॥ २८ ॥**

वेणुर्वंशः, तत्कार्याणि कटव्यजनादीनि वल्कलचीराणि प्रसिद्धानि क्षौममतसीत्वङ्निर्मितवस्त्रं कार्पासवासःप्रसिद्धम् । और्णमूर्णानिर्मितकबलादिः नेत्रपटोऽरण्यवासिना प्रसिद्धः । एषां वैणवादीनामेकैकस्याल्पोपहतौ प्रोक्षणाच्छुद्धिर्महोपघाते क्षालनमेव क्षौमादीना तु चण्डालादिस्पर्शमात्रोपघाते प्रत्येकमपि प्रोक्षणमेव लेपोपहतौ तु स्वस्वशोधनैः क्षालनमेव । तथाच देवलः ।

और्णकौशेयकुतपशाणक्षौमदुकूलजाः ।
अल्पशौचा भवन्त्येते शोषणप्रोक्षणादिभिः ॥
तान्यवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैरिति ।

कार्पासवाससां तु चण्डालादिस्पर्शे बहूना प्रोक्षणमल्पानां क्षालनम् ।

आद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ इति मनुस्मरणात् ।

राशीकृतेष्वपि वस्त्रेषु यावत्संस्पृष्टं तावतो क्षालनमसंस्पृष्टस्य प्रोक्षणमेव ।

वस्त्रधान्यादिराशीनामेकदेशविदूषणे ।
तावन्मात्रं समुद्धृत्य शेषं प्रोक्षणमर्हति ॥ इतिस्मरणात् ।

मुञ्जादिशुद्धिमाह ।

**मुञ्जोपस्करशूर्पाणां शणस्य फलचर्मणाम् ॥**
**तृणकाष्ठस्य रज्जूनामुदकाभ्युक्षणं मतम् ॥ २९ ॥**

मुञ्जः तृणविशेषस्तन्निर्मितमुपस्करो विष्टरादिः शूर्पं वेणुमयं यद्यपि तच्छुद्धिः पूर्वमुक्तेव वेणुविकारत्वात्तथापि फलीकरणादिना सलेपस्यापि तस्य शुध्यन्तरशङ्कानिरासार्थं पुनर्ग्रहणं शणादिहेतुर्वल्कलविशेषः तेन तद्विकाराणां ग्रहणं फलमाम्रादि चर्म कृष्णाजिनादि तृणं काष्ठं रज्जुर्वल्वजादिनिर्मिता एषामस्पृश्यस्पृष्टानामुदकेनाभ्युक्षणं विण्मूत्राद्युपहतानां क्षालनमेवेति । तदाह कश्यपः । तृणकाष्ठरज्जुमुञ्जचर्मवेणुविदलफलपत्रमूलादीनां चैलवच्छौचं मृद्दारुचर्मणां चात्यन्तोपहतानां त्याग इति ।

तूलिकादिशुद्धिमाह ।

**तूलिकाद्युपधानानि रक्तवस्त्रादिकानि च ।**
**शोषयित्वार्कतापेन प्रोक्षणाच्छुद्धतामियुः ॥ ३० ॥**

तूलं कार्पासं तेन पूर्णा पटी तूलिका आदिनासनोपाश्रयादिग्रहणमुपधानमुच्छीर्षकं तूलिकादीनि चोपधानं चेति तूलिकाद्युपधानानि रक्तमादिशब्देन हारिद्रादेर्ग्रहणं तेषां चण्डालादिस्पर्शे प्रोक्षणार्कतापाभ्यां विण्मूत्राद्युपहतौ क्षालनेनैव शुद्धिः । यथा देवलः ।

तूलिकाद्युपधानं च पुष्परक्ताम्बराणि च ।
शोषयित्वातपे किंचित्करैस्तन्मार्जयेन्मुहुः ॥
पश्चात्तु वारिणा प्रोक्ष्य विनियुञ्जीत कर्मणि ।
तान्यप्यतिमलिनानि यथावत्परिशोधयेदिति ॥

पुष्पं कुसुम्भादि ।

कुसुम्भकुंकुमारक्तं तथा लाक्षारसेन च ।
प्रोक्षणेनैव शुध्येत चण्डालस्पर्शने सदा ।

इति षट्त्रिंशन्मतात् ।

इदानीं केषु चिदशुध्यपवादमाह ।

**मार्जारमक्षिकाकीटपतङ्गकृमिदर्दुराः ।**
**मेध्यामेध्यं स्पृशन्तोऽपि नोच्छिष्टं मनुरब्रवीत् ॥३१॥**

मार्जारमक्षिके प्रसिद्धे । कीटाः पिपीलिकाद्याः पतङ्गः शलभः क्रिमयो धान्यादावुत्पन्नजीवाः घुणादयः दर्दुरो भेकः, एते मेध्यं चामेध्यं च मेध्यामेध्यं शुद्धाशुद्धं द्रव्यं स्पृशन्तोऽपि नोच्छिष्टं कुर्वन्तीति मनुरब्रवीत् । तथा च मनुः । मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिरिति । याज्ञवल्क्योऽपि ।

रश्मिरग्नी रजः छाया गौरश्वश्च सदानिलः ।
विप्रुषो मक्षिकास्पर्शे वत्सः प्रस्रवणे शुचिरिति ॥

किं च ।

**महीं स्पृष्ट्वा गतं तोयं याश्चाप्यस्याऽऽस्यविप्रुषः ।**
**भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत् ॥३२॥**

परानाचामयतो यदुदकं भूमिं स्पृष्ट्वा बिन्दुरूपेणोर्ध्वमागत्य स्पृशति याश्च सभाषणेऽन्योन्यविप्रुषो मुखोद्गता बिन्दवोऽङ्गे पतन्ति यच्च भोजनपात्रादन्यदुच्छिष्टमुर्वरितं पुनः पुनर्भुज्यमानमपि तथा स्नेहं तैलाभ्यङ्गे पुनःपुनरुपयुज्यमानमपि नोच्छिष्टं भवतीति यथालिङ्गं प्रत्येकं संबध्यत इति मनुरब्रवीत् । तथा च मनुः ।

स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

नोच्छिष्टं कुर्वते मेध्या विप्रुषोऽङ्गे पतन्ति याः ॥ इति ।

किंच ।

**ताम्बूलेक्षुफलं चैव भुक्तस्नेहानुलेपने ।**
**मधुपर्के च सोमे च नोच्छिष्टं धर्मतो विदुः ॥३३॥**

ताम्बूलं च इक्षुश्च फलं च ताम्बूलेक्षुफलं भुक्तश्चासौ स्नेहश्च तस्यानुलेपनं चालनानपनोद्यलेपे मधुपर्के विवाहादौ दधिभक्षणं सोमयागे सोमपानमेतेषु नोच्छिष्टदोष इति मन्वादयो विदुः । तथा च शातातपः । ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके । श्रुतिश्चन सोमे- नोच्छिष्टा भवन्ति इति ।

किञ्च ।

**रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ।**
**मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥ ३४ ॥**

रथ्या मार्गमात्रं तत्रस्थानि कर्दमतोयानि बहुवचनाच्चैलखर्परखोरपि ग्रहणं नावो वहित्राणि पन्था मार्गस्तृणानि उलपादीनि पक्वेष्टकाचितानि वेदिकागृहादीनि चण्डालादिस्पृष्टान्यपि मारुतार्कतापाभ्यां शुध्यन्ति ।

तथा च याज्ञवल्क्यः ।

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥
पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैरिति ।
चकारादासनशयनादेरपि ग्रहणम् ।

तदाह बौधायनः ।

आसनं शयनं यानं नावः पन्थास्तृणानि च ।
मारुतार्केण शुध्यन्ति पक्वेष्टकाचितानि चेति ।

किञ्च ।

**गण्डूषनिर्गता धारा मारुतोत्थाश्च रेणवः ।**
**स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदा चन ॥ ३६ ॥**

गण्डूषादेर्निर्गता मुखं प्रविष्टा अप्यविच्छिन्ना उदकधारा नोच्छि

ष्टा भवन्ति न च पात्रस्थजलं दूषयन्ति नानाविधाशुचिप्रदेशस्थाद्वायुनोत्थापिता अपि रेणवो नाशुचयोऽन्यत्र खरादिरेणुभ्यः। तथा च शातातपः।

रेणवः शुचयः सर्वे वायुना समुदीरिताः।
अन्यत्र रासभाजाविश्वसूकरनिवासिनः॥

इति।

स्त्रीबालवृद्धाः प्रातःस्नानाद्यभावेऽपि गृहकर्माचरन्तः शुचयः। तथा च वसिष्ठः।

श्वहताश्च मृगा मेध्याः पातितं च द्विजैः फलम्।
बालैः खलुपरिक्रान्तं स्त्रीभिराचरितं च यदिति॥
स्त्रीबालयोरपि शुचित्वमात्मीययोरेव न सामान्यतः।
आसनं शयनं वस्त्रं जायापत्यं कमण्डलुम्।
आत्मनः शुचिरेतानि न परेषां कदा चन॥ इति स्मरणात्।

इदानीमुक्तशुद्धेर्विषयमाह।

**देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि।**
**रक्षेदेव स्वदेहादि पश्चाद्धर्मं समाचरेत्॥ ३६॥**

देशभङ्गे परसैन्यागमेन प्रवासो देशान्तरगमनेन परगृहादिवासः, व्याधयो ज्वरादयः व्यसनानि स्वामिकोपादिजनितानि भयानि एतेषु प्राप्तेषु शुध्यशुद्धी न विचारयितव्ये किं तर्हि शुचिभिरशुचिभिर्वा द्रव्यैरात्मपुत्रकलत्रादिरक्षां विधाय गतायामापदि पश्चाच्छास्त्रानुसारेणाशुद्धद्रव्योपभोगनिमित्तप्रायश्चित्तपूर्वकं धर्मानाचरेदिति।

एवं शुद्धिविषयमुक्त्वा प्रसङ्गान्मुख्यगौणयोरपि कल्पयोर्विषयमाह।

**येन केन च धर्मेण मृदुना दारुणेन वा।**
**उद्धरेद्दीन आत्मानं समर्थो धर्ममाचरेत्॥ ३७॥**

मृदुना सुकरेण यथोपपन्नदेशकालद्रव्यात्मसाध्येन दारुणेन वा उद्धरेद्दीन आत्मानं समर्थो धर्ममाचरेत्, न दुष्करेण यथोक्तदेशकालद्र-

व्यात्मसाध्येन वा येन केन विदव्यवस्थितेन धर्मेण दीन आपद्गस्त मात्मानमुद्धरेदनापद्वं कुर्यात्समर्थोनिस्तीर्णापद् धर्मं मुख्य शास्त्रोक्तमेवाचरेच्च तु कल्प शास्त्रोक्तमिति अनेनासमर्थो मुख्यगौणयोर्धर्मयोर्यथोपपत्त्यधिकारी समर्थस्तु मुख्यधर्म एवेत्युक्तं भवति ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ॥
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलमिति स्मरणात् ।
यथोक्तविपर्यये मुख्यगौणकल्पयोरुदाहरणमाह ।

**आपत्कालं तु निस्तीर्य शौचाचारं तु चिन्तयेत् ।**
**शुद्धिं समुद्धरेत्पश्चात् स्वस्थो धर्मं समाचरेत् ॥३८॥**

निस्तीर्णापत्काल एव पुमान् शौचाचारमाचारकाण्डोक्तं धर्मं विचिन्तयेदनुतिष्ठेत्, शुद्धिं प्रायश्चित्तकाण्डोक्तांच समुद्धरेदाचरेत्, अनेन मुख्यगौणकल्पयोराचारप्रायश्चित्तयोरेव सम्भवो नान्यत्रेत्युक्तं भवति स्वस्थो धर्मं समाचरेदित्युक्तोपसंहारो द्विविधमपि धर्मं स्वस्थ एवाचरे चापत्त इति

दध्नः कुम्भान् कुसुम्भारुणवसनवृता मस्तके न्यस्तमूलान्
विध्राणा गोपकन्याश्चलपदमभितो व्यस्तदृष्टि व्रजन्तीः ।
शुल्कव्याजान्निरुध्य प्रसभमभिमृशन् कञ्चुकान्तर्विचिन्वन्
नीवीवासो विकर्षन् स्मितललितमुखः पातु सङ्कर्षणो वः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृतेऽखिलशुद्धिहेतु-
रध्याय एष विवृतः खलु सप्तमोऽपि ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां सप्तमोऽध्यायः । शुभमस्तु ।

श्रीगणेशायनमः ।

आधाय प्रेम साधारणमिव गतवान्पूर्वमस्मासु कस्माद्
राधामाधाय कुञ्जे विहरति हरिरित्यन्तरीर्ष्याः सकोपाः ।
गोपीः सातङ्कमन्तश्चलपदमभिगम्यानुनेतुं सशङ्कः
प्रद्युम्नश्चाटुवाक्यैर्जयति हृदि मुदा सन्दधत् निर्व्यलीकाः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते क्रियते विचारो-
ऽध्याये ऽष्टमे निखिलगोवधशुद्धिसिध्यै ॥ २ ॥

एवमाचारप्रायश्चित्तकाण्डयोरनुक्तान् शेषान् धर्मान्तरान् सङ्कर काण्डेन प्रतिपाद्येदानीं प्रायश्चित्तकाण्डमारभते ।

तत्र पूर्वकाण्डे प्रकीर्णकसङ्करीकरणमलिनीकरणेषु प्रायश्चित्त मभिहितमिदानीमुपपातकेषु तदुक्तव्यं, तत्स्वरूपं च याज्ञवल्क्य आह ।

गोवधो व्रात्यता स्तेयमृणाना चाऽनपक्रिया ।
अनाहि ताग्निताऽपण्यविक्रयः परिवेदनम् ॥
भृताद्ध्ययनादानं भृतकाध्यापनं तथा ।
पारदार्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ।
स्त्रीशूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम् ॥
नास्तिक्यं व्रतलोपश्च सुताना चैव विक्रयः ।
धान्यकुप्यपशुस्तेयमयाज्यानां च याजनम् ॥
पितृमातृसुतत्यागस्तडागारामविक्रयः ।
कन्यासदूषण चैव परिविंदकयाजनम् ॥
कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ।
आत्मनोर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ॥
स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ।
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम् ॥
हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः ।
शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम् ॥

तथैवाऽनाश्रमे वासः परान्नपरिपुष्टता ।
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ॥
भार्याया विक्रयश्चैषामेकैकमुपपातकमिति ॥

तेष्वाद्यस्य गोवधस्य प्रायश्चित्तमध्यायद्वयेन विवक्षुरादावृपति

**गवां बन्धनयोक्त्रेषु भवेन्मृत्युरकामतः ॥**
**अकामकृतपापस्य प्रायश्चित्तं कथं भवेत् ॥ १ ॥**

बन्धनयोक्त्रे वक्ष्यमाणलक्षणे बहुवचनाद्रोधघातयोरुपादानम् ।

तथा च वक्ष्यति नवमे ।

रोधबन्धनयोक्त्राणि घातश्चेति चतुर्विधमिति वधनिमित्तमिति शेषः

तेषु चतुर्ष्वप्यकामतो मरणानुद्देशेपि प्रयुक्तानां गवां यदि कथञ्चि न्मरणं भवेत्तदा न कामतस्तदुद्देशेन कृतं पापं येनाऽसावकामकृत-पापस्तस्य पुरुषस्य प्रायश्चित्तं कथं स्यात् । अयमभिसन्धिः । द्विविधमपि पापं प्रायश्चित्तनिमित्तं कामकृतमकामकृतं च ।

तत्राऽहमेनमेवं व्यापादयिष्यामीत्युद्देशः कामस्तदभावोऽकाम ज्ञानकामयोश्चाऽव्यभिचारात्तुल्यफलकत्वमेव । तथा च मरणानुद्देशे ऽपि योक्त्रबन्धनादीनां मरणानुकूलव्यापारत्वाद्धिंसैव परं त्वकामकामकृता च तत्र च प्रायश्चित्तं नाम रूढ्या योगेन च पापनिवर्तनक्षमो धर्मविशेष उच्यते ।

योगश्चाऽङ्गिरसा दर्शितः ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यत इति ॥

रूढिमात्राङ्गीकारे त्ववयवशक्तिपरित्यागः समुदायशक्तिकल्पना चाऽपद्येत तच्च नैमित्तिकमेव क्षामवतीवत् । यत्तु प्रायश्चित्तैरपैत्येन इत्यादि पापक्षयस्य फलत्वेन श्रवणं तज्जातेष्टिन्यायेन नैमित्तिकेऽप्यविरुद्धम् ।

यदपि "प्रायश्चित्तमकुर्वाणाः पापेषु निरतानराः ।
अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान् ।

इत्याद्याकरणे प्रत्यवायश्रवणान्नित्यत्वप्रतिभानं तदपि न॰। अनेन प्रायश्चित्ताकरणस्य पापान्तरजनकत्वाप्रति-पादनात् किन्तु विनाशकाभावे तदनुवृत्तिमात्रबोधनात् । तस्मा नैमित्तिकं तच्चा ऽकामकृते पापमात्रे सर्ववादिसम्प्रतिपन्नं, कामकृते महापातकादौ तु केषां चिदेव समतं न सर्वेषाम् ।

तथाच मनुः ।

अकामतः कृते पपे प्रायश्चित्तं विदुर्बुधाः ।

कमकारकृते प्याहुरेके श्रुतिनिदर्शनात् ॥ इति ।

एतत्सर्वमभिप्रेत्याऽह । अकामकृतपापस्य प्रायश्चित्तं कथं भवेदिति ।

प्रायश्चित्तं कथं भवेदिति प्रश्नस्य सागप्रायश्चित्तविषयत्वा त्पर्षदुपसत्तिरूपमाद्यमङ्गमाह ।

**वेदवेदांगविदुषां धर्मशास्त्रं विजानताम् ॥**
**स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत् ॥ २ ॥**

वेदा ऋग्वेदादयोगानि शिक्षादीनि तानि विदंति धर्मशास्त्रं च मानवादि ये जानंति स्वकर्म च नित्यनैमित्तिकाद्यनुतिष्ठन्ति तेषामग्रे स्वीयमुत्पन्नं पापमशेषेण निवेदयेत् ।

यद्यपि धर्मशास्त्रज्ञानमात्रेण प्रायश्चित्तं विधातुं शक्यं तथापि वेदाध्ययनतदर्थानुष्ठानरहितैर्निर्दिष्टस्य प्रायश्चित्तस्य पापापनोदनक्षमत्वाभावस्य वक्ष्यमाणत्वाद् विशेषणद्वयोपादानमर्थवत्, बहुवचनं तु तत्त न्यायोपदिष्टसंख्यासंग्रहाय ।

तथाच स्मृत्यन्तरम् ।

पातके तु शतं पर्षत्सहस्रं महदादिषु ।

उपपापेषु पञ्चाशत् स्वल्पे स्वल्पा तथा भवेदिति ॥

अनेन पर्षल्लक्षणं तदुपसत्तिश्चोक्ता तामेतां पर्षदुपसत्तिं स्पष्टमाहाङ्गिराः ।

अत ऊर्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ।।
सद्यो निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्धयेत्पापमसत्य पर्षदि ब्रुवन् ।।
सशये तु न भोक्तव्य यावत्कार्यस्य निश्चयः ।
प्रमादश्च न कर्तव्यो यथैवासशये तथा ।।
कृत्वा पापं न गूहेत गूहमानस्य वर्धते ।
बहु वा स्वल्पकं वापि धर्मविन्द्यो निवेदयेत् ।।
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ।
मृदुरार्जवसंपन्नः शुद्धिं याचेत मानवः ।।
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वाथ वैश्यो वा पर्षद ह्युपतिष्ठति ।।
सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धि कुर्वन्तु द्विजसत्तमाः ।।
मया कृतं महाघोरं ज्ञातमज्ञातकिल्विषम् ।
प्रसादः क्रियतां मह्य शुभानुज्ञां प्रयच्छथ ।।
पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैः ।
उपस्थाय ततः शीघ्रमार्तिमान् धरणीं व्रजेत् ॥
गात्रैश्च शिरसा चैव न च किंचिदुदाहरेत् ।
ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ॥
वृद्धाः पृच्छन्ति तत्कार्यमुपविश्यायतः स्थितम् ।
किं ते कार्यं वदास्माभिः किं वा मृगयसे द्विज ॥
तत्त्वतो ब्रूहि तत्सर्वं सत्य हि गतिरात्मनः ।
सत्येन द्योतते राजा सत्येन द्योतते रविः ।
सत्येन द्योतते वन्हिः सर्वं सत्ये प्रतिष्ठितम् ॥
भूर्भुवःस्वःस्त्रयो लोकास्तेपि सत्ये प्रतिष्ठिताः ।
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ।
यदि चेद्वदसे सत्य नियतं प्राप्स्यसे शुभम् ॥
यद्यागतोस्यसत्येन न त्वं शुध्यसि कर्हि चित् ।
सत्येन तु विशुध्यन्ति शुद्धिकामाश्च मानवाः ॥

तस्मात्तद्वद यत्सत्यमार्दिमथ्यावमानिकम् ।
एवं तैः समनुज्ञातः सर्वं ब्रूयादशेषत इति ॥
पापप्रवचने च पर्षद्भ्यो दक्षिणा दत्वा कार्यमित्यत आह पराशरः ।
पापं प्रख्यापयेत्पापी दत्वा धेनुं तथा वृषमिति ॥

धेनुवृषयोश्च दानं मूल्यरूपेण न स्वरूपेण पर्षद्विभागासहत्वाद्विक्रयप्रतिषेधाच्च एतदतिकृच्छ्रा । द्विप्रायश्चित्तेषु

अन्येषु तु विष्णूक्तम् ।
पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकांचनम् ।
पादहीने तु गामेका कृच्छ्रे गोमिथुनं स्मृतमित्यादि ज्ञेयं ॥
वक्ष्यति च नवमे, पादे वस्त्रयुगं चैवेत्यादि ।

नामधारकविप्राणां पर्षत्वनिषेद्धुं तल्लक्षणमाह ।

**सावित्र्याश्चापि गायत्र्याः संध्योपास्त्यग्निकार्ययोः ॥**
**अज्ञानात्कृषिकर्तारो ब्राह्मणा नामधारकाः ॥ ३ ॥**

तत्सवितुर्वृणीमह इति सावित्री तत्सवितुर्वरेण्यमिति गायत्री । यद्यपि सवितृप्रतिपादकत्वाद्गायत्र्या एव सावित्रीत्वं प्रसिद्धम् । तथाप्यत्र भेदेनोपन्यासात्पुनरुपनयने उद्दिश्यत्वाच्चोदाहृतैव सावित्रीति संध्योपास्तिः संध्यावन्दनम् । अग्निकार्यं समिदाधानम्, एषामज्ञानेन याजनाध्यापनादिवृत्त्यसंभवाद्ये जीवनाय कृषिमाश्रयन्ति ते ब्राह्मणा नामधारका ब्राह्मणशब्दाभिधेयाः जातिमात्राश्रयत्वात् ।

तदाह व्यासः ।
ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः ॥
जातिमात्रोपजीवी यः स भवेन्नामधारकः ॥ इति ।

उक्ते पर्षल्लक्षणे विशेषणानां व्यावर्त्यमाह

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ४ ॥**

व्रतैः सौम्यप्राजापत्यादिभिः हीनाः अव्रताः अनधीतमन्त्रा अमन्त्राः अनेन ब्राह्मणाऽनध्ययनेपि मंत्रभागमात्राध्ययनेपि पर्षत्त्वं भवतीत्युक्तम् । एते-

पाज्जातिमात्राश्रयाणां पर्षत्त्वं नास्ति । ननु गुणोत्कर्षापकर्षाभ्यामल्पाधिकसङ्ख्यानां पर्षत्त्वं दृश्यते, यथाध्यात्मविद एकस्यैव, एको वाध्यात्मवित्तम इति स्मरणात् । तदभावे चतुर्णां, चत्वारो वेदधर्मज्ञा इति । तद्वत्प्रकृतेऽपि संख्याधिक्येनैषामेवास्तु पर्षत्त्वमित्यत आह सहस्रशः समेतानामिति । अनेन वेदाध्ययनकर्मानुष्ठानयोर्व्यावर्त्यमुक्तम् ।

इदानीं धर्मशास्त्र विजानतामिति विशेषणस्य व्यावर्त्यमाह ।

**यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः ।**
**तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति ॥ ५ ॥**

धर्मशास्त्राज्ञानं द्विविधं सत्यपि मूलपाठे न्यायनिर्णयकौशलाभावेन व्यवस्थाऽपरिज्ञानमेकम् । व्यवस्थासामर्थ्येऽपि मूलाऽपरिशीलनमूलकमपरम् । तदुभयरूपेण, तमसा, वचनानां विषयव्यवस्थाज्ञानाभावेन मूढाः सूक्ष्मन्यायेषु विभ्रान्ताः मूलापरिज्ञानेन मूर्खा पण्डितम्मन्याः, अतएवातद्विदः प्रायश्चित्तविशेषमजानन्तो, यत्पापमुद्दिश्य धर्मं प्रायश्चित्तमन्यथा वदन्ति तत्पापं शतगुणं भूत्वा तान्मूर्खान्वक्तॄनधिगच्छति प्राप्नोति, तस्मात्पापनिर्णयाय मूलवाक्यपाठायच यतितव्यम् ।

तदाहाङ्गिराः ।

यत्तु दत्तमजानद्भिः प्रायश्चित्तं सभागतैः ।
तत्पाप शतधा भूत्वा दातॄनेवोपतिष्ठतीति ।

एवं पर्षल्लक्षणमभिधाय प्रसङ्गादनुवादकलक्षणमपि व्यतिरेकमुखेनाह ।

**अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।**
**प्रायश्चिती भवेत्पूतः किल्बिषं पर्षदि व्रजेत् ॥ ६ ॥**

यस्त्वनुवादको धर्मशास्त्राण्यपाठित्वैव कुतश्चिदभियुक्तात्प्रायश्चित्तविशेषं ज्ञात्वोपदिशत्यसावपि पूतो निष्पापोप्यनेनैव पापेन प्रायश्चित्ती किल्विषी भवेत् । विधायकवचनोदाहरणसामर्थ्याभावात् । तदुदाहरणेनैव प्रायश्चित्तोपदेशाम्नानात् ।

तदुक्तम् ।

मुनिवत्कोद्भवान् धर्मान् रक्षन्तो वेदपारगाः । इति षष्ठाध्याये ।

अङ्गिरसापि ।

वचः पूर्वमुदाहार्यं यथोक्तं धर्मवक्तृभिः ।
पश्चात्कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
नहि तेषामतिक्रम्य वचनानि महात्मनाम् ।
अज्ञानैरपि विद्वद्भिः शक्यमन्यत्प्रभाषितुमिति ॥

तत्र हेतुमाह क्षित्विषं पर्षदि व्रजेदिति यतस्तत्पाप शतधेत्यर्थे-नेदमुक्तमित्यर्थः । यत्तुप्रायश्चित्ती निमित्ती तादृशेनापि प्रायश्चित्तेन पूतो भवतीति व्याख्यानम् ।

तच्च ।

यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।

नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृतेऽपि सः ।

इतिवृद्धशातातपस्मरणविरोधात् ।

इदानीं पर्षन्निर्णीतस्याप्यर्थस्य विधायकैस्त्रिचतुरैस्सह सबादःकार्य-इत्यत आह ।

**चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः ।**
**स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥ ७ ॥**

पर्षन्निर्णीतमप्यर्थं त्रयश्चत्वारो वा वेदशास्त्रपारगा विप्रा ब्रूयु-र्यदा तदाऽसौ धर्मो भवति न केवल सहस्रादिसंख्यकैः सत्यैरेवोक्त इति ।

विचरस्तादृशः कार्या यथा सर्वे सभासदः ।
एकवाक्यतया ब्रूयुस्तथा श्रेयो ऽधिगच्छतीति स्मरणात् ॥

अनेन पर्षदतिरिक्तास्त्रयश्चत्वारो वा विधायकाः कार्या इत्युक्त भवति । अतएवभारते ।

अर्द्धं पापं भवेन्मुख्ये पादो भवति कर्तृषु ।

पादो भवति सभ्येषु ये न निन्दन्ति निन्दितम् ।

"इति त्रयाणामपि पृथगुपादानं विहितम् । मुख्यः प्राड्विवाकः कर्तारो विधायकाः सभ्याः पर्षद्वियुक्तार इति ।

विधायकैरपि पर्षन्निर्णीतेर्थे संवादः कथं कार्य इत्यत आह ।

प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै ।
तेषामुद्विजते पापं सद्भूतगुणवादिनाम् ॥ ८ ॥

प्रमाणं धर्मशास्त्रं मार्गः शिष्टानुगृहीतः पन्थाः तयोः समाहारः। यद्वा प्रमाणानां स्मृतिवचनानां मार्गो व्यवस्था तां मार्गन्तो न्यायेनानुसन्दधाना ये धर्मं प्रवदन्ति सवदन्ति तेषां सद्भूतगुणवादेन यथावस्थितार्थप्रतिपादनेन पापमुद्विजते नाशयोग्यतामापद्यत इति। अनेन विधायकैरपि प्रमाणानुसन्धानेन सवादः कार्य इत्युक्तं भवति ।

ननु प्रमाणमार्गणस्यैव पापोद्वेजकत्वे स्वयमेव तथानुष्ठाने पापोद्वेगः किं न स्यादित्यत आह ।

यथाऽश्मनि स्थितं तोयं मारुतार्केण शुष्यति ।
एवं परिषदादेशान्नाशयेत्तत्र दुष्कृतम् ॥ ९ ॥

महति शिलातले निम्नभागे स्थितमुदकं यथा वायुसूर्यादिसंपर्केणैव शुष्यति न स्वयमेव तथेयं परिषच्छास्त्रीयप्रायश्चित्तोपदेशादेव निमित्तिनः पापं नाशयति नान्यथा अनेन पर्षदादेश एव पापनाशो न स्वयमेव ज्ञात्वानुष्ठानमिति दर्शितम् । अत एव वक्ष्यति नवमान्ते तस्मात्प्रकाशयेत्पापमिति ।

ननु पर्षदुपदिष्टं पापं यदि कर्तर्य्येवावतिष्ठते तदा प्रायश्चित्तमनर्थकम् । अथ पर्षदं प्राप्नुयात्तर्हि ततः कथमुद्वेग इत्यत आह ।

नैव गच्छति कर्तारं नैव गच्छति पर्षदम् ।
मारुतार्कादिसंयोगात्पापं नश्यति तोयवत् ॥ १० ॥

नहि शिलास्थमुदकमुत्तरकाले यथापूर्वं शिलायामुपतिष्ठते

नापि मारुतादावासज्जते किंतु शुष्यत्येव केवलम्, तथेदमपि पापं न कर्तर्यवतिष्ठते नापि पर्षदं प्राप्नोति किंतु स्वयं नाशमेव प्राप्नोति ।

तथाच चतुर्विंशतिमते ।

यथा भूमिगतं तोयमर्कतापेन शुष्यति ।
एवं हि परिषद्दृष्टं नश्यत्येतस्य दुस्कृतम् ॥
नैव गच्छति कर्तारं नैव गच्छति पर्षदम् ।
मारुतार्कादिसंयोगात्पापं नश्यति तोयवदिति ॥

ननु प्रायश्चित्तेन कर्त्तुः पापनाशाचैव गच्छति कर्तारमित्युच्यता नाम नैव गच्छति पर्षदमिति त्वनुपपन्नम् । तेषां पापासक्रमे अतिकृच्छ्रं ततः कुर्याज्जपेद्वै वेदमातरमिति वक्ष्यमाणं प्रायश्चित्तविधानमनुपपन्नं स्यादिति चेन्नैवम् । नहि कर्तुः पापं पर्षदि सङ्क्रामति तस्याक्रियत्वात् किंतु पर्षदः प्रायश्चित्तोपदेशनिमित्तं पापान्तरमुत्पद्यते तद्विनाशाय कृच्छ्रादिविधानमिति न विरोधः । यथाच पर्षदः प्रायश्चित्तोपदेशानुपदेशयोर्न सकटपातस्तथोपरिष्टाद्वक्ष्यामः ।

इदानीं कार्यतारतम्येन पर्षदो मुख्यानुकल्पभेदानाह ।

**चत्वारो वा त्रयो वापि वेदवन्तोऽग्निहोत्रिणः ।**
**ब्राह्मणानां समर्था चेत्परिषत्सा विधीयते ॥११॥**

ये चत्वारो ब्राह्मणा वेदवन्तः साङ्गवेदाध्येतारो अग्निहोत्रिणोऽविच्छिन्नाग्निहोत्रहोमाः आहिताग्नयः, समर्थाः सम्यगर्थो धर्मस्य प्रतिपादकं शास्त्रं येषां ते धर्मशास्त्रज्ञाः, सा ब्राह्मणानां मुख्या परिषत् तदभावे तादृशास्त्रयो वा परिषत् वाशब्दान्तरेण स्वकर्मरतत्वं विप्रत्वं च पूर्वलक्षणादाकृष्यते । ब्राह्मणानामिति विशेषणात् क्षत्रियादीनां द्वैगुण्यादि कल्पनीयम् ।

यथाहाङ्गिराः ।

पर्षद्या ब्राह्मणानां स्यात् सा राज्ञां द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृतमिति ।

उक्तलक्षणपर्षदसंभवेऽनुकल्पमाह ।

**अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः ।**

**पञ्च त्रयो वा धर्मज्ञाः परिषत्सा प्रकीर्तिता ॥१२॥**

ये पञ्च ब्राह्मणा अनाहिताग्नयः स्मार्ताग्निपरिशीलनेनापरिगृहीतत्रेताग्नयो न तु निरग्निका वेदवेदाङ्गपारगाः धर्मज्ञाः धर्मशास्त्रज्ञास्तेपि परिषद्भवन्ति तदभावे तादृशास्त्रयो वापि पर्षद्भवन्ति सेयमाहिताग्नित्वादिगुणाभावेऽप्याम्नातत्वाद्गुणानुकल्पः ।

इदानीं सख्यानुकल्पमाह ।

**मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।**

**वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥१३॥**

मुनिनामात्ममननशालिनामात्मनो ब्रह्मणो, विद्या ऽनुभवो येषां ते आत्मविद्यास्तेषां चेति विशेषणद्वयस्य सिद्धसाधकाख्याभेदेन विकल्पमाश्रित्योपादानम् । द्विजाना विप्राणामात्मसाक्षात्कारेण कृतार्थानामपि लोकानुग्रहाय यज्ञानुष्ठानशीलाना वेदेषु ऋगादिषु व्रतेषु महानाम्न्यादिषु सौम्यप्राजापत्यादिषु वा अन्यतरेषु उभयेषु वा समाप्तेषु स्नाताना कृतसमावर्तनानां मध्ये एकोपि यः कश्चित्परिषद्भवेत् । शिरोव्रतेन स्नाताना मिति वा यावत् । तच्च तेषामेवैतां ब्रह्मविद्यां वदेत् । शिरोव्रतं विधिवद्यैस्तुचीर्णमित्याद्याथर्वणिकाना प्रसिद्धम् ।

इदानीं गुणतः सख्यातश्चानुकल्पमाह ।

**पञ्च पूर्वं मया प्रोक्तास्तेषां वासंभवे त्रयः ।**

**स्ववृत्तिपरितुष्टा ये परिषत्सा प्रकीर्तिता ॥ १४ ॥**

पूर्वं चत्वारो वेत्यादिश्लोकत्रयेणाहिताग्न्यनाहिताग्नीना द्वौ द्वौ पक्षावात्मविदस्त्वेकः पक्ष इति पञ्चपर्षत्पक्षा मया पराशरेणोक्ता स्तेषां पञ्चानामपि पक्षाणामसंभवे ये के चन स्ववृत्तिपरितुष्टा आपत्कालेप्यापद्वृत्त्यनाश्रयणेन यथाकथंचिद्विहितप्रतिग्रहादिभिरेव कृतनिर्वाहास्ते त्रयोऽपि पर्षत्सज्ञां लभन्ते । तेषु प्रायश्चित्तविधानप्रयोजकस्य धर्मशास्त्रा-

**बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।५।४।४२॥**

बहूनि बहुभिर्वा ददाति बहुशः । भूरिशः । अल्पानि अल्पशः । स्तोकशः । बह्वल्पार्थात्किम् । गान्ददाति । कारकात्किम् । बहूनां स्वामी॥ बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ॥*॥ नेह । बहु ददात्यनिष्टेषु । अल्पमाभ्युदयिकेषु ॥

**संख्यैकवचनाच्च वीप्सायाम् ।५।४।४३॥**

द्वौ द्वौ ददाति द्विशः । माषं माषं माषशः । प्रस्थशः । परिमाणशब्दा वृत्तावेकार्था एव । संख्यैकवचनात्किम् । घटं घटं ददाति । वीप्सायां किम् । द्वौ ददाति । द्वारकादित्येव । द्वयोर्द्वयोः स्वामी ॥

**प्रतियोगे पञ्चम्यास्तसिः ।५।४।४४॥**

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः स्यात् ॥ प्रद्युम्नः कृष्णतः प्रति ॥ आद्यादिभ्य उपसंख्यानम् ॥*॥ आदौ आदितः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः ॥

**अपादाने चाहीयरुहोः ।५।४।४५॥**

अपादाने या पञ्चमी तदन्तात्तसिः स्यात् ॥ ग्रामादागच्छति ग्रामतः । अहीयरुहोः किम् । स्वर्गाद्धीयते । पर्वतादवरोहति । हीयेति विकृतनिर्देशाज्जिहातेर्न । भूमित उज्जिहीते ॥

**अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।५।४।४६॥**

अकर्तरि तृतीयान्ताद्वा तसिः ॥ अतिक्रम्य ग्रहोऽतिग्रहः । चारित्रेणातिगृह्यते । चारित्रतो गृह्यते । चारित्रेणान्यानतिक्रम्य वर्तत इत्यर्थः । अव्यथनमचलनम् । वृत्तेन न व्यथते । वृत्ततो न

व्यथते । वृत्ततो न चलतीत्यर्थः । वृत्तेन क्षिप्तः । वृत्ततः क्षिप्तः । वृत्तेन निन्दित इत्यर्थः । अकर्तरि किम् । देवदत्तेन क्षिप्तः ॥

**हीयमानपापयोगाच्च । ५ । ४ । ४७ ॥**

हीयमानपापयुक्तादकर्तरि तृतीयान्ताद्वा तसिः ॥ वृत्तेन हीयते । वृत्ततो हीयते । वृत्तेन पापः । वृत्ततः पापः । क्षेपस्याविवक्षायामिदम् ॥ क्षेपे तु पूर्वेण सिद्धः । अकर्तरि किम् । देवदत्तेन हीयते ॥

**षष्ठ्या व्याश्रये । ५ । ४ । ४८ ॥**

षष्ठ्यन्ताद्वा तसिर्नानापक्षसमाश्रये ॥ देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । अर्जुनस्य पक्षे इत्यर्थः । व्याश्रये किम् । वृक्षस्य शाखाः ॥

**रोगाच्चापनयने । ५ । ४ । ४९ ॥**

रोगवाचिना षष्ठ्यन्ताद्वा तसिश्चिकित्सायाम् ॥ प्रवाहिकातः कुरु । प्रतीकारमस्याः कुर्वित्यर्थः । अपनयने किम् । प्रवाहिकायाः प्रकोपनं करोति ॥

**कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः । ५ । ४ । ५० ॥**

अभूततद्भाव इति वक्तव्यम् ॥ * ॥ विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ॥ अस्य च्वौ । वेर्लोपः । च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः सम्पद्यते तं करोति कृष्णी करोति । ब्रह्मी भवति । गङ्गी स्यात् ॥

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च । ५ । ४ । ५१ ॥**

एषां लोपः स्यात् च्विश्च ॥ अरू करोति । उन्मनी स्यात् । उच्चक्षू करोति । विचेती करोति । विरही करोति । विरजी करोति ॥

## विभाषा साति कार्त्स्न्ये । ५ । ४ । ५२ ॥

च्विविषये सातिर्वा स्यात्साकल्ये ॥ कृत्स्नं शस्त्रमग्निः सम्पद्यतेऽग्निसाद्भवति । अग्नीभवति । महाविभाषया वाक्यमपि । कार्त्स्न्ये किम् । एकदेशेन शुक्ली भवति पटः ॥

## अभिविधौ सम्पदा च । ५ । ४ । ५३ ॥

सम्पदा कृभ्वस्तिभिश्च योगे सातिर्वा स्यात् व्याप्तौ ॥ पक्षे कृभ्वस्तियोगे च्विः । सम्पदा तु वाक्यमेव । अग्निसात्सम्पद्यते । अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्सम्पद्यते । जलीभवति लवणम् । एकस्या व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कार्त्स्न्यम् । बहूनां व्यक्तीनां किञ्चिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः ॥

## तदधीनवचने । ५ । ४ । ५४ ॥

सातिः स्यात् कृभ्वस्तिभिः सम्पदा च योगे ॥ राजसात्सम्पद्यते । राजाधीनमित्यर्थः ॥

## देये त्रा च । ५ । ४ । ५५ ॥

तदधीने देये त्रा स्यात्सातिश्च कृञादियोगे ॥ विप्राधीनं देयं करोति । विप्रत्रा करोति । पक्षे विप्रसात्करोति । देये किम् । राजसाद्भवति राष्ट्रम् ॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । ५ । ४ । ५६ ॥

देवत्रा वन्दे रमे वा । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः ॥

**अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच् ।५।४।५७॥**

कृभ्वस्तियोग इति मण्डूकप्लुत्याऽनुवर्तते । द्व्यच् अवर न्यून न तु ततो न्यूनमनेकाजिति यावत् । तादृशमर्द्धं यस्य तस्मात् डाच्स्यात् कृभ्वस्तिभिर्योगे ॥ डाचि विवक्षिते द्वे बहुलमिति द्वित्वम् । नित्यमाम्रेडिते डाचीति तकारपकारयोः पररूपम्पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् । दृषत्करोति । द्व्यजवरार्द्धात्किम् । श्रत्करोति । अवरेति किम् । खरटखरटा करोति । चपटचपटाकरोति । अनेकाच इत्येव तु सूचयितुं युक्तम् । एव हि डाचीति परमप्यम्येव द्वित्वे सुवचेत्यवधेयम् । अनितौ किम् । पटिति करोति ॥

**कृञो द्वितीयतृतीयशम्बबीजात्कृषौ । ५ । ४ । ५८ ॥**

द्वितीयादिभ्यो डाच्स्यात्कृञ एव योगे कर्षणेऽर्थे । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति । तृतीयाकरोति । शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति शम्बाकरोति । बीजेन सह कर्षति बीजाकरोति ॥

**संख्यायाश्च गुणान्तायाः । ५ । ४ । ५९ ॥**

कृञो योगे कृषौ डाच्स्यात् ॥ द्विगुणाकरोति । क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः ॥

**समयाच्च यापनायाम् । ५ । ४ । ६० ॥**

कृषाविति निवृत्तम् । कृञो योगे डाच्स्यात् ॥ समया करोति । कालं यापयतीत्यर्थः ॥

सपत्रनिष्पत्रादतिव्यथने । ५ । ४ । ६१ ॥

सपत्राकरोति मृगम् । सपुङ्खशरप्रवेशनेन सपत्रं करोतीत्यर्थः ॥ निष्पत्राकरोति । सपुङ्खस्य शरस्यापरपार्श्वे निर्गमनान्निष्पत्रं करोतीत्यर्थः । अतिव्यथने किम् । सपत्रं निष्पत्रं वा करोति भूतलम् ॥

निष्कुलान्निष्कोषणे । ५ । ४ । ६२ ॥

निष्कुला करोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् । निष्कोषणे किम् । निष्कुलं करोति शत्रुम् ।

सुखप्रियादानुलोम्ये । ५ । ४ । ६३ ॥

सुखाकरोति प्रियाकरोति गुरुम् । अनुकूलाचरणेनानन्दयतीत्यर्थः । आनुलोम्ये किम् । सुखं करोति औषधपानम् ॥

दुःखात्प्रातिलोम्ये । ५ । ४ । ६४ ॥

दुःखाकरोति स्वामिनम् । पीडयतीत्यर्थः । प्रातिलोम्ये किम् । दुःखं करोति कदन्नम् ॥

शूलात्पाके । ५ । ४ । ६५ ॥

शूलाकरोति मांसम् । शूलेन पचतीत्यर्थः । पाके किम् । शूलं करोति कदलम् ॥

सत्यादशपथे । ५ । ४ । ६६ ॥

सत्याकरोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः ॥

मद्रात्परिवापणे । ५ । ४ । ६७ ॥

मद्रशब्दो मङ्गलार्थः परिवापणं मुण्डनम् । मद्राकरोति कुमारम् । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः ॥ भद्राच्चेति वक्तव्यम् ॥ * ॥ भद्रा-

करोति । अर्थः प्राग्वत् । परिवापणे किम् । भद्रं करोति । अत्र सर्वत्र कृञ इत्यनुवर्तत इति काशिकायां स्पष्टम् ॥

## समासान्ताः । ५ । ४ । ६८ ॥

अधिकारोऽयम् । इत ऊर्ध्वमा पादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्य समासार्थोत्तरपदस्य वा चरमावयवा ज्ञेया इत्यर्थः । तेनोपशरदमित्यत्र नाव्ययीभावादित्यम्, द्विपुरीत्यादौ द्विगोरिति ङीप् च सिध्यति ॥

## न पूजनात् । ५ । ४ । ६९ ॥

पूजनार्थात्परेभ्यः समासान्ता न स्युः ॥ सुराजा । अतिराजा ॥ स्वतिभ्यामेव ॥ * ॥ नेह परमराजः । पूजनात्किम् । गामतिक्रान्तोऽतिगवः । बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः । नेह सुसक्थः । स्वक्षः ॥

## किमः क्षेपे । ५ । ४ । ७० ॥

क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः ॥ कुत्सितो राजा किंराजा । किंसखा । किंगौः । क्षेपे किम् । कस्य राजा किंराजः । किंसखः । किंगवः ॥

## नञस्तत्पुरुषात् । ५ । ४ । ७१ ॥

समासान्ता न ॥ अराजा । असखा । तत्पुरुषात्किम् । अधुरं शकटम् ॥

## पथो विभाषा । ५ । ४ । ७२ ॥

नञ्पूर्वात्पथो वा समासान्ताः ॥ अपथम् । अपन्थाः । तत्पुरुषादित्येव । अपथो देशः । अपथं वर्तते ॥

## बहुव्रीहौ संख्येये डजबहुगणात्। ५। ४। ७३॥

सङ्ख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात्॥ उपदशाः। अबहुगणात्किम्। उपबहवः। उपगणाः। अच स्वरे विशेष॥ सङ्ख्यायास्तत्पुरुषस्य वाच्यः॥ *॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः॥ अव्ययादेरिति वक्तव्यम्। इह मा भूत्। गोत्रिंशत्। एतेनैकाधिका विंशतिरेकविंशतिरित्यादिव्यावृत्त्यर्थमन्यत्राधिकलोपादिति वक्तव्यमित्यपास्तम्॥

## ऋक्पूरब्धूःपथामानक्षे। ५। ४। ७४॥

अ अनक्षे इति च्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यादक्षे या धूस्तदन्तस्य तु न॥ अर्द्धर्चम्। अनृचबह्वृचावध्येतर्यैव। नेह। अनृक्साम। बह्वृक्सूक्तम्। विष्णोः पूर्विष्णुपुरम्। क्लीबत्वं लोकात्। विमलापं सरः। अन्तरीपम्। प्रतीपम्। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथो रम्यपथो देशः॥

## अच्प्रत्यन्ववपूर्वात्सामलोम्नः। ५। ४। ७५॥

एतत्पूर्वान्सामलोमान्तात्समासादच् स्यात्॥ प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्॥ कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते॥ *॥ कृष्णभूमः। उदक्भूमः। पाण्डुभूमः। द्विभूमस्त्रिभूमः प्रासादः॥ संख्याया नदीगोदावरीभ्यां च॥ *॥ पञ्चनदम्। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि। पद्मनाभः॥

## अक्ष्णोऽदर्शनात्। ५। ४। ७६॥

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः॥ लवणाक्षः। पुष्कराक्षः। गवामक्षीव गवाक्षः। अदर्शनात्किम्। ब्राह्मणाक्षि॥

**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । ५ । ४ । ७७ ॥**

एते पञ्चविंशतिरजन्ता निपात्यन्ते ॥ आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्यस्य अचतुरः । विचतुरः । सुचतुरः ॥ त्र्युपाभ्यां चतुरोऽजिष्यते ॥ * ॥ त्रिचतुरः । चतुर्णां समीपे उपचतुराः । तत्र एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ चाक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू चाष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य पदादेशः । नक्तं च दिवा च नक्तन्दिवम् । रात्रौ च दिवा च रात्रिन्दिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा चाहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । तत्पुरुष एव । नेह । निःश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनम् । टिलोपाभावः संप्रसारणं च निपात्यते । गोष्ठे श्वा । गोष्ठश्वः ॥

**ब्रह्महस्तिभ्यां वर्चसः । ५ । ४ । ७८ ॥**

अच् स्यात् ॥ ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥ पल्यराजभ्यां चेति वक्तव्यम् ॥ * ॥ पल्यवर्चसम् । राजवर्चसम् ॥

**अवसमन्धेभ्यस्तमसः । ५ । ४ । ७९ ॥**

अवतमसम् । सन्तमसम् । अन्धयतीत्यन्ध पचाद्यच् । अन्धन्तमोऽन्धतमसम् ॥

**श्वसो वसीयःश्रेयसः । ५ । ४ । ८० ॥**

वसुशब्दः प्रशस्तवाची । तत ईयसुनि । वसीयः । श्वस्शब्द उत्तरपदार्थभूतां प्रशंसामाशिषो विषयमाह । मयूरव्यंसकादित्वात्समासः ॥ श्वोवसीयसं श्वःश्रेयसं ते भूयात् ॥

**अन्ववतप्ताद्रहसः । ५ । ४ । ८१ ॥**

अनुरहसम् । अवरहसम् । तप्तरहसम् ।

**प्रतेरुरसः सप्तमीस्थात् । ५ । ४ । ८२ ॥**

उरसि प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । सप्तमीस्थात्किम् । प्रतिगतमुरः प्रत्युराः ॥

**अनुगवमायामे । ५ । ४ । ८३ ॥**

एतन्निपात्यते दीर्घत्वे ॥ अनुगवं यानम् । यस्य चायाम इति समासः । आयामे किम् । गवां पश्चादनुगु ॥

**द्विस्तावा त्रिस्तावा वेदिः । ५ । ४ । ८४ ॥**

द्विरावृत्ता तावतीत्यर्थे आवृत्तिक्रियाजन्मगणने सुच् । अच् प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम् । वेदिरिति किम् । द्विस्तावती त्रिस्तावती रज्जुः ॥

**उपसर्गादध्वनः । ५ । ४ । ८५ ॥**

प्रगतोऽध्वानं प्राध्वो रथः । उपसर्गात्किम् । परमाध्वा ॥

## तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः । ५ । ४ । ८६ ॥

संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् ॥ द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । तत्पुरुषस्य किम् । पञ्चाङ्गुलिरत्यङ्गुलिः पुरुषः । तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तादिति यावत् ॥

## अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः । ५ । ४ । ८७ ॥

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः ॥ अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वयो रात्र्योः समाहारो द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः ॥

## अन्होऽन्ह एतेभ्यः । ५ । ४ । ८८ ॥

सर्वादिभ्यः परस्याहन्शब्दस्यान्हादेशः स्यात्समासान्ते परे ॥ प्रकरणबललभ्यमेतत् । सर्वेषां बुद्धिस्थत्वाविशेषेऽपि अहःशब्द इह न गृह्यतेऽसंभवात् । राजाहः सखिभ्य इति टच् तस्मिन्परे अन्हष्टखोरेवेति टिलोपे प्राप्ते अन्हादेशो विधीयते । सर्वाण्हः । पूर्वाण्हः । अपराण्हः । अन्होऽदन्तादिति णत्वम् । संख्यातान्हः । पुण्यशब्दात्प्रतिषेध वक्ष्यति । द्वयोरह्नोर्भवः कालाठञ् । द्विगोर्लुगनपत्य इति ठञो लुक् । द्व्यह्नः । त्र्यह्नः । स्त्रियामदन्तत्वाट्टाप् । द्व्यह्ना । द्व्यह्नप्रियः । अत्यह्नः । परागतमहः पराह्नः ॥

## न संख्यादेः समाहारे । ५ । ४ । ८९ ॥

समाहारे वर्तमानस्य संख्यादेरन्हादेशो न स्यात् । संख्यादेरिति स्पष्टार्थम् । द्वयोरन्होः समाहारो द्व्यहः । त्र्यहः ।

## उत्तमैकाभ्यां च । ५ । ४ । ९० ॥

आभ्यामह्लादेशो न ॥ उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । पुण्यैकाभ्यामित्येव सूचयितुमुचितम् । पुण्याहम् । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि सङ्ग्रहार्थमित्येके । संख्याताहः ॥

## राजाहःसखिभ्यष्टच् । ५ । ४ । ९१ ॥

एतदन्तात्तत्पुरुषाट्टच् स्यात् ॥ परमराजः । अतिराजौ । उत्तमाहः । कृष्णसखः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह । मद्राणां राज्ञी मद्रराज्ञी ॥

## गोरतद्धितलुकि । ५ । ४ । ९२ ॥

गोन्तात्तत्पुरुषाट्टच् स्यात्समासान्तो न तु तद्धितलुकि । परमगवः । पञ्चगवधनः । पञ्चानां गवां समाहारः पञ्चगवम् । अतद्धितलुकि किम् । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । तद्धितग्रहणं किम् । सुब्लुकि प्रतिषेधो मा भूत् । राजगवमिच्छति राजगवीयति । लुग्ग्रहणं किम् । तद्धिते एव मा भूत् । पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम् ॥

## अग्राख्यायामुरसः । ५ । ४ । ९३ ॥

टच् स्यात् ॥ अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः । अग्राख्यायां किम् । देवदत्तस्योरो देवदत्तोरः ॥

## अनोऽश्मायःसरसां जातिसंज्ञयोः । ५ । ४ । ९४ ॥

टच् स्याज्जातौ संज्ञायां च ॥ उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः । महानसम् । अमृताश्मः । लोहितायसम् । जलसरसमिति संज्ञा । जातिसंज्ञयोः किम् । सदनः । सदश्मा ॥

**ग्रामकौटाभ्याञ्च तक्ष्णः । ५ । ४ । ९५ ॥**

ग्रामस्य तक्षा ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः । स्वतन्त्रः । स चासौ तक्षा च कौटतक्षः ॥

**अतेः शुनः । ५ । ४ । ९६ ॥**

अतिश्वो वराहः । अतिश्वी सेवा । अतिनीचेत्यर्थः ॥

**उपमानादप्राणिषु । ५ । ४ । ९७ ॥**

अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात् ॥ आकर्षः श्वेवाकर्षश्वः । अप्राणिषु किम् । वानरः श्वेव वानरश्वा ॥

**उत्तरमृगपूर्वाच्च सक्थ्नः । ५ । ४ । ९८ ॥**

चादुपमानात् ॥ उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् ॥

**नावो द्विगोः । ५ । ४ । ९९ ॥**

अतद्धितलुकीति मण्डूकप्लुत्याऽनुवर्त्तते । नौशब्दान्ताद् द्विगोष्टच् स्यान्नतु तद्धितलुकि ॥ द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः । द्विगोर्लुगनपत्य इत्यत्र अचीत्यस्यापकर्षणाद्धलादेर्न लुक् । समर्थानामित्यतो वेत्यनुवर्त्त्य व्यवस्थितविभाषाश्रयणाद्वा । पञ्चनावप्रियः । द्विनावम् । अतद्धितलुकीति किम् । पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥

**अर्द्धाच्च । ५ । ४ । १०० ॥**

अर्द्धान्नावष्टच् स्यात् ॥ नावोऽर्द्धमर्द्धनावम् । क्लीबत्वं लोकात् ॥

**खार्याः प्राचाम् । ५ । ४ । १०१ ॥**

द्विगोरर्द्धाच्च खार्याष्टज्वा ॥ द्विखारम् । द्विखारि । अर्द्धखारम् । अर्द्धखारि ॥

**द्वित्रिभ्यामञ्जलेः । ५ । ४ । १०२ ॥**

टच्वा स्यात् द्विगौ॥ द्व्यञ्जलम् । द्व्यञ्जलि । अनद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः ॥

**अनसन्तान्नपुंसकाच्छन्दसि । ५ । ४ । १०३ ॥**

वेति वक्तव्यम्॥ * ॥ ब्रह्मसाम भवति । देवच्छन्दसानि ब्रह्मसामा देवच्छन्दः । नपुंसकात्किम् । सुत्रामाणं पृथिवीं द्यामनेहसम् ॥

**ब्रह्मणो जानपदाख्यायाम् । ५ । ४ । १०४ ॥**

ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदत्वमाख्यायते चेत् ॥ जनपदे भवो जानपदः । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । जानपदाख्यायां किम् । देवब्रह्मा नारदः ॥

**कुमहद्भ्यामन्यतरस्याम् । ५ । ४ । १०५ ॥**

आभ्यां वा टच् स्यात्तत्पुरुषे ॥ कुत्सितो ब्रह्मा कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ॥

**द्वन्द्वाच्चुदषहान्तात्समाहारे । ५ । ४ । १०६ ॥**

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे॥ वाक् च त्वक् च वाक्त्वचम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥

**अव्ययीभावे शरत्प्रभृतिभ्यः । ५ । ४ । १०७ ॥**

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे॥ शरदः समीपमुपशरदम् । प्रतिविपाशम् । शरद् । विपाश् । अनस् । मनस् । उपानह् । दिव् । हिमवत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर् । त्यद् । तद् । यद् । कियत् । जराया जरस् च । उपजरसम् ।

प्रतिपरसमनुभ्योऽक्ष्णः । यस्येति च । प्रत्यक्षम् । अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः । परोक्षे लिडिति निपातनात्परस्यौकारादेशः । परोक्षम् । परोक्षा क्रियेत्यादित्वर्शआद्यचि । समक्षम् । अन्वक्षम् ॥

**अनश्च । ५ । ४ । १०८ ॥**

अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ नस्तद्धित इति टिलोपः । उपराजम् । अध्यात्मम् ॥

**नपुंसकादन्यतरस्याम् । ५ । ४ । १०९ ॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा ॥ उपचर्मम् । उपचर्म ।

**नदीपौर्णमास्याग्रहायणीभ्यः । ५ । ४ । ११० ॥**

वा टच् ॥ उपनदम् । उपनदि । उपपौर्णमासम् । उपपौर्णमासि । उपाग्रहायणम् । उपाग्रहायणि ।

**झयः । ५ । ४ । १११ ॥**

झयन्तादव्ययीभावाट्टज्वा ॥ उपसमिधम् । उपसमित् ॥

**गिरेश्च सेनकस्य । ५ । ४ । ११२ ॥**

गिर्यन्तादव्ययीभावाट्टज् वा ॥ सेनकग्रहणं पूजार्थम् । उपगिरम् । उपगिरि ॥

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् । ५ । ४ । ११३ ॥**

व्यत्ययेपन षष्ठी । स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् ॥ दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादित्यच् । टचि प्रकृते षच्करणं स्वरार्थम् । गौरसक्थी स्त्रीत्यादौ हि सक्थ

चाक्रान्तादिति विभाषोत्तरपदस्यान्तोदात्तत्वं विधीयते तदभावपक्षे ङीपि सति उदात्तनिवृत्तिस्वरस्याभावादनुदात्तः श्रूयेत । ङीषि तु सर्वथोदात्तः सिध्यति । बहुव्रीहिग्रहणमापादपरिसमाप्तेरनुवर्तते ॥

## अङ्गुलेर्दारुणि । ५ । ४ । ११४ ॥

अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद् दारुण्यर्थे ॥ पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपकाष्ठमुच्यते । बहुव्रीहेः किम् । द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थेति तत्पुरुषे तत्पुरुषस्याङ्गुलेरित्यच् । दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ॥

## द्वित्रिभ्यां ष मूर्ध्नः । ५ । ४ । ११५ ॥

ः षः स्याद्बहुव्रीहौ ॥ द्विमूर्धः । त्रिमूर्धः । यद्यत्र षजेवानुवर्तेत तदा चित्वान्नित्यमन्तोदात्तत्वं स्यात् । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहाविति तु विभाषान्तोदात्तत्वं यदा समासान्तविधेरनित्यत्वाद्द्विमूर्द्धेति समासान्ताभावस्तदा सावकाशम् । षे तु सति समासान्तपक्षेऽपि पक्षेऽन्तोदात्तत्वं पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः ।

## अप्पूरणीप्रमाण्योः । ५ । ४ । ११६ ॥

पूरणार्थप्रत्ययात् यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् ॥ कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स्त्रीप्रमाणः । पुंवद्भावनिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या । अन्यत्र तु नद्यृतश्चेति कप् । पुंवद्भावः । केऽण इति ह्रस्वस्तु नकपीति निषिद्धः । कल्याणपञ्चमीकः पक्षः । अत्र तिरोहितावयवभेदस्य

पञ्चम्यान्यपदार्थतया रात्रिरप्रधानम् ॥ नेतुर्नक्षत्रे अप् वक्तव्यः ॥ * ॥ मृगो नेता यासान्ता मृगनेत्रा रात्रयः । पुष्यनेत्राः । छन्दसि च नेतुरप वक्तव्यः ॥ * ॥ बृहस्पतिनेत्राः । सोमनेत्राः ॥ मासाद्भृतिप्रत्ययपूर्वपदाट्ठञ्विधेयः ॥ * ॥ पञ्च भृतिरस्य मासस्य पञ्चको मासः । सोऽस्यांशवस्नभृतय इति सङ्ख्यायाः कन् । पञ्चको मासोऽस्येति बहुव्रीहौ कृते स्वार्थे ठच् । पञ्चकमासिकः । षट्कमासिकः । दशकमासिकः ।

## अन्तर्बहिर्भ्यां च लोम्नः । ५ । ४ । ११७ ॥

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ ॥ अन्तर्लोमः बहिर्लोमः ॥

## अञ् नासिकायाः संज्ञायां नसं चास्थूलात् । ५ । ४ ।११८ ॥

नासिकान्ताद्बहुव्रीहेरच्स्यान्नासिकाशब्दश्च नसादेशं प्राप्नोति न तु स्थूलपूर्वात् ॥ पूर्वपदात्संज्ञायामिति णत्वम् । द्रुरिव नासिकाऽस्य द्रुणसः । खरणसः । अस्थूलात्किम् । स्थूलनासिकः ॥ खुरखराभ्यां वा नस् ॥ * ॥ खुरणाः । खरणाः । पक्षे अजपीष्यते ॥ खुरणसः।खरणसः। शितिनाः । अर्चनाः । अहिनाः । इति निगम इष्यते ॥

## उपसर्गाच्च । ५ । ४ । ११९ ॥

प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च ॥ असंज्ञार्थं वचनम् । उन्नता नासिकाऽस्य उन्नसः । प्रणसः । उपसर्गाद्बहुलमिति णत्वम् ॥ वेर्ग्रो वक्तव्यः ॥ * ॥ विगता नासिकाऽस्य विग्रः ॥ ख्यश्च ॥ * ॥ विख्यः । कथन्तर्हि विनसा हतबान्धवेति भट्टिः । विगतया नासिकयोपलक्षितेति व्याख्येयम् । पद्दन्नसिति नसादेशः ॥

## सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । ५ । ४ । १२० ॥

इत्यर्थः । भपश्चिमभ्रमाः । भशब्देन भचक्रावयवः । तस्यैक पश्चिमदिशानुक्रमेण वृत्ताकारगमनम् । प्रवहवायुकृतभचक्रपश्चिमपरिवर्त्ता इत्यर्थः । वेदाश्चत्वारः प्रसिद्धाः । द्वाविंशाक्षरचरणपद्यस्याकृतिसंज्ञत्वात्तनया आकृतिशब्देन द्वाविंशतिः । पृथ्व्याद्याकाशान्तानां पञ्चानां भूतवाचकत्व-प्रत्ययसिद्धस्य कल्पभचक्रपरिवर्त्तमानस्य दर्शनाद्रविकल्पसावनदिनभगण-योगो भभ्रमा इति सिद्धम् । एवमन्यग्रहसावनेभ्यो भभ्रमाः साध्यास्त-दाऽप्येभिस्तुल्या एव । तथा भौमोदयद्वयान्तररूपसावनेन तत्कालम भूतभौमगतियुक्तैकभचक्रपरिवर्त्तस्तदा कल्पभौमसावनैः क इत्यनुपातेन भौमकल्पसावनभगणयोगस्य स्फुटं दर्शनम् । अत्र सूर्यसावनघटी भभौम-गतिकला–३१ । ३६ स्तदा भौमसावनान्तर्गतसूर्यसावनघटीभिः क इत्यनुपातेन भौमसावने तद्गतिज्ञानम् । यदि रविभगणैः सूर्यकल्पसावन-दिनानि तदा भौमभगणैः कानीत्यनुपातेन कल्पे भौमसावनज्ञानम् । तथा च कल्पग्रहसावनतद्भगणयोगो भभ्रमास्त उक्ताङ्कमिता उपपन्नाः ॥७॥

अथ सूर्याहाश्चान्द्राहाश्चाह ।

विधिदिने दिनकृद्दिवसाः करे-<br>न्द्रियशरेषुभुवोऽर्बुदसंगुणाः ।<br>नवनवाङ्ककराभ्ररसेन्दवः<br>प्रयुतसंगुणिता विधुवासराः ॥ ८ ॥

**वा.भा.**–अत्रोपपत्तिः । रविवर्षाणि दिनीकृतानीति सुगमम् । चन्द्रार्कयोर्यावन्तः कल्पे योगास्तावन्तः किल शशिमासाः । ते तु योगा भगणान्तरतुल्याः स्युः । उभयोरपि प्राग्गमनात् । अतो भगणान्तरतुल्याः शशिमासा भवन्ति । ते त्रिंशद्गुणाः शशिदिवसा भवन्तीत्युपपन्नम् ॥ ८ ॥

**वा.वा.**–विधिदिने दिनकृद्दिवसा इत्यादि । एषा वासना भाष्ये स्पष्टा: ॥८–१२॥

**मरीचिः**–अथ कल्पे सौरचान्द्रदिनान्याह विधिदिने इति । करौ द्वौ प्रसिद्धौ । अङ्कस्थापनेन सौरदिवसास्तदशा एते १५५५२००००००० । वा-

न्द्रदिवसाश्चैते १६०२९९९०००००० । इति स्पष्टार्थम् । इदं पद्यं 'द्रुतविलम्बितमाह नभौ भरौ'—इति लक्षणात् तदाख्यम् ।

अत्रोपपत्तिः । कल्पसौरवर्षाणि षष्ठ्यधिकशतत्रयगुणानि सौरदिनान्युत्पन्नानि । सूर्यचन्द्रभगणान्तरेण चान्द्रमासप्रतिपादनात् कल्पतद्भगणान्तरं चान्द्रमासमानं तत् त्रिंशद्गुणं चान्द्रदिनान्युक्तान्युत्पन्नानि ॥ ८ ॥

अथ कुदिनान्याह ।

**भूदिनानि शरवेदभूपगो-**
**सप्तसप्ततिथयोऽयुताहताः ।**
**भभ्रमास्तु भगणैर्विवर्जिता**
**यस्य तस्य कुदिनानि तानि वा ॥ ९ ॥**

**वा.भा.**—एषामुपपत्तिः प्रागेवोक्ता । एकस्मिन् रविवर्षे यावन्तो भभ्रमाः स्युस्तावन्त एवैकोना रविसावनदिवसा भवन्ति । यतो रविः प्राग्गत्या एकं पर्ययं गतः । अतो भगणसंख्ययोना भभ्रमाः कुदिना भवन्ति । एवमन्येषामपि ग्रहाणां कुदिनानि स्युरित्युपपन्नम् ॥ ९ ॥

**मरीचिः**—अथ रथोद्धतया कल्पे ग्रहसावनान्याह भूदिनानीति । रव्युदयद्वयान्तरकालस्य मुख्यत्वेन भूदिनवाचकत्वाद्भूदिनानि सूर्यसावनदिनानि कल्पे । भूपाः षोडश सङ्केताद्वा । तिथयः प्रतिपदादयः पञ्चदश प्रसिद्धाः । तथा चाङ्कस्थापनेनैते १५७७९१६४५०००० सूर्यसावनदिवसा इत्यर्थः । अथ सर्वग्रहाणां सावनार्थं सामान्यप्रकारमाह भभ्रमा इति । भभ्रमाः पूर्वोक्ताः । यस्य भगणैः प्रागुक्तैर्विवर्जितास्तानि शेषमितानि तस्य कुदिनानि तदुदयद्वयान्तररूपसावनदिनानि कल्पे भवन्ति । कल्पभगणवतां सावनानि प्रतिपादितानि । चः समुच्चये । चकारस्थाने वेति पाठे एवं सूर्यभूदिनानि प्रकारान्तरेण ज्ञातानि स्युरित्यर्थः । यथा कल्पभभ्रमाः १५८२२३६४५०००० सूर्यभगणैः—४३२०००००००० ऊनाः शेषम् १५७७९१६४५०००० प्रागर्धोक्तसूर्यसावनदिनानि । एतान्येव बुधशुक्रयोर्भगणैक्यत्वात् । एवं सर्वेषामुत्पन्नानि कार्याणि ।

इतरग्रहसावननिबन्धनश्लोकाः ।

"खाभ्रखाभ्रशरभूगुणा[1]नागाब्ध्यब्धिनेत्रतिथयो१५२४४३८१५०००० विधुक्ष्माहाः।
व्यालशैलमनुनेत्रषड्नवत्र्यङ्कगोनगशरेन्दवः १५७९९३९६२१४७८ कुजे ॥
पञ्चवेदशरपावकाकृतिद्व्यद्रिधृत्यहिशरेन्दवो १५८१८७२२३५४५ गुरोः।
द्व्यभ्रभेभगजगोमजाम्बरद्व्यष्टबाणशशिनः १५८२०८९८८२८०२ शनिक्ष्माहाः ॥"
इति ।

अत्रोपपत्तिः। जलवत्समीकृतभूमौ त्रिज्यामितकर्कटेन वृत्तं पूर्वादिदिगङ्कित चक्रकलाङ्कित च कार्यम्। ततो मेषादौ यदा सायनरविः सूर्योदये तद्दिनमारभ्य वृत्तमध्यस्थेनाक्षेणोदितार्कं विम्बोदयसमये रविविम्बकेन्द्र वृत्ते यत्र लगति तत्र चिह्नं कार्यम् । एवं भगणभोगपर्यन्तं रव्युदया ज्ञेयाः। तत्र प्राचीचिह्नात् परान्तरेरितसूर्योदयचिह्नं यावदंशैस्ते परायांशाः। ततः क्रान्त्यंशाः सम्प्रति चतुर्विंशन्मिताश्च जाताः। एवमन्तिमोदयः पञ्चषष्ट्यधिकशतत्रयमितः पूर्वोदयस्थानात् पृष्ठत एव भवति । तदन्तरकला विगणय्य ग्राह्याः । ततस्तद्द्वितीयोदयः पूर्वस्थानादग्रत एव जातः । पूर्वदिनमध्याह्नासन्नकाले सूर्यस्य मेषादिसञ्चारसम्भवात् । अतस्तदन्तरं कलात्मकं गृहीतम्। ततो यद्यन्तरद्वयकलायोगेन षष्टिघटिकास्तदा प्रथमान्तरकलाभिः का इत्यनुपातेन लब्धाः पञ्चदश घटिकास्त्रिंशत्पलानि सार्धानि द्वाविंशतिर्विपलानि पूर्वोदयस्थाने एतदनुरोधेनैतद्घटीभिर्विषुवद्वृत्तस्य-सूर्यानुमानात् । तथा चैकसौरवर्षे सूर्यसावनदिवसाः ३६५।१५।३०।२२।३० एकवर्षे एते तदा कल्पवर्षेषु के [2]इत्यनुपातेन कल्पे रविसावनदिवसा उक्ताङ्कमिता उपपन्नाः । अथ भभ्रमस्य भगणसावनयोगात्मकत्वेन प्रतिपादनाद्भभ्रमा भगणोनाः सावनदिवसा भवन्तीति किं चित्रमित्युपपन्न भभ्रमा इत्यादि ॥ ९ ॥

---

१ अत्र छन्दःपातः ।

२ इत्यत्रानुपातस्योपपत्त्यर्थं गोलाध्यायस्थ-'पञ्चाद्रिरामाः'-इत्यादिश्लोकस्य टिप्पणी विलोक्या ।

अथाधिमासान् न्यूनाहांश्चाह ।

**लक्षाहता देवनवेषुचन्द्राः**
**कल्पेऽधिमासाः कथिताः सुधीभिः ।**
**दिनक्षयास्तत्र सहस्रनिघ्नाः**
**खबाणबाणाश्व्यहिखेषुदस्राः ॥ १० ॥**

**वा.भा.**—अत्रोपपत्तिः। अत्र प्रकृतास्तावद्रविमासास्तेभ्यश्चान्द्रमासा यावद्भिरधिकास्तेऽधिमासा उच्यन्ते। एवं प्रकृतानां सावनानां चान्द्राणां चान्तरमवमान्युच्यन्ते । सावनदिनेभ्यश्चान्द्राहा यावद्भिरधिकास्ते दिनक्षयाः । अतस्तेषामन्तरमेतावद्भवतीत्युपपन्नम् ॥ १० ॥

**मरीचिः**—अथोपजातिकयाऽधिमासावमानि चाह लक्षाहता देवनवेषुचन्द्रा इति । तत्र कल्पे दिनक्षया अवमानि । शेषस्याङ्कस्यापनेन व्याख्या । एतेऽधिमासाः १५९३३००००० । दिनक्षयाश्चैते २५०८२५५०००० ।

अत्रोपपत्तिः । अधिको मास इत्यर्थेश्चान्वर्थसंज्ञया मासानां चान्द्रत्वाच्च अधिकश्चान्द्रो मासोऽधिमासपदवाच्यः । तथा च कल्पादौ समं प्रवृत्तयोः सौरचान्द्रयोः सममानाभावात् स्वकाले पूरणात् कल्पे तत्परिवर्त्ता अतुल्या एव भवन्ति । अतः सौरचान्द्रदिनान्तरं कल्पेऽधिकचन्द्रदिनपरिवर्त्ताः सौरदिनपरिमितिभ्यो भवन्ति ते एतन्मिताः कल्पे ४७७९९००००००।
एतान्येवार्धिदिनमानानां न्यूनत्वात् तानि त्रिंशद्भक्तान्यधिमासाश्चान्द्राः सौरमाससमानाधिका एतावत्सख्या इति ते उक्ताङ्कमिता उपपन्नाः । एवमेव युगपत्प्रवृत्तचान्द्रदिनसावनयोः कल्पे परिवर्त्तनसङ्ख्या अतुल्याः । तत्र सावनानां चन्द्रदिनेभ्यो यत्सङ्ख्याभिर्न्यूनत्वं ते दिनक्षयाः । दिनस्य सूर्योदयद्वयान्तररूपसावनस्य चन्द्रदिनसंख्यातः क्षय इत्यन्वर्थसंज्ञयोक्ताङ्कमिता उपपन्नाः । न चैतत्सङ्ख्याया यथाक्रमं सौरचान्द्रयोः सावनाभ्यां न्यूनाधिकत्वसंभवेन तदन्तरस्योक्तसंज्ञानियमाभावात् कथमेतदिति वाच्यम् । अहर्गणादिसाधने उक्तसंज्ञया तदन्तरयोः प्रयोजनावश्यकत्वात् सूर्याद्यार्षे तत्संज्ञाया उक्तत्वादुक्तमिति संक्षेपः ॥ १० ॥

इदानीमधिमासेन्दुदिनावमानि प्रकारान्तरेणाह ।

रवेः कोटिनिघ्नाः कृताष्टेन्दुबाणाः
सुराग्न्यब्धिरामेषवो लक्षनिघ्नाः
शशाङ्कस्य मासाः पृथक् सूर्यमासै-
र्विहीनास्तु कल्पेऽथ वा तेऽधिमासाः ॥ ११ ॥
अधिदिनैर्दिनकृद्दिनसंचयः
सहित इन्दुदिनान्यथ तानि वा ।
विरहितानि च तानि दिनक्षयैः
क्षितिदिनान्यत उत्क्रमतोऽपरम् ॥ १२ ॥

**वा.भा.**—एवमनया वासनया पठितार्कचन्द्रमासान्तरमधिमासाः । किं पाठेनेति वाशब्दार्थः । एवमधिमासदिनैः सहिताः सौराहाश्चान्द्राहा भवन्ति । किं तत्पाठेन वा । तेऽवमैरूना कुहाः स्युर्वा ॥ ११–१२ ॥

**मरीचिः**—अथ भुजङ्गप्रयातेन सौरचन्द्रमासकथनपूर्वकं पूर्वोक्तोपपत्तिरूपमधिमासस्वरूपमाह रवेः कोटिनिघ्ना इति । कल्पेऽङ्कस्थापनेनैते ५१८४0000000 रवेर्मासाः । अङ्कस्थापनेनैते ५३४३३३00000 शशाङ्कस्य मासाः । ते चन्द्रमासाः पृथक् । सूर्यमासैरूनाः शेषमितास्ते पूर्वश्लोकोक्ता अधिमासा अथ वा प्रकारान्तरेण भवन्ति ।

अत्रोपपत्तिः । पूर्वसौरचन्द्रदिनानामुक्तत्वेन तत्त्रिंशदंशस्य माससंभवात् तन्मासमानज्ञानं सुलभम् । तत्र सौरमासेभ्यो यत्सङ्ख्याभिश्चान्द्रमासा अधिकास्तेऽधिमासा इति प्रागुक्तेनाधिकसङ्ख्याज्ञान तन्मासान्तरेणेति सुलभम् ॥ ११ ॥

अथ भङ्ग्यन्तरेणाधिदिनक्षयदिनस्वरूपं स्पष्टीकुर्वन् द्रुतविलम्बितेनाह अधिनैर्दिनकृदिति । अधिदिनैस्त्रिंशद्गुणिताधिमासैरित्यर्थः । दिनकृद्दिनसंचयः सौरदिनसमूहः सहितो युक्तस्तदाऽथ वा तानि पूर्वोक्तानि चन्द्रदिनानि सिद्ध्यन्ति । अतोऽधिदिनाना सौरचान्द्रदिना-

न्तरत्वमुक्तम् । तानि चन्द्रदिनानि दिनक्षयैर्विरहितानि शेषं क्षितिदिनानि सौरसावनदिनानि । एतेन तदन्तरे दिनक्षया इति प्रतिपादितम् । अन्यथा तात्सिद्धिर्न स्यात् । तद्दृढत्वमाह अत इति । अस्मात् कारणात् । उत्क्रमत उक्तविपरीतकर्मणा अपरं साध्यमुक्तपदार्थान्यतरं सिद्धं भवति । तद्यथा । चन्द्रदिनान्यधिदिनैरूनानि सौरदिनानि । सावनदिनानि दिनक्षयैर्युक्तानि चन्द्रदिनानि सिध्यन्ति । अतोऽत्रोपपत्तिः सौरचान्द्रदिनान्तरे दिनक्षया इति प्रागुक्तेनातिस्पष्टा ॥ १२ ॥

इदानीं प्रकारान्तरेण चान्द्रमासान् दिनक्षयांश्चाह ।

**अन्तरं तरणिचन्द्रचक्रजं**
**यद्भवेत् स विधुमाससंचयः ।**
**चन्द्रचक्रदिवसैक्यमूनितं**
**चन्द्रमासभदिनैर्दिनक्षयाः ॥ १३ ॥**

**वा.भा.**–पूर्वार्धस्य वासना प्रागेवोक्ता । अथ चन्द्रचक्रदिनैक्ये चन्द्रमासभदिनैक्येन वर्जिते क्षयाहाः स्युः ।

अत्र वासना । चन्द्रभगणा रविभगणैरूनाश्चन्द्रमासाः स्युः । अतो विपर्ययाच्चन्द्रमासोनाश्चन्द्रभगणा रविभगणा भवन्ति । तैरूना भभ्रमाः सावनदिवसा भवन्ति । तैरूनाश्चान्द्राहाः क्षयाहा भवन्ति । एतदव्यक्तस्थित्या लिख्यते । चंमा १ चंभ १ एते किल रविभगणाः । एभिरूना भभ्रमाः संशोध्यमानमृणं धनं भवतीति जाताः सावनाः । चंमा १ भभ्र १ चंभ १ एभिरूनाश्चान्द्राहा जाताः चंभ १ चंदि १ चंमा १ भभ्र १ । एवं क्षयाहा भवन्तीत्युपपन्नम् । एतच्छिष्याणां धनर्णयोगवियोगकौशलार्थं दर्शितम् ॥ १३ ॥

**वा.वा.**–प्रकारान्तरेणाह अन्तरं तरणिचन्द्रेति । प्राग्गमनशीलयोः सूर्याचन्द्रमसोः प्रतिदर्शे यो योगः स त्वेकभगणतुल्यान्तरमन्तरेणानुपपन्नमत एकस्मिन् चान्द्रे मासि भगणतुल्यमन्तरं गमयति । ततोऽनुपातः ।

एकेन भगणान्तरेणैको मासस्तदा कल्पभगणान्तरेण किमिति जाताः शशिमासाः । रविभगणोनाश्चन्द्रभगणास्ते चन्द्रमासा भवन्तीति सिद्धमस्ति । वैपरीत्येन चन्द्रमासोनाश्चन्द्रभगणास्ते रविभगणाः । रविभगणोना भभ्रमास्ते सावनाः । सावनोनाश्चन्द्रास्ते दिनक्षया भवन्ति । यतः सावनचान्द्रान्तरमवमानि । अत्राव्यक्तराश्युपलक्षणार्थं लेख्यानि । यानि ऋणगतानि तान्यूर्ध्वबिन्दूनि च कार्याणीत्यव्यक्तयुक्त्या लिख्यते ।
चांमा १ चभ १ । एते रविभगणाः खण्डद्वयात्मकाः । एभिरूना भभ्रमा जाताः खण्डत्रयात्मकाः सावनाः ।

'सशोध्यमानं स्वमृणत्वमेति स्वत्वं क्षयस्तद्युतिरुक्तवच्च ।'
'योगे युतिः स्यात् क्षययोः स्वयोर्वा धनर्णयोरन्तरमेव योगः ।'

इत्यनेन चांमा· १ चंभ १ भभ्र १ । एतदूनाश्चान्द्रास्ते दिनक्षयाः खण्डचतुष्टयात्मकाः । चंमा १ चंभ १ भभ्र १ चादि १ अत्र धनयोर्योगश्चन्द्रचक्रादिवसैक्यम् । एतदूनमृणेन चन्द्रमासभभ्रमयोगेनातः सर्वमवदातम् ।

"चन्द्रसावनयुतेन्दुमासकास्ते भवन्ति रविसावनास्तु तैः ।
वर्जितानि शशिनो दिनानि वा सम्भवन्ति खलु ते दिनक्षयाः ॥"

अयमर्थः । चन्द्रभगणोना भभ्रमास्ते चन्द्रसावनास्तेषु चान्द्रमासेषु योजितेषु रविसावना भवन्ति । ततो दिनक्षयसाधनं सुगमम् । नवीनोऽयं प्रकारः । चन्द्रचक्रादिवसैक्यमित्यत्र चन्द्रभगणा एव दिनानि । तदधो यद्राश्यादि तत् पञ्चगुणं विधाय राशिस्थाने यद्भवति तदेव घटिकाः । तस्मादप्यधो यदंशादि संपद्यते तद्द्विगुणं विधाय यदंशस्थाने तदेव पलानि शेषाणि विपलानीति प्रकल्प्य चन्द्रचक्रादिवसैक्यं कार्यम् । यद्वा चन्द्रराश्याद्यस्य कलाः कार्याः । ततोऽनुपातः । यदि चक्रकलाभिः षष्टिघटिकास्तदा राश्यादिकलाभिः किमिति घट्यादि साध्यम् । ऊनितं चन्द्रमासैरित्यत्र चन्द्रमासा एव दिनानि । तदधो यत् तद्द्विगुणं विधाय घटि-

काद्य भर्वात । अत्रोदाहरणम् । एकस्मिन् सौरवर्षे चन्द्रचक्राणि सावयवानि १३ । ४ । १२ । ४६ । ३० । अत्र राश्याद्यस्योक्तप्रकारेण घटिकाः २२ । ७ । ४५ । एता दिनस्थाने चन्द्रचक्रयुताः । एव जातानि चन्द्रचक्राणि १३ । २२ । ७ । ४५ एतानि चान्द्रदिवसैरेभिः ३७१ । ३ । ५२ । ३० युतानि ३८४ । २६ । ० । १५ जात चन्द्रचक्रदिवसैक्यम् । इदं चन्द्रमासैरेभिः १२ । ११ । ३ । ५२ । ३० ऊन कार्यम् । तत्र सजातीयकरणाय चान्द्रमासाधो यद्दिनादि तद्द्विगुणं घटिका इति सपादितघटीभिश्चान्द्रमासतुल्यदिनैरेभिः १२ । २२ । ७ । ४५ ऊन जातम् ३७२ । ३ । ५२ । ३० । इद भभ्रमैरेभिः ३६६ । १५ । ३० । २२ । ३० ऊन जाता दिनक्षयाः ५ । ४८ । २२ । ७ । ३० । इदं भाष्यकृदनुक्तमप्यूह्यम् । चन्द्रचक्रदिवसैक्यमित्यत्र वासना प्रकारान्तरेणोच्यते । रविसावनोनाश्चान्द्रास्ते दिनक्षया भवन्ति । केवलयोः शोध्यशोधकयोर्यावदन्तर तावदेवेष्टसयुक्तयोरपि स्यादिति चन्द्रचक्रतुल्यमिष्ट चान्द्रदिवसेषु संयोज्य जातश्चन्द्रचक्रदिवसैक्यतुल्यः शोधकः । तथैव रविभगणोनभभ्रमापरपर्यायेषु रविसावनेषु चन्द्रचक्रतुल्यमिष्टं योजितं जातश्चन्द्रमासभभ्रमयोगतुल्यः शोध्यः । भभ्रमेषु रविभगणाः शोध्याश्चन्द्रचक्राणि च क्षेप्याणि । तत्र शोध्यक्षेप्ययोरेवान्तरे क्रियमाणे 'अन्तर तरणिचन्द्रचक्रजम्'-इत्यनेन चान्द्रमासा जाताः। त एव भभ्रमेषु योजिता इति सर्वं निरवद्यम् । नन्वेव वासनालाघवे धनर्णप्रकारगौरवेण वासनाकथनमाचार्यस्य न युक्तमित्यत आह। एतच्छिष्याणा धनर्णयोगवियोगकौशलार्थं दर्शितम् । अयमर्थः 'सशोध्यमानं स्वमृणत्वमेति–'इत्यस्याव्यक्तगणितोक्तस्य वासनाप्रदर्शनार्थमयं प्रकार उक्तः । चन्द्रमासभभ्रमयोगविवर्जितस्य चन्द्रचक्रदिवसैक्यस्य दिनक्षयतुल्यत्वान्यथाऽनुपपत्त्या सशोध्यमानस्य धनर्णव्यत्यासो युक्त इति भावः ॥ १३ ॥

**मरीचिः**–अथ प्रकारान्तरेण चन्द्रमासदिनक्षयानयनं रथोद्धतयाऽऽह अन्तरं तरणिचन्द्रचक्रजमिति । तरणिचन्द्रचक्रजं सूर्यचन्द्रभगणोत्पन्नं यत् यत्स-

ख्याक्रमन्तरं स तदङ्कमितः चन्द्रमाससमूहः । दिनक्षयानाह चन्द्रचक्रदिवसै-क्यमिति चन्द्रभगणदिनयोरैक्यम् । चन्द्रमासयुतभदिनानामिति मध्यमपदलोपाच्चन्द्रमासभदिनैश्चन्द्रमासयुतभभ्रमैरित्यर्थः । ऊनितं शेषं दिनक्षया अवमानि भवन्ति । प्रतीत्यर्थमेतदुदाहरणम् । चन्द्रभगणा-५७७५३३००००० चान्द्रदिनै--१६०२९९९०००००० क्यम् १६६०७५२३००००० । चन्द्रमास—५३४३३३००००० भदिनैः १५८२२३६४५०००० ऊनितं जाता दिनक्षयाः २५०८२५५०००० इति स्पष्टम् । एवमिष्टकालेऽपि चन्द्रभगणाः सावयवास्तदा राश्यादिभागाः षड्भक्ताः कार्याः । चन्द्रदिनाद्योऽवयवघट्यादिषु योज्याः । राश्यादिघट्यादीनां यथाक्रमं द्वादशषष्टिप्रमाणेन सत्त्वादुभयोः षष्टिप्रमाणकरणेन चन्द्रचक्रदिवसयोः सावयवयोरैक्यस्य युतत्वात् । एवं यदा चान्द्रमासास्तथाभूतास्तदा दिनाद्यद्योऽवयवा द्विगुणाः कृताः । तादृशावयवयुक्तचन्द्रमासा हीनाः कार्याः । यथैकवर्षेऽनुपातेन चन्द्रभगणाः सावयवाः १३ । ४ । १२ । ४६ । ३० अत्र राश्याद्यस्य घटीकरणार्थं तद्भागाः १३२ । ४६ । ३० षड्भक्ताः २२ । ७ । ४५ । तथा च युत्यर्थं चन्द्रभगणाः सावयवाः १३ । २२ । ७ । ४५ । चान्द्रदिन ३७१ । ३ । ५२ ३० युताः ३८४ । २६ । ० । १५ । अत्र चान्द्रमासाः १२ । ११ । ३ । ५२ । ३० । दिनादि तद्द्विगुणम् २२ । ७ । ४५ । तथा च सावयवैश्चान्द्रमासैरेतैः १२ । २२ । ७ । ४५ भभ्रमै—३६६ । १५ । ३० श्चोना. ५ । ४८ । २२ । ३० जाता दिनक्षयाः । अन्यथैतदसिद्धत्वापत्तेरिति न क्षतिः । एवमन्यत्रापीति ध्येयम् ।

अत्रोपपत्तिः । रवीन्द्वोर्युतेः सयुतिर्यावदन्येत्यादिना कल्पे यावन्तो योगास्तावन्त एवेन्दुमासाः । ते च तयोः प्रागगमनात् तद्भगणान्तरतुल्या एवेति युक्तमुक्तम् । दिनक्षयस्तु चान्द्रसावनदिनान्तररूप इत्युक्तं प्राक् । अत्र केवलयोर्यावदन्तरं तावदेवेष्टसयुक्तयोः स्यादिति चन्द्रभगणतुल्यमिष्टं चान्द्रदिने योजितं जातं चन्द्रचक्रदिवसैक्यम् । अत्र चन्द्रभगणयुतसावनदिनानि हीनानि कार्याणि । तत्र रविभगणोनभभ्रमरूपेण साव

नग्रहणात् सूर्यभगणोनचन्द्रभगणरूपचन्द्रमासयुतभभ्रमाहा हीनाः कार्या इति। अत उक्तमूनित चन्द्रमासभदिनैर्दिनचयाया इति युक्तम् ॥ १३ ॥

इदानीमन्यदाह ।

इन्दुमण्डलगुणेन्दुसंगुण-
ब्रध्नचक्रविवरेऽधिमासकाः ।
खेचरोच्चभगणान्तरोन्मिताः
सन्ति मन्दचलकेन्द्रपर्ययाः ॥ १४ ॥

वा·भा.—अत्रोपपत्तिः । चन्द्रभगणा रविभगणोनाश्चन्द्रमासा भवन्ति तेऽधिमासज्ञानार्थं रविमासोनाः कार्याः । रविमासास्तु द्वादशगुणिते रविभगणैर्भवन्ति । पूर्वमेकगुणैरूना इदानीं द्वादशगुणैश्च । अतस्त्रयोदशगुणै रविभगणैरूनाश्चन्द्रभगणा अधिमासा भवन्तीत्युपपन्नम् । उत्तरार्धेन केन्द्रस्वरूपमुक्तम् ॥ १४ ॥

इति भगणाध्यायः ।

---

वा.वा.—इदानीमन्यदप्याह इन्दुमण्डलेति । अत्रोदाहरणम् । एकस्मिन् वर्षे चन्द्रचक्राणि १३ । ४ । १२ । । ४६ । ३० । गुणेन्दुसंगुणरविचक्राणि १३ । विवरम् । ० । ४ । १२ । ४६ । ३० । भगणस्थाने ये तेऽधिमासाः । पुनर्यच्छेषं सावयवं तत् त्रिंशता सगुण्य विकलासु षष्ट्या विभज्य लब्ध कलासु निक्षिपेत् । एवं कलासु षष्ट्या, भागेषु त्रिंशता, राशिषु द्वादशभिर्विभज्योपर्युपरि नियोज्य तद्भगणस्थाने यत् ते दिवसाः । पुनः शेषं षष्ट्या सङ्गुण्योपर्यपरिनियोजनेन भागस्थाने यत् ता घटिका भवन्ति एवं पलान्यपि । एवं जातमेकस्मिन् वर्षेऽधिमासाद्यम् । ० । ११ । ३ । ५२ । ३० ।

अत्र वासना । केवलयोर्यावदन्तरं तावदेव केन चित् संयुक्तयोरपि स्यादिति सौरमासचान्द्रमासयोः सूर्यभगणा योजिताः । तत्र रविभगणोनचन्द्रभगणात्मके चान्द्रमासे यावद्रविभगणा योज्यन्ते तावच्चन्द्रभ-

गणा एव भवन्ति। तथैव द्वादशगुणरविभगणात्मकेषु सौरमासेषु यावद्र-विभगणाः क्षिप्यन्ते तावत् त्रयोदशगुणाः सूर्यभगणा भवन्ति। ततस्ते-षामन्तरं कृतम्। यतः सौरचान्द्रमासानामन्तरमधिमासाः॥ १४॥

इति कृष्णदैवज्ञात्मजनृसिंहकृतौ सिद्धान्तवासनावार्त्तिके भगण-ज्ञानम्।

———o———

**मरीचिः**—अथ प्रकारान्तरेणाधिमासज्ञानमन्यदपि रथोद्धतयाऽऽह इन्दु मण्डलगुणेन्दुरिति। वृत्ते द्वादशराशीनां सत्त्वान्मण्डलचक्रादिपदेन लक्षणया भगणा गृह्यन्ते। भास्कराहस्करबुध्नेत्यभिधानाच्चन्द्रभगणत्रयोदशगुणितसूर्यभगणयोरन्तरेऽधिमासाः प्रागुक्ताः सन्ति। ग्रहोच्चपातादीनां भगणा उक्तास्तथा केन्द्राणामपि कल्पे भगणा भवन्तीति कथं ते नोक्ता इत्यतस्त उक्तप्राया इत्याह खेचरोच्चेति। ग्रहभगणोच्चभगणान्तरमिता मन्दचलकेन्द्रपर्यया: सन्ति। ग्रहमन्दोच्चभगणयोरन्तरे मन्दकेन्द्रभगणाः। ग्रह-शीघ्रोच्चभगणयोरन्तरे शीघ्रकेन्द्रभगणाः। तथा च प्राग्ग्रहोच्चभगणानां निरूपणेन तदन्तरेण केन्द्रभगणज्ञानसम्भवाच्चोक्तप्राया इति भावः। स्पष्टा-धिकारे ग्रहोच्चान्तरेण केन्द्रस्योक्तत्वात् तद्भगणनिबन्धनं निष्प्रयोजनमिति ते न निबद्धाः।

तन्निबन्धनश्लोकाः।

"मन्दकेन्द्रभगणा नखेषुगोनन्दनन्दनवभूत्रिसागराः ४३१९९९९५२०।
तीक्ष्णगोद्रि मनुवेदगोधरातादुपत्तनगमायाका विधोः ५७२६५१९४१४८॥१॥
खरामाश्व्यहिद्व्यष्टषड्गोद्विदस्रा २२९६८२८२३०
गजाङ्काङ्कगोगोङ्कगोभूत्रिवेदाः ४३१९९९९६६८।
खखाङ्केषुपक्षाश्विवेदाङ्गरामा ३६४२२५९००
नगाब्ध्यग्निगोगोङ्कगोभूत्रिवेदाः ४३१९९९९३४७॥ २॥
नगतत्त्वाद्र्यङ्कपञ्चरसशक्राः १४६५९७२५७ कुजादथ।
गजाद्रिमनुसप्तेन्दुत्र्यश्विखाश्विमिताः क्रमात् २०२३१७१४७८॥३॥

कृताष्टाङ्कगजाङ्काङ्कषड्भूषड्रामभू–१३६१६९९८९८४ मिताः ।
पञ्चार्ब्ध्यब्धिनसप्ताङ्गपञ्चपञ्चनवाग्नयः ३९५५६७३५४५ ॥ ४ ॥
द्व्यङ्काब्ध्यङ्कगजाग्न्यश्विखभै–२७०२३८९४९२ द्राक्केन्द्रपर्ययाः ।
द्विखभत्र्यब्धिरामाङ्गकुवेदा४१६३४३२७०२ ब्रह्मणो दिने'' ॥५॥इति ।

अत्रोपपत्तिः । सूर्यचन्द्रमासान्तरमधिमासा इत्युक्तं प्राक् । तत्र केवलयोर्यावदन्तरं तावदेवेष्टसयुक्तयोरपि स्यादिति द्वादशगुणितसूर्यभगणरूपसौरमासचान्द्रमासयोः सूर्यभगणतुल्येष्टयुतयोरन्तरेऽधिमासा इति सिद्धम् । तथा च द्वादशघ्नसूर्यभगणे तद्योजने त्रयोदशगुणिता रविभगणाः । चन्द्रमासे तद्योजने चन्द्रभगणाः । चान्द्रमासानां तद्भगणान्तरत्वात् । अतो युक्तमुक्तमिन्दुमण्डलगुणेन्दुसगुणघ्नचक्रविवरेऽधिमासका इति । स्पष्टाधिकारे ग्रहोच्चान्तरं केन्द्रमित्युक्तत्वाद्ग्रहोच्चभगणयोरन्तरे केन्द्रभगणा इत्यर्थतः सिद्धमित्युपपन्नं खेचरोच्चेत्यादि । एतत्स्वरूपं च छेद्यकाधिकारे वक्ष्यति ॥ १४ ॥

ननु ग्रहचारे निरूपणीये भगणाभिधानं प्रकृतानुपयुक्तत्वेनार्थान्तरमतः फक्किकयाऽऽह इति भगणाध्याय इति । ग्रहसाधनोपयुक्ताधिमासादीनां भगणेत्युपलक्षणम् । भगणानां सर्वोपजीव्यत्वान्मुख्यत्वज्ञानार्थं भगणोपादानं तेन ग्रहसाधनोपयुक्तपदार्थानामध्यायनिरूपणं कृतम् । तथा च प्रकृतानुपयुक्तत्वाभावेनानर्थान्तरमिति भावः ॥

---

इदानीमहर्गणानयनमाह ।

**कथितकल्पगतोऽर्कसमागणो**
**रविगुणो गतमाससमन्वितः ।**
**खदहनैर्गुणितस्तिथिसंयुतः**
**पृथगतोऽधिकमाससमाहतात् ॥ १ ॥**
**रविदिनाप्तगताधिकमासकैः**
**कृतदिनैः सहितो द्युगणो विधोः ।**

पृथगतः पठितावमसंगुणा-
द्विधुदिनाप्तगतावमवर्जितः ॥ २ ॥
भवति भास्करवासरपूर्वको
दिनगणो रविमध्यमसावनः ।
अधिकमासदिनक्षयशेषतो
द्युघटिकादिकमत्र न गृह्यते ॥३॥

**वा.भा.**—स्पष्टम् ।

अत्र वासना । कल्पगताब्दा द्वादशगुणिता रविमासा जातास्ते चैत्रादिगतचान्द्रतुल्यैः सौरैरेव युतास्त्रिंशद्गुणा इष्टमासप्रतिपदादिगत- तिथितुल्यैः सौरैरेव दिनैर्युताः । एवं ते सौरा जातास्तेभ्यः पृथक् स्थितेभ्योऽधिमासानयनं त्रैराशिकेन । यदि कल्पसौरदिनैः कल्पाधि- मासा लभ्यन्ते तदैभिः किमिति । फलं गताधिमासाः । तैर्दिनीकृतैः पृथक् स्थितः सौराहर्गणः सहितश्चान्द्रो भवति । यतः सौरचान्द्रान्तर- मधिमासदिनान्येव । अथ चान्द्राद्द्युगणादवमानयनं त्रैराशिकेन । यदि कल्पचान्द्राहैः कल्पावमानि लभ्यन्ते तदैभिः किमिति । फलं गता- वमानि । तैरूनश्चान्द्रोऽहर्गणोऽतः कर्त्तव्यः । यतः सावनचान्द्रान्तरे ऽवमान्येव । एवं कृते सति रवेर्मध्यमः सावनाहर्गणो भवति न स्फुटः । मध्यस्फुटाहर्गणयोर्भेदो गोले कथितः । स चाहर्गणोऽर्कादिः । यतः कल्पादौ रविवासरः । अत्राधिमासानयनेऽधिमासशेषमनष्टं स्यात्थ न पुनस्तस्माद्दिनाद्यवयवा ग्राह्याः । एवमवमशेषमपि । न तस्माद्घ- टिकादिकं ग्राह्यम् । नन्वनुपातः सावयवो भवति कुतस्तदवयवा न ग्राह्यास्तत्कारणं गोले कथितं व्याख्यातं च ॥ १—३ ॥

**वा.वा.**—अथाहर्गणानयनमाह कथितकल्पगतोऽर्क इति । अत्र वासना भाष्यकृदुक्ता । शेषत्यागवासना गोलाध्याये वक्ष्यते ।

"दर्शान्ततः संक्रमकालतः प्राक् सदैव तिष्ठत्यधिमासशेषम् ।
दर्शान्ततो याततिथिप्रमाणैः सौरैस्तु सौरा दिवसाः समेताः ॥

यतोऽधिशेषोत्थदिनाधिकास्ते त्यक्तं च तस्मादधिमासशेषम् ।
तिथ्यन्तसूर्योदययोस्तु मध्ये सदैव तिष्ठत्यवमावशेषम् ॥
त्यक्तेन तेनोदयकालिकः स्यात् तिथ्यन्तकाले द्युगणोऽन्यथाऽत:॥''

इति ॥ ३ ॥

**मरीचिः**—अथ ग्रहसावनोपजीव्याहर्गणसाधनं द्रुतविलम्बितत्रयेणाह कथितकल्पगत इति । अथानन्तर्यं कथितकल्पगतो गोद्रीन्द्वद्रीत्यानीतकल्पगतादिकालः । अर्कसमागणः सौरवर्षसमूहात्मकः । द्वादशगुणितः । गतमाससमन्वितश्चैत्रादिगतमासयुक्तः । अधिमासस्यान्तर्गतत्व तु 'षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः'—इत्युक्तत्वादुत्तरमाससंज्ञत्वाच्च नाधिकयोजनम् । ननु सौरगतमासयुक्तः । 'मासास्तथा च तिथयस्तुहिनांशुमानात्'—इत्युक्तेन तदादेश्चैत्रस्योक्तत्वात् । खदहनैस्त्रिंशता गुणितः । तिथियुतो वर्त्तमानमासशुक्लपक्षादिगततिथियुतः । अयं सिद्धाङ्कः पृथक् द्वितीयस्थाने कर्मभूमौ स्थाप्यः । अधिकमाससमाहतात् लब्धाहता इत्याद्युक्तकल्पाधिमासमानाङ्कगुणितादस्मात् । रविदिनाप्तगताधिकमासकैः 'विधिदिने दिनकृत्'—इत्याद्युक्तकल्पसौरदिनमानाङ्कभक्ताप्तकल्पादिगताधिमासकैः कृतदिनैस्त्रिंशद्गुणितैः सहितो युक्तः प्रथमस्थानस्थसिद्धाङ्कः । विधोर्द्युगणः कल्पादिमारभ्येष्टतिथिप्रारम्भपर्यन्तं तिथिरूपश्चान्द्राहर्गणो भवति । अयमपि पृथक् । अतोऽस्मात् पठितावमसंगुणात् 'दिनक्षयास्तत्र'—इत्याद्युक्तकल्पावममानाङ्कगुणितात् । विधुदिनाप्तगतावमवर्जितः । नवनवाङ्केत्याद्युक्तकल्पचन्द्रदिनमानाङ्कभक्तलब्धकल्पगतावमोनश्चान्द्राहर्गणः । फलितमाह भवतीति । दिनगणः कल्पादिमारभ्येष्टदिनारम्भपर्यन्तमहर्गणो भवति । ननु दिनगणस्य चतुर्मानात्मकत्वसम्भवेन चान्द्रत्वं नाक्षत्रत्वं सौरत्वं सावनत्वं वा । नाद्यः । द्युचरचक्रेत्यादिवक्ष्यमाणप्रकारस्यानुपातासंभवेन तद्दिनस्य कुदिनाभिधेयत्वाभावादसंगतापत्तेः । नान्त्यः । सम्प्रग्रहाणां सावनसद्भावेनानिर्णयात् । अत आह । रविमध्यमसावन इति । रविमध्यममानेन स्पष्टत्वव्युदासार्थं मध्यमेति ।

तथा 'च वासराद्यं तत्सावनादित्युक्तेन 'इनोदयद्वयान्तरं तदर्कसावनं-दिनम्' इत्युक्तेन चान्यमाननिरासात् परिशेषेण सूर्यसावनाहर्गणोऽयमित्यर्थः । अथैतत्प्रसङ्गेन पञ्चाङ्गान्तर्गतवारज्ञानमाह भास्करवासरपूर्वक इति । अहर्गणः सप्ततष्टो ऽवशेष सूर्यवारादिगणनया गतवारो भवति । तदग्रवारस्य वर्त्तमानवारत्वमर्थसिद्धम् । वारगणना तु सूर्यचन्द्रभौमबुधगुरुशुक्रशनीत्युक्तपाठक्रमेण । [1] 'मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः" इति सूर्यसिद्धान्तोक्तेः । एतेन वारसंवादाद्वाराहर्गणस्य शुद्धत्वमुक्तं भवतीत्याहु । ननु सावनाहर्गणोऽयं सूर्योदये तदुदयद्वयान्तररूपत्वान्निरवयवो भाव्यः । उक्तप्रकारेण तु सावयवः । अधिमासावमशेषागतफलयुतहीनत्वात् न हि तयोस्तुल्यत्व भिन्नस्वरूपात् । न च निरवयवाऽन्यथाऽनुपपत्त्या तच्छेषद्वयान्तरावयवत्यागः । आनयनसिद्धावयवस्य त्यागे मानाभावादन्यथा स्थूलत्वापत्तेरित्यत आह अधिकेत्यादि । अत्राहर्गणानयनेऽधिकमासदिनक्षयशेषतोऽधिकमासदिनक्षययोर्लब्ध्योर्यच्छेष भाज्यस्य तस्मात् स्वहरेण भजनात् । क्रमेण द्व्युघटिकादिकं फलं तदवयवरूपं न गृह्यते गणकैरिति शेषः । तथा च कल्पसौरदिनभागेनाधिमासे प्राप्ते शेषात् त्रिंशद्गुणादिद्वारा दिनादिकं फलं कल्पचान्द्रभक्तेन क्षयदिनप्राप्तौ शेषात् षष्टिगुणाद्वारा घट्यादिफलं न ग्राह्यं किन्तु शेषद्वयमनुपयुक्तत्वेनानष्टं स्थाप्यं तेनाहर्गणस्य निरवयवानुपपत्तिर्नेति भावः ।

अत्रोपपत्तिः । चारप्रवृत्तिकालादिष्टदिनप्रवृत्त्यवधिकानां रविसावनदिनानां गणोऽहर्गणो ग्रहानयनोपयोगी इति साध्यते । अत्राधिमेर्दिनक्षतनसंचय इत्याद्युक्तरीत्वा कल्पादितो गतचान्द्राणां ज्ञाने ततो गतावमज्ञाने च तदन्तरेणाहर्गणज्ञानं सुगममिति चान्द्राहर्गणोऽपि गतसौरदिनतदधिमासयोगेनेति कल्पादिष्टदिनपर्यन्तं गतसौरदिनगणज्ञानमावश्यकम् । तत्रैतेषामिष्टकाले ज्ञानासंभवान्मध्यममेषादिसूर्यसंचाररूपसौरवर्षादौ गोदीन्द्वद्रीत्वाद्युक्तसौरवर्षाणां ज्ञानात् तत्र दि

१ भूगोलाध्याये ७९ श्लोक ।

नगणज्ञानं सुज्ञभमिति प्रथमं तत्र सौरमासाः। एकवर्षे द्वादशमासास्तदा गतसौरवर्षेषु के इत्यनुपातेन द्वादशगुणसौरवर्षाणि भवन्ति अतः कथित-कल्पगतोऽर्कसमागणो रविगुण इत्युक्तम्। इष्टमासादौ तज्ज्ञानावश्य-कत्वेन सौरवर्षादितो गतसौरमासा योज्याः। तत्र सौरवर्षाद्यज्ञानेन-तद्गतसौरमासाज्ञानात् तद्योजनमशक्यमतोऽन्यथा यतितम्। चैत्रादौ चान्द्रवर्षप्रवृत्तेश्चान्द्रचैत्रादिगतमासज्ञानात् सौरमासा आनीतास्ते चैत्रादौ कल्पिता इति। तेषां चैत्रादिगतचान्द्रमासयोजनेनेष्टचान्द्रमासादौ क-ल्पान्मासा भवन्ति अतो गतमाससमन्वित इत्युक्तम्। तत्रैते न सौराः। निरवयवत्वात्। चान्द्रमासान्ते रविराशिसञ्चाररूपसङ्क्रान्तिकालस्यानिय-मात् सौरमासादावेव तन्मासाना निरवयवासंभवात भिन्नजातित्वेन चैत्रा दिचान्द्रगतमासयोजनानुपपत्तेश्च न चान्द्रा वर्षाण्यर्केत्यादिनोक्तगत-वर्षाणां सौरत्वाच्चान्द्रत्वाभावाच्च द्वादशगुणितद्वारा चैत्रादौ चा-न्द्रमासासंभवात अत एव सौरवर्षादिसौरमासाश्चैत्रादौ कल्पिता इत्यु-क्तम्। चान्द्राणां सिद्धत्वेनाधिकमासयोजनानुपपत्तेश्च। किन्तु इष्टकाला-त् पूर्वं गणितागतप्राप्ताधिमासान्तकालपर्यन्तं कल्पादितः सौरमासाः सावयवास्तत इष्टचान्द्रमासादौ चान्द्राः सावयवास्तद्योगो निरवय-वोऽयमिति मत्कल्पनात् कथमेतदिति चेत् शृणु। द्वादशगुणितोक्त-वर्षमितसौरवर्षादिसम्भूतसौरमासाना तदानीतसावयवाधिमासयोजने सौरवर्षादौ चान्द्रमासाः सावयवा भवन्ति ते एवाधोऽवयवतुल्यचान्द्रदि-नविहीनाश्चैत्रादौ निरवयवचान्द्रमासाः। अधोऽवयवसौरवर्षाद्या-नीताधिशेषत्वेन चैत्रादिसौरवर्षाद्यन्तरसम्भूतचान्द्रदिनात्मकत्वात्। तथा च द्वादशगुणितोक्तवर्षाणि स्वानीतनिरग्राधिमासयुक्तानि चैत्रादौ निरवयवाश्चान्द्रमासाः कल्पादितो भवन्ति। अथैषु स्वानीतसावयवाधि-मासहीनेषु चैत्रादौ सावयवाः सौरमासा भवन्ति तत्र यदि तदानीतके-वलाधिमासहीने चैत्रादौ कल्पात् केवलाधिमासहीनचान्द्रमासा द्वाद-शगुणवर्षतुल्या भवन्ति। अत्रैतदन्तर्गता मध्यमानपतिताधिमासान्त-

**वोपयमे ॥ ९० ॥**

उपयमो दारस्वीकारः । उपयमेऽर्थे वर्तमानाद्यमेर्धोः परः सिर्दे वा किद्भवति ॥ उपायत कन्याम् । उपायंस्त कन्याम् । स्वीकृतावुपाद्यम इति दः । इयमऽप्राप्ते विभाषा । स्वोकारसूचने पूर्वविप्रतिषेधेन पूर्वेण नित्यो विधिः ॥

**भुस्थोरिः ॥**

द इति वर्तते । भुसंज्ञकानां स्था इत्येतस्य च धोरिकारोऽन्तादेशो भवति सौ सिश्च दे कित् । अदित । अधित । उपास्थित । प्रादिति सेः स्वम् । सन्निपातपरिभाषाया अनित्यतां वक्ष्यति । तिष्ठतेरुपान्मन्त्रकरणे घेरिति दः । इत्ववचनसामर्थ्यादेपो निवृत्तिः सिद्धेति किद्ग्रहणमुत्तरार्थमनुवर्त्तमानं सेरपि विशेषणम् ।

**तः सेट् पूङ्शीङ्स्विन्मिदृक्ष्विद्धृषो न ॥ ९१ ॥**

पूङ्शीङ्स्विदमिदृक्ष्विदधृष इत्येतेभ्यः परस्तसंज्ञः सेट् न किद्भवति ॥ पवितः । पवितवान् । श्र्युकः कितीति इटि प्रतिषिद्धे पूङ इति तत्वोरिड् विभाषितः । शीङ् । शयितः । शयितवान् । अनुबन्धो यङ्लुबन्तनिवृत्त्यर्थम् । शेश्यितः । शेश्यितवान् । एर्गिवाकूचादुङोऽसुधिय इति यत्वम् । स्विदा । प्रस्वेदितः । प्रस्वेदितवान् । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । वैयात्ये धृष इत्येव भवति । पूङस्तयोर्व्यक्तखार्थो इति कर्मणि क्तः । शीङो धिगत्यर्थाचेति कर्तरि चेति । स्विदादीनां कर्त्तरि चारम्भे क्त इति कर्त्तरि क्तः । आदितः सेटि प्रतिषेधे वाभावारम्भयोरिति पक्षे भवति ।

त इति किम् । पवित्वा । पूङ इतीट्पक्षे मृडादिनियमादकित्त्वम् । सेडिति किम् । पूतः । पूतवान् ॥

मृषः स्वार्थे ॥ ९२ ॥

स्वार्थस्तितिक्षा । मृषेर्धोः स्वार्थे वर्तमानात्तसंज्ञः सेट् न किद्भवति । मर्षितः । मर्षितवान् । स्वार्थ इति किम् । अपमृषितं वाक्यमाह । धूनामनेकार्थत्वात् स्वार्थग्रहणं पठितापेक्षम् । पाठस्तूपलक्षणम् । सेडित्येव । मृषु सहने चास्योदित्वात् यस्य वेतीटि प्रतिषिद्धे मृष्टम् ॥

वोदुङो भावारम्भयोः शपः ॥ ९३ ॥

तः सेण्न किदिति वर्तते । उदुङो धोः शब्विकरणात्परो भावे चारम्भे च तः सेड् वा न किद्भवति । भावग्रहणं क्तस्य विशेषणम् । आरम्भ आद्यः क्रियाक्षणः । स धोर्विशेषणम् । द्युतितमस्य । द्योतितमस्य । सम्बन्धे ता । कर्तृत्वविवक्षायां नक्तिनेत्यादिना ताप्रतिषेधः । द्युतितमनेन । लोठितमनेन । प्रलुठितः । प्रलोठितः । प्रलुठितवान् । प्रलोठितवान् । कर्त्तरि चारम्भे क्त इति कर्त्तरि क्तः । उदुङ इति किम् । विदितमनेन । प्रविदितः । भावारम्भयोरिति किम् । रुचितः कार्षापणः । शब्विकरणादिति किम् । गुधितमस्य । प्रगुधितः । श्नाविकरणोऽयम् । सेडित्येव । रूढमस्य । प्ररूढः । तपरकरणमसन्देहार्थम् । निकुचित इति नकारस्य खे कृते सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्युदुङो विकल्पो न भवति । विहितविशेषणाद्वा ॥

नोङस्थफात्क्त्वा ॥ ९४ ॥

सेडिति वर्तते वेति च । नकारोङो धोस्थकारान्तात् फकारान्ताच्च क्त्वा सेट् वा किद्भवति । श्रथित्वा । श्रंथि-

त्वा । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुम्फित्वा । मृडादिनियमान्नित्यमकित्वे प्राप्ते विधिर्विभाष्यते । नोङ इति किम् । गोफित्वा । नन्वत्रापि व्युङोवोहलः संश्चेति विकल्पेन भाव्यम् । एवं तर्हि ऋफेरर्फित्वा प्रत्युदाहरणम् । थफान्तादिति किम् । स्रंसित्वा ॥

## वञ्चिलुञ्च्यृत्तृषिमृषिकृषः ॥ ९५ ॥

वञ्चिलुञ्चिऋतितृषिमृषिकृष् इत्येतेभ्यः परः क्त्वा सेड् वा किद्भवति । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतेर्वाणइति यदा ईयङ् न भवति तदा ऋतित्वा । अर्त्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृषित्वा । कर्षित्वा । मृडादिनियमान्नित्यमकित्वं प्राप्तम्सेडित्येव । वङ्क्त्वा । मृष्ट्वा । वोदित इति पक्षे नेट् ॥

## व्युङो ऽवो हलः संश्च ॥ ९६ ॥

सेडिति वर्तते वेति च ॥ उकारोङ इकारोङश्च धोरवकारान्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः । उकारेकारोङो ऽजन्तत्वासम्भवाद्धलग्रहणमादिविशेषणम् । दिद्युतिषते । दिद्योतिषते । द्युतिस्वाप्योर्जिरिति षस्य जिः । द्युतित्वा । द्योतित्वा । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । सन्नकिदेव क्त्वापि सेण्मृडादिनियमादकित् । तयोरप्राप्तं कित्वमनेन विधीयमानं विकल्प्यते । व्युङ इति किम् । विवर्तिषते । वर्त्तित्वा । अव इति किम् । दिदेविषति । देवित्वा । हलादेरिति किम् । एषिषिषति । एषित्वा । सनि एपि कृते द्वित्वम् । सेडित्येव । बुभुक्षते । भुक्त्वा ॥

## युक्तवदुसि लिङ्गसंख्ये ॥ ९७ ॥

युक्तः प्रकृत्यर्थः । प्रत्ययार्थेन सम्बन्धात् । उसोऽर्थ उस् । उसि युक्त इव लिङ्गसंख्ये भवतः । ईवर्थे वत् । उसिति नाशस्य संज्ञा । उसा नष्टस्य त्यस्यार्थः साहचर्याद् उस् । तत्रोसर्थे प्रकृत्यर्थे इव लिङ्गसंख्ये विधीयेते । लिङ्गं स्त्रीपुंनपुंसकानि । संख्या एकत्वद्वित्वबहुत्वानि । पञ्चालो नाम राजा तस्यापत्यं राष्ट्रशब्दाद्राज्ञोऽञित्यञ् । बहुत्वे तस्योपि कृते पञ्चालाः क्षत्रियाः पुल्लिङ्गा बहुसंख्याः । तेषां निवासो जनपदस्तस्य निवासादूरभवावित्यागतस्याणो जनपद उसित्युस् । क्षत्रियेषु ये लिङ्गसंख्ये ते जनपदेऽपि भवतः । पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः । एवं वरणानामदूरभवः । गोदौ नाम ह्रदौ तयोरदूरभवः । वरणादेरिति उस् वरणाः शिरीषाः । गोदौ । अर्थातिदेशाद्विशेषणानामपि तद्वत्ता सिद्धा । पञ्चाला रमणीया बह्वन्ना बहुक्षीरघृता बहुमाल्यफलाः । वरणा रमणीयाः । गोदौ रमणीयौ । अजातेरिति वक्तव्यम् । पञ्चाला जनपदः । गोदौ ग्रामः । अत्र जनपदग्रामयोर्जातित्वान्नातिदेशः । जात्यर्थो जातिः । तेन तद्विशेषणानामपि प्रतिषेधः । पञ्चाला जनपदो रमणीयः । नेदं वक्तव्यम् । सञ्ज्ञाप्रामाण्यात् । यथा वर्षा आपो दारा गृहाः सिकता इत्येवमादीनां संज्ञाशब्दानां संज्ञाप्रामाण्यादेव स्वलिङ्गेन स्वसंख्यया च साधुत्वमेवं जातेरपि भविष्यति । पञ्चालादीनान्तु संज्ञाशब्दानामन्वाख्यानप्रदर्शनार्थमुस्लिङ्गसंख्यातिदेशश्च विधीयते इत्यदोषः । उसीति किम् । आमलकं फलम् । उपि कृते फलेऽर्थे आमलकशब्दस्य स्त्रीलिङ्गं मा भूत् । लिङ्गसंख्ये इति किम् ।

बदर्या अदूरभवो ग्रामः । वरणादित्वादुस् तस्य वनं बद-रीवनम् । वनस्पतित्वातिदेशो मा भूत् । विभाषौषधि-वनस्पतिभ्य इति णत्वं प्रसज्येत । वेति व्यवस्थितविभा-षानुवृत्तेर्मनुष्यार्थे उसि विशेषणानां न लिङ्गसंख्याति देशः । पञ्चाला अभिरूपः । वज्रिका दर्शनीयः । पञ्चेव मनुष्य इवे प्रतिकृतौ क इतिकः । तस्योस् मनुष्य इत्युस् । खलतिकादिषु संख्यातिदेश एव । खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि । हरीतक्यादिषु लिङ्गातिदेश एव । हरीतक्या अवयवः फलानि हरीत-क्यादेरित्युस् । हरितक्यः फलानि । तिष्यपुनर्वस्वोर्नां भद्वन्द्वे द्वित्वम् । तिष्य एकः पुनर्वसू द्वौ । तेषां भद्वन्द्वे द्वित्वं भवति । उदितौ तिष्यपुनर्वसू । तिष्यपुनर्वसूना-मिति किम् । राधानुराधाः । श्रवणधनिष्ठाः । भग्रहणं किम् । तिष्ये जातः । पुनर्वस्वोर्जातौ तत्र जात इत्या-गतस्याणो भेभ्यो बहुलमित्युप् । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसवो माणवकाः । ननु गौणत्वादेवात्र न भवि-ष्यति । पर्यायार्थं तर्हि भग्रहणम् । पुष्यपुनर्वसू सिद्धापुन-र्वसू इति । बहुवचननिर्देशः किमर्थः । एकवद्भावे मा भूत् । इदं तिष्यपुनर्वसु । इदमेव ज्ञापकं वा तरुमृगा-दिसूत्रे वेति योगविभागोऽस्ति । द्वन्द्व इति किम् । यस्ति-ष्यस्तौ पुनर्वसू येषां ते तिष्यपुनर्वसवो मुग्धाः । तिष्या-दय एवात्र विपर्ययेण प्रतीयन्त इति भविषयत्वमस्ति । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामिति न वक्त-व्यम् । सामान्यविशेषात्मकत्वाद्वस्तुनः । विशेषेष्वनुवृ-त्ताकारबुद्धिनिमित्तं सामान्यत्वम् । वृत्ताकारबुद्धिहेतवो विशेषाः । तत्र सामान्यविवक्षायामेकत्वं भवति । सम्पन्नो

एतदप्ययुक्तम् । अवशिष्टः शब्दो निवृत्तशब्दस्य यद्यर्थ-मभिधत्ते तदास्य द्वित्वेऽपि वृत्तिरिति किमेकशेषेण । अथ नाभिधत्ते तदा पश्चादपि स एवार्थः कथमनेकत्रार्थे वृत्तिः । सरूपाणां द्वन्द्वनिवृत्त्यर्थमेकशेष इत्यपि नास्त्यनभिधा-नात् । न हि भवति द्वौ च द्वौ च द्वरिति । अथ विरूप-शब्दार्थ एकशेषः । तथाहि । वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । अपत्यमन्तर्हितं वृद्धम् । एवकारो भिन्नक्रमः । विशेषो वैरूप्यम् । वृद्धः शिष्यते यूना सह वचने वृद्धयुवलक्षणे एव यदि विशेषः समानायां प्रकृतौ । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । दाक्षिश्च दाक्षायणश्च दाक्षी । वृद्ध इति किम् । औपगवश्चानन्तर औपगविश्च युवा औपगवौपगवी । गार्गि-गार्ग्यायणौ । यूनेति किम् । गर्गश्च गार्ग्यश्च गर्गगार्ग्यौ । तल्ल-क्षण एवेति किम् । गार्ग्यवात्स्यायनौ । अत्र प्रकृतिविशेषो-ऽप्यस्ति । एवकारः किमर्थः । भागवित्तिभागवित्तिकौ । भागवित्तेरपत्यं युवा । दोष्वणसौवीरेषु प्राय इत्यत्र क्षेप-स्यापि भावान्न । तल्लक्षण एव विशेष इति किम् । वैदश्च वृद्धो वैदश्च युवा वैदवैदौ । तल्लक्षणवैरूप्याभावात् द्वन्द्वो भव-त्येव । स्त्री पुंवच्च । स्त्री वृद्धा यूना सह वचने शिष्यते पुंवद्भा-वश्चास्या भवति तल्लक्षण एव यदि विशेषः । गार्गी च गार्ग्यायणश्च गार्ग्यौ । दाक्षी च दाक्षायणश्च दाक्षी । नेदं द्वयं वक्तव्यम् । जीवति वंश्ये वृद्धं द्वयमभिधत्ते । अजी-वति वृद्धयूनोर्द्वन्द्वो नास्त्यनभिधानात् । जीवति वंश्ये वृद्धा स्त्री युवानञ्च सामान्येन वृद्धशब्द एवाभिधत्ते द्वन्द्वस्य चानभिधानम् । यदपि पुमान् स्त्रिया सह वचने शिष्यते तल्लक्षण एव यदि विशेषः । कठश्च कठी च कठौ । मयूरश्च मयूरी च मयूरौ । प्राणिधर्मयोः स्त्रीपुंसयोर्ग्रहणादिह

न भवति । नदनदीति । घटघटी । स एवोदन्ध्वनादि । तल्लक्षण इत्येव । कुक्कुटमयूर्यौ । एवकार इत्येव । इन्द्रेन्द्राण्यौ । भवभवान्यौ । पुंयोगलक्षणोऽप्यत्र विशेषः । इदमपि जातिमात्रविवक्षया सिद्धति । द्वन्द्वस्य चानभिधानम् । अभिधाने द्वन्द्वोऽस्ति । नदनदीपतिः । ब्राह्मणवत्साब्राह्मणीवत्सौ । भ्रातृपुत्रौ स्वसृदुहितृभ्यां शिष्यत इति न वक्तव्यम् । भ्राता च स्वसा च भगिनी वा भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । विवक्षया द्वन्द्वानभिधानञ्च । इदं तर्हि वक्तव्यम् । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यान्तल्लक्षण एव यदि विशेष इति । शुक्लञ्च वस्त्रं शुक्लश्च कम्बलः शुक्ला च साटी तदिदं शुक्लम् । तानीमानि शुक्लानि । नेदं ज्यायस्त्रिषु लिङ्गेषु नपुंसकस्य प्रश्नादौ प्राधान्यात्तेन सामान्यविशेषापेक्षया वचनभेदः । पिता मात्रा स्वसुरः स्वश्र्वान्यतरस्यामित्यपि न वक्तव्यम् । असामान्यविवक्षया पितरौ स्वसुराविति द्वन्द्वोऽप्यस्ति । मातापितरौ । स्वश्रूस्वसुरौ । स्वश्रूशब्दः स्त्रियामिहैव निपातितः । त्यदादीनि सर्वैर्नित्यम् । सर्वैरिति त्यदादिभिरन्यैश्च सहवचने त्यदादीनि शिष्यन्त इत्येतदपि नास्ति । त्यदादीनामन्यापेक्षया सामान्यवाचित्वं त्यदादिषु च यद्यत्परं तत्तत्सामान्यवाचीति तत्प्रयोगो युक्तः । स च देवदत्तश्च तौ । कश्च देवदत्तश्च कौ । स च यश्च यौ । अथात्र कस्य लिङ्गं स च स्थाली च कुण्डञ्च स च देवदत्ता च कुण्डं चेति । उच्यते । द्वन्द्वापवादोऽयम् । द्वन्द्वे चान्त्यलिङ्गम् । अत्रापि तदेव युक्तम् । इदं चापि न वाच्यम् । ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । ग्राम्या ये पशवस्तेषां सङ्घेषु स्त्री शिष्यते अतरुणाश्चेद् ग्राम्यपशवः । गावश्च स्त्रियो गावश्च पुमांसः ।

गाव इमाः । अजा इमाः । ग्राम्यग्रहणं किम् । आरण्यानां मा भूत् । रुरव इमे । पृषत इमे । पशुग्रहणं किम् । ब्राह्मणा इमे । सङ्घेष्विति किम् । एनौ गावौ चरतः । अतरुणेष्विति किम् । वत्सा इमे । बर्करा इमे । कथं नेदं वक्तव्यं लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति । अन्यथा अश्वा इमे इत्येवमादिषु एकशेषेषु अनिष्टं स्त्रीलिङ्गं प्रसज्यत ॥*॥

इत्यभयनन्दिमुनिविरचितायां जैनेन्द्रव्याकरणमहावृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः समाप्तः ॥



## भूवादयो धुः ॥ १ ॥

भू इत्येवमादय. शब्दाः प्रत्येकं धुसञ्ज्ञा भवन्ति । भू एध स्पर्द्ध इत्यादि । धोरित्यधिकृत्य लडादिविधिः कार्यं भवति । एधते स्पर्द्धते । आदिशब्दो व्यवस्थावाची । तेन आणवयत्यादीनां निरासः । अर्थपदोपलक्षितानाञ्च व्यवस्था । ततो धुसमानशब्दानां याचामादिवित्येवमादीनां सर्वनामविकल्पप्रतिषेधस्वर्गादिवाचिनामग्रहणम् । भूशब्द आदिरेषामिति वसे चादय इति प्राप्नोति । नैवम् । भूवादीनां वकारोऽयं लक्षणार्थः प्रयुज्यते । इकोयएभिर्व्यवधानमेकेषामिति संग्रहः । तेन त्रियम्बकं यजामहे वायुवम्बरयोरिवेत्यादि सिद्धम् । भुवो वार्थं वदन्तीति भवतेः सम्पदादिपाठात्क्विप् । भुवं भवनं क्रियां वदन्तीति बहुलवचनाद्ण्यन्तादपि वदेरौणादिके इञि कृते भूवादयः । अस्मिन्पक्षे शिष्टाप्रयोगादाणवयत्यादीनां क्षेपः । भ्वर्था वा वादयः स्मृताः । अथवा वा गतिगन्धनयोरित्यस्मात्पर आदिशब्दः । भुवो वादयो वाच्यवाचकभावसम्बन्धे ता भ्वथ इत्यर्थः । ये तु वकारो मङ्गलार्थ इति पठन्ति । त इदं वाच्याः । यथाधिक्याद्वकारो मङ्गलमतिप्रसङ्गः स्यात् । एतेन तत् ज्ञानं प्रत्युक्तम् । मङ्गलाभिधेयश्च वकारो नाममालादिषु न पठ्यते । वृत्तौ मध्यनिपातश्च चिन्त्यः । धुप्रदेशा धोर्यङ्क्रियासमभिहार इत्येवमादयः ॥

## अकर्मको धिः ॥ २ ॥

अकर्मको धुर्धिसञ्ज्ञो भवति । कर्त्राप्यमित्यादिना लक्षणेन विहितं कर्म तदविवक्षितं वा नास्याकर्मकः । धिप्रदेशा अनोर्द्धेरित्येवमादयः ॥

## कार्यार्थो ऽप्रयोगीत् ॥ ३ ॥

शास्त्रे अन्यस्य कार्यार्थमाश्रीयते प्रयोगे च न श्रूयते यः स इत्सञ्ज्ञो भवति । अइउण् णकारः । ञिमिदा स्नेहने टुनदि समृद्धौ । डुकृञ् करण इत्यादिषु ञिटुडवो ङेङस्यादिषु ङकारः । कार्यार्थ इति किम् । कुलात्खः कुलीनः । परमकुलीन इत्यत्र खकारस्याऽप्रयोगित्वात् खित्यभेर्मुमचइति मुम् प्रसज्येत । अप्रयोगीति किम् । परमकुलीनः । ईनादेशः कार्यमिति मुम् स्यात् । ननु कार्यार्थोऽप्रयोगी च खः कथं नेत्सञ्ज्ञः । उभयविशेषणोपादानात् । अन्यस्य कार्यार्थो भूत्वा योऽप्रयोगीत्यदोषः । अन्वर्था चेयमित्संज्ञा । एति गच्छति नश्यतीत् तेन तस्य लोप इति न वक्तव्यम् । प्रयोगानुसारेणाप्रयोगित्वावगतेः । प्रतिपत्तिगौरवमिति चेदुपदेशेऽजनुनासिकदित्यनुनासिकत्वमपि प्रयोगादेवावसीयत इति समानम् । इत्प्रदेशाष्टिदादिरित्येवमादयः ॥

## यथासंख्यं समाः ॥ ४ ॥

यथासंख्यं यथाक्रमं समाः शिष्यमाणा भवन्ति । यथासंख्यं यावद्यथावत्त्यसादृश्य इति हसः । समास्तुल्याः । तुल्यत्वञ्च द्विष्ठमतः पूर्वोद्दिष्टानामनुद्दिष्टाः समाः ज्ञेयाः। मिप्थस्यतसोऽतंततां प्रथमसंख्यस्य मिपः प्रथमसंख्योऽम् इत्येवमादि योज्यम् । समा इति किम् । सङ्घाङ्कलक्षणघोषेऽअथञिञामण् सङ्घादयश्चत्वारोऽर्था अञादयस्त्रयो वैषम्यात् सङ्घादिषु चतुर्ष्वर्थेस्वञंतादण् भवति । तथा यञन्तादिञन्ताच्च । समशब्दस्य सर्वार्थे युक्तार्थे च सर्वनामसञ्ज्ञोक्ता न तुल्यार्थे ॥

## स्वरितेनाधिकारः ॥ ५ ॥

स्वरितेन लिङ्गेनाधिकारो वेदितव्यः। त्यः परः ङ्याम्मृद इत्येवमादिः। स्वरित इति आचार्यप्रतिज्ञया लिङ्गम्। व्यामिश्रः स्वरित इत्यस्याचो धर्मत्वेन रेरीत्येवमादिषु ह्रस्वसम्भवादग्रहणम्। अधिकारो विनियोगो व्यापार इत्यर्थः। स्वरितेनेति योगविभागाद्यथासंख्यमपि स्वरितेन ज्ञेयम्॥

## ङनुदात्तेतो दः ॥ ६ ॥

ङकारेतोऽनुदात्तेतश्च धोर्द एव भवति। ङितः। षूङ्। सूते। शीङ्। शेते। इङ्। अधीते। अनुदात्तेतः। आस। आस्ते। वस। वस्ते। चक्ष। आचष्टे। चक्षेङित्करणमनर्थकमनुदात्तेत्त्वाद्युच्। विचक्षणः। लः कर्मणि च भावे च धेरिति धोर्लकारा विहिताः। तद्द्वारेण दविधौ मविधौ च प्राप्ते प्रकृतिनियमोऽयम्। ङनुदात्तेतो द एव भवति। दस्त्वनियमः। सोऽन्येभ्योऽपि प्राप्तः। ममिति द्वितीयो नियमः। यत्र मञ्च दश्च प्राप्नोति तत्र ममेव भवति। यदि त्यनियमः स्यात् ङनुदात्तेत एव दो भवति नान्येभ्यस्तदान्यत्र मस्य सिद्धत्वात् ममिति सूत्रमनर्थकं स्यात्। तदारम्भादिष्टावधारणं सिद्धम्। किञ्च त्यनियमे हि ङनुदात्तेतोऽपि मं प्राप्नोति तन्निवृत्तये शेषान्ममिति शेषग्रहणं कुर्यात्। तदकरणं च ज्ञापकं प्रकृतिनियमस्य॥

## ङौ ॥ ७ ॥

ङिरिति भावकर्मणोः सञ्ज्ञा। ङौ द एव भवति। आस्यते भवता। सुप्यते भवता। भावस्यैकत्वं युष्मदस्मदर्थाऽसम्भवश्च। कारकेभ्यः पृथग्भूतो धोरर्थः स्वप्रधा-

नको भावः । एति जीवन्तमानन्द इत्यत्र आनन्दो बाह्य एतेः कर्तृत्वेन विवक्षित इति दो न भवति । कर्मणि । क्रियते कटः । कर्मकर्त्तरि । लूयते केसरः । भिद्यते कुसूलः स्वयमेव । अर्थनियमोऽयम् । दस्तु कर्तर्यपि प्राप्तः स ममित्यनेन नियमेन निवर्त्यते । यदि ङावेव दो भवतीति त्यनियमः स्याद् भावकर्मणोरनियतत्वान्मेऽपि प्राप्ते तन्निवृत्त्यर्थं शेषात् कर्तरि ममित्युच्यते शेषाकरणं ज्ञापकमर्थनियमस्य । एवं प्रकृतिनियमे ऽर्थनियमे च सति ममित्यत्र कर्तृग्रहणं शेषग्रहणञ्च प्रत्याख्यातम् ॥

## कर्तरि ञे ॥ ८ ॥

कर्त्तरि ञार्थे दो भवति । कर्मव्यतिहारे ञ इति ञो विहितस्तत्सहचरितः कर्मव्यतिहारो ञार्थः । कर्मव्यतिहारश्च कर्मग्रहणसामर्थ्यात् क्रियाव्यतिहारः । अन्यस्य कर्तुमिष्टां क्रियां यदान्यः करोति तदिष्टां चेतरस्तदा क्रियाव्यतिहारः । व्यतिलुनीते । व्यतिपुनीते । आरम्भसामर्थ्यात् कर्तर्येव सिद्धे कर्तृग्रहणमुत्तरार्थं न गतिहिंसार्थेभ्य इति । कर्तरि कर्मव्यतिहारे विहितस्य दस्य प्रतिषेधो यथा स्यादिह मा भूत् । व्यतिभूयते सेनया । व्यतिगम्यन्ते ग्रामाः । व्यतिहन्यन्ते दस्यवः । क्रियाव्यतिहार इति किम् । पारिभाषिककर्मव्यतिहारे मा भूत् । देवदत्तस्य धान्यं व्यतिलुनन्ति ॥

## न गतिहिंसार्थेभ्यः ॥ ९ ॥

गत्यर्थेभ्यो हिंसार्थेभ्यश्च धुभ्य ञार्थे दो न भवति । व्यतिगच्छन्ति । व्यतिधावन्ति । हिंसार्थेभ्यः । व्यतिहिंसन्ति । व्यतिभिन्दन्ति । व्यतिच्छिन्दन्ति । व्यतिपिंषन्ति ।

बहुवचननिर्देशो हसादिसंग्रहणार्थः । व्यतिहसन्ति । व्यतिजल्पन्ति । व्यतिपठन्ति । व्यतिकथयन्ति । ह्रुवह्योर-प्रतिषेधो वक्तव्यः । सम्प्रहरन्ते राजानः । व्यतिवहन्ते नद्यः । गतिहिंसयोः प्रतिषेधो गतिहिंसाहेतौ न भवति । व्यतिगमयन्ते । व्यतिभेदयन्ते ॥

## परस्परान्योन्येतरेतरे ॥ १० ॥

परस्पर अन्योन्य इतरेतर इत्येतेषु प्रयुक्तेषु आर्थे दो न भवति । परस्परस्य व्यतिलुनन्ति । अन्योन्यस्य व्यतिलुनन्ति । इतरेतरस्य व्यतिलुनन्ति । व्यतिभ्यां द्योतितेऽपि कर्मव्यतिहारे परस्परादिपदप्रयोगो द्वावपूपौ भक्षयेति यथा । परस्परादिशब्दानां कथं सिद्धिः । द्वित्वप्रकरणे कर्मव्यतिहारे सर्वनाम्नो द्वित्वम् । सर्वञ्च बहुलमिति वक्ष्यति ॥

## निविशः ॥ ११ ॥

नि इति स्वरूपस्य ग्रहणं न निसञ्ज्ञाया । निपूर्वाद्विशो दो भवति । निविशते । निविशेते । निविशन्ते । लावस्थायामडागमः । तद्भक्तो न व्यवधायकः । न्यविशत । समिति संप्राप्तम् । सनिर्देशः समर्थार्थः । सामर्थ्यञ्च योगिना । तेनेह न भवति । मधुनि विशन्ति भ्रमराः । अनर्थकत्वाद्वा ॥

## परिव्यवक्रियः ॥ १२ ॥

परि वि अव इत्येवंपूर्वात् क्रीणातेर्दो भवति । परिक्रीणीते । विक्रीणीते । अवक्रीणीते । अकर्त्रभिप्राये फले विधिरयम् । अनर्थकत्वादिह न भवति उपरि क्रीणाति । गवि क्रीणाति । अपचाव क्रीणीवः । क्री इति अनुकर-

णम् । अनुकार्येणार्थवत्त्वान्मृत्वे सति स्वादिविधिः । प्रकृतिवदनुकरणमिति धुत्वातिदेशादियादेशः । उत्तरत्र जेरिति निर्देशात् वत्करणादपि स्वाश्रयोऽपि क्वचिदेव ॥

विपराजेः ॥ १३ ॥

वि परा इत्येवंपूर्वाज्जयतेर्दो भवति । विजयते । पराजयते । अत्रापि सनिर्देशः समर्थस्य गेर्ग्रहणार्थः । तेनेह न भवति । बहु विजयति वनम् । परा जयति सेना ॥

आङो दो ऽव्यसने ॥ १४ ॥

व्यसनं कसनं विवरणं वा । अन्येषां दारूपाणां व्यसने वृत्तिर्नास्ति । आङ्पूर्वाद्ददातेरव्यसनेऽर्थे दो भवति । विद्यामादत्ते । अकर्त्राप्ये फले प्रापणार्थमिदम् । अव्यसनमिति किम् । आस्यं व्याददाति । पिलकं व्याददाति । विपादिकां व्याददाति । स्वाङ्गकर्मकादिति वक्तव्यम् । इह मा भूत् । व्याददते पिपीलिकाः पतङ्गमुखम् । यद्यकर्त्राप्ये फले प्राप्तस्याव्यसन इति प्रतिषेधः कर्त्राप्ये फले व्यसने दः प्राप्नोति । नैवम् । अव्यसन इति योगविभागाद् येन केनचित्प्राप्तस्य प्रतिषेधः । आङिति ङित्करणं किम् । आ ददात्यसौ भिक्षामिदानीमहमस्मार्षम् । आङिति योगविभागः । तेन स्थः प्रतिज्ञाने दो भवति । अनित्यं शब्दमातिष्ठन्ते । गमयतेः कालहरणे । आगमयस्व तावद्देवदत्त । नुप्रच्छिभ्याञ्च । आनुते शृगालः । आपृच्छते गुरुमिति सिद्धम् ॥

क्रीडो ऽनुपर्याङः ॥ १५ ॥

अनुपरि आङ इत्येवंपूर्वात् क्रीडो दो भवति ॥ अनुक्रीडते । परिक्रीडते । आक्रीडते । गिसाहचर्यादनो

गैरेव ग्रहणादिह न भवति । माणवकमनु क्रीडति । माणवकेन सहेत्यर्थः । भार्थ इत्यनुना योग इप् गितिसञ्ज्ञाप्रतिषेधश्च । शिक्षेर्जिज्ञासायां दो वक्तव्यः । शकेः सन्नन्तस्येदं ग्रहणम् । विद्यासु शिक्षते । धनुषि शिक्षते । कर्मविवक्षायां शिक्षां चक्रे । हरतेर्गतिताच्छील्ये । पैतृकमश्वा अनुहरन्ते मातृकं गावः । मातुरागतं ऋतष्ठणिति ठण । गतिताच्छील्य इति किम् । मातरमनुहरन्ति । शप उपलम्भन इति च वक्तव्यम् । वाचा शरीरस्पर्शनमुपलम्भः । देवदत्ताय शपते । उपलम्भन इति किम् । शपति ॥

## समो ऽकूजे ॥ १६ ॥

सम्पूर्वात् क्रीडो ऽकूजेऽर्थे दो भवति । संक्रीडते । संक्रीडेते । संक्रीडन्ते । अकूज इति किम् । संक्रीडन्ति शकटानि । अव्यक्तं शब्दं कुर्वन्तीत्यर्थः ॥

## स्थो ऽवविप्राच्च ॥ १७ ॥

अव विप्र इत्येवंपूर्वात् सम्पूर्वाच्च तिष्ठतेर्दो भवति। अवतिष्ठते । वितिष्ठते । प्रतिष्ठते । सन्तिष्ठते ॥

## ज्ञीप्सास्थेयोक्तौ ॥ १८ ॥

परपरितोषार्थमात्मरूपादिप्रकाशनं ज्ञीप्सा । स्थीयते ऽस्मिन् निर्णयरूपेणेति स्थेयः । बहुलवचनादधिकरणे यः । ज्ञीप्सायां स्थेयोक्तौ च तिष्ठतेर्दो भवति । ज्ञीप्सायाम् । तिष्ठते कन्या । छात्रेभ्यस्तिष्ठते ब्राह्मणी । छात्रेभ्यः स्वाभिप्रायप्रकाशनेनात्मानं रोचयतीत्यर्थः । ज्ञीप्सनक्रियया कर्मव्यपदेशभाजां छात्राणामुपेयत्वात् संप्रदानत्वम् । स्थेयोक्तौ । देवदत्ते तिष्ठते । त्वयि तिष्ठते । मयि तिष्ठते । संशयान्निश्चयं करोतीत्यर्थः ।

श्रुतश्रुत्यर्थो ग्राह्यः किन्तु ब्रह्म सुतरामसर्वात्मकंमतो न तदन्यज्ज्ञातव्यमस्तीत्येवकारार्थो ग्राह्य इत्यर्थः। अन्यथा तत्परश्रुतिविरोधश्चेत्याह । उदाहृतेति ॥

"[१]ब्रह्मवा इदम"इति वाक्ये ब्रह्मशब्देन वस्तुतो ब्रह्मणो जीवस्याभिधानात्तस्य स्वविषयान्तःकरणवृत्तिमत्वाद्यथाश्रुते ऽपि न विरोध इत्याह । अथवेति ।

(तदात्मानमेवावेदित्यस्या यथार्थत्वे ऽपि न विरोध) अथवा वस्तुवृत्त्यपेक्षया जीव एव ब्रह्मशब्देनोच्यते । तस्य च वृत्तिविषयत्वात्तदात्मानमेवावेदिति विरोधः ।

तस्मात्

विज्ञातारमरे केन विजानीयादिति स्फुटम् ।
श्रुतिसाटोपमाहस्म तन्मे मतमिदं शुभम् ॥

अतो नाहङ्कारसमवेतं ज्ञानं स्वप्रकाशमिति । एवमप्यन्यज्ञानधाराकालीनज्ञातुरनुसन्धानार्थं तद्धर्मातिरिक्तं ज्ञानान्तरं स्वीकर्तव्यम् । घटज्ञानधाराकाले ज्ञातृविषयानेकज्ञानस्वीकारे तस्यैवावकाश इति घटज्ञानधाराविच्छेदप्रसङ्गात् । अनङ्गीकारे वा एतावन्तं कालं जानन्नेवाहमासमित्यनुसन्धानानुपपत्तिः। रूपादिहीनस्यात्मनश्चाक्षुषज्ञानादिविषयत्वानुपप-

१ बृहदारण्यकोपनिषदि । १ प्र० । ४ ब्रा० । ११ कं ।

त्तेः । न च विषयज्ञानाश्रयतयात्मा प्रकाशत इति युक्तम् । मामहं जानामीति तस्य विषयत्वानुभवात् । आत्मा न चाक्षुषज्ञानजन्यव्यवहारगोचरः, तदविषयत्वात्, स्पर्शवत् । न च ज्ञानानाश्रयत्वमुपाधिः । व्यवहारं प्रति ज्ञानाश्रयत्वस्येव तदभावे तदभावस्याप्यप्रयोजकत्वात् ॥

श्रुतिन्यायाभ्यामविषयप्रकाशात्मकमात्मतत्त्वं वैदिकैरभ्युपेयमित्युपसंहरति श्लोकेन। तस्मादिति। साटोपम्। साक्षेपम् । जन्यज्ञानस्य विषयत्वानुभवात् स्वविषयत्वस्य चासम्भवान्न तस्य स्वप्रकाशत्वमिति नित्यसाक्ष्यभावे धारानुसन्धानानुपपत्तिरिति परमप्रकृतमुपसंहरति। अत इति। जन्यज्ञानस्य स्वप्रकाशत्वमङ्गीकृत्यापि धाराकालीनज्ञातुरनुसन्धानाय तत्साक्षिरूपनित्यप्रकाशोऽङ्गीकर्त्तव्य इत्याह। एवमपीति। घटज्ञानधारा च ज्ञातापि विषय इत्याशङ्क्याह। रूपादीति। चाक्षुषज्ञानविषयतया प्रकाशमानस्य द्रव्यस्यैव रूपादिमत्त्वनियम इति ज्ञातुराश्रयतया प्रकाशमानत्वमविरुद्धमित्याशङ्क्य तस्य तद्विषयत्वमप्यनुभूयत इत्याह। न च विषयेति। ननु मां जानामीति व्यवहारमात्रं न त्वयमनुभव इत्याशङ्क्य तस्य तद्विषयत्वाभावे तद्विषयव्यवहार एव न सम्भवतीत्याह। आत्मेति। स्पर्शस्य तज्जन्यव्यवहाराविषयत्वे तदनाश्रयत्वमेव प्रयोजकं न तु तदविषयत्वमित्याशङ्क्याह। न चेति। यदि व्यवहारविषयत्वे ज्ञानाश्रयत्वं प्रयोजकं स्यात्तर्हि तदभावे तदभावः

प्रयोजकः स्यान्न च तदस्ति ज्ञानानाश्रयस्यापि रूपादेर्व्यवहारविषयत्वादित्यभिप्रेत्याह । व्यवहारम्प्रतीति ॥

ज्ञानाश्रतयात्मा प्रकाशत इत्येतदेव दुर्निरूपमित्याह । किञ्चेति ।

(ज्ञानाश्रयत्वेनात्मप्रकाशस्य दुर्निरूपत्वम् )

**किञ्च विषयज्ञानाश्रयतयाहमर्थप्रकाश इति पक्षे किं विषयज्ञानाधीनोऽहमर्थप्रकाशोऽन्यः स एव वा । नाद्यः तस्य निर्विषयत्वे ज्ञानत्वानुपपत्तेः । सविषयत्वे वा तस्यात्मविषयत्वापत्तेः। द्वितीयेऽहमर्थो विषयो विषयज्ञानञ्चेत्येतन्त्रितयातिरिक्ताहमर्थप्रकाशाभावात्। तस्य चाबालपण्डितमविशिष्टत्वात् । बालानामिव पण्डितानामपि व्यतिरिक्तात्मनिश्चयाभावेन परलोकार्थप्रवृत्त्यनुपपत्तेः । ननु रूपादिज्ञानमात्मव्यवहारमात्रे हेतुः, तच्च पण्डितापण्डितसाधारणमात्मनो देहादिव्यत्तिरिक्तत्वज्ञानं देहादिव्यतिरिक्तात्मव्यवहारहेतुः, तच्च पण्डितानामेवास्तीति चेत् । न, अहं देहव्यतिरिक्त इति ज्ञानस्य तद्धर्मात्माऽविषयत्वे देहव्यतिरिक्तत्वस्यात्मधर्मत्वासिद्धेः । देहव्यतिरिक्त आत्मेति व्यवहारश्च न स्यात् । एवमहं सुखीत्यादि-**

बुद्धेरप्यात्माविषयत्वे तेषामपि तद्धर्मत्वं न सिध्येत् । न च देहव्यतिरिक्तो ज्ञानाश्रय इति ज्ञानाज्ज्ञानाश्रयस्य देहव्यतिरिक्तत्वसिद्धिरिति वाच्यम् । देहव्यतिरिक्तत्वसमानाधिकरणज्ञानाश्रयत्वज्ञानस्याहमर्थाविषयत्वे ऽहमर्थस्य तदुभयधर्मित्वासिद्धेः । अहमर्थाविषयानुभवेन देहव्यतिरिक्तत्वज्ञानाश्रयत्वयोः समानाधिकरणत्वासिद्धेश्च । अहमर्थस्यैव तदधिकरणत्वात् ॥

आद्ये ऽपि किं सविषयो निर्विषयो वा । द्वितीयं दूषयति । तस्येति । आद्ये ऽन्यस्य विषयस्याभावादात्मनो विषयत्वं स्यादित्याह । सविषयत्व इति । अनात्मज्ञानव्यतिरेकेणात्मज्ञानाभावे पण्डितमूर्खवैषम्यं न स्यादित्याह । द्वितीय इति । ज्ञानविशेषात् पण्डितानां व्यवहारविशेष इति शङ्कते । नन्विति । देहादिव्यतिरिक्तत्वज्ञानमिति । देहः स्वव्यतिरिक्तद्रष्टृकः दृश्यत्वादित्याद्यनुमानादिजन्यमित्यर्थः । किमात्मा परोक्षज्ञानस्याप्यविषय उत प्रत्यक्षज्ञानस्यैव । आद्ये देहव्यतिरिक्तस्योक्तानुमानादात्मधर्मत्वासिद्धेस्तद्व्यतिरेकमात्रस्य मूर्खाणामपि घटादौ प्रसिद्धत्वादित्यभिप्रेत्य दूषयति । न, अहं देहेति । आत्मनि तद्वैशिष्ट्यस्याज्ञातत्वात्तद्व्यवहारो ऽपि न स्यादित्याह । देहेति । किं च दुःखविशिष्टज्ञानाविषयस्यात्मनो घटादिवत्तद्धर्मित्वं न सिद्ध्यतीत्याह । एवमिति । ननु पण्डितानां देहव्यतिरिक्तत्वसामानाधिकरण्यप्रत्ययो विशेष इत्यत आह । न च देहेति ।

अधिकरणस्याविषयत्वे धर्मयोरपि सामानाधिकरण्यं न सिध्यतीत्याह । अहमर्थाविषयेति ॥

देहव्यतिरिक्तत्वविषयकज्ञानाश्रयत्वमात्रेण तद्धर्मित्वसिद्धिरित्याशङ्क्याह । तथा चेति ।

(अहमर्थस्य केवलं ज्ञानाश्रयत्वेन तद्धर्मित्वसिद्धिपरिहारः) **तथा चारूपस्याहमर्थस्य रूपज्ञानाश्रयत्ववद्देहादिव्यतिरिक्तत्वज्ञानाश्रयत्वोपपत्तेर्न बालपण्डितयोर्विशेषः स्यात् । प्रत्यभिज्ञागोचरत्वाभावे ऽहमर्थस्य स्थायित्वासिद्धेश्च । तत्कालमात्रावच्छिन्नस्य प्रत्यभिज्ञाश्रयत्वेन पूर्वकालावच्छिन्नात्माभेदस्य ततोऽसिद्धेः । न च प्रत्यभिज्ञया आत्मैक्यसिद्धिरिति न ब्रूमः किं तु स्मर्तृत्वानुपपत्त्यैव, अन्याश्रयानुभवादन्यस्य स्मृत्यनुपपत्तेरिति वाच्यम् । अनुपपत्तिकज्ञानस्याप्यात्माऽगोचरत्वे ऽनुभवितृस्मर्त्रैकत्वासिद्धेः । तत्कालमात्रस्यैव तदाश्रयत्वात् । एवं कर्त्रभेदं विना भोक्तृत्वानुपपत्तिरपि नाभेदसाधिका । नन्वर्थस्य ज्ञाने प्रतीयमानत्वं ज्ञानप्रयुक्ताज्ञानसंशयाद्यगोचरत्वं, तच्च घटादेर्विषयत्वप्रयुक्तं ज्ञानस्य स्वतः, आत्मनस्तदाश्रयत्वप्रयुक्तमिति विशिष्टज्ञाने आत्मापि प्रतीयते । अत एवात्मा ज्ञानाश्रयत्वदेहव्यतिरिक्त-**

त्वसामानाधिकरण्यविषयज्ञाने ऽपि प्रतीयत इति तयोः सामानाधिकरण्यधीरिति पण्डितानां विशेष इति चेत् । न ज्ञानव्यतिरिक्तस्य ज्ञानप्रयुक्ताज्ञानाद्यगोचरत्वे ऽनुगतज्ञानविषयत्वं प्रयोजकं न तु क्वचिज्ज्ञानविषयत्वं क्वचित्तदाश्रयत्वमनुगतप्रयोजके सम्भवत्यननुगतस्याप्रयोजकत्वात् ॥

यथात्मनो रूपज्ञानाश्रयत्वज्ञानमात्रेण न रूपित्व तत्कस्य हेतोः, तद्वत्तयाऽविषयीकृतत्वादेवं देहव्यतिरिक्तत्वज्ञानाश्रयत्वे ऽपि तद्वत्त्वं न सिध्यतीत्यर्थः । किञ्च तवमत आत्मनः स्थायित्वं किं प्रत्यभिज्ञया सिध्यति उत स्मर्तृत्वानुपपत्त्या आहो भोक्तृत्वानुपपत्त्या । आद्ये ऽपि किं तद्विषयत्वेन तदाश्रयतया वा । नाद्यः विषयत्वानङ्गीकारादित्याह । प्रत्यभिज्ञेति । द्वितीयं दूषयति । तत्कालमात्रेति । द्वितीयमनूद्य दूषयति । न च प्रत्यभिज्ञयेति । अत्रापि किमनुपपत्तिजन्यज्ञानस्य विषयतया स्थायित्वसिद्धिरुताश्रयतया । नोभयथापीत्याह । अनुपपत्तिकेति । उक्तदोषं तृतीये ऽप्यतिदिशति । एवमिति । ननु विशिष्टज्ञानविषयत्वाभावे ऽपि तत्र प्रतीयमानत्वमात्रेण धर्मधर्मिभावसिद्धिः । प्रतीयमानत्वं च विषयत्वादन्यदेवेत्याह । नन्वर्थस्येति । ज्ञानप्रयुक्तेति । ज्ञानाधीनाज्ञानसंशयाद्यभाववत्वमित्यर्थः । अज्ञानं चात्रविशेषादर्शनम् । अत्रानुगतं प्रयोजकमाह । तच्चेति । आत्मनः प्रतीयमानत्वा-

भिधानफलमाह । अत एवेति । विषयत्वाभाव एतदेव प्रतीयमानत्वं सम्भवतीति दूषयति । नेति । यत्प्रकारकज्ञानं तत्प्रकारकसंशयाद्यगोचरत्वं तद्विषयस्यैव । अन्यथा रूपादिप्रकारकज्ञानाश्रयतया रूपित्वादिसंशयाद्यगोचरत्वप्रसङ्ग इति भावः । किं चानुगतमप्यनुपपन्नमिति दोषोऽपीत्याह । ज्ञानव्यतिरिक्तस्येति ॥

इदानीं स्वमतानुसारेण स्वप्रकाशसंविदाश्रयत्वं निराकुर्वन् तेन रूपेणाहमर्थस्य संशयाद्यगोचरत्वमप्यनुपपन्नमित्यभिप्रायेणाह । किञ्चाहमिति ।

(स्वप्रकाशसंविदाश्रयत्वनिराकरणम्)

किञ्चाहमिति व्यवह्रियमाणो ज्ञानाश्रयो घटादिवल्लिङ्गाद्यननुसन्धानेऽपि व्यवह्रियमाणत्वादपरोक्ष इति तावत्सुप्रसिद्धम् । अपरोक्षत्वं चार्थस्य संविदभिन्नत्वम् । न च संविदतिरिक्तस्याहमर्थस्य संविदभिन्नत्वं वास्तवं भवति । ततः संविदि कल्पितोऽहमर्थो न संविदाश्रय इति विषयत्वप्रयुक्तमेव घटादिवत्तस्य संविदि भासमानत्वमिति । अस्तु तर्ह्यहमर्थस्य परोक्षज्ञानविषयत्वमिति चेन्न । एवमपि प्रत्यक्षकाल आत्मनः प्रकाशानुपपत्तेः । अहं सुखीत्यादिविशिष्टानुभवाद्विशिष्टज्ञानस्य विशेष्यविषयत्वनियमाच्च । प्रत्यक्षस्याप्यहमर्थविषयत्वात् । प्रत्यक्षविषयत्वे चाहमर्थस्य घटादिवदनात्म-

त्वापादनम् । परोक्षज्ञानविषयत्वे ऽपि परमाणवादावहमर्थे इति न वैशेषिकादिमतात्मन्युक्तदूषणानिस्तार इति । किञ्च गुरुमते प्येकविषयज्ञानधारानन्तरमेतावन्तं कालमिदमन्वभूमिति वदेतावन्तं कलं नेतः परमद्राक्षमितोतरज्ञानाभावानुसन्धानं सर्वानुभवसिद्धमनुपपन्नम्। घटज्ञानधाराकाले तदितरज्ञानाभावानुभवासम्भवात् ॥

भवतु तर्हि संविदाश्रयतयैवापरोक्ष्यमित्यत आह । अपरोक्षत्वं चेति । एतच्च शाब्द परोक्षवादे निपुणतरमुपपादयिष्यत इति भावः । इदं च न तव मते सम्भवतीत्याह । न चेति । इदानीं प्रत्यक्षज्ञानस्यैवाविषय इति द्वितीयं पक्षं शङ्कते । अस्तु तर्हीति । तथा च तत एव स्थायित्वदेहव्यतिरिक्तत्वादिसिद्धिरिति परेषामाशयः । आत्मनः प्रत्यक्षज्ञानविषयत्वे योनात्मत्वापातदोषः स परोक्षज्ञानविषयःत्वे ऽपि तुल्यः । तदभावमङ्गीकृत्यापि किं परोक्षज्ञानेनैवात्मप्रकाश उत प्रत्यक्षज्ञानेनापि । प्रथमे घटादिप्रत्यक्षकाले तत्प्रकाशानुपपत्तिरित्याह । न, एवमपीति । विषयतया प्रकाशः परोक्षज्ञानेनैवेत्याह । अहं सुखीति । ततः किमित्यत आह । विशिष्टज्ञानस्येति । द्वितीये किं प्रत्यक्षज्ञानस्यापि विषय उत न । आद्ये न विवादः । द्वितीयमङ्गीकारपरित्यागेन दूषयति । प्रत्यक्षविषयत्व इति । अहमर्थः स्वविषयज्ञानजनकः प्रत्यक्षयोग्यत्वे सतीन्द्रियसंयुक्तत्वाद्घटवदिति वैशेषिकादिमतमवलम्ब्याह । प्रत्यक्षेति । गुरुमते

ऽप्यात्मनो विषयत्वसाधनफलमाह । तस्मादिति । त्रिपुटीप्रत्यक्षमङ्गीकृत्यापि घटधाराकालीनतदितरज्ञानाभावस्यानुसन्धानं तन्मते ऽनुपपन्नमित्याह । किञ्चेति ॥

नेतः परमद्राक्षमिति न स्मृतिः येन तदनुभवस्तत्काले ऽन्यः सिध्येत्, किन्तु स्मर्यमाणघटज्ञानेन तदितरज्ञानाभावानुमितिरित्याशङ्क्याह । न च नेदमिति ।

( नेतः परमद्राक्षमिन्यस्यानुमितित्वखण्डनम् ) न च नेदमनुसन्धानं किन्तु तत्कालीनज्ञानाभावस्यानुमितिरिति वाच्यम् । एकज्ञानाभावेन व्याप्तिनिश्चयं विनापि तद्दर्शनात् । घटादिविषयज्ञानानुसन्धानशून्यस्यापि तत्काल एतावन्तं कालं पटं नान्वभूवमिति तज्ज्ञानाभावानुसन्धानदर्शनात् । तस्मादहमर्थतद्वृत्तितदभावसाक्षिभूतमहङ्कारसमवेतघटादिविषयज्ञानातिरिक्तं ज्ञानान्तरमभ्युपेयमिति सिद्धम् । नन्वेवं तदेव ज्ञानमस्तु किमहङ्कारसमवेतवृत्त्या, तत एवानुसन्धानवन्निखिलव्यवहारोपपत्तेरिति चेत् । किं प्रयोजनाभावेन वृत्तिज्ञानमाक्षिपसि, किं वा प्रमाणाभावेन, अथवा प्रमितस्य तस्य प्रयोजनं पृच्छसि । नाद्यः ज्ञानामीत्यनुभवसिद्धस्यापन्हवायोगात् । न हि प्रयोजनाभावेनानुभवसिद्धं प्रत्याख्यातुं शक्यते ।

अत एव न द्वितीयः। जानामीत्यनुभवस्य सर्वानुभवसिद्धत्वात् । अनुभवस्य स्वविषयताया निरस्तत्वात्। अनुभवान्यस्य तद्विषयस्य परिशेषाद्वृत्तित्वात् । तृतीये क्वचिदविद्यानिवृत्तिः क्वचिद्व्यवहारः प्रयोजनम् ॥

व्याप्तिनिश्चयं विनापीति । समूहालम्बनज्ञाने व्यभिचारादिति भावः। लिङ्गज्ञानाभावे ऽपि जायमानत्वान्नानुमितिरित्याह। घटादीति। परमते धाराद्यनुसन्धानानुपपत्तेस्तत्प्रयोजकः स्वतन्त्रो ऽनुभवसिद्ध इत्युपसंहरति। तस्मादिति । साधितं स्वतन्त्रमनुभवमङ्गीकृत्याहमर्थधर्ममनित्यज्ञानमाक्षिपति । नन्वेवमिति । आक्षेपबीजं विकल्पयति । किं प्रयोजनेति । प्रयोजनशून्यस्याप्युपेक्षणीयविषयस्य बहुलमुपलम्भान्न प्रथम इत्याह । नाद्य इति। अनुभूयमानत्वात्प्रमाणाभावो ऽसिद्ध इत्याह। अत एवेति। नन्वत्र साधितानुभवविषयतया प्रतीयत इत्यत आह । अनुभवस्येति। तर्हीच्छादिरेव तद्विषय इत्याशङ्क्य तस्य ज्ञानत्वप्रकारकानुभवागोचरत्वाद्वृत्तिरेवेत्याह। परिशेषादिति । प्रयोजनप्रश्नपक्षे अपरोक्षवृत्तेरविद्यानिवृत्तिः प्रयोजनं परोक्षवृत्तेर्व्यवहार एवेत्याह। तृतीय इति।

अपरोक्षवृत्तिप्रयोजनमाक्षिपति। नन्विति।

(अपरोक्षवृत्तिप्रयोजनाक्षेपः) ननु चैतन्यमविद्यां निवर्तयतु किमनया वृत्त्या, तस्याः प्रकाशानिवर्त्यत्वात्। वृत्तेश्चाप्रकाशत्वात्। यदि चैतन्यस्याविद्यानिव-

र्तकत्वे तस्याः नित्यनिवृत्तिप्रसङ्गेनाज्ञानमेव न स्यात्। तर्हि मा भूदज्ञानं किन्नश्छिन्नमिति चेत्। मा भूत्तावदज्ञानमिति मा भाषिष्ठाः घटमहं न जानाम्यहमज्ञ इत्याद्यनुभवसिद्धत्वात्तस्य। विभागप्रक्रियायां चैतन्निपुणतरमुपपादयिष्यामः। न च वृत्तेः स्वनिवृत्तावनुपयोगः। व्यासङ्गदशायां सत्यपि चक्षुषः सम्प्रयोगे सति च नित्यानुभवे साक्षिण्यन्तःकरणवृत्तिव्यतिरेकेण घटाद्यज्ञाननिवृत्त्यदर्शनात्। तस्यां च सत्यां तत्रैव तद्दर्शनात्। नन्वनुभवातिरिक्तवृत्तेः स्फुटतरप्रत्यक्षावेद्यत्वेन तस्या नान्वयादिज्ञानं सम्भवति। कार्यानुरोधेन तु कारणकल्पनायां मनस इन्द्रियसम्बन्ध एव कल्प्यताम्। न चाधिकरणः सोऽज्ञाननिवर्तको न भवतीति वाच्यम्। समनस्केन्द्रियसन्निकर्षस्यैवार्थगतस्याज्ञाननिवर्तकत्वात्। न च वृत्तिनिराकरणे समनस्केन्द्रियसन्निकर्ष एव न सिध्यति तस्य वृत्त्यैककल्प्यत्वादिति वाच्यम्। अविद्यानिवृत्त्यैव तत्कल्पनासम्भवात्। न च ज्ञानैकनिवर्त्यस्याज्ञानस्य कथमिन्द्रियसंयोगनिवर्त्यत्वमिति वाच्यम्।

**तस्य वृत्तिवर्त्त्यत्वपक्षे ऽपि तुल्यत्वात् । भवन्मते चैतन्यस्यैव ज्ञानत्वात् । न च चैतन्यमेवाज्ञाननिवर्त्तकं वृत्तिस्तत्र सहकारिणीति वाच्यम् । इन्द्रियसम्प्रयोगे ऽपि तस्य तुल्यत्वात् । ज्ञानेनाज्ञानं निवृत्तमित्यनुभवस्य मतद्वये ऽपि तुल्यत्वात् ॥**

निवृत्तेर्जडतया विद्यासमानस्वभावत्वात्तस्या न ततो निवृत्तिरित्याह । तस्या इति । चैतन्यस्यानादित्वात्तन्मात्रनिवर्त्यत्वे अविद्यैव न स्यादित्याशङ्क्येष्टापत्तिरित्याह पूर्ववादी । यदीति । भावरूपस्याज्ञानस्यानेकप्रमाणसिद्धत्वान्न तदपह्नवःशक्यो वक्तुमित्याह । मा भूदिति । अहमज्ञ इत्यनुभवस्य ज्ञानाभावविषयतयान्यथासिद्धिरित्याशङ्क्याह । विभागप्रक्रियायामिति । जीवपरभेदनिरूपणपरे द्वितीयपरिच्छेद इत्यर्थः । अविद्यायाः प्रकाशनिवर्त्यत्वाद्वृत्तेरनुपयोग इत्याशङ्क्य तस्या अपि तत्रान्वयव्यतिरेकबलात्सहकारित्वमस्तीत्याह । न च वृत्तेरिति । नन्वर्थप्रकाशाद्भेदेन वृत्तेः स्फुटतरप्रत्यक्षागोचरत्वादन्यथा तत्र वादिविप्रतिपत्त्यभावप्रसङ्गात्तस्या विशिष्य नान्वयादिग्रह इति चोदयति । नन्वनुभवेति । ननु व्यासङ्गदशायामविद्यानिवृत्तिलक्षणकार्याभावः कारणाभावप्रयुक्तो वाच्यः । चक्षुः संयोगादेश्च सत्त्वात्तद्व्यतिरिक्तकारणाभावो वृत्त्यभाव एव । तथा च वृत्तेः कारणत्वसिद्धिरिति नेत्याह । कार्यानुरोधेनेति । नन्विन्द्रियमनःसंयोगस्य तदुभयनिष्ठत्वात्ततः कथं विषयचैतन्यस्यावि-

ध्यानिवृत्तिरित्यत आह । न च व्यधिकरण इति । ननु समनस्केन्द्रियसम्प्रयोगस्याप्रत्यक्षतया तत्कल्पिका वृत्तिरभ्युपेयेति नेत्याह । न च वृत्तिनिराकरण इति । अज्ञानमिति । ज्ञानविरोधित्वेन प्रतीयमानस्य कथं ज्ञानान्यसम्प्रयोगनिवर्त्यत्वमित्याशङ्क्य तर्हि वृत्तिनिवर्त्यत्वमप्यनुपपन्नमित्याह । न च ज्ञानैकेति । ज्ञानस्यैवाज्ञान निवृत्तौ कारणत्वादवृत्तेरप्युपकरणत्वान्न ज्ञानत्वविरोध इत्याशङ्क्य सम्प्रयोगस्याप्युपकारकत्वात्तुल्यमित्याह । न च चैतन्यमिति । वृत्तेरप्यज्ञानत्वादनुभवविरोधस्तवापि सम इत्याह । ज्ञानेनाज्ञानमिति ॥

ननु परोक्षे विषये स्फुरणाभावात्तद्व्यवहारार्थं वृत्तिरभ्युपेयेति नेत्याह । एव मन्यदपीति ।

**एवमन्यदपि वृत्तिकार्यं तया विनैव निर्वाह्यम् । न च जानामीत्यनुभवसिद्धावृत्तिर्न प्रत्याख्यानमर्हतीति वाच्यम् । असत्युपयोगे जानामीत्यस्य स्वप्रकाशानुभवगोचरव्यवहारमात्रत्वादिति चेत् ।**

(वृत्त्यभावेऽपि तत्कार्यनिर्वाहः)

**उच्यते, अनुगतकार्यं ह्यनुगतमेव कारणमन्वयव्यतिरेकाभ्यां निरूप्यते । तच्चानुगतरूपं चक्षुःसम्प्रयोगादिषु न सम्भवति प्रत्येकं तेषा मननुगतत्वात् । न चेन्द्रियसंयोगत्वमनुगतम् । तस्य व्यासङ्गकालीनेन्द्रियसम्प्रयोगेऽपि**

गतत्वात् । अतिप्रसक्तस्य कारणतानवच्छेदकत्वात् । न च समनस्केन्द्रियसम्प्रयोगत्वमनुगतम् । तथा मनसः सहकारिणस्तत्कार्यनिरूपितकारणतानवच्छेदकत्वात् । असहकार्येव तत्र मन इति चेत् । न व्यासङ्गादौ स्वतन्त्रान्वयव्यतिरेकवतस्तस्य कारणत्वनियमात् । अन्यथा दण्डादिसहितमृदादिः कारणमित्यसहकारि विश्वं स्यात् ॥

वृत्तिमात्रस्याप्रकाशत्वेन व्यवहारस्य ततोऽसिद्धेस्तद्व्यतिरिक्तश्चित्प्रकाशोऽपि वाच्यः । तथाच वृत्तिरूपोऽनुगतधर्मो मुधेति भावः । ननु प्रयोजनशून्यस्यापि वस्तुनो दर्शनादनुभवसिद्धावृत्तिर्नापन्हवमर्हतीत्युक्तमिति तत्राह । न च जानमीति । काष्ठलोष्ठादेरपि यं कंचन जन्तुम्प्रति पुरुषार्थपर्यवसायित्वात्सर्वथाप्रयोजनशून्यस्यानुभव एव न सम्भवतीत्यर्थः ।

अविद्यानिवृत्तित्वरूपानुगतधर्मावच्छिन्ने कार्येऽनुगतधर्मावछिन्नं कारणं वक्तव्यमन्यथा कार्यकारणभावस्य दुर्ग्रहत्वात् । तच्च वृत्तिव्यतिरेकेण न सम्भवतीति सिद्धान्तयति । उच्यत इति । ननु चक्षुरादिसम्प्रयोगे इन्द्रियसंयोगत्वमनुगतरूपमित्याशङ्क्य तदवच्छिन्ने सत्यपि कार्यादर्शनान्न तस्य कारणतावच्छेदकत्वमित्याह । न चेन्द्रियेति । तर्हि समनस्केन्द्रियसम्प्रयोगत्वमव्यभिचारात्कारणतावच्छेद मित्याशङ्क्य किं मनसोऽपि तत्र सह-

कारित्वमुत न । आद्ये तस्येतरकारणतावच्छेदकमध्ये ऽनुप्रवेशो न युक्त इत्याह । न च समनस्केति । तथेति । अवच्छेदकमित्यर्थः । अनवच्छेदकत्वादिति । अन्यथा दण्डत्वादिवत्तत्राकारणत्वापातादित्यर्थः । द्वितीयपक्षं शङ्कते । असहकारीति । इन्द्रियसंयोगे सत्यपि तद्व्यतिरेके कार्यव्यतिरेकदर्शनात्तस्य सहकारित्वमावश्यकमित्याह । न व्यासङ्गेति । सहकारिणोऽप्यवच्छेदकत्वे कार्यमात्रमेककारणकं स्यादित्याह । अन्यथेति ॥

नन्वविद्यानिवृत्तिकार्ये वाह्येन्द्रियसंयोगस्त्वत्वेन कारणं मनश्च मनस्त्वेन कारणम् । तथा च व्यासङ्गदशायां मनोऽव्यापाराभावादेव कार्यविरह इति चोदयति । अस्तु तर्हीति ।

(व्यासङ्गदशायां मनो व्यापाराभावात्कार्यविरहोपपादनखण्डने) अस्तु तर्हि वाह्येन्द्रियसम्प्रयोगत्वेनेन्द्रियसम्प्रयोगस्तत्र कारणं मनसः सहकारिणो विरहाद्व्यासङ्गे ऽविद्यानिवृत्तिविरह इति चेत् । न, आत्माविद्यानिवृत्तिस्थले तदसम्भवात् । अथ यथा वाह्यप्रत्यक्षे मनस इन्द्रियसहकारित्वमात्मप्रत्यक्षे तु तदेव हेतुः । एवं वाह्याविद्यानिवृत्तौ मनो वहिरिन्द्रियसहकारि, आत्माविद्यानिवृत्तौ तु तदेव हेतुरिति चेत् । न, अनुगतहेतौ सम्भवत्यननुगतस्याहेतुत्वात् । किञ्च जन्मज्ञाना-

**नभ्युपगमे इन्द्रियत्वमेव दुर्निरूपं तस्य तद्घटित-शरीरत्वात् । न चाविद्यानिवृत्त्यैव तन्निरूप्यते तेन रूपेण तस्य तज्जनकत्वानुपपत्तेः । तत्सम्प्रयोगस्याप्यैकस्य दुर्निरूपत्वाच्च ॥**

तत्र किमविद्यानिवृत्तिमात्रे वाह्येन्द्रियसम्प्रयोगः कारणमुत वाह्याविद्यानिवृत्तावेव । आद्ये व्यतिरेकव्यभिचारमाह । न, आत्माविद्येति । द्वितीयकल्प आत्माविद्यानिवृत्तेराकस्मिकत्वशङ्काव्युदासाय हेतुं प्रदर्शयन् तं पक्षमनुदति । अथ यथेति । एवं क्वचित् वाह्येन्द्रियसम्प्रयोगः क्वचिदन्य इत्यननुगमदोषस्तदवस्थ इत्याह । न, अनुगतेति । नन्विन्द्रियसम्प्रयोगत्वेनाविद्यानिवृत्तौ मनस इन्द्रियसम्प्रयोगो ऽपि सहकारीति चेन्न । मनसः प्रमातृत्वेनानिन्द्रियत्वादिति भावः । किञ्च शरीरसंयुक्तं ज्ञानकरणमतीन्द्रियमिन्द्रियमिति प्राचाम्मते स्मृत्यजनकज्ञानकरणमनःसंयोगाश्रयत्वमिन्द्रियत्वमित्यर्वाचीनमते च जन्यज्ञान-घटितमेवेन्द्रियत्वमिति तदनभ्युपगम इन्द्रियत्वमेव न सिद्ध्येदित्याह । किञ्च जन्येति । नन्विन्द्रियत्वस्य जातित्वान्न जन्यज्ञानापेक्षेति चेत् । न तेजस्त्वादिना साङ्कर्यात् । न च तेजस्त्वादिव्याप्यमन्यदेवेन्द्रियत्वमिति वाच्यम् । श्रोत्रे तव मते तदसम्भवात् । इन्द्रियत्वस्य नानात्वेन तन्निरूपितसम्प्रयोगस्यापि नानात्वादननुगम-दोषापरिहारात् । चक्षुष्ट्वादिना तुल्यव्यक्तित्वात् । तथाचेन्द्रियत्वं नजातिः परापरभावरहितजातिसमाना-धिकरणत्वात् सम्प्रयोगत्ववदिति भावः । नन्वविद्यानि-वर्तकमनःसंयोगाश्रयत्वमिन्द्रियत्वमिति न ज्ञानापेक्षेति

द्विज्ञानस्यापेक्षितत्वे तु धर्मशास्त्ररथारूढ इत्यन्तेन वक्ष्यमाणवाक्येनास्यैकवाक्यत्वं द्रष्टव्यम् । एतेन क्षत्रियादिवृत्त्युपजीविना यथोक्तगुणवतामपि पर्षत्त्व नास्तीत्युक्तं भवति । एतेषा पर्षत्पक्षाणा दोषतारतम्येनापि व्यवस्था कार्या ।

तथाहाङ्गिराः ।

एषा लाघवकार्येषु मध्यमेषु तु मध्यमा ।

महापातकचिन्तासु शतशो भूरिशश्च वेति ॥

इदानीं नामधारकविप्राणां पर्षत्त्वनिषेधमाह ।

**अत ऊर्ध्वं तु ये विप्राः केवलं नामधारकाः ।**

**पर्षत्त्वं न तु तेष्वस्ति सहस्रगुणितेष्वपि ॥ १५ ॥**

अतः स्ववृत्तिपरितुष्टानां पर्षत्त्वमिति पक्षादूर्ध्वमनन्तर ये केवलं नामधारका ब्राह्मणत्वजातिमात्रसमवायेन ब्राह्मणशब्दाभिधेयाः विप्रास्तेषु सहस्रसख्येष्वपि पर्षत्व नास्ति तेषामुक्तलक्षणे सावित्र्याद्यज्ञानोपन्यासेन धर्मशास्त्रज्ञानाभावस्य कृषिकरणोपन्यासेन स्ववृत्तिभ्रंशस्य च समर्थितत्वात् ।

ननु गुणाभावेपि ब्राह्मण्यपुरस्कारेणैव नामधारकाणां पर्षत्त्वं भवत्वित्यत आह ।

**यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।**

**ब्राह्मणस्त्वनधीयानस्त्रयस्ते नामधारकाः ॥ १६ ॥**

यथा काष्ठनिर्मितो हस्ती चर्मनिर्मितश्च मृगो हस्तित्वमृगत्वजात्यभावेन तत्कार्याक्षमा सादृश्यमात्रेण तच्छब्दभाजौ भवतस्तथा नामधारका विप्रा वेदाध्ययनाभावेन वक्ष्यमाणलक्षणब्राह्मण्याभावेऽपि सादृश्यमात्रेणैव ब्राह्मणशब्दभाजो भवन्ति न मुख्यप्रवृत्तिनिमित्तसद्भावेन । तेन न पर्षत्त्वयोग्या भवन्ति इति ।

ननु नामधारकेषु ब्राह्मण्याभावे,

ब्रह्मबीजसमुत्पन्नो ब्रह्मसंस्कारवर्जितः ।

जातिमात्रोपजीवी यः स भवेन्नामधारकः ॥

इतिव्यासवचनविरोधः स्यादिति चेत् । मैवम् । अस्यावान्तरजातिमात्रसद्भावप्रतिपादकत्वात् । मुख्यब्राह्मण्यस्य गुणविशिष्टजातेरेव ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वस्य वक्ष्यमाणत्वात् ।

नन्वेवं नामधारकेषु ब्राह्मणशब्दप्रयोगो न स्यात्प्रवृत्तिनिमित्ताभावादित्यत आह ।

**ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः ।**
**यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा ॥ १७ ॥**

यथा ग्रामकूपहोमशब्दा जननिवासस्थानविशेषान् जलाधारखातविशेषान् संस्कृताग्निहविःप्रक्षेपान् विशिष्टान् मुख्यवृत्त्याभिदधानाः, शून्यस्थाननिर्जलखातानग्निहविःप्रक्षेपान्न मुख्यवृत्त्या ऽभिदधति विशेषणाभावात् । किंतु लक्षणया गौर्नित्य इतिवत् तथा संस्कारविशेषविशिष्टमातापितृजन्यं मुख्यवृत्त्या ऽभिदधानो ब्राह्मणशब्दो वेदाध्ययनादिसंस्कारहीनं लक्षणयैवाभिदध्यान्न शक्त्या विशेषणाभावात् तस्मान्नामधारकेषु न मुख्यो ब्राह्मणशब्दप्रयोग इति ।

ननु यथाहिताग्न्यसंभवे अनाहिताग्नेरप्यनुकल्पत्वेन पर्षत्त्वमुक्तं तथा मुख्यब्राह्मणाभावे नामधारकाणामप्यनुकल्पत्वेनैव पर्षत्त्वं कुतो नेष्यत इत्यत आह ।

**यथा षण्ढोऽफलः स्त्रीषु यथा गौरूषराफला ।**
**यथाचाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥१८॥**

अनुकल्पस्यापि कार्यक्षमस्यैवोपादानं सोमाभावे पूतीकानामिव व्रीह्यभावे नीवाराणामिव वा, नामधारकाणां तु वेदाद्यध्ययनहीनत्वेन प्रायश्चित्तविधानाऽक्षमत्वादनुकल्पत्वेनापि नोपादानं यथा भर्त्रनुकल्पत्वेन देवराद्युपादानेपि न षण्ढस्य देयक्षेत्रानुकल्पत्वेनोषराया भूमेर्दानपात्रानुकल्पत्वेनाज्ञस्य नोपादानं भवति । प्रकृतफलासाधकत्वात् । तथा ऽविद्योपि न पापनिवृत्तिहेतुरिति ।

ननु ऊढायां ब्राह्मण्यां वोढुर्ब्राह्मणाज्जातो ब्राह्मण इत्येव स्मृत्यन्तरे ब्राह्मणलक्षणमुक्तम् । तत्कथं तत्सत्त्वेऽपि नामधारकाणां न मुख्यं ब्राह्मण्यमित्यत आह ।

**चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।**
**ब्राह्मण्यमपि तद्वद्धि संस्कारैर्मन्त्रपूर्वकैः ॥ १९ ॥**

यथा भित्तिपटादौ लिख्यमानं चित्रमनेकैर्वर्णैर्निष्पद्यते नैकेन नीलेन पीतेन वा तथासति चित्रत्वानुपपत्तिः । तथा ब्राह्मण्यमपि शास्त्रीयैः संस्कारैः हिशब्देन स्मृत्यन्तरप्रसिद्धविशिष्टजन्मना च सिध्यति नान्यतरेणैव ।

अयमभिसंधिः । न ब्राह्मण्यादिजातिः गोत्वादिवल्लौकिकप्रमाणगम्या व्यक्तिप्रत्यक्षेण संशयानुपपत्तेः किंतु शास्त्रैकगम्या यथाशास्त्रमङ्गीकर्तव्या। शास्त्रं तु संस्कारविशेषविशिष्टत्वे सति विशिष्टमातापितृजन्यत्वं ब्राह्मण्यमाह ।

यथाहाङ्गिराः ।

जन्मशारीरविद्याभिराचारेण श्रुतेन च ।
धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥ इति ।

जन्म ऊढायां वोढुः सकाशात् शारीरं शरीरसंस्कारो जातकर्मादिः विद्या वेदः आचारस्संध्यास्नानादिः श्रुतं मीमांसादिः धर्मः श्रौतस्मार्तानुष्ठानमेभिर्मिलितैर्ब्राह्मण्यं भवति। एवं लक्षणं ब्राह्मण्य न केवलं जन्मविशेषेण नापि संस्कारविशेषैरेव सिध्यति । किन्तूभाभ्याम्।

यत्तु विशिष्टजन्मनैव ब्राह्मण्यमिति स्मृत्यन्तरम् । तत्स्त्रीषण्ढादिसाधारणब्राह्मण्यावान्तरजात्यभिप्रायेणेति मन्तव्यम् । इद तु मुख्य ब्राह्मण्यं बहुश्रुतत्वापरपर्यायं पूर्वलक्षणोपयोगि निरूप्यते इति न विरोधः ।

बहुश्रुतलक्षणं चाह गौतमः ।

स एष बहुश्रुतो भवति लोकवेदवेदांगविद्वाकोवाक्येतिहास-

पुराणकुशलः तदपेतस्ववृत्तिरष्टाचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीत इति ।

न केवलं नामधारकाणामेव पर्षत्त्वनिषेधोऽपि तु तत्समवेतानामन्येषामपि इत्याह ।

**प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः ।**
**ते द्विजाः पापकर्माणः समेता नरकं ययुः ॥ २० ॥**

ये नामधारका ब्राह्मणाः प्रायश्चित्तं प्रयच्छन्ति ते पापकर्माणो भवन्ति तत्समवेताश्चान्ये सन्तोऽपि नरकं ययुर्यान्तीत्यर्थः ।

तथा चतुर्विंशतिमते ।

प्रायश्चित्तं प्रयच्छन्ति ब्राह्मणा नामधारकाः ।
ते सर्वे पापकर्माणः, समेता नरकं व्रजेदिति ॥

ननूक्तलक्षणानामपीन्द्रियार्थपरत्वात्कथं पर्षत्वमित्यत आह ।

**ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये ।**
**त्रैलोक्यं तारयन्त्येते पञ्चेन्द्रियरता अपि ॥ २१ ॥**

ये द्विजा अधीत वेदमविस्मरणार्थमन्वहं पठन्ति ये च पञ्चमहायज्ञानुष्ठानतत्परास्ते शास्त्राविरोधेनेन्द्रियार्थप्रसक्ता अपि शुद्धात्मत्वात्त्रैलोक्यमपि तारयितुं समर्थाः । किं पुनर्न दुष्कृतिनमिति ।

अत एवाह याज्ञवल्क्यः ।

वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥ इति ।

नन्वेवं स्वतः शुद्धानामपि परान्नभोजनानुप्रविष्टपापानां कथं पर्षत्त्वम् । यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् इतिस्मरणादित्यत आह ।

**संप्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः ।**
**तथा च वेदविद्विप्रः सर्वभक्षोऽपि दैवतम् ॥ २२ ॥**

यथा श्मशानेष्वनुपणीतः सर्वभक्षकोप्यग्निर्न दुष्यति 'नाग्निर्दहनकर्मणेतिस्मरणात् । तथा वेदविद्विप्रः सर्वत्र भुञ्जानोऽपि दैवतमेव-भूदेव एव वेदाभ्यासेनैव तादृशदोषनाशनात् ।

तथा च श्रूयते ।

क्रयविक्रयाद्योनिदोषाद्भुक्त्वामोज्यात्प्रतिग्रहात् ।
असम्भोजनाच्चापि नृशन तत्पावमानीभिरहं पुनार्मोति ॥

यदुक्तम् त्रैलोक्यन्तारयन्तीति तद्दृष्टान्तेनोपपादयति ।

**अमेध्यानि तु सर्वाणि प्रक्षिप्यन्ते यथोदके ।**
**तथैव किल्विषं सर्वं प्रक्षिपेच्च द्विजानले ॥२३॥**

यथोदके गङ्गादिजले प्रविष्टैः स्नातुकामैः स्वशरीरजानि सर्वाण्यमेध्यानि स्वेदादीनि प्रक्षालनेन प्रक्षिप्यन्ते विनाश्यन्ते नच जलं तावतादुष्यति । नापो मूत्रपुरीषाभ्यामिति स्मरणात् किन्तु मलापनयनेन तान्पुनाति तथा निमित्ती स्वीयमशेषं पापं पर्षदुपविष्टे द्विजाग्नौ किल्विषंदुष्कृतं प्रक्षिपेन्निवेदयेत् नैतावता पर्षद्दुष्यति पापं नश्यति तोयवदिति न्यायेनान्तरैव पापविनाशात् । किन्तु यथोक्तप्रायश्चित्तोपदेशान्निमित्तिनमुद्धरन्ति "एवं परिषदादेशान्नाशयेत्तत्र दुष्कृतमितिस्मरणात् । तस्मादुपपन्नन्तारयन्तीति ।

नन्वमन्त्रोऽनृच इत्यादौ को मन्त्रो विवक्षितो यं विना न ब्राह्मण्यमित्यत आह ।

**गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।**
**गायत्रीब्रह्मतत्वज्ञाः संपूज्यन्ते जनैर्द्विजाः ॥२४॥**

ब्रह्मणो वेदस्य तत्वं सारो वेदत्रयप्रसूतत्वात् ।

तथाच मनुः ।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ॥
तदित्यृचोस्याः सावित्र्याः परमेष्ठी प्रजापतिरिति ॥

गायत्र्येव ब्रह्मतत्वं गायत्रीब्रह्मतत्व तज्जानातीति गायत्रीब्रह्मतत्वज्ञा द्विजाः जनैरिहामुत्र च सपूज्यन्ते गायत्र्याःब्रह्मतत्वप्रतिपादनं गायत्र्युपासनामात्रस्य सर्वोपासनाफलकत्वप्रतिपादनार्थम् ।

अत एव वृहत्पराशरः ।

गायत्र्युपसिता येन तेनोपास्तं जगत्त्रयम् ।
गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः ॥
इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयादिति ।

अन्यथा गायत्रीज्ञानरहितो विप्रो जातिमात्रेण ब्राह्मणोऽपि शूद्रादप्यशुचिः कर्मानधिकारी भवति अनेनान्वयव्यतिरेकाभ्यां गायत्रीमात्रस्यैव ब्राह्मण्यप्रयोजकत्वं तदभावाच्च नामधारकत्वमित्युपक्रमोपसंहारयोरेकार्थत्वमुक्तम्भवति ।

ननु यथोक्तलक्षणविप्राभावे तादृशः क्षत्रियादिर्थ्यतां किंनिर्गुणविप्रोपादानेनेत्यत आह ।

**दुःशीलोऽपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः ।**
**कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥२५॥**

शीलाद् वृत्तात्सन्ध्यास्नानादेर्दुर्गतो दुःशीलो न तु निषिद्धकारी द्विजो द्वितीयजन्मवान् गायत्रीसंस्कृत इति यावत्स एव पूज्यः पूजार्हः न तु जितेन्द्रियोऽपि यथोक्ताचरणशीलोऽपि शूद्रः । तत्र दृष्टान्तः कः परित्यज्येत्यादिः शूद्रान्तानां ब्राह्मणव्यतिरिक्तानां त्रयाणामपि वर्णानां पर्षत्त्वनिषेधार्थम् ।

तथा च स्मृत्यन्तरम् ।
क्षत्रियो वाथ वैश्यो वा शूद्रो वा न कथञ्चन ।
प्रायश्चित्तविधानं हि कुर्वीतेति विदुर्बुधा इति ।

यदुक्तं स्ववृत्तिपरितुष्टास्त्रयोपि पर्षदिति । तत्रापेक्षितं विशेषणमाह ।

धर्मशास्त्ररथाः रूढा वेदखड्गधरा द्विजाः ।
क्रीडार्थमपि यत्कुर्युः सधर्मः परमः स्मृतः ॥२६॥

धर्मशास्त्रं मन्वादि तदेवरथः प्रायश्चित्ताभिधाननिर्वाहकत्वात् तत्रारूढास्तदेकाधिष्ठानाः वेद एव खड्गः परान्नभोजनादिजन्यपापनोदकत्वात् ।

यथाह मनुः ।

हत्वा लोकानपीमांस्त्रीनश्नन्नापि यतस्ततः ।
ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चनेति ।

तं धारयन्तीति वेदखड्गधारा द्विजा विप्राः यत् क्रीडार्थं हास्यार्थमपि कुर्युः सोऽपि परमो धर्मः किंपुनः पर्षदि नियुक्ताः पर्षद्धर्मं जानाना धर्मशास्त्रमवलोक्य यमर्थं ब्रूयुस्स धर्म इत्यत्र वक्तव्यमिति ।

एवं पर्षदो मुख्यानुकल्पभेदा अभिहितास्तेषु कल्पान्तरमप्याह ।

चातुर्वैद्यो विकल्पीच अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो मुख्याः पर्षदेषा दशावरा ॥२७॥

चतस्रो विद्या अधीत इति चातुर्वैद्यो वेदचतुष्टयाभिज्ञो विकल्पो धर्मपर्षत्प्रायश्चित्तानां प्रमाणं सोऽस्यास्तीति विकल्पी अङ्गवित् शिक्षादिषडङ्गाभिज्ञः धर्मपाठकोऽनेकधर्मशास्त्राभिज्ञः, एतद्गुणविशिष्टा मुख्या आद्या ब्रह्मचारिप्रभृतयस्त्रय आश्रमिणः आश्रमत्रयस्था न चतुर्थाश्रमाः ।

त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरेति मनुस्मरणात् ।
एषा दशावरा दशअवरे यस्यां पर्षदि सा दशावरा पर्षत् ज्ञेया ।

तदाहाङ्गिराः ।

चातुर्वैद्यो विकल्पी च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो वृद्धाः पर्षदेषा दशावरा ।
चतुर्णामपि वेदानां पारगा ये द्विजोत्तमाः ।
स्वैः स्वैरङ्गैर्विनाप्येते चातुर्वैद्या इति स्मृताः ।
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद् द्विजः ।

शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः ।
ज्योतिषामयने चैव सनिरुक्तोऽङ्गविद्भवेत् ।
वेदविद्याव्रतस्नातः कुलशीलसमन्वितः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ।
ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः ।
वदेयुस्तस्य ते धर्मान् ये मया परिकीर्तिता इति ।

अत्र ब्रह्मचारिव्यतिरिक्तानां त्रयाणामाश्रमाणां वृद्धत्वपरिभाषणात् सन्यासिनामपि पर्षत्त्वमस्तीति गम्यते तदपि वेदव्रतेषु स्नातानामित्यनेन मूलाभ्यनुज्ञातत्वाद्विकल्पनोयम् ।

मनुस्तु प्रकारान्तरेणाह ।

त्रैविद्यो हैतुकस्तर्क्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरेति ।

हैतुकोऽनुमानज्ञः तर्क्की प्रमाणस्याप्रयोजकत्वोद्भावनेऽनिष्टप्रसञ्जकः नैरुक्तो निरुक्तिज्ञः, एषामपि पर्षत्पक्षाणां व्यवस्था पूर्वोक्तैव द्रष्टव्या।

यत्तु पूर्वोक्तेषु पर्षल्लक्षणेष्वनेन चातुर्वैद्यत्वादिगुणो विधीयत इति तन्न । उत्पत्तिशिष्टगुणावरुद्धेष्वेतेषु गुणान्तरनिवेशासम्भवादामिक्षावरुद्धे वैश्वदेवयागे वाजिनवत् निवेशे वा वेदवेदाङ्गविदुषामित्याविशेषणैः पौनरुक्त्यादित्यलम् ।

एवमुक्तलक्षणप्रायश्चित्तोपयोगिपर्षन्निर्णीता तस्या दोषविशेषेण कर्तव्यविशेषमाह ।

**राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ॥**
**स्वयमेव न कर्तव्यं कर्तव्या स्वल्पनिष्कृतिः ॥१८॥**

अत्र गोवधस्य प्रकृतत्वात्तत्समतदधिकपापेषु राजानुमतिं कृत्वा पर्षत्प्रायश्चित्तमुपदिशेत् । स्वयमेव राजानुमतिव्यतिरेकेण प्रायश्चित्ताभिधानं न कर्तव्यं पर्षदा गोवधादर्वाचीनेषु पापेषु निष्कृतिः प्रायश्चित्तोपदेशः स्वयमेव कर्तव्यः । तथा च देवलः ।

याचिता स्वेन ते वापि ब्राह्मणा पापभीरुणा ।
निष्कृतिं व्यवहारार्थं कुर्युस्तस्मै नृपाज्ञया ।
स्वय वा ब्राह्मणैः कृच्छ्रमल्पदोषे विधीयते ।
राज्ञा च ब्राह्मणैश्चैव महत्सु सुपरीक्ष्य चेति ।
एवं पर्षत्कर्तव्यमुक्त्वा राज्ञोऽपि कर्तव्यमाह ।

**ब्राह्मणांस्तानतिक्रम्य राजा कर्त्तुं यदीच्छति ॥**
**तत्पापं शतधा भूत्वा राजानमनुगच्छति ॥२६॥**

तान्पर्षदुपविष्टान् ब्राह्मणानतिक्रम्यावमन्य स्वयमेव राजा यदि प्रायश्चित्तोपदेशं कर्त्तुं वाञ्छति तदा तत्प्रायश्चित्तनिमित्तीभूतं पापं शतगुणीभूय राजानमनुगच्छतीति ॥ २९ ॥

उक्तलक्षणायाः पर्षदोऽग्रे स्वकं पापं निवेदयेदित्युक्तं ततः पर्षद किं कार्यमित्यत आह ।

**प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः ॥**
**आत्मकृच्छ्रंततः कृत्वा जपेद्वै वेदमातरम् ॥३०॥**

पूर्वोक्ता पर्षन्निमित्तिन पापोक्तरीत्या पृष्ट्वा पर्षद्दक्षिणादानपूर्वकं निमित्तिना स्वनिमित्ते निवेदिते वक्ष्यमाणप्रकारेण प्रायश्चित्त दद्यात्। अत्र पर्षत्प्रायश्चित्त दद्यात्युभयतो नियमोऽङ्गिरसास्पष्टी कृतः ।

आर्तानां मार्गमाणाना प्रायश्चित्तानि ये द्विजाः ।
जानन्तो न प्रच्छन्ति तेषा ते समभागिनः ।
तस्मादार्त्तं समासाद्य ब्राह्मणं च विशेषतः ।
जानद्भिः पर्षदः पन्था न हातव्यः पराङ्मुखैः ॥
अनर्चितैरनाहूतैरपृष्टैश्च यथाविधि ।
प्रायश्चित्त न दातव्य जानद्भिरपि जल्पत इति ।

अनर्चितैरितिविशेषणाद्गन्धपुष्पादिभिः सप्तानामर्चनं कार्यमित्युच्यते । प्रायश्चित्तदानप्रकारोऽपि तेनैव स्पष्टीकृतः

तस्मिन्निवेदिते कार्ये निष्कास्यो हि स कार्यवान् ।
तस्मिन्नुत्सारिते पापे ये यथा धर्मपाठकाः

तें तथा तत्र जल्पेषु विमृशन्तः परस्परम् ।
आपद्धर्मेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ।
अनुग्रहप्रकारश्च षष्ठाध्याये वर्णितः ।
पर्षदः सम्पदश्चैव कार्याणां च बलाबलम् ।
यथादेशं यथा कालं यच्च कार्यान्तरं भवेत् ।

पर्षत्सवित्त्य तत्सर्वं प्रायश्चित्तं विनिर्दिशेत् ।
सर्वेषां निश्चितं यत्स्याद्यच्च प्राणान्न पीडयेत् ।
कार्यान्तरं वृद्धमातापित्रादि शुश्रूषा ।
आहूय बहुदेकेो पर्षद्वा यो नियोजितः ।
ब्राह्मणो ब्राह्मणाना तु क्षत्रियाणां पुरोहितः
वैश्यानां याजकश्चैव प्रायश्चित्त समादिशेत् ।
शृणु भोस्तत्त्वमिदं विप्रैर्यदादिश्यते व्रतम् ।
तत्ते यत्नेन कर्तव्यमन्यथा तद्वृथा भवेत् ।
यदा त्वया भवेच्चीर्णं तदा शुद्धिप्रकाशनम् ।
कृत्वा कुर्यात् प्रयत्नेन शक्त्या विप्राभिपूजनमिति ।

शुद्धिप्रकाशनं सर्वान्ते वक्ष्यमाणलक्षणम् । एवं विधप्रायश्चित्तोपदेशे विशेषमाह । देवतायतनाग्रत इति । देवतायाः शिवविष्ण्वादेरायतनम्, तस्याग्रतः स्थित्वा प्रायश्चित्तमुपदिशेत् । देवतायतनं पुण्यतीर्थादेरुपलक्षणम् । एवं प्रायश्चित्तमुपदिश्य पर्षदः कर्तव्यमाह । आत्मकृच्छ्रमिति आत्मार्थं कृच्छ्रमात्मकृच्छ्रमात्मनः प्रायश्चित्तोपदेशजनितप्रत्यवायपरिहारार्थं प्रायश्चित्तमिति यावत् कृत्वा पर्षद्वेदमातरं गायत्रीं निमित्तानुसारेण जपेत् । वै शब्देन पवित्रान्तरं वाचयेत् । तथा च हारीतः ।

प्रायश्चित्तं तु निर्दिश्य कथं पापात्प्रमुच्यते ।
तत्पवित्रं विजानीयाज्जपेद्वा वेदमातरमिति ॥

अनुवादकस्य प्रायश्चित्तमाहाङ्गिराः ।

स्वगुरुः क्षत्रियाणां च वैश्यानां चाथ याजकः ।
प्रायश्चित्त समादिश्य तप्तकृच्छ्रं समाचरेदिति ॥

नन्विदं पर्षदः प्रायश्चित्तविधानमनुपपन्नम् ।

आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।

जानन्तो न प्रयच्छन्ति ते तेषां समभागिन इति ।

प्रायश्चित्तावचने तस्या दोषस्मरणादितिचेत् । अत्र कश्चिच्चेदं प्रायश्चित्तं प्रायश्चित्तविधाननिमित्तम् । किन्तु पतितसम्भाषणादिनिमित्तमित्याह तन्न । वृद्धाः पृच्छन्ति किं कार्यमित्यादिना तदभ्यनुज्ञानात् । नाप्ययथाशास्त्रं प्राश्चित्तविधाननिमित्त नित्यवच्छ्रवणविरोधात् । अत्रोच्यते । पर्षत्प्रवेशानन्तरं प्रायश्चित्तावचने दोषस्मरणेऽपि पर्षत्प्रवेशाभावे दोषास्मरणाद्रागप्राप्तपर्षत्प्रवेशनिमित्तमेवेद प्रायश्चित्त यथा श्राद्धे निमन्त्रितस्य श्राद्धाभोजने दोषसद्भावेऽपि श्राद्धाप्रवेशे न दोषः । प्रवेशे च रागकृते प्रायश्चित्तविधानं तथा प्रकृतेऽपि, प्रायश्चित्ताम्नानेन निषेधानुमानं तूभयत्रापि समानमेव । श्राद्धे निमन्त्रितस्याभोजने तु प्रत्यवायमाह मनुः

केतितस्तु यथा न्यायं हव्यकव्ये द्विजोत्तमः ।

कथं चिदप्यतिक्रामन्पापः शूकरतां व्रजेदिति ।

श्राद्धभोजनप्रायश्चित्तं त्वन्ते वक्ष्यते । तस्मात्पर्षत्प्रवेशो न कर्तव्यः प्रवेशे यथोक्तप्रायश्चित्तमुक्त्वा स्वयमपि पर्षत्प्रवेशनिमित्तं प्रायश्चित्तं कर्तव्यमिति । अत एवाह मनुः

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।

अब्रुवन् विब्रुवन्वापि नरो भवति किल्विषीति ।

एवं चतुष्पादे प्रायश्चित्ते आद्यपादद्वयमभिहितमपरं पादद्वयं तत्रतत्राभिधास्यन्त्याचार्याः । तदाहाङ्गिराः ।

उपस्थानव्रतादेशश्चर्या शुद्धिप्रकाशनम्

प्रायश्चित्तं चतुष्पादं विहितं धर्मकर्तृभिरिति ।

उपस्थानं पर्षदो व्रतादेशः प्रायश्चित्तोपदेशश्चर्या व्रतानुष्ठानं शुद्धिप्रकाशनं गवां तृणादिदानेन । तत्र व्रतग्रहणप्रकारमाह विष्णुः ।

सर्वपापेषु सर्वेषां व्रताना विधिपूर्वकम् ।
ग्रहणं सम्प्रवक्ष्यामि प्रायश्चित्त चिकीर्षताम् ।
दिनान्ते नखरोमादि प्रवाप्य स्नानमाचरेत् ।

नखरोमादिवपने विशेषं नवमाध्याये वक्ष्यति ।

भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ।
मलापकर्षणं कार्यं बाह्यशौचप्रसिद्धये ।
दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ।

पञ्चगव्यप्रकारं श्चैकादशाध्याये वक्ष्यति ।

व्रतं निशामुखे ग्राह्य बहिस्तारकदर्शने ।
आचम्यातः परं मौनी ध्यायन् दुष्कृतमात्मनः ।
मनः सन्तापनं तीव्रमुद्वहेच्छोकमन्ततः ॥ इति ।

वेदवेदाङ्गविदुषामित्यारभ्य जपेद्वै वेदमातरमित्यन्तेन ग्रन्थसन्दर्भेण यत्पर्षत्तदुपसत्त्यादिनिरूपणन्तदतीतानागताध्यायोक्तेषु प्रायश्चित्तेषु सर्वेष्वपि समानमवगन्तव्यम् ।

इदानीमध्यायादौ पृष्टं गोवधप्रायश्चित्तं प्रतिपादयिषुरादौ तदितिकर्तव्यतामाह ।

**सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ॥**
**गवां मध्ये वसेद्रात्रौ दिवा गाश्चाप्यनुव्रजेत् ॥३१॥**

शिखया सह वर्तमानं सशिखं यथा शिखापि न परिशिष्यते. तथेति यावत् । वपनं कृत्वा त्रिसन्ध्यमवगाहनं कुर्यात्सन्ध्यात्रये अपोऽवगाहेत रात्रौ गवां मध्ये वसेत् तिष्टेत् शयीत दिवा गच्छन्तीः स्वागा अनुव्रजेदिति । अनुगमनं च गोश्चर्मैव प्रावृत्त्य कार्यम् । गोघ्नः सशिखं वपनं कृत्वा गोचर्मणा प्रावृतो गाश्चानुगच्छन् गोष्ठेशयो गाश्च दद्यादिति प्रचेतसः स्मरणात् । एतदुपसंहारे न स्त्रीणामजिनं वास इत्यपवादासङ्गतेश्च। इदमेव प्रायश्चितमाह च्यवनः । प्राजापत्यं गोवधप्रायश्चित्तं नखरोमाणि छित्त्वा त्रिषवणी गवामनुगमनसहशयने सुमहत्तरणानि रथ्यासु वारयेद्व्रतान्ते ब्राह्मणभोजनमिति । इदं च सशिखवपनं

वक्ष्यमाणचतुष्पादप्राजापत्याभिप्रायेण नैकपादादौ तत्र तत्र विशेषस्मरणात् तथाचापस्तम्बः ।

पादे तु नखरोमाणि द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखा धार्या चतुर्थे सशिख स्मृनमिति ॥
वक्ष्यति च स्वयमप्ययिमाध्याये पादेङ्गरोमवपनमित्यादि ।

किञ्च ।

उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ ३२ ॥

उष्णे निदाघे वर्षति वृष्टौ शीते हिमे मारुते वा वाति सति गवां त्राणमुष्णादिनिवारणोपायं छायादि यथाशक्त्यकृत्वा आत्मनो न कुर्वीत भृशमत्युष्णादीनां सर्वषां विशेषणं न मारुतस्यैव स्वल्पस्यापरिहार्यत्वात् ।

किञ्च ।

आत्मनो यदि वाऽन्येषां गृहे क्षेत्रेऽथ वा खले ।
भक्षयन्तीं न कथयेत्पिवन्तं चैव वत्सकम् ॥ ३३ ॥

स्वीयेषु परकीयेषु वा गृहक्षेत्रे खलेषु तृणधान्यादिभक्षयन्तीं गां स्तन्यं पिबन्तं वत्सं चान्यस्मै निवारणाय नाचक्षीत पराख्यानिषेधेन स्वयं तद्वारणं दूरापेतमेव ।

किञ्च ।

पिबन्तीषु पिबन् तोयं संविशन्तीषु संविशेत् ।
पतितां पङ्कलग्नां वा सर्वप्राणैः समुद्धरेत् ॥ ३४ ॥

स्वयमतितृषितोऽपि गवां जलपानात्प्राग् जलं न पिबेत् किं तु तासु पिबन्तीष्वेव तथा विरक्तिगतिभ्यामतिश्रान्तोपि गोःसंवेशनात्प्राक् स्वयं न संविशेत्किं तु तासु संविशन्तीष्वेव तथा यत्र क्वापि पतितां पङ्के वा लग्नां गां सर्वप्राणैः प्राणाधिकैरपि प्रयत्नैः समुद्धरेत् ।

ननु गवोद्धरणे मृतस्य प्रक्रान्तप्रायश्चित्तसमाप्त्यभावेन शुद्धिर्न स्यादित्यत आह ।

**ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत् ।**
**मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥३५॥**

गोब्राह्मणयोश्चोरव्याघ्रादिभिर्व्यापाद्यमानयोस्त्राणार्थं प्रवृत्तस्तदकृत्वैव यदि स्वप्राणान् परित्यजेत्तदापि ब्रह्महा ब्रह्महत्याया मुक्तो भवति, अथवान्वेव तौ गोपाययितापि शुध्यत्येव, ननु गवोद्धरणे मृतस्य गोहत्यानपगमाशङ्काया ब्रह्महत्याया मुच्यत इत्युत्तरमसङ्गतम् । सत्यम् । कैमुतिकन्यायेन तस्योत्तरत्वात् । तथाहि । सर्वगोब्राह्मणत्राता ब्रह्महापि विशुध्यति तत्र किं वक्तव्यं गोघ्नः शुद्धतीति । यद्वा यथा ब्रह्महा गोब्राह्मणत्राता शुध्यति तथायमपीति दृष्टान्तत्वेनास्यात्रोपन्यास इति नानुत्तरत्वम् । एवमङ्गान्यभिधायाङ्गिनमाह ।

**गोवधस्यानुरूपेण प्राजापत्यं विनिर्दिशेत् ।**
**प्राजापत्यं ततः कृच्छ्रं विभजेत चतुर्विधम् ॥३६॥**

पूर्वोक्तेऽकामकृते गोवधे वक्ष्यमाणलक्षणं प्राजापत्यं प्रायश्चित्तत्वेन पूर्वोक्ता पर्षद्विनिर्दिशेत् । ततो निर्देशानन्तरं गोवधस्यानुरूपेण वक्ष्यमाणलक्षणचतुर्विधगोवधतारतम्यानुसारेण निर्दिष्टप्राजापत्यकृच्छ्रमनन्तरोक्ताभिश्चतसृभिर्विधाभिर्विभजेत । वक्ष्यमाणप्रकारेण व्यवस्थापयेत् । पुनः प्राजापत्यपदं प्रसिद्धप्राजापत्यादस्य वैलक्षण्यद्योतनाय ।

तदाह ।

**एकाहमेकभक्ताशी एकाहं नक्तभोजनः ।**
**अयाचितमेकमहरेकाहं मारुताशनः ॥ ३७ ॥**
**दिनद्वयं चैकनक्तो द्विदिनं नक्तभोजनः ।**
**दिनद्वयमयाचीस्याद्द्विदिनं मारुताशनः ॥३८॥**
**त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनम ।**
**दिनत्रयमयाची स्यात्त्रिदिनं मारुताशनः ॥३९॥**

**चतुरहस्त्वेकभक्ताशी चतुरहं नक्तभोजनम् ।**
**चतुर्दिनमयाची स्याच्चतुरहं मारुताशनम् ॥४०॥**

एकभक्तनक्तायाचितोपवासैः क्रमानुष्ठितैरेकाविधा संपद्यते तैरेव स्वस्थानविवृध्या द्विगुणीभूतैर्द्वितीया त्रिगुणीभूतैस्तृतीया चतुर्गुणीभूतैश्चतुर्थीति ता एताश्चतस्रोऽपि प्राजापत्यविधा वक्ष्यमाणेषु रोधादिनिमित्तेषु वक्ष्यमाणप्रकारेण व्यवस्थाप्याः । यद्यप्ययमखिलोऽप्यर्थोऽयिमाध्यायेनैव सिध्यति तथाप्यनुपपन्नस्य विनियोगासम्भवादत्रोत्पन्नस्य व्रतस्य तत्र विषयविशेषसमर्पणमित्यपुनरुक्तिः । यत्त्वत्र गोवधसामान्यप्रायश्चित्तमुच्यते तत्र तु रोधादिनिमित्तविशेषेणेति तन्न निमित्तविशेषाणां प्रायश्चित्तविशेषाक्रान्तत्वेन सामान्यप्रायश्चित्तस्य निर्विषयत्वापातात् । तस्मादुक्तमेव साधीय इति ।

इदानीं व्रतोत्तराङ्गमाह ।

**प्रायश्चित्ते ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम् ।**
**विप्राणां दक्षिणां दद्यात्पवित्राणि जपेद् द्विजः ॥४१॥**

एवं यथोक्ते प्रायश्चित्ते कृते तत्सपूर्णतायै ब्राह्मणभोजनं कुर्यात् भुक्तवद्भ्यो ब्राह्मणेभ्यश्च यथाशक्ति दक्षिणा दद्याद् द्विजश्चेन्निमित्ती पवित्राणि पवमानसूक्तादीन्यपि जपेन्नान्यः । विप्राणामितिबहुवचनात्कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानं दक्षिणाजपयोस्तु शक्त्याव्यवस्थेति ।

एवं वेदवेदाङ्गविदुषामित्यादिनोपस्थानव्रतादेशनचर्यात्मकान् त्रीन् प्रायश्चित्तपादानभिधायेदानीं शुद्धिप्रकाशनरूपं चतुर्थं पादमाह ।

**ब्राह्मणान् भोजयित्वा तु गोघ्नः शुध्येन्न संशयः ।**

प्रायश्चित्ताङ्गब्राह्मणभोजनानन्तरं स्वशुद्धिप्रकाशनाय यथासंभवं ब्राह्मणान् ज्ञातींश्च भोजयित्वा गोघ्नः शुध्यतीत्यत्र संशयो न कार्यः । संशयनिषेधवचनं तु मन्वाद्युक्तगुरुप्रायश्चित्तश्रद्धाजाड्येनाल्पेऽस्मिन्नभक्तिनिरासायेति ।

यावत्यो गोपिकाः स्युस्तदनुगुणतया तावतीरात्ममूर्त्तीः
कृत्वा प्रत्येकमासां करकलितकरो मण्डलीकृत्य नृत्यन् ।
तिर्यक्पादं विवृत्त्याऽधिकमभिमुरलि व्ययवक्रः सदास्मा
नेकच्छिद्रापिधानव्यसनिकरपुटः पातु मध्येऽनिरुद्धः ॥ १ ॥

धर्माधिकारिकुनकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विहितो विचारो
ऽध्यायेऽष्टमे निखिलगोवधशुद्धिसिध्यै ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायामष्टमोऽध्यायः ।



दर्शयति कथं वेति । ननु दारशब्दस्य नित्यबहुवचनान्तत्व व्याकरणमि-
दृमित्याह अनुशासनिकीति । अनुशासन व्याकरणनियोगः । इष्टैव अन्य
थानुपपत्त्या स्वीकार्यैव । तुल्यमिति । अयं भावः । नामार्थयोर्भेदेना-
न्वये प्रकारीभूतविभक्त्यर्थोपस्थितिः कारण प्रकृते च प्रथमायाः साधु-
त्वमात्रार्थकत्वेन द्वितीयादिवत्कर्मत्वाद्यर्थत्वाभावाद्विना लक्षणामघटः
पट इत्यत्र घटपदार्थस्य न नञर्थेनान्वयः । तथा चाघटः पट इत्यादौ
घटपदोत्तरप्रथमायाः घटप्रतियोगिकत्वरूपसम्बन्धद्वारा घटस्य नञर्थे-
नान्वय इति सकलजनाना नियतप्रयोग इति । अस्मिन्नर्थेऽनुशासनं
दर्शयति तदिदमाहुरिति । नियतप्रयोगाः प्रतियोगिप्रकारकस्ववि-
शेष्यकबोधविषयाः नियमेन प्रतियोग्यन्विता एव स्वार्थवाचका इति
यावत् । केचिदव्ययाः नञ्रूपाः केचिदव्ययाः । यद्वा नियतः प्रयोगो
यैर्येषां वा ते नियतप्रयोगाः नियमस्तु स्वसभिव्याहृतघटपदोत्तरमपि
प्रथमैव परं तु सा प्रथमा षष्ठ्यर्थे लाक्षणिकी घटस्य नञर्थेनान्वयानुरो-
धादिति । एवमघट पटमानयेत्यादावपि कर्मविशेषणीभूतद्वितीयापि
लाक्षणिकी तथा च प्रथमायाः षष्ठ्यर्थे लक्षणा व्याकरणसिद्धेति भावः ।
अथाघटः पट इत्यत्र लाक्षणिकप्रथमार्थप्रतियोगिकत्वद्वारा घटस्याभा-
वेनान्वयः परं तु कथमभावस्य घटेऽन्वय इति शङ्कते तथापीति ।
नञुत्तरेति । तथा च विभक्त्यर्थाश्रयाश्रयीभावलक्षणसम्बन्धद्वारा नञर्थ
पटयोर्नामर्थयोरन्वये बाधकाभावादित्यर्थः । ततः न घटः पट इति
वाक्यात् । घटस्येति । लक्षणया नञ्पदार्थोऽभाववानेव ज्ञातस्तत्राभावस्यै-
कदेशत्वाद्घटस्य नान्वय इत्यर्थः । तस्य अभावस्य । ससम्बन्धीति । यथा
पितेत्युक्ते कस्येत्याकाङ्क्षायाः सत्त्वात्पितृपद ससंबन्धिकं तथाऽभाव इत्युक्ते
कस्येत्याकाङ्क्षासत्त्वादभावपदमपि ससम्बन्धिकमिति भावः । घटो नित्य
इत्यत्र घटत्व नित्यत्वान्वयः स्यादतः ससम्बन्धीत्युक्तं । यथेति ।
पितृत्वं जनकत्वेसति पुंस्त्वं तत्रैकदेशे जनकत्वे चैत्रस्यान्वय इति ।

**अन्येतु समुदाय एवेतरपदार्थान्वयः परम्परा-**

सम्बन्धेनेत्याहुः । युक्तं चाभाववल्लक्षकमेवान्यथाघटं पटमित्यत्र समानविभक्तिकत्वानुपपत्तेः । परेतु निपातस्थलेऽन्यैव व्युत्पत्तिरिति घटतदभावयोः प्रतियोग्यनुयोगिभावेनान्वयोपपत्तौ न घटादिपदे लक्षणा अत एव चन्द्र इव मुखमित्यादौ चन्द्र-इवार्थयोर्भेदेनान्वयः अत एव घटो नास्तीत्यत्रापि घटतदभावयोरन्वयो निःकलङ्क इत्याहुस्तन्न । मानाभावात् चन्द्र इव मुखमित्यादौ तु चन्द्रपदं तत्सदृशलक्षकं इवपदं तात्पर्यग्राहकं । अत एव चन्द्र इव मुखं पश्यामीत्यत्र द्वितीया अन्यथा तदनुपपत्तेः अस्तु वा षष्ठ्यर्थ एव विभक्तौ लक्षणानुशासनानुग्रहाद् घटो नास्तीत्यत्रापि तथेत्यदोषः ।

ईदृशस्थले एकदेशान्वयास्वीकर्त्तुः कस्यचिन्मतमाह अन्येत्विति । समुदाय एवेति । अभाववत्पटादिसमुदाय एवेत्यर्थः । इतरपदार्थान्वयः घटादिपदार्थान्वयः । परम्परासम्बन्धेन स्वप्रतियोगिकभेदसम्बन्धेन ससम्बन्धिकस्थले एकदेशान्वयस्य निखिलवादिसिद्धत्वात् । आहुरित्यत्रास्वरसः । ननु सर्वमिद अभावपदस्याभाववल्लाक्षणिकत्व एव स्यात् तदेव न सम्भवति मानाभावादिति सिंहावलोकनन्यायेनाह युक्तमिति । अभाववल्लाक्षणिकमेव अघटः पट इत्यादौ नञपदं अभाववल्लाक्षणिकमेव अन्यथा लाक्षणिकत्वास्वीकारे । समानेति । अभेदान्वये समानविभक्तिः प्रयोजिकाऽभावपदस्याभाववल्लाक्षणिकत्वाभावे ऽभेदान्वयाभावात्समानविभक्तिकत्वानुपपत्तिरित्यर्थः । अत्राघटः पट इत्यत्रान्वयानुरोधान्नामार्थयोरित्यत्र निपातातिरिक्तनामार्थयोरित्यवश्य वाच्यमिति कस्यचिन्मतं दूषयितुमाह परेत्विति । अन्यैव अव्ययनिपातस्थले नामार्थयोर्भेदेना-

न्वयस्वीकारादन्यैव प्रतियोग्यनुयोगिभावेन प्रतियोग्यनुयोगिकत्वसंबंधेन घटादिपद इति । घटादिपदनिरूपिता घटसंबन्धिनि लक्षणेत्यर्थः । अव्ययनिपातातिरिक्तेत्यस्य कृत्यं दर्शयति अत एवेति अत एव अव्ययनिपातातिरिक्तेति विशेषणदानादेव । अत्रेवार्थः सादृश्यं तथा च चन्द्रसादृश्यवन्मुखमिति शाब्दबोधस्तत्रेवार्थे सादृश्ये प्रतियोगितया चन्द्रः प्रकारः स दृश्यं चाधिकरणतया मुखे प्रकारः । निपातातिरिक्तेत्यस्य तत्स्थलेपि कृत्यं दर्शयति । अत एवेति । मानाभावात नामार्थयोरित्यत्र निपातातिरिक्तेति विशेषणदाने मानाभावात् । ननु तर्हि कथं चन्द्र इव मुखमित्यादावन्वयबोध इत्यत आह चन्द्रेति । तथा च चन्द्रसदृशाभिन्नं मुखमित्यन्वयः । न च चन्द्रो मुखमित्यत्र चन्द्रपदं सदृशलक्षकं कुतो नेति वाच्यम् । सदृशलक्षणाया इवपदसमभिव्याहारस्य प्रयोजकत्वात् । अत एव इवपदं तात्पर्यग्राहकमित्युक्तं । नचैवमिवपदस्य सादृश्ये शक्तिरेवास्त्विति वाच्यम् । चन्द्रमिव मुखं पश्यामीत्यत्र चन्द्रपदोत्तरं द्वितीयानुपपत्तेः । चन्द्रपदस्य चन्द्रसादृश्यवति लक्षणाया तु तस्याभेदान्वयाद्द्वितीयोपपत्तिरिति । अत एव सदृशे लक्षणास्वीकारादेव द्वितीया चन्द्रपदोत्तद्वितीया । अन्यथा सदृशलक्षणाया अस्वीकारे । तदनुपपत्तेरिति । अभेदान्वये समानविभक्तिकत्वं प्रयोजकं । सदृशे लक्षणाया अभावे त्वभेदान्वयाभावादेव चन्द्रपदोत्तरं द्वितीयायाः किं प्रयोजनमिति भावः । ननु तथापि चन्द्रपदार्थेवपदार्थयोरन्वयो नोपपादितः किं तु चन्द्रमुखपदार्थयोरित्यपरितुष्यन्नाह अस्तु वेति । विभक्तौ चन्द्रपदोत्तरद्वितीयाविभक्तौ तथा च चन्द्रपदार्थस्य स्वनिरूपकत्वरूपसंबन्धद्वारा सादृश्यरूपेवपदार्थे भेदेनान्वयेपि न क्षतिः । न च तथापीवार्थमुखयोः कथमन्वय इति वाच्यम् । इव पदार्थस्य सादृश्यवल्लाक्षणिकत्वात् । यद्वा सुव्विभक्तौ लक्षणां प्रतिपादयितुमाह अस्तुवेति । द्वितीयाविभक्तेः सादृश्यरूपसंबन्धात्मकषष्ठ्यर्थे लक्षणा इवपदं तात्पर्यग्राहकं । अथवा चन्द्र इव मुखमित्यत्र इवपदस्य सादृश्यार्थत्वे चन्द्रपदार्थस्येवपदार्थेन भेदान्वयो न स्यादित्यत

आह अस्तु वेति । षष्ठ्यर्थ एव । निरूपितत्वसंबन्धरूपषष्ठ्यर्थ एव विभक्तौ । तथा च चन्द्रनिरूपितसादृश्यवदभिन्नं मुखमिति बोधः । न च सादृश्यस्य कथं मुखेऽन्वय इति वाच्यम् इवपदोत्तरलुप्तविभक्तेः स्मरणादिवपदस्य सादृश्यवति लक्षणाविवक्षणाच्चेति सङ्क्षेपः । नन्वत्र का वा युक्तिरत आह अनुशासनेति यथा नञ्समभिव्याहृतस्थले विभक्तौ लक्षणानुशासनिकी तथैव समभिव्याहृतस्थलेपीति । अनुशासनं तु पूर्वोक्त नियतप्रयोगा हि. केचिदव्यया इति । तथा प्रथमायाया:प्रतियोगित्वे लक्षणा ।

अन्येतु घटो नास्तीत्यत्र घटस्याभावोऽस्तीति नार्थः तथासति भूतले घटौ नास्तीत्यस्याप्यापत्तेः अभावस्यैकत्वादिति किन्तु भूतलवृत्त्यभावप्रतियोगी घटोस्तीति तन्न। क्वेत्यधिकरणाकाङ्क्षापत्तेः कथन्तर्हि घटौस्त इत्यादीति चेत् भावनान्वय्यभावप्रतियोगिनि सङ्ख्यान्वयात्कथमिति चेत्तथैव प्रतीतेरिति गृहाण ।

परेतु इह भूतलास्तित्वरूपाख्यातार्थनिषेध एव घटे प्रतीयते न पचति चैत्र इत्यत्रेव नातो द्विवचनानुपपत्तिः । नन्वेवं जातौ सत्ता नास्तीत्यत्र का गतिः जातिवृत्तित्वाभावस्य सत्तायामसत्त्वाज जातिसमवेतत्वस्यैवाप्रसिद्ध्या निषेद्धुमशक्यत्वादिति चेत् या गतिर्जातिर्न सत्तावृत्तिरिति वाक्यस्य । अयोग्यमेवेदं वाक्यं वृत्तिपदं वा साक्षात्सम्बन्धावच्छिन्नवृत्तिपरमिति तुल्यं । तथापि नञर्थो निषेधो घटे कथमन्वेतीति चेन्न । निपातातिरिक्तनामार्थस्य हि

नामार्थेनाभेदान्वयो न नामार्थमात्रस्येति प्रतियन्ति स्यादेतद्घटो नायमित्यादौ भेद एव प्रतीयते भूतले न घट इत्यत्रात्यन्ताभाव एवेत्यत्र किं नियामकं। अधिकरणवाचकपदे सप्तमीविभक्तिरत्यन्ताभावबोधे तन्त्रं प्रतियोग्यनुयोगिपदयोः समानविभक्तिरन्योन्याभावबोध इति चेन्न ।

एवं प्रतिपादयितुकामस्य कस्य चिद्विवक्षामाह अन्येत्विति । तथा सति घटोनास्तीत्यादौ घटस्याभावोस्तीति विवक्षिते सति। भूतले इति॥ घटद्वयप्रतियोगिकाभावो भूतलेऽस्तीत्यर्थः । भावनाविशेष्ये सङ्ख्यान्वयादाख्यातार्थरूपभावनान्वयिनोऽभावस्यैकत्वादेकत्वसङ्ख्याया अन्वय एवोचितं इत्यभिप्रायवानाह अभावस्येति । इदमुपलक्षण भूतले घटौ नस्त इत्यपि न स्यात् भावनान्वयिनोऽभावस्यैकत्वात् । किन्त्विति । तथा च घटौ नस्त इत्येव प्रयोगो न तु घटौ नास्तीति भावनान्वयिघटयोर्द्वित्वान्वयादिति । भवतु मन्मतं दुष्ट तथापि घटौ नस्त इत्यत्र घटयोरभावस्यैकत्वात्कथं भवन्मतेप्यभावे द्वित्वान्वय इत्याह कथमिति । भावनाख्यातार्थस्तदन्वय्यभावस्तत्प्रतियोगिघटे सङ्ख्यान्वयादित्यर्थः। ननु भाविनान्वय इति व्युत्पत्तेः कथमभावप्रतियोगिनि सङ्ख्यान्वय इत्यत आह तथैवेति। तथा चाभावस्थले भावनान्वय्यभावप्रतियोगिनि सङ्ख्यान्वय इति व्युत्पत्तेरित्यर्थः । अथ यथा पचति चैत्र इत्यत्र पाकानुकूला कृतिश्चैत्रे न पचति चैत्र इत्यत्रापि पाककृतिरूपाख्यातार्थाभाव एव चैत्रे प्रतीयते । तथा भूतले घटोस्तीत्यत्र भूतलास्तित्वरूपाख्यातार्थस्य घटे भानाद्भूतले घटो नास्तीत्यादावपि भूतलास्तित्वरूपाख्यातार्थनिषेध एव घटे प्रतीयेत इत्यभावप्रतियोग्यन्वयौ तुल्ययोगक्षेमाविति शिरोमणिमतमाह परेत्विति । इह भूतले घटो नास्तीत्यादौ । अस्तित्वेति । लक्षणया अस्तित्वरूपाख्यातार्थनिषेध इत्यर्थः । नात इति । भूतले घटौ नस्त इत्यादौ

घटद्वये भूतलास्तित्वाभाव एव प्रतीयत इत्यर्थः । एवं भूतले घटा न सन्तीत्यत्रापि बोध्यम् । एवं अधिकरणास्तित्वाभावस्य प्रतीयमानत्वे असत्त्वादिति । एकार्थसमवायप्रत्यासत्त्या सत्तायां जातिवृत्तित्वस्य सत्त्वाज् जातिवृत्तित्वाभावस्यासत्त्वादिति । जातिसमवेतत्वस्य समवायेन जातिवृत्तित्वस्य । एवं जातिसंयुक्तत्वस्येत्यत्रापि बोध्यम् । प्रतिबन्ध्या समाधत्ते या गतिरिति सत्ता न जातिवृत्तिरित्यत्र जातिवृत्तित्वत्वावच्छिन्नाभावो न सत्तायां एकार्थसमवायेन जातिवृत्तित्वस्य सत्ताया सत्त्वात् । जाति समवेतत्वस्याप्रसिद्धत्वेन तत्प्रतियोगिकाभावासिद्धेः तथा च जातिवृत्त्यभावप्रतियोगिसत्तेवेति समाधेय तदा दीयतां प्रकृतेपि दृष्टिः । ननु सत्ता न जातिवृत्तिरिति वाक्यस्यायोग्यत्वात्तत्प्रतिबन्धिर्न युज्यते इत्याह अयोग्यमिति इदं वाक्यं सत्ता न जातिवृत्तिरितीदं वाक्य । न चेतस्माच्छब्दाच्छाब्दबोधस्य जायमानत्वात्कथमयोग्यत्वमित्यत आह वृत्तीति इत्थं च सत्ता न जातिवृत्तिरित्यत्रैकार्थसमवायस्य परम्परासम्बन्धस्य सत्त्वेपि साक्षात्साम्बन्धेन जातिवृत्तित्वाभावस्य सत्तायां सत्वादिति भावः । तुल्यमिति । जातौ सत्ता नास्तीत्यत्रापि तथैवोच्यतामित्यर्थः । तथापि अधिकरणवृत्तित्वाभावस्य घटादौ विवक्षणेपि । निषेधः भूतलास्तित्वाभावः । अभेदेनेति निपातातिरिक्तनामार्थस्य नामार्थेन सहाभेदान्वयो निपातार्थयोस्तु भेदेनान्वये बाधकाभावादित्यर्थः । न नामार्थमात्रस्येति । तथा च भूतलास्तित्वाभावस्य घटादावन्वय इति भावः अत्यन्ताभाव एव संसर्गाभावएव अधिकरणेति भूतले घटो नास्तीत्यादावधिकरणवाचकभूतलपदे सप्तम्याः सत्त्वात्संसर्गाभावो विषयः । प्रतियोगीति । घटो न पट इत्यत्र प्रतियोग्यनुयोगि पदयोः पटघटपदयोः समानविभक्तिकत्वादन्योन्याभाव इत्यर्थः ।

**न पचति चैत्रश्चैत्रस्य न धनमित्यत्र सप्तम्यभावात् । अलघुपचत्यत्र समानविभक्तेरभावाच्च । अत्राहुः नञ विनिर्मोके यत्र प्रतियोग्यनुयोगिपदयो-**

रभेदान्वयबोधे आकाङ्क्षा तत्रान्योन्याभावबोधकत्वमन्यत्रात्यन्ताभावबोधकत्वमिति व्युत्पत्तिः । अस्ति च न घटः पट इत्यत्र नञासत्त्वे घटपटयोरभेदान्वयबोधे आकाङ्क्षा अतस्तत्रान्योन्याभावप्रत्ययः । भूतले न घट इत्यत्र नञविनिर्मोके नाभेदान्वये आकाङ्क्षेति तत्रसंसर्गाभावप्रत्यय एवेति सङ्क्षेपः ॥

अधिकरणवाचकसप्तम्याः संसर्गाभावबोधनियामकत्वे व्यभिचारं दर्शयति । न पचतीति । पाकानुकूलकृत्यभाववांश्चैत्र इत्यत्र धन चैत्रस्वत्वाभाववदित्यत्र च विनापि सप्तमीमत्यन्ताभावस्य विषयत्वादित्यर्थः । अन्योन्याभावनियामकत्वे व्यभिचारं दर्शयति अलघ्विति । अत्र लघुभिन्नपाकानुकूलकृतिमत्त्वबोधे समानविभक्तिकत्वं विनाप्यन्योन्याभावस्य विषयत्वादित्यर्थः । नञविनिर्मोके नञासत्त्वे । प्रतियोग्यनुयोगिपदयोः घटभूतलयोः । अभेदान्वयबोधे आकाङ्क्षा । भूतलं घट इत्यभेदान्वयबोधे आकाङ्क्षा । तत्रेति । नञसमभिव्याहृतस्थले भूतलं न घट इत्युक्ते अन्योन्याभावबोध इत्यर्थः । अन्यत्र नञविनिर्मोके अभेदान्वयाकाङ्क्षाविरहे अन्यबोधकत्वं । अत्यन्ताभावबोधकत्वम् ।

तदेव व्युत्पादयति अस्ति चेति । अन्योन्याभावप्रत्ययः नञसत्त्वेऽन्योन्याभावप्रत्ययः । अत्राय सङ्क्षेपार्थः । यदि संसर्गाभावबोधेऽनुयोगिनि सप्तमी नापेक्षिता तर्हि भूतले न घटइत्यत्र कथं संसर्गाभावबोधः । यदि वापेक्षिता । तर्हि न पचति चैव इत्यत्र कथमिति चेत् । यादृशपदोपस्थापितस्य प्रतियोगिनो यादृशपदोपस्थापितानुयोगिन्याधाराधेयभावेनान्वयबोधस्तत्र तादृशपदोत्तरनञपदोपस्थाप्यसंसर्गाभावस्याधाराधेयभावेनान्वयबोधः । यथा पचति चैत्र इत्यत्र तिङर्थकृतेः प्रथमान्तोपस्थापितचैत्रे संसर्गमर्यादयाधाराधेयभावेनान्वय इति तत्रानुयोगिनि चैत्रे कृत्यभावस्याप्याधाराधेयभावेनान्वयः । इत्थं च चैत्रे पचतीत्यत्र नान्वयबोध

इति चेत्.न पचतीत्यत्रापि नान्वयबोध इत्यत्र बोधाभावे को हेतुरिति चेत् । विशेष्यतया लडाद्यर्थबोधं प्रति प्रथमान्तपदोपस्थापितत्वस्य नियामकत्वादिति गृहाण चैत्रस्य धनमित्यत्र तु चैत्रनिरूपितस्वत्वस्य षष्ठ्यर्थस्य धनेऽन्वयाच्चैत्रस्य न धनमित्यत्रापि तादृशस्वत्वाभावस्य धनेऽन्वयः ॥ अत एव प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति सङ्गच्छते । भूतले घट इत्यादौ त्वाधाराधेयभावभानार्थं सप्तम्यावश्यकी अन्यथा नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नतया भूतलघटयोराधाराधेयभावान्वयानुपपत्तिरिति भूतले न घटत्यत्रापि सप्तम्यपेक्षा स्यादिति । अत्रेदं प्रतिभाति । चैत्रस्य धनमित्यत्र षष्ठ्यर्थः स्वामित्वमेवास्तु तस्य निरूपकतासम्बन्धेन धनेऽन्वय इति चेन्न स्वामित्वस्य धनवृत्तित्वाभावेन चैत्रीयेपि धने नेदं चैत्रस्येति प्रयोगापत्तेः । न चैवं चैत्रस्य राजायं न मैत्रस्येत्यत्र कथमिति वाच्यम् । तत्र षष्ठ्याः स्वत्वनिरूपकस्वामित्वे लक्षणास्वीकारात् । अत्र यदेव स्वत्वं तदेवस्वामित्वं पर तु धने स्वामित्वं निरूपकतासम्बन्धेन स्वामिनि त्वाश्रयतासम्बन्धेन एवं स्वत्वमपि । न चैवं धनस्वामिनि चैत्रे चैत्रो न स्वामीति प्रयोगापत्तिः । निरूपकतासम्बन्धेन तत्र स्वामित्वाभावादिति वाच्यम्। निरूपकतासम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितावच्छेदकत्वादत एव चैनन्धनमिति न प्रयोगः। निरूपकतासंबन्धस्य प्रतियोगितानच्छेदकत्वेनाधिकारणताया अनियामकत्वादिति । तच्च स्वत्व पदार्थान्तरं प्रतिग्रहोपादानपितृमरणक्रयादिनोत्पद्यते । दानादिना च नश्यति । प्रतिग्रहस्त्विद मदीयमित्यवधानविशेषः तत्रेदमेतदीयं न मदीयमिति प्रदातुरवधानमप्यपेक्षितं । उपादानं त्वारण्यकसमित्कुशादिग्रहणमिति दिक् । अथ यथेष्टभक्षणादियोग्यत्वमेव स्वत्वमिति चेत् । तच्छास्त्रस्य स्वत्वघटितत्वेन स्वत्वाप्रतीतौ तत्प्रवृत्तेरनुत्पत्त्यापत्तेः तस्मादतिरिक्तमेव स्वत्व परस्वं नाददीतेति शास्त्रस्य प्रमाणत्वादिति । ननु प्रतिग्रहादीनां परस्परव्यभिचारिणां कथं स्वत्वावच्छिन्न प्रति कारणताग्रह इति चेत् । प्रतिग्रहादीनामेकशक्तिकत्वकल्पनेन स्वत्वावच्छिन्नं प्रति शक्त

रेव जनकतावच्छेदकत्वेनातिप्रसङ्गनिरासात् । एतेन तृणारणिस्थले तृणादीनां संयोगत्त्वादिना वह्नित्वावच्छिन्नं प्रति न हेतुत्वं परस्परव्यभिचारादिति तृणसंयोगादिजन्यतावच्छेदक जातित्रय वह्नौ स्वीकार्यमिति प्राचीनमतमपास्तम् । तत्र जातित्रयकल्पनापेक्षया तृणवह्निसंयोगरविरश्मिमणिसंयोगमथ्यारणिविजातीयसंयोगे एकस्या एव शक्तेः कल्पनस्य न्याय्यत्वात् । सा शक्तिरतिरिक्ता न च तेषु संयोगेषु जातिविशेष एव कल्प्यतां किमतिरिक्तशक्तिकल्पनयेति वाच्यम् नोदनत्वादिना जातिसङ्करप्रसङ्गादिति संक्षेपः ।

व्यञ्जना च न वृत्त्यन्तरं लक्षणयैव तदर्थसिद्धेः । नन्विदमयुक्तं तथा हि लक्षणायां मुख्यार्थे इतरान्वयानुपपत्तिर्बीजं न च व्यञ्जनायां सा सर्वत्रास्ति गच्छ गच्छसीत्यादौ तदभावादतो वृत्त्यन्तरमास्थेयमिति चेन्न । किमिदं लक्षणाबीजत्वं न तावज्जनकत्वं गङ्गातीरयोः सम्बन्धस्यानुपपत्तिज्ञानाजन्यत्वात् । नापि तज्ज्ञापकत्वं अनुपपत्तिज्ञानमन्तरेणापि गङ्गातीरयोः सम्बन्धस्य चक्षुरादिना ग्रहात् नापि तात्पर्यग्राहकत्वं तात्पर्यव्याप्यान्तरतोपि तद्ग्रहात् । अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेत् न यष्टीः प्रवेशयेत्यत्र व्यभिचारात् । तात्पर्यविषयानुपपत्तिरत्राप्यस्तीतिचेत्तर्हि तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्तु सा चेहाप्यस्ति ॥

अथ गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिकं बुध्यते तत्र शैत्यपावनत्वादिप्रयोजनं न गङ्गापदशक्तिप्रतिपाद्यं गङ्गापदनिष्ठसङ्केताविषय-

त्वात् । नापि गङ्गापदलक्षणाप्रतिपाद्यं मुख्यार्थबाधादिरूपहेत्वभावात्त-दुक्तं नाभिधा समयाभावाद्धेत्वभावाच्च लक्षणेति। तथा च व्यञ्जनेत्यादिना-तदर्थसिद्धः शैत्यपावनत्वादिप्रतीतिरूपार्थसिद्धः शैत्यपावनत्वादिविशे षविशिष्टतीरलक्षणयैवोपपत्तौ किं व्यञ्जयेति भावः । न नु न शैत्यपाव-नत्वादिविशिष्टे लक्षणा तथा हि यावता विनान्वयानुपपत्तिस्तावत एव लक्षणाजन्यबोधविषयत्व । नहि शैत्यपावनत्वादिकमन्तरेणान्वयापपत्ति-स्तथा च घोषान्वयानुपपत्त्या गङ्गापदस्य तीरे लक्षणा । व्यञ्जनायामन्य-देव नियामकमिति शङ्कते । नन्विति । इद लक्षणाया व्यञ्जनिकार्थसि-द्धिकथ न मुख्यार्थे प्रवाहादिरूपमुख्यार्थे ? इतरान्वयानुपपत्तिः। घोषाद्यन्व यानुपपत्ति । बीजमिति । न च तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्त्विति-वाच्यम्। तात्पर्यज्ञानमन्तरेणापि गङ्गाया घोष इत्यादौ मुख्यार्थेनुपपत्तिज्ञा नेसति शक्यसबन्धेनोपस्थापिततीरादेरन्वयानुभवात् सैन्धवमानयेत्यत्रापि लक्षणापत्तेश्च । सा इतरान्वयानुपपत्तिः । गच्छेति । गच्छगच्छसि चे-त्कान्त पन्था नः सन्तु ते शिवाः ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्-इत्यत्र यथा गङ्गायां घोष इत्यादौ गङ्गापदस्य मुख्यार्थे प्रवाहे घोषरूपे-तरपदार्थान्वयानुपपत्तिस्तथा गच्छेत्यस्य मुख्यार्थगमने कान्तरूपेतरपदार्थ-न्वयानुपपत्तेरभावादित्यर्थः । तदभावात् मुख्यार्थे इतरपदार्थान्वया-नुपपत्तेरभावात् । एव च गच्छगच्छसीत्यादौ मागा इति पदप्रतिपाद्यगम-नाभावबोधार्थमवश्यं व्यञ्जनारूपवृत्त्यन्तरं वाच्यमित्याहात इति । लक्ष-णायां तादृशान्वयानुपपत्तिर्बीजमित्यत्र बीजपदार्थमनूद्य दूषणपूर्वकं व्यञ्जना खण्डयति किमिदमित्यादिना तज्जनकत्व। इतरान्वयानुपप-त्तिज्ञानस्य जनकत्व। गङ्गातीरयोरिति तादृशसबन्धात्मकलक्षणायाम-नुपपत्तिज्ञानस्य जनकत्वाभावादित्यर्थः ॥ तज्जन्यत्वाभावेपि तज्ज्ञाप-कत्व भविष्यत्येवेत्यत आह नापीति । तज्ज्ञाकत्व । अनुपपत्तिज्ञान-ग्राहत्वं । तात्पर्यग्राहकत्वं इतरान्वयानुपपत्तिज्ञानस्य लक्षणातात्पर्यग्राह-कत्व तात्पर्यव्याख्यान्तरतोपि तात्पर्यव्याख्यान्तरप्रकरणादितोपि तद्ग्रहात्।

लक्षणारूपसंबन्धग्रहात् । भोजनप्रकारेणेति यष्टीः प्रवेशयेत्युक्ते यष्टि-धरप्रवेशेनान्वय इति । तत् लक्षणाबीजत्व । यष्टीति । प्रवेश-रूपेतरपदार्थस्य यष्टिपदार्थेऽन्वयानुपपत्तिमन्तरेणापि लक्षणाजन्यशाब्द-बोधोदयाद्व्यभिचार इत्यर्थः । ननु तात्पर्यानुपपत्तिरेव लक्षणाबीजमस्तु तथा च तत्र भोजनतात्पर्यानुपपत्तेः सत्त्वादाह तात्पर्येति अत्रापि यष्टिप्रवेशपदार्थेऽपि । तात्पर्यविषयानुपपत्तिः तात्पर्यविषयीभूतभोज-नार्थान्वयानुपपत्तिः । इहापीति । गच्छसि चेदित्यादौ गमनपदं माग च्छेति पदप्रतिपाद्ये गमनाभावे लाक्षणिकमित्यर्थः । अत्रायं समुद्दि-तार्थः । व्यञ्जना न वृत्त्यन्तरं । लक्षणयैव निर्वाहात्तथा हि लक्षणाया तात्पर्यानुपपत्तिर्बीजं । यत्र गच्छसीत्यादावपि गमनाभावबोधतात्पर्येण गच्छेत्युक्त तत्र गमनबोधे तात्पर्यानुपपत्तिज्ञाने सत्येव गमनाभावे लक्ष-णेति । अथ यत्र गङ्गायां घोष इत्युक्त तत्र प्रवाहे घोषान्वयोऽनुपपन्न इत्यनुपपत्तिज्ञानं लक्षणायां कारणमिति चेव मुख्यार्थे इतरान्वयानुपपत्ति-ज्ञानं तात्पर्यानुपपत्तिज्ञानद्वारा लक्ष्यार्थान्वयबोधे प्रयोजकं न तु कारण यष्टीः प्रवेशयेत्यत्र व्यभिचारात् । तात्पर्यानुपपत्तेस्तु सर्वसाधारण्या-दिति दिक् ।

**स्यादेतद्गङ्गायां घोष इत्यादौ लक्षणाप्रयोजनं शैत्यपावनत्वादिप्रतीतिर्न्न च तत्प्रतीतिर्लक्षणासा-ध्या प्रयोजनाभावात् लक्षणायाश्च प्रयोजनवत्त्वनि-यमादिति चेन्न । लक्षणाप्रतीतेरेव प्रयोजनत्वात् तथापि प्रयोजनान्तरं नास्तीति चेत्ततः किं लक्ष-णाया हि प्रयोजनवत्त्वेन नियमो न तु लक्ष्यप्रतीत्य-तिरिक्तप्रयोजनवत्त्वेन गौरवादप्रयोजकत्वाच्च ।**

अथ गङ्गायां घोष इत्यादौ सैत्यपावनत्वादिप्रतीतिमुत्पादयितुं लक्षणा क्रियते । न चानुमानादेव प्रयोजनप्रत्यय इति वाच्यम् । व्याप्ति-

ज्ञानादिविलम्बेनापि शैत्यपावनत्वादेः शब्दैकगम्यत्वादिति तत्प्रतीति-र्व्यञ्जनाद्वारिकैव । तदुक्तं यस्य प्रतीतिमाधातुं लक्षणासमुपास्यते फले-शब्दैकगम्येत्र व्यञ्जनान्नापरा क्रियेत्यभिप्रायवानाह स्यादेतदिति । ननु शैत्यपावनत्वादिविशिष्टतीरलक्षणयैव तत्प्रतीतिर्भविष्यतीति किं व्यञ्जनयेत्यत आह न चेति । प्रयोजनाभावात् । प्रयोजनविशिष्टे लक्षणाया अभावात् । तदुक्तं । प्रयोजनेन सहितं लक्षणीयं न युज्यत इति । ननु प्रयोजनविशिष्टे लक्षणानेत्यत्र को हेतुरित्यत आह लक्षणायाश्चेति । तथा च प्रयोजनस्य लक्ष्यत्वे लक्षणायाः सप्रयोजकत्वं भज्येत । न हि शैत्यपावनत्वादि लक्ष्य सप्रयोजन । लक्ष्यप्रयोजनयोर्भिन्नत्वात् । तदुक्तं । ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतमिति । यथा ज्ञानस्य विषयो घटः फलं तु ज्ञातताऽनुव्यवसायो वा । तथा लक्षणाजन्यज्ञानविषयस्तीरादिः । फल शैत्यपावनत्वादिप्रतीतिः । तथा लक्ष्यप्रयोजनप्रतीतिर्भेद इति भावः । प्रयोजनस्य लक्ष्यप्रतीतिभिन्नत्वे मानाभावादित्याह । नेत्यादि । तथा च शैत्यपावनत्वादिविशिष्टे लक्षणास्वीकारेऽपि क्षतिविरहादिति भावः । यद्वा ननु गङ्गापदाल्लक्षणया तीरप्रतीतिस्तत्फलं शैत्यपावनत्वादिप्रतीतिरिति न लाक्षणिकप्रतीतौ शैत्यपावनत्वादिकं विषय इत्यत आह नेत्यादि तथा च शैत्यपावनत्वादिप्रतीतेस्तीरप्रतीतिफलत्वाभाव इति । ननु शैत्य-पावनत्वादिविशिष्टे लक्षणास्वीकारेऽपि लक्षणायाः सप्रयोजकत्वनियमा-त्प्रयोजनान्तरमवश्यं वाच्यम् तच्च नास्तीत्यभिप्रायवानाह तथापीति । ततः किमिति । लक्ष्यप्रतीत्यतिरिक्तप्रयोजनविरहे किमनिष्टमित्यर्थः । लक्षणाया इति । तथा च प्रयोजनस्य लक्ष्यप्रतिपत्तिभिन्नत्वे मानाभा-वादिति भावः । ननु प्रयोजनस्य लक्ष्यप्रतीतिभिन्नत्वं यदि युक्तिसिद्धं तदा किं गौरवेणेत्यत आहाप्रयोजकत्वाच्चेति । तथा च प्रतिज्ञामात्रेण नार्थ-सिद्धिः प्रयोजनेनेत्यादिकं तु प्रतिज्ञामात्रं न यौक्तिकमपीति युक्तिरपि नास्तीति भावः । यद्वा । प्रयोजनाभावादिति । यथा शुद्धतीरस्य लक्ष्यत्वे शैत्यपावनत्वादिप्रतिपत्तिः प्रयोजनं तथा शैत्यपावनत्वादिविशिष्टस्य

लक्ष्यत्वे तु प्रयोजनाभावादित्यर्थः । ननु मास्तु प्रयोजनमित्यत आह लक्षणाया इति अन्यद्व्याख्यानं पूर्ववत् ।

**स्यादेतत् नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादि निर्णायकं तथा च यत्र प्रकरणादिशून्यार्थान्तरं प्रतीयते तत्र नाभिधामूलं सहकार्यभावात् नापि लक्षणा अयोग्यत्वादिति चेन्न । प्रकरणादीनामननुगततया सहकारित्वानुपपत्तेः ।**

ननु मास्तु लक्षणामूलिका व्यञ्जना परन्त्वभिधामूलिका तु भविष्यत्येवेत्यत आह स्यादेतदिति यद्वा नानार्थस्थले प्रकरणादिनार्थविशेषे निर्णितेऽर्थान्तरबोधकत्व व्यञ्जनयेति । तदुक्तं अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति । संयोगाद्यैः स शङ्खचक्रो हरीत्यादौ शङ्खचक्रादिसंयोगाद्यैः । अवाच्यार्थधीकृद्व्यापृत्तिः अशङ्खचक्रधीकृद्व्यापारः अञ्जन व्यञ्जनेत्यर्थः । भद्रात्मनो दुराधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य यस्यानुपप्लुतगतो परवारणस्य दानाम्बुसेकसुभगः सततंकरोभूदित्यत्र प्रकरणादिना राज्ञबोधो व्यञ्जनयेत्यभिप्रायवानाह स्यादेतदिति । नानार्थस्थले सैन्धवमानयेत्यादौ भद्रात्मन इत्यादौ च तावत्प्रथमं । अर्थविशेषप्रत्यये तुरगस्यप्रत्यये राज्ञः प्रत्यये च । अर्थान्तरं गजरूपार्थोन्तरं च । ननु शक्त्यैव निर्वाहो भवीष्यतीत्यत आह नाभिधेति । अभिधा शक्तिः । सहकारीति । नानार्थस्थले सैन्धवमानयेत्यादौ शक्त्या बोधजनने प्रकरणादिकं सहकारि । अर्थान्तरबोधने तु प्रकरणादिरूपसहकार्यभावान्नाभिधामूलकत्वमित्यर्थः । यद्वा सकृदुच्चरितः शब्दः सकृदर्थं गमयतीतिन्यायात्तुरगबोधे जाते सति शक्त्या न लवणबोधो जायते तथा सहकार्यभावाद् अभिधायाहकसङ्केताभावात् । तदुक्तं । नाभिधा समयाभावादिति । समयः सङ्केतः इत्थं चात्रापि समयाभावात् । सङ्केताभावात् । अयोग्य-

द्विति । मुख्यार्थबाधादिरूपकारणाभावादित्यर्थः तदुक्तं । हत्वभावान्न लक्षणेति । यद्वा । सहकार्यभावात् । प्रकारणादिरूपसहकार्यभावात् । अयोगात् । मुख्यार्थायोगात् । प्रकरणादिनामिति । तथा चानुगतरूपेण कार्यकारणभावग्रहाभावादिति भावः ।

तात्पर्यग्राहकत्वेनैषामनुगम इति चेत्तर्हि लाघवात्तात्पर्यज्ञानमेव हेतुरस्तु तच्चेहाप्यस्ति। स्यादेतत् लक्षणा हि पदवृत्तिरियं तु पदतदेकदेशवाक्यरचनार्थभङ्ग्याद्याकाराश्रितेत्याश्रयभेदाद्भेद इति चेन्न। असिद्धेः। तदेकदेशादयो ह्यर्थविशेषतात्पर्यग्राहका न तु तत्प्रतिपादका इति। स्यादेतत् लक्ष्ये तात्पर्यज्ञानं लक्षणासहकारि न तु व्यङ्ग्यार्थे तात्पर्यग्रहो नियतः स्वार्थरचितकाव्यादौ तात्पर्यविषयस्यापि व्यङ्ग्यस्य चमत्कारादिति चेन्न। व्यङ्ग्ये तार्यग्रहस्यानपेक्षायां गङ्गायां घोष इत्यादौ शैत्यादिकमेव प्रतीयते न तु केशबालुकादिमत्त्वमिति नियमो न स्यात्। वासनाविशेषपरिपाकान्नियम इति चेत्तर्हि लक्षणास्थलेपि स नियामकोस्तु कृतं तात्पर्यग्रहेणेति ।

ननु तात्पर्यग्राहकत्वेन प्रकारणादीनामनुगमात्तेन रूपेण कारणतायहो भविष्यतीत्यत आह तात्पर्येति । लाघवेति । तार्यग्रहस्यावश्यकत्वेन लाघवादित्यर्थः । स च तात्पर्यग्रहोपि । अर्थान्तरबोधेपि । तथापि नेयं लक्षणान्तर्गता किंत्वाश्रयभेदाद्भिन्नेत्याशङ्कते स्यादेतदिति। इयं तु ।.व्यञ्जना तु पदं तदेकदेशः । पदैकदेशः । वाक्यं । रचना । आनुपूर्वीविशेषः । अर्थः । पदार्थः । व्यङ्ग्यं आकाभिनयः । आदिपदाद्वर्णा अपि ग्राह्याः । तत्र पदं द्विविधं । सुवन्तं तिङन्तं च तदेकदेशो

नामनधातुरूपप्रकृतिः सुप्तिङुपसर्गरूपश्चेति तेषां सर्वेषां व्यञ्जकत्व मित्यर्थः । तत्र पदस्य व्यञ्जकत्वं यथा निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वीतवेयं तनुः मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्यत्राधमपदेन तस्यान्तिकमेव रन्तुङ्गतासीत्यधमपदेनप्राधान्येन व्यज्यते । अत्र पदैकदेशाना बहुत्वेन निखिलतदुदाहरणे गौरवमिति विभक्तिरूपैकदेशोदाहरण प्रदृश्यते यथा निखित्वास्ते भूमि बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरुदितोच्छूननयनाः । परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने मानमधुना । अत्र तवप्रसादं कर्तुमास्ते लिखन् न तु लिखतीति ॥ आस्ते । नत्वासितः । भूमि न तु भूमौ । तथा चावस्य न बुद्धिपूर्वकेनेति प्रसादपर्यन्तमवस्थानमिति तिङविभक्त्या व्यज्यत इति । एवं वाक्यादीनामपि सुधीभिरन्विष्य बोध्यमिति । असिद्धेः । व्यञ्जनाया असिद्धेः । तथा च व्यञ्जनायामसिद्धाया कृत वृत्त्यन्तरेणेति भावः । अथवा असिद्धेः पदैकदेशादीनां व्यञ्जकत्वासिद्धेः । ननु तदेकदेशवर्णवाक्यादीना शक्तिलक्षणयोरभावाद्विना वृत्त्यन्तरं कथमर्थप्रत्यायकत्वमित्यत आह तदेकदेशेति । पदैकदेशभूतप्रकृतिप्रत्यययोर्वाक्यादीनां च तात्पर्यग्राहकत्व मित्यर्थः । न तु तत्प्रतिपादकाः । नत्वर्थविशेषप्रतिपादकाः । ननु कारणभेदाल्लक्षणातिरिक्तत्व भविष्यतीत्यभिप्रायवानाह स्यादेतदिति । नियतः । व्यञ्जनायां सहकारितया नियतः । स्वार्थरचितेति । परार्थरचितस्थले तु परज्ञापनीयव्यङ्ग्यार्थस्य तात्पर्यविषयत्वात् चार्थेत्युक्तं । तथ च तत्र तात्पर्याभावेन लक्षणाया अभावे लक्षणाया अभावाद्व्यञ्जनावश्य वाच्या । अन्यथा व्यङ्ग्यस्य चमत्कारित्व न स्यादिति भावः । व्यङ्ग्यतात्पर्यग्रहस्येति । तथा च स्वार्थरचितकाव्यादावपि व्यङ्ग्यतात्पर्यग्रहस्य जायमानत्वेन व्यभिचाराभावादिति भावः । ननु संस्कारविशेषपरिपाकवशाच्छैत्यपावनत्वादिकमेव प्रतीयत इत्याह । वासनेति । वासनावि-

शेषः संस्कारविशेषः नियमः शैत्यपावनत्वादिबोधनियमः । सः वासना-विशेषः तथा च तात्पर्यग्रहस्य वासनाविशेषस्य वा लक्ष्ये व्यङ्ग्ये चोभयत्र वक्तुं शक्यत्वात् सामग्रीतौल्यात्किमतिरिक्तव्य ञ्जनयेति भावः ।

वस्तुतो व्यञ्जनायां गच्छगच्छसीत्यत्र मागा इत्यत्रास्यास्तात्पर्यमुन्नीयते सम्भाव्यते वा । न तु मागा इति निर्णीयतः इति कृतं वृत्यन्तरेण । स्यादेतत् यद्येते एव वृत्ती कथं तर्हि प्रजयतीत्यादौ प्रकर्ष-बोधः । नहि प्रादेः प्रकर्षादौ शक्तिर्द्योतकत्वात् न च लक्षणा अशक्तत्वात् । उच्यते प्रजयतीत्यत्र प्रकृष्ट-जयलक्षकः । प्रशब्दस्तु तात्पर्यग्राहकः तत्वमेव च द्योतकत्वं । न च जयः शक्य एव प्रकर्षो लक्ष्य इति वाच्यम् जयमात्रं हि शक्यं न तु विशिष्टजयः । तदाहुः शक्यादनेन रूपेण ज्ञाते भवति लक्षणेति । ननु प्रादेरेव प्रकर्षादौ न कथं शक्तिः कल्प्यते इति चेन्न अन्यलभ्यत्वादिति गृहाण । व्यतिसेत्यत्र तु लुसो धातुरेवार्थं प्रत्याययति धातुलोपमजानतस्त-त्रार्थप्रत्ययाभावादिति संक्षेपः ।

ननु लक्ष्यार्थबोधे वासनाविशेषस्य नियामकत्वे तात्पर्यग्रहस्य नियामकत्वाभावे गच्छगच्छसीत्यत्र गमने वान्वयानुपपत्तेरभावान्मागा इत्यत्र लक्षणा न स्यादित आह वस्तुत इति । अस्याः । उन्नीयते । तुल्यकोटितया संदिह्यते यदि तत्र तुल्यकोटिकसंशयो नानुभवसिद्ध-स्तदाह सम्भाव्यत इति । उत्कटकोटिकतया सन्दिह्यत उत्यर्थः । न तु मागा इति । तथा च प्रायो मागा इत्यत्रास्यास्तात्पर्यमिति तात्पर्य-

उद ईहे ॥ १९ ॥

उत्पूर्वात्तिष्ठतेरीहार्थे वर्तमानाद्दो भवति । गेहे उत्तिष्ठते । धर्मे उत्तिष्ठते । घटत इत्यर्थः । ईह इति किम् । अस्माद् ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः । ईह इति ईहतेः पर्यायग्रहणात् गम्यमानायामीहायां न भवति । आसनादुत्तिष्ठति । उत्तिष्ठति सेना । अस्माद् ग्रामाद्दिष्टिः (?) पञ्च पुरुषा उत्तिष्ठन्ति ॥

उपान्मन्त्रकरणे ॥ २० ॥

उपपूर्वात्तिष्ठतेर्मन्त्रकरणे दो भवति । जगत्योपतिष्ठते । तृष्टुभोपतिष्ठते । मन्त्रकरण इति किम् । भर्तारमुपतिष्ठति भार्या यौवनेन । उपादिति योगविभागः । तेन देवपूजासङ्गतिकरणमित्रकरणपथिषु दो भवति । देवपूजायाम् । सीमन्धरमुपतिष्ठते । सङ्गतिकरणे । रथिकानुपतिष्ठते । मित्रकरणे । महामात्रानुपतिष्ठते । सङ्गतिकरणमुपश्लेषः । मित्रकरणं मानसः सम्बन्धः । पथि । अयं पन्थाः स्रुघ्नमुपतिष्ठते ॥ वा लिप्सायामिति वक्तव्यम् ॥ * ॥ भिक्षुको दातृकुलमुपतिष्ठते । उपतिष्ठति वा ॥

घेः ॥ २१ ॥

अकर्मको घिरिति । उपपूर्वात्तिष्ठतेर्घेर्दो भवति । यावद्भुक्तमुपतिष्ठते । यावदोदनमुपतिष्ठते । भोजने भोजने ओदने ओदने उदीक्षत इत्यर्थः । घेरिति किम् । स्वामिनमुपतिष्ठति ॥

व्युत्तपः ॥ २२ ॥

घेरिति वर्तते । वि उदित्येवम्पूर्वात्तपतेर्घेर्दो भवति ।

वितपते । ज्वलतीत्यर्थः । उत्तपते । घेरित्येव । उत्तपति सुवर्णं सुवर्णकारः । वितपति पृथ्वीमादित्यः । दहती-त्यर्थः । व्युद इति किम् । निष्टपति । दीप्यत इत्यर्थः ॥ स्वाङ्गकर्मकाचेति वक्तव्यम् ॥ * ॥ वितपते पाणिम् । उत्तपते पाणिम् । आत्मीयमङ्गं स्वाङ्गं न पारिभाषिकं तत्र तेनेह न भवति । वितपति परपाणिम् । उत्तपति देवदत्तो यज्ञदत्तस्य पृष्ठम् ॥

आङो यमहनः ॥ २३ ॥

आङ्पूर्वाभ्यां यम हन इत्येताभ्यां धिभ्यां दो भवति। आयच्छते । दीर्घो भवतीत्यर्थः । आहते । आघ्नाते। आघ्नते । यमः कर्त्रभिप्राये फले समुदाङ्भ्यो यमो ग्रन्थ इति दः सिद्धोऽन्यत्रेदम् । घेरित्येव । आयच्छति रज्जुम् । आह-न्ति पापम् ॥ स्वाङ्गकर्मकाचेति वक्तव्यम् ॥ * ॥ आहते वक्षः । स्वाङ्गादिति किम् । परकीयाङ्गे कर्मणि मा भूत् । आहन्ति शिरः परकीयम् ॥

समो गम्प्रच्छिस्वृच्छिश्रुविद्दृशः ॥ २४ ॥

घेरिति वर्तते । सम्पूर्वेभ्यो गम्-प्रच्छि-स्वृ-ऋच्छि श्रु-विद्-दृश्-इत्येतेभ्यो दो भवति । सङ्गच्छते । संपृच्छते। संस्वरते । ऋ इति ऋच्छतेरियर्तेश्च ग्रहणम् । समृच्छते। समियृते । समरिष्यते । ऋच्छतेरनादेशस्य ग्रहणम् । आदेशस्य ऋग्रहणेन सिद्धत्वात् । समृच्छिष्यते । संशृणुते। विदेरादादिकस्य ग्रहणं मवद्भिस्साहचर्यात् । संवित्ते। संपश्यते । घेरित्येव । सङ्गच्छति सुहृदम् । संवेत्ति धर्मम्। गेरस्यत्यूह्योर्वेति वक्तव्यम् ॥ * ॥ निरस्यते । निरस्यति। समूहति । समूहते ॥

निसंव्युपाद् ह्वः ॥ २५ ॥

पुनः संग्रहणाड्डेरिति निवृत्तम् । नि-सं-वि-उप इत्येवम्पूर्वात् ह्वयतेर्दो भवति । निह्वयते । संह्वयते । विह्वयते । उपह्वयते । ह्वयतेरात्वेन विकृतनिर्देशेऽपि प्रकृतिग्रहणं न व्यो लिटीति निर्देशात् ॥

आङः स्पर्द्धे ॥ २६ ॥

स्पर्द्धः पराभिभवेच्छा । आङ्पूर्वात् ह्वयतेः स्पर्द्धविषये दो भवति । मल्लो मल्लमाह्वयते । छात्रश्छात्रमाह्वयते । स्पर्द्धयाह्वानं करोतीत्यर्थः । स्पर्द्ध इति किम् । गामाह्वयति ॥

गन्धनावक्षेपसेवान्यायप्रतियत्नप्रकथोपयोगे कृञः ॥ २७ ॥

गन्धनं सूचनम् । अवक्षेपो भर्त्सनम् । सेवा संश्रयः । अविधिना प्रवृत्तिरन्यायः । अविद्यमानार्जनं विद्यमान संस्कारो वा प्रतियत्नः । प्रबन्धेन कथनं प्रकथा । उपयोगो धर्मादिनिमित्तो व्ययः । गन्धनादिष्वर्थेषु वर्तमानात् कृञो दो भवति । गन्धने । उत्कुरुते । अयमिमं सूचयतीत्यर्थः । अवक्षेपे । स्येनो वर्तिकामुपकुरुते । भर्त्सयतीत्यर्थः । सेवायां । गणकानुपकुरुते । सेवत इत्यर्थः । अन्याये । परदारानुपकुरुते । न्यायमनपेक्ष्य तेषु प्रवर्तत इत्यर्थः । प्रतियत्ने । एधो दकस्योपस्कुरुते । प्रतियत्ने कृञ इति कर्मणि ता । उपात्प्रतियत्नवैकृतेत्यादिना सुट् । प्रकथायाम् । जनापवादान् प्रकुरुते । उपयोगे । शतं प्रकुरुते । धर्मार्थं विनियुक्त इत्यर्थः । एतेष्विति किम् । कटं करोति । आविः

करोतीत्यत्र आविः शब्द एव गन्धने वर्तते न करोतिः । अपकारप्रयुक्तं वा सूचनं गन्धनमित्यदोषः ॥

प्रसहने धेः ॥ २८ ॥

प्रसहनमभिभवः । अधिपूर्वात्कृञः प्रसहनेऽर्थे दो भवति । शत्रूनधिकुरुते । वादिनोऽधिकुरुते । अभिभवतीत्यर्थः । प्रसहन इति किम् । अधिकरोति । अकर्त्राप्ये फले ममेव भवति ॥

शब्दकर्मणो वेः ॥ २९ ॥

कर्मेह कर्त्राप्यम् । विपूर्वात् करोतेः शब्दकर्मकाद्दो भवति । ध्वाङ्क्षो विकुरुते स्वरान् । क्रोष्टा विकुरुते स्वरान् । शब्दकर्मण इति किम् । विकरोति कटम् । शब्दग्रहणेन शब्दविशेषाः स्वरादयो गृह्यन्ते । तेनेह न भवति । विकरोति शब्दम् । विकरोत्यनुवाकम् । विकरोत्यध्यायमसाव ह्ना ॥

धेः ॥ ३० ॥

विपूर्वात्करोतेर्धेर्दो भवति । विकुर्वते सैन्धवाः । साधुदान्ता ओदनस्य पूर्णाश्छात्रा विकुर्वते । तृप्त्यर्थयोगे उपसंख्यानमिति करणे ता ॥

सम्मानोत्सञ्जनोपनयनज्ञानभृति-
गणनव्यये नियः ॥ ३१ ॥

सम्मानः पूजनम् । उत्सञ्जनमुत्क्षेपः । उपनयनमाचार्यकरणम् । ज्ञानमवगमः । भृतिर्वेतनादानम् । ऋणशुल्कादिनिर्यातनं गणनम् । व्ययो धर्मादिष्वर्थविनियोगः । सम्मानादिषु यथासम्भवं विशेषणेषु नयतेर्धोर्दो भवति । सम्माने । नयते चार्वी स्याद्वादे । चार्वी

बुद्धिस्तद्योगादाचार्योऽपि तथोक्तः । विनेयेषु प्रतिपादनेन सम्मानं करोतीत्यर्थः । उत्सञ्जने । बालमुदानयते । उत्क्षिपतीत्यर्थः । उपनयने । माणवकमुपनयते । आत्मनः शिष्यभावेन माणवकं प्रापयतीत्यर्थः । ज्ञाने । नयते चार्वी तत्त्वार्थे । तत्त्वपदार्थान् निश्चिनोतीत्यर्थः । भृतौ । कर्मकरानुपनयते । वेतनादानेन पुष्णातीत्यर्थः । गणने । मद्रकाः कारं विनयन्ते । निर्यातयन्तीत्यर्थः । व्यये । शतं विनयते । सहस्रं विनयते । एतेष्विति किम् । अजां नयति ग्रामम् ॥

## कर्तृस्थे कर्मण्यमूर्तौ ॥ ३२ ॥

नयतेः कर्ता लकारवाच्यः । रूपाद्यात्मिका मूर्तिः । कर्त्राप्यफलता कर्मता । तेन कर्त्राप्ये क्रियाफले सिद्धेऽपि दे नियमार्थमेतत् । कर्तृस्थ इति किम् । देवदत्तो जिनदत्तस्य क्रोधं विनयति । कर्मणीति किम् । बुद्ध्या विनयति । अमूर्ताविति किम् । गड्डुम् विनयति ॥

## किरतेर्हर्षजीविकाकुलायकरणे ॥ ३३ ॥

किरतेर्दो भवति हर्षजीविकाकुलायकरण इत्येतेषु गम्यमानेषु । हर्षे । अपस्किरते वृषभो हृष्टः । जीविकायाम् । अपस्किरते कुक्कुटो भक्षार्थी । कुलायो निवासः । कुलायकरणे । अपस्किरते श्वा आश्रयार्थी । चतुष्पाच्छकुनिष्व-पाडर्षादाविति सुट् ॥

## वृत्तिसर्गतायने क्रमः ॥ ३४ ॥

वृत्तिरविघातः । सर्ग उत्साहः । तायनं पृथुभावः । वृत्त्यादिष्वर्थेषु वर्तमानात् क्रमेर्दो भवति । वृत्तौ । नये-

ष्वस्य क्रमते बुद्धिः । न प्रतिबध्यत इत्यर्थः । सर्गे । क्रमते जैनेन्द्राध्ययनाय । उत्सहत इत्यर्थः । तायने । नास्मिन्मूढे शास्त्राणि क्रमन्ते । न तायन्त इत्यर्थः । एतेष्विति किम् । क्रामति । क्रमो म इति दीत्वम् ॥

## परोपात् ॥ ३५ ॥

वृत्तिसर्गतायन इति वर्तते । पर-उप-इत्येवम्पूर्वात् क्रमेर्दो भवति । पराक्रमते । उपक्रमते । सिद्धे सत्यारम्भो नियमाय परोपाभ्यामेव नान्यस्माद्धेः । अनुक्रामति । वृत्त्यादिष्वित्येव । पराक्रामति । उपक्रामति ॥

## ज्योतिरुद्गतावाङः ॥ ३६ ॥

आङ्पूर्वात् क्रमेर्ज्योतिषामुद्गमनेऽर्थे दो भवति । आक्रमते सूर्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि । ज्योतिरुद्गताविति किम् । आक्रामति धूमो हर्म्यतलम् । आक्रामति माणवकः कुतपमित्यत्रोद्गतिरपि नास्ति ॥

## वेः स्वार्थे ॥ ३७ ॥

स्वार्थः पादविक्षेपः । विपूर्वात् क्रमेः स्वार्थे दो भवति । सुष्ठु विक्रमते । साधु विक्रमते । विक्रमणमश्वादीनां गतिविशेषः । स्वार्थ इति किम् । विक्रामत्यजिनसन्धिः । स्फुटतीत्यर्थः ॥

## प्रादारम्भे ॥ ३८ ॥

आरम्भः प्रथमं कर्म । प्रपूर्वात् क्रम आरम्भे दो भवति । प्रक्रमते भोक्तुम् । परोपादित्यत उपादिति वर्तते । उपक्रमते भोक्तुम् । आरभते भोक्तुमित्यर्थः ।

आरम्भ इति किम् । पूर्वेद्युः प्रक्रामति । अपरेद्युरुपक्रामति । पूर्वस्मिन्नहनि यदनेन गतं तदपरस्मिन्नागच्छतीत्यर्थः ॥

वा ऽगेः ॥ ३९ ॥

अगेः क्रमो वा दो भवति । क्रमते । इयमप्राप्ते विभाषा । वृत्त्यादिषु पूर्वेण नित्यो विधिः । अगेरिति किम् । संक्रामति ॥

ज्ञो ऽपन्हवे ॥ ४० ॥

अपन्हवो ऽपलापः । अपन्हवेऽर्थे जानातेर्दो भवति । शतमपजानीते । सहस्रमपजानीते । अपन्हव इति किम् । चिदपि जानासि ॥

धेः ॥ ४१ ॥

जानातेर्धेर्दो भवति । सर्पिषो जानीते । दध्नो जानीते । सर्पिषा दध्ना चोपायनेन सम्पद्यत इत्यर्थः । ज्ञो स्वार्थे करण इति करणे ता । अकर्त्रभिप्राये फले इदं दविधानम् । धेरिति किम् । स्वरेणपुत्रं जानाति ॥

संप्रतेरस्मृतौ ॥ ४२ ॥

स्मृतिराध्यानं चिन्तनं वा । सम्प्रतिपूर्वाज्जानातेरस्मृत्यर्थे दो भवति । शतं सञ्जानीते । शतं प्रतिजानीते । अस्मृताविति किम् । मातुः सञ्जानाति । पितुः सञ्जानाति । स्मर्थदयेषां कर्मणीति ता ॥

दीप्त्युपोक्तिज्ञानेहाविमत्युपमन्त्रणे वदः ॥ ४३ ॥

दीप्तिः प्रकाशनम् । उपेत्योक्तिरुपोक्तिः । उपसान्त्वनमित्यर्थः । ज्ञानं पदार्थावगमः । ईहा यत्नः । नानाम-

तिर्विमतिः । उपमन्त्रणं रहस्यनुकूलनम् । दीप्त्यादिष्वर्थेषु वदतेर्दो भवति । दीप्तौ । वदते चार्वी । तत्त्वार्थे दीप्यमानो वदतीत्यर्थः । उपोक्तौ । कर्मकरानुपवदते । उपेत्य सम्भाषत इत्यर्थः । ज्ञाने । वदते चार्वी । चन्द्रोदये जानाति वदितुमित्यर्थः । ईहे । कोऽस्मिन् क्षेत्रे वदते । को यतन इत्यर्थः । विमतौ । गेहे विवदन्ते । गोष्ठे विवदन्ते । विचित्रं भाषन्त इत्यर्थः । उपमन्त्रणे । कुलभार्यामुपवदते । परदारानुपवदते । अनुकूलयतीत्यर्थः । एतेष्विति किम् । वदति देवदत्तः ॥

## व्यक्तवाक्समुक्तौ ॥ ४४ ॥

व्यक्तवाचो व्यक्तवर्णत्वान्मनुष्यादयः प्रसिद्धाः । सम्भूय वचनं समुक्तिः । व्यक्तवाचां समुक्तौ गम्यमानायां वदतेर्दो भवति । सम्प्रवदन्ते ग्राम्याः । सम्प्रवदन्ते साधवः । सम्भूय भाषन्त इत्यर्थः । व्यक्तवागिति किम् । सम्प्रवदन्ति कुक्कुटाः । समुक्ताविति किम् । देवदत्तोवदति जिनदत्तम् । सादृश्ये पुनरर्थे वा । *धेरिति किम् । पूर्वमुक्तमनुवदति । व्यक्तवाक्समुक्तावित्येव । अनुवदन्ति वाप्यः ॥

## वा विवादे ॥ ४५ ॥

विवादो विप्रलापस्तत्र वर्तमानाद्वदतेर्वा दो भवति । विप्रवदन्ते सांवत्सराः । विप्रवदन्ति सांवत्सराः । विप्रवदन्ते वादिनः । विप्रवदन्ति वादिनः । युगपद्विरुद्धं वदन्तीत्यर्थः । व्यक्तवाग्ग्रहणमनुवर्तते । ततो व्यक्तवाक्समुक्ताविति नित्ये प्राप्ते विकल्पः । विवाद इति किम् । सम्प्रवदन्ते साधवः । व्यक्तवागित्येव । सम्प्र-

* आत्रादर्शपुस्तके कश्चिदंशो निपतितः ।

वदन्ति शकुनयः । समुक्तावित्येव । सम्प्रवदन्ति वादिनः क्रमेण ॥

## ग्रो ऽवात् ॥ ४६ ॥

अवपूर्वाद्गिरतेर्दो भवति । अवगिरते । अवगिरेते । अवगिरन्ते । गृणातेरवपूर्वस्य प्रयोगो नास्ति । अवादिति किम् । गिरति । निगिरति ॥

## प्रतिज्ञाने समः ॥ ४७ ॥

प्रतिज्ञानमभ्युपगमः । प्रतिज्ञानेऽर्थे सम्पूर्वाद्गिरतेर्दो भवति । अनेकान्तात्मकं वस्तु सङ्गिरते । शतं सङ्गिरन्ते । प्रतिज्ञान इति किम् । सङ्गिरति ॥

## उच्चरो ऽधेः ॥ ४८ ॥

उत्पूर्वाच्चरतेरधेर्दो भवति । गुरुवचनमुच्चरते । उत्क्रम्य चरतीत्यर्थः । अधेरिति किम् । धूम उच्चरति । उदूर्ध्वं गच्छतीत्यर्थः ॥

## समो भया ॥ ४९ ॥

सम्पूर्वाच्चरतेर्भा तेन योगे दो भवति । रथेन सञ्चरते । अश्वेन सञ्चरते । भान्ते प्रयुक्ते दो भवति न तु गम्यमाने । भायुक्तादिति किम् । त्रींल्लोकान् सञ्चरति जिनधर्मः । अत्र स्वात्मनेति करणं गम्यमानम् ॥ दाणश्च सा चेद्वर्थे ऽशिष्टव्यवहारे इति वक्तव्यम् ॥ * ॥ सम्पूर्वाद्दाणो भायोगे दो भवति सा चेद्वर्थे भा । इदमेव ज्ञापकमशिष्टव्यवहारे भाऽपि भवतीति । दास्या सम्प्रयच्छते ॥ वृषल्या सम्प्रयच्छते कामुकः । सम इति सम्बन्धे ता तेन प्रशब्देन व्यवधानं न भवति । अवध

इति किम् । पाणिना सम्प्रयच्छति । नेदं वक्तव्यम् । कर्मव्यतिहारे दः । सहार्थे च भा द्रष्टव्या ॥

स्वीकृतावुपाद्यमः ॥ ५० ॥

पाणिग्रहणमविरोधो वा स्वीकृतिः । उपपूर्वाद्यमः स्वीकृतावर्थे दो भवति । कन्यामुपयच्छते । भार्यामुपयच्छते । स्वीकृताविति किम् । परभार्यामुपयच्छति ॥

श्रुस्मृदृशः सनः ॥ ५१ ॥

श्रु-स्मृ-दृश-इत्येतेभ्यः सन्नन्तेभ्यो दो भवति । शुश्रूषते शास्त्रम् । सुस्मूर्षते पूर्ववृत्तम् । दिदृक्षते देवम् । श्रुदृशिभ्यामकर्म्मकावस्थायां समो गम्प्रच्छीत्यादिना दो विहितस्तत्र सनः पूर्ववदित्येव दः सिद्धः सकर्मकार्थमिदम् । स्मरतेरप्राप्ते विधानम् ॥

ज्ञः ॥ ५२ ॥

जानातेः सन्नन्तात् दो भवति । जिज्ञासते धर्मम् । ज्ञोऽपन्हवे घेः संप्रतेरस्मृताविति जानातेर्दो विहितः । तथा कर्त्राप्ये फले ज्ञोऽगेरित्यत्र पूर्ववत्सन इति सिद्धस्ततोन्यत्रेदं वचनम् ॥

नानोः ॥ ५३ ॥

अनुपूर्वाज्जानातेः सन्नन्ताद्दो न भवति । पुत्रमनुजिज्ञासति । भृत्यमनुजिज्ञासति ॥ सकर्मकादिति वक्तव्यम् ॥ * ॥ इह मा भूत् । अनुजिज्ञासते मनसा नो वक्तव्यम् । पूर्वेण प्राप्तस्यायं प्रतिषेधः । पूर्वेण च सकर्मकादेव सन्नन्ताद्दो विहितः । घेस्तु सनः पूर्ववदिति दः । अनोरिति किम् । पुत्रं जिज्ञासते ॥

## प्रत्याङ्श्रुवः ॥ ५४ ॥

नेति वर्तते । प्रति आङ् इत्येवम्पूर्वात् शृणोतेः सन्नन्ताद्दो न भवति । प्रतिशुश्रूषति । आशुश्रूषति शास्त्रम् । श्रुस्मृदृशः सन इति प्राप्तस्यानेन प्रतिषेधः । सनिर्देशः समर्थार्थः । सामर्थ्यञ्च धोगिना । तेनेह न प्रतिषेधः । देवदत्तं प्रतिशुश्रूषते ॥

## सदेर्गात् ॥ ५५ ॥

नेति निवृत्तमसम्भवात् । गनिमित्तभूतः सदिरुपचाराद्गः । सदेर्गविषयाद्दो भवति । शीयते । शीयेते । शीयन्ते । पाघ्रादिना शीयादेशः । गादिति किम् । शत्स्यति । अशात्स्यत् । शिशत्सति ॥

## मृङो लुङ्लिङोश्च ॥ ५६ ॥

म्रियतेर्लुङ्लिङोर्गपराच्च दो भवति । अमृत । मृषीष्ट । आशिषि लिङ् । उरिति सिलिङो कित्वम् । गपरात् खल्वपि । म्रियते । म्रियस्व । रिङ् यलिङश्च इति रिङादेशः । ङित्वादेव दे सिद्धे नियमार्थमिदमन्यत्र दो न भवति । मरिष्यति । अमरिष्यत् । ममार ॥

## सनः पूर्ववत् ॥ ५७ ॥

पूर्वेण तुल्यं वर्तत इति पूर्ववत् । पूर्वञ्च प्रत्यासत्तेः सनः । पूर्वो यो धुस्तद्वत्सन्नन्ताद्दो भवति । येभ्यो धुभ्यो येन विशेषणेन दो विहितस्तेभ्यः सन्नधिकेभ्योऽपि दो भवतीत्यर्थः । यथा ङनुदात्तेतो द इति । शेते । आस्ते । एवं सन्नन्तादपि शिशयिषते । आसिसिषते । गिविशेषणेन निविशा निविशते । निविविक्षते । अर्थविशेषणेन

गन्धनादिना उत्कुरुते । अयमिममुच्चिकीर्षते । उभयविशेषेण ज्योतिरुद्गतावाङः । आक्रमते । आचिक्रंसते । स्नोर्दार्थात् क्रम इतीट्प्रतिषेधः । कारकविशेषेण । ज्ञोऽपन्हवे धेः । सर्पिषो जानीते । सर्पिषो जिज्ञासते । इह जुगुप्सते मीमांसत इति गुप्प्रकृतेरवयवस्यानुदात्तेत्करणं सन्नन्तसमुदायस्य विशेषकमिति दः सिद्धः । यद्येवं गोपायत्यादावपि स्यात् । कर्तव्योऽत्र यत्नः । पूर्ववदिति किम् । शिशत्सति । मुमूर्षति । अत्र दनिमित्तं नास्ति ॥

## आम्वत् तत्कृञः ॥ ५८ ॥

आम्ग्रहणेन यस्मादाम् विहितस्तस्य ग्रहणम् । आम इव आम्वत् । तस्य कृञ् तत्कृञ् । यस्मादाम् तस्यैव धोस्तत्कृञो दो वेदितव्यः । ईहाञ्चक्रे । ईक्षाञ्चक्रे । लिटि परतः सरोरिजादेरित्याम् । आम इति परस्योप् । लस्य कृत्त्वान्मृत्वे सति स्वादिविधिः । सुपो झेरिति तस्योप् । लिङ्वत् कृञीत्यनुप्रयोगस्य करोतेरनेन दः । विधिर्नियमश्चात्रेष्यते । पूर्ववदिति वर्तते । अकर्त्राप्ये फले पूर्ववद्दो भवतीति विधिः । कर्त्राप्ये फले आम्वदेव दो भवति । तेन दाईस्यैवामन्तस्य प्रयोगे दो भवतीति नियमादिह न भवति । उदुम्भाञ्चकार । तद्ग्रहणं किम् । आमन्तानुप्रयोगस्य ग्रहणं यथा स्यादिह मा भूत् । ईहते । करोतीति कृञ्ग्रहणं किमर्थम् । करोतेरेव यथा स्यादिह मा भूत् । ईक्षामास । ईक्षाम्बभूव । इह कृञ्ग्रहणादन्यनिरासार्थाज्ज्ञायते लिङ्वत्कृञीत्यत्र प्रत्याहारग्रहणं कृभ्वस्तियोग इत्यत आरभ्य कृञो द्वितीयेति ञकारेण ॥

## युजोऽयज्ञपात्रे गेः ॥ ५९ ॥

अकर्त्रभ्यिफलार्थोऽयमारम्भः । युजेर्गिपूर्वाद्दो भवत्ययज्ञपात्रविषये । प्रयुङ्क्ते । वियुङ्क्ते । नियुङ्क्ते । अयज्ञपात्र इति किम् । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । गेरिति किम् । युनक्ति । युज समाधावित्यस्यानुदात्तेत्त्वादग्रहणम् ॥

उदः ॥ ९० ॥

उत्पूर्वाद्युजेरयज्ञपात्रे दो भवति । उद्युङ्क्ते । नियमोऽयं हलन्तेषु उद एव नान्यस्मात् । निर्युनक्ति । दुर्युनक्ति । संयुनक्ति ॥

सं क्ष्णोः ॥ ९१ ॥

सम्पूर्वात् क्ष्णुवो दो भवति । संक्ष्णुते । संक्ष्णुवातो संक्ष्णुवते शस्त्रम् ॥

भुजो ऽदौ ॥ ९२ ॥

शब्दे कार्यस्यासम्भवाददावित्यर्थग्रहणम् । भुजेरध्यर्थवर्तमानाद्दो भवति । भुङ्क्ते । भुञ्जाते । भुञ्जते । अद्यर्थासम्भवात्तौदादिकस्य भुजेरग्रहणम् । निभुजति पाणिम् । अदाविति किम् । भुनक्ति वसुधां भरतः । पालयतीत्यर्थः ॥

णेर्भीस्मेर्हेतुभये ॥ ९३ ॥

ण्यन्ताभ्यां भी स्मि इत्येताभ्यां हेतुभयेऽर्थे दो भवति । तद्योजको हेतुरिति हेतुः । तस्य भयशब्देन भावसाधनेन काभीभिरिति षसः । भयग्रहणेन विस्मयोपीह लक्ष्यते । मुण्डो भीषयते । ईतः षुङ्नित्यमिति षुक् । मुण्डो विस्मापयते । जटिलो विस्मापयते । स्मिङ इत्यात्वम् ।

हेतुभय इति किम् । कुञ्चिकयैनं भाययति । वाचा विस्माययति । अकर्त्रभिप्रायफलार्थोऽयमारम्भः ॥

वञ्चने गृधिवञ्च्योः ॥ ६४ ॥

णेरिति वर्तते । वञ्चनं विसंवादनम् । गृधि वञ्चि इत्येताभ्यां ण्यन्ताभ्यां वञ्चनेऽर्थे दो भवति । माणवकं गर्द्धयते । माणवकं वञ्चयते । विसंवादयतीत्यर्थः । वञ्चन इति किम् । श्वानं गर्द्धयति । काङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । गमयतीत्यर्थः ॥

लियोऽधार्ष्ट्यसम्मानने च ॥ ६५ ॥

णेरिति वर्तते । न धार्ष्ट्यमधार्ष्ट्यं शालीनीकरणम् । सम्माननं पूजनम् । लिनातेर्लीयतेश्च ण्यन्तादधार्ष्ट्यसम्माननयोर्वञ्चने च वर्तमानाद्दो भवति । अधार्ष्ट्ये । श्येनो वर्तिकामुपलापयते । अभिभवतीत्यर्थः । सम्मानने । जटाभिरालापयते । हेतौ भा । आत्मानं पूजयतीत्यर्थः । वञ्चने च कस्त्वामुल्लापयते । प्रलम्भयतीत्यर्थः । विभाषा लियोरिति व्यवस्थितविभाषाश्रयणादेषु त्रिषु नित्यमात्वम् । अधार्ष्ट्यादिष्विति किम् । बालकमुल्लापयति ॥

कृञो मिथ्यायोगेऽभ्यासे ॥ ६६

णेरिति वर्तते । अभ्यासो गुणनिका । करोतेर्ण्यन्तान्मिथ्याशब्दयोगे ऽभ्यासेऽर्थे दो भवति । पदं मिथ्या कारयते । स्तुतिं मिथ्या कारयते । सदोषं पुनःपुनरुच्चारयतीत्यर्थः । कृञ इति किम् । पदं मिथ्या वाचयति । मिथ्यायोग इति किम् । स्तोत्रं सुष्ठु कारयति । अभ्यास इति किम् । सकृत्पदं मिथ्या कारयति । एकवारमुच्चारयतीत्यर्थः ॥

## ञस्वरितेतः कर्त्राप्ये फले ॥ ६७ ॥

णेरिति निवृत्तम् । उत्तरत्र णिच इति निर्देशात् । ञितः स्वरितेतश्च ये धवस्तेभ्यो दो भवति कर्तारमाप्नोति चेत् क्रियाया फलम् । फलं सर्वं क्रियाना भवतीति सामर्थ्यात् क्रिया लभ्यते । फलग्रहणं मुख्यफलपरिग्रहार्थम् । ञितः । पुनीते । लुनीते । कुरुते । स्वरितेतः । यजते । वयते । मुख्यक्रियाफलमत्र कर्तारमाप्नोति । कर्त्राप्ये फल इति किम् । पचन्ति भक्तकराः । वयन्ति भृतकाः । नात्र मुख्यं फलं किन्तु भृतिरानुषङ्गिकं वा फलम् । ञस्वरितेत इति किम् । याति । दाति ॥

## वदो ऽपात् ॥ ६८ ॥

अपपूर्वाद्वदतेर्दो भवति कर्त्राप्ये फले । एकान्तवादमपवदते । कर्त्राप्ये फले इत्येव । अपवदति । इतः प्रभृति कर्त्राप्ये फले दो वेदितव्यः ॥

## समुदाङ्यमो ऽग्रन्थे ॥ ६९ ॥

सम उत् आङ इत्येवम्पूर्वाद्यमेरग्रन्थविषये दो भवति । व्रीहीन् संयच्छते आत्मनश्चेद् व्रीहयो भवन्ति । भारमुद्यच्छते । पापमायच्छते । अग्रन्थ इति किम् । उद्यच्छति चिकित्सां वैद्यः । चिकित्सेति वैद्यकग्रन्थः । कर्त्राप्ये इत्येव । संयच्छति आयच्छति परस्य वस्त्रम् । आङो यमहन इत्यनेन धेर्दविधानमुक्तम् ॥

## ज्ञो ऽगेः ॥ ७० ॥

जानातेरगिपूर्वाद्दो भवति कर्त्राप्ये फले । गां जानीते । अगेरिति किम् । स्वर्गलोकं प्रजानाति । कर्त्राप्ये फले इत्येव । परस्य गां जानाति ॥

णिचः ॥ ७१ ॥

णिजन्ताद्दो भवति कर्त्राप्ये फले । कटं कारयते । ओदनं पाचयते । लक्षणे स्वरितेत्करणात् ज्ञायते हेतुमण्णिचो ग्रहणमिदम् । कर्त्राप्ये फले इत्येव । परस्य कटं कारयति ॥

पादम्याङ्यमाङ्यसपरिमुहरुचिनृद्वेद्वद्वसः ॥७२॥

णिच इति वर्तते । पा दमि आङ्यम् आङ्यस परिमुह-रुचि-नृत्-धेट्-वद्-वस-इत्येतेभ्यो ण्यन्तेभ्यः कर्त्राप्ये फले दो भवति । पाययते । दमयते । आयामयते यमोऽपरिवेषण इति मित्सञ्ज्ञाप्रतिषेधात् प्रो न भवति । आयासयते । परिमोहयते । रोचयते । नर्तयते । धापयते । वादयते । वासयते । पाधेटोरद्यर्थत्वान्नृतिवद्योश्चल्यर्थत्वाचल्यद्यर्थादिति मं प्राप्तमन्येषामणौ धेः प्राणिकर्तृकादिति तत आरम्भः ॥

वा वाग्गम्ये ॥ ७३ ॥

वागिति नेदं पारिभाषिकस्यार्द्धपात्रवागित्यस्य ग्रहणं किं तर्हि वाक्छब्दः । पदान्तरमित्यर्थः । वाग्गम्ये कर्त्राप्ये फले वा दो भवति । स्वं धान्यं पुनीते । स्वं धान्यं पुनाति । षड्भिर्योगैर्नित्यं दे प्राप्ते विकल्पोऽयम् ॥

मम् ॥ ७४ ॥

नियमार्थम् । यस्मान्मं दश्च प्राप्नोति तस्मान्ममेव भवति । पूर्वेण प्रकरणेन प्रकृतिनियमः कृतो दस्त्वनियत इत्युभयप्राप्तिरस्ति । याति । वाति । प्रविशति । आक्रामति धूमः । ङौ द एव भवतीति अर्थनियमो व्याख्या-

शिष्यः—भगवन्, पक्षान्तरमपि प्रतिक्षिपामि ।

यदि भास्करयादवप्रकाशौ
निगमान्तस्थितिनिर्णयप्रवीणौ ।
अपरैः किमिवापराद्धमार्यै
रयथाभाषणचातुरीधुरीणैः ॥ ६३ ॥

अतएव निर्गुणब्रह्मवादिनां प्रच्छन्नबौद्धप्रसिद्धिवदनयोरपि जैन-गन्धिवेदान्तिनामधेयमनुशोश्रूयामहे। इदं किल निखिलोपनिषदैकरस्यं ।

मिथोभेदन्तत्त्वेष्वभिलपति भेदश्रुतिरतो
विशिष्टैक्यादैक्यश्रुतिरपि चसार्था भगवती ।

पक्षान्तरं भास्कर यादवपक्षौ ।

यदीति—निगमान्तस्थितेः वेदान्तमर्यादायाः निर्णये प्रवीणौ समर्थौ यदि अय थाभाषणे या चातुरी तस्यां धुरीणैः धुरंधरैः आर्यैः स्यादस्तिस्याचास्तीति वादिभिः जैनैः किं किमिवापराद्धं नकिमपीत्यर्थः ॥ ६३ ॥

अतएवायथाभाषणादेर्वानिर्गुणब्रह्मवादिनां ब्रह्मनिर्गुणमिति वदतांमायिनांप्र प्रच्छन्नबौद्धा इति प्रसिद्धिवत् बौद्धाः कण्ठरवेणवेदाप्रामाण्यमंगीचक्रुः अमीपुनरर्थद्वारे त्येषांप्रच्छन्नबौद्धत्वं जैनास्तुसप्तभंगींएतौपुनर्भेदाभेदयोस्तात्विकत्वं अतएव तौजैनगन्धि वेदान्तिनाविति मन्तव्यं अनुशोश्रूयामहे परंपरयाकर्णयाम भेदाभेदश्रुत्योर्विरोधेकथंच वोह इत्यत आह इदंखल्विति । निखिलानामुपनिषदांऐकरस्यंएकरसता एकाभिप्रा यतातत् किमित्यत आह ॥

मिथ इति—॥ तत्वेषुचिदचिदीश्वररूपेषु मिथः परस्परं भेद स्वरूपभेदं असौ प्रत्यक्ष सिद्धाभेदश्रुतिः नित्योनित्यानां प्रधानक्षेत्रज्ञपतिर्गुणेशः इत्यादिका अभिलपति वक्ति भगवतीपूज्या चिदचिद्विशेषणक ब्रह्मणैक्यवादित्वात्पूज्यत्व ऐक्यश्रुतिरपि ।

आत्मैवेदं सर्वं खल्विदं ब्रह्म ।

तदनुप्रविश्य सच्चत्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत् । इत्यादिका ऐक्यवादिनी श्रुति. विशिष्टैक्यात् चेतनाचेतनविशिष्टस्य ब्रह्मण एकत्वात्सार्था अर्थावती द्वावर्थौ उक्तपूर्वावर्थौ भोक्तुं परस्पराविरोधेनरक्षितु निखिलजगदन्त प्रविश्य नियमयितानियन्ता अन्तः प्रविष्टश्शास्ताजनानां सर्वात्मा इतिहि श्रूयते ।

इमवर्थौ गोप्तुन्निखिल जगदन्तर्यमयिता
निरीशो लक्ष्मीशश्श्रुतिभिरपराभिः प्रणिदधे ॥९४॥

राजा—ब्रह्मन् ।

तत्ववृत्तोभयभ्रष्टपाषण्डगणसंकुलः ।
कृतीभवति कालोयङ्कृतिनासम्प्रतित्वया ॥९५॥

शिष्यः—महाराज, सर्वमेतद्भगवतः प्रसादेन ।

अद्यहि ।

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलसुभाषितैर्गुरुनिबंधनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदञ्जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ९६ ॥

---

निरीशः नियन्त्रन्तररहित लक्ष्मीशः अपराभि घटकश्रुतिभिः यः पृथिव्यां तिष्टन् य आत्मनि तिष्टन् इत्यादिभिः प्रणिदधे उक्तः ॥ ९४ ॥

तत्वेति—॥ तत्वंतत्वज्ञानं वृत्तं आचारः एतदुभयात्भ्रष्टाः ये पाषण्डगणाः तै संकुलः अयंः कालः कलि कृती समर्थो भवति यद्वा कृतं सुकृतमस्यास्तीति कृती भाग्यवानिति यावत् ॥ ९५ ॥

भगवतः गुरोः प्रसादेन एतत्सर्वं शुद्धमितिशेषः भगवतः प्रसादेनेत्युक्तं दर्शयति कणादेति—।

कणादेति—॥ कणादस्य परिपाटिभिः प्रक्रियाभिः तदुक्तनिवन्धनैरित्यर्थः कपिलस्य कल्पनाः विरचनाः ताभिरेव नाटकैः भूमिकाभिः नाटकाना भूमिकाप्रदानत्वात् नाटकशब्देन वर्णिकालक्ष्यन्ते तद्विदतात्विकैः कुमारिलस्यसुभाषितै तन्मतनिष्टाभि प्रायेण सुभाषितत्व एतन्मते तु दुर्भाषितान्येव तत्प्रणीतानि गुरोः प्रभाकरस्य निबन्धन रूपैः ग्रन्थिभिः अनेन परस्पराणां अर्थानां ग्रन्थिरूपत्व सूच्यते तथागतानां सौगताना कथाशतैः प्रसंगशतैः तदनुसारिणां सौगतानुविधायिना शंकरादीनां जल्पैः प्रलापैरपि प्रतारितं वंचितमिदं जगत् यतीन्द्रोक्तिभिः प्रगुणितं प्रकृष्टगुणयुक्तं समीचीनानुष्टानादिगुणकं जातं । कणादादिबाह्यकुदृष्टिमतविमोहिताः जनाः इदानीं यतीश्वर सूक्तिभिः तत्वज्ञानतदनुगुणानुष्टानादिशालिनो जाता इति भावः ॥९६॥

किञ्च ।

मुकुन्दांघ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा
मुमुक्षामक्षोभ्यान्दधतिमुनिबृन्दारकगिरः ।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिष
द्दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ ९७ ॥

सेना—देव ।

वशंवदवचोवृत्तिर्वादाहवमहारथः
परिभूतविपक्षोसौ पारितोषिकमर्हति ॥ ९८ ॥

शिष्यः—सेनापते ।

दययादेशिकेन्द्रस्य दृष्टयाचास्यमहीपतेः ।
परितोषेण चैवन्तेप्राप्ताहं पारितोषिकं ॥ ९९ ॥

राजा—भगवन्, प्रियहितमेवासौवदति

सेना—तत श्च ।

सभाजयितुमिच्छामि प्रत्यक्षितसभाजयं ।
एतंभगवतश्छात्रमेकभक्त्यापरिष्कृतं ॥ १०० ॥

---

यतीन्द्रोक्तीना मुमुक्षाजनकत्वरूपमतिशयान्तरमाह ।

मुकुन्देति—। मुकुन्दांघ्रियोः भगवच्चरणारविन्दयोः श्रद्धाभक्तिरेव कुमुदवनं तस्य चन्द्रातपनिभाः ज्योत्स्नासदृश्यः तद्विकाशहेतवइत्यर्थः स्वसिद्धान्त एव ध्वान्तः तस्मिन् स्थिरं कुतुकं कुतूहलं येषां तेषा दुर्वादिनां परिषद एव दिवाभीताः घूकाः तेषा प्रेक्षाया दृष्टे. दिनकरसमुत्थानवत्सूर्योदयवत्परुषाः क्रूराः मुनिबृन्दाकरस्य यतीन्द्रस्य गिरः अक्षोभ्यामविचाल्या मुमुक्षादधति ॥ ९७ ॥

वशंवदेति—॥ वशंवदा स्वाधीना वचोवृत्तिः वाग्व्यापारो यस्यसतथा वादएव आहवः अस्मिन्महारथः पण्डित इत्यर्थः परिभूतः पराजितः विपक्षः प्रतिपक्षः येन सतथा अयवादः पारितोषिकं परितोषेणादेयमर्हति ॥ ९८ ॥

दयया इति-॥ देशिकेन्द्रस्य गुरोः दयया प्रियहितं प्रिय च हितं च तत. सेनापतिवचोस्य प्रियहितत्वात् ॥ ९९ ॥

सभाजयितुमिति—॥ प्रत्यक्षितः दृष्टः सभाजयः सभायां प्रतिपक्षजयो यस्यतं एकभक्त्यासकलेतरपराङ्मुखयाभक्त्यापरिष्कृतः एकभक्तिर्विशिष्यत इति स्मृतेः एतं भगवतश्छात्रं शिष्य सभाजयितुं पूजयितुमिच्छामि ॥ १०० ॥

शिष्यः—महाराज, भगवन्तएव सभावनामर्हन्ति ।

गुरुः—त्वमपि मन्नियोगेन ।

राजा—भगवन् ।

अत्यन्तस्थापकोयन्द्दढतरममुनातत्वदृष्टिश्चदिष्टा
दिष्ट्याचादिष्टमेतद्दिशिदिशिलडहोडिण्डिमस्ताडनीयः ।
शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरिविद्वत्करोटी
कुट्टाकक्रोडमष्टापदकटकमसौवामपादेविभर्तु ॥ १०१ ॥

( इतिकटकन्ददाति )

शिष्यः—( गुरुमवलोकयति )

गुरुः अस्त्वेवमलंघनीयाखलुराजाज्ञा ।

शिष्यः—यदाज्ञापयतिभगवान् ।

( इति कटकमादत्ते ) ।

---

मन्नियोगेन त्वमपि संभावना पूजा मर्हसीति योज्या

अत्यन्तेति—॥ अयं तव छात्रः अत्यन्तस्थापकः प्रतिष्ठापकः अमुना तत्व दृष्टिः तत्वतोज्ञानं दृढतरं दृष्ट्वा एतत् पारितोषिकमर्हसीति एतद्वचनं दिष्ट्या दैवादादिष्ट उपदिष्टच्च अतः दिशिदिशि प्रतिदिशं लडहः जयसूचकः डिंडिमः वाद्य विशेषः ताडनीयः ताडयितुमर्हः । शुष्कः निरर्थकः यउपन्यास तस्मिन् शिक्षायां पटिमा पाटवेन कटु यथा भवति तथा रटन्तः प्रलपन्तः येवैरिविद्वांसः तेषां करोटीषु शिरोस्थिषु कुट्टाका कुट्टनं क्रीडायस्य तत्तथा अष्टापद कटकं स्वर्णकटकं वामपादेबिभर्तु दधातु । तदन्यमतं वाम पादे बिभर्तु इति राज्ञाप्रतिपाद्यते ॥ १०१ ॥

तदभिप्राय ज्ञानाय गुरुमवलोकयति अद्यप्रभति तेकर्तव्य मवधार्यतां निश्चीयतां । किंतत्रे त्याह—

गुरुः—आयुष्मन्, अवधार्यतामिदमद्यप्रभृतिकर्तव्यं ।

सत्कारकीर्तिधनलब्धिषुनिर्व्यपेक्षः
प्रश्नोचितेषु परयाकृपया प्रसीदन् ।
सत्तर्कतन्त्रपरिकर्मितमाशरीरा
च्छारीरक प्रवचनव्रतमाद्रियेथाः ॥ १०२ ॥

शिष्यः—यदादिशति भगवान्

नेपथ्ये—गम्यतां गम्यता, आःकष्टमापतित

रागद्वेषाभिख्ययाख्यातपूर्वौ
मूढावेतौ दानवौमोहभृत्यौ ।
निष्प्रत्यूहन्निर्जिहातेविरक्तिं
बंधीकर्तुंविष्णुभक्त्यासमेतां ॥ १०३ ॥

---

सत्कारेति—॥ सत्कारः पूजा कीर्त्ति ख्यातिः धनलब्धिः धनलाभः तासुनि र्व्यपेक्षः व्यपेक्षारहितः प्रश्नोचितेषु शिष्येषु शिष्याणामेव प्रश्नोचितत्वं ।

तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिन स्तत्वदर्शिनः ॥
मैत्रेयः परिपप्रच्छ प्रणिपत्याभिवाद्यच ।

इत्यादिषु तथादर्शनात् परया शिष्योज्जीवनैक प्रयोजनया कृपया प्रसीदन् सद्भिः प्रमाणानुग्राहकैः तर्कैः तन्त्रेण मीमांसयाच.परिकर्मितं अलंकृतं शारीरकस्य ब्रह्ममीमांसायाः प्रवचने व्याख्याने व्रतं श्रद्धां आशरीरात् यावच्छरीर आद्रियेथाः यावद्देहं शारीरके व्याख्यान एव अत्यादरण कुर्या इति भावः ॥ १०२ ॥

कुतइत्यत आह ॥

रागेति—॥ रागद्वेषा इत्यभिख्यया नाम्ना ख्यातपूर्वौ पूर्वं ख्यातौ प्रसिद्धौ मूढै आगामिविपत्त्यज्ञानान्मोढ्यं विष्णुभक्त्यासमेता विरक्ति बन्धीकर्तुं बलात्कारेण हर्तुं रागेण विरक्तेर्द्वेषेण विष्णुभक्तेः बन्धीकरणमिति मन्तव्यं निष्प्रत्यूहौ आरम्भसमये केवलं निष्प्रत्यूहत्वं निर्जिहाते निर्गच्छतः ॥ १०३ ॥

( सर्वे ससम्भ्रममाकर्णयन्ति )

राजा—भगवन्, अद्यखलु शान्तिकर्मणिवेतालोदयस्संवृत्तः, तत्साधयन्तु भवन्तस्समीहितसमर्थनाय, वयमपि वैरिबलनिर्मूलनायसंप्रति यतामहे ।

( इतिनिष्क्रान्तास्सर्वे )

इतिकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्यवेदान्ताचार्यस्यकृतिषु ।

# सङ्कल्पसूर्योदये

## परपक्षप्रतिक्षेपोनाम

## द्वितीयोंकः ॥

श्रीमते निगमान्तमहादेशिकायनमः । श्रीमते भगवते भाष्यकाराय महादेशिकायनमः ॥



अद्यशान्तिकर्मणि वेतालादयः संवृत्तइति वदतः अयमभिप्रायः यथा भूतप्रेताद्यभिभवजन्य दोषशान्तये कस्मिंश्चित्कर्मणि प्रवर्त्यमाने वेतालस्य पिशाचविशेषस्य उदय उत्पत्तिः तथा महामोह प्रशयारंभे रागद्वेषयो रागमनमिति तदेतदागमनाद्धेतोः समीहितस्य समर्थनाय भवन्तः साधयन्तु गच्छन्तु वैरिणां बलस्य निर्मूलनाय यतामहे यत्नं कुर्मः ॥

इति प्रभावल्यां संकल्पसूर्योदयव्याख्यायां द्वितीयोऽङ्कः

श्रीमते रामानुजाय नमः ॥

beforehand With regard to such object we find that, on account either of absent-mindedness, or a desire for further knowledge, the observer has the idea 'what may this be?' e g, when a well-known king has passed by the road, one has not been able to observe him, has only an indefinite cognition that 'somebody has passed by this way,' not knowing the character of the particular person As regards objects that are not well-known, Indefinite Cognitions appears on account of ignorance, e g, an inhabitant of the *Daksha* country has no definite idea of the 'jackfruit tree.' He has many definite cognitions with regard to it,—such as (1) 'this exists' (2) 'this is a substance,' (3) 'this is a modification of earth,' (4) 'this is a tree,' (5) '[illegible] has such a colour,' and (6) 'this has branches' The generic character of 'jack fruit' also he perceives in the abstract (indeterminately), it is only the fact of its bearing the name of 'jack fruit' that he does not know, until some one mentions it to him; he has only the idea that it must have a name And this cognition, devoid of the idea of the particular name, is what we call, 'indefinite Cognition.'

[**Page 183**] As regards inferable objects, it often happens that an inhabitant of the Nārikela continent—where there are no cows,—who does not known what a 'cow' is, having gone to another continent, sees the dewlap, and having inferred from certain circumstances that the mass before him is an animal, has no definite idea as to the particular class or species to which it belongs, and the only idea that he has is the indistinct one—'this is some sort of an animal', and this is '*anadhyavasāya*,' 'indistinct cognition,' which expression denotes the *negation or absence of definite distinct cognition*

*Objection*. "This idea being indefinite is none other than Doubt."

*Reply*: Not so, because the origin as well as the form of an Indistinct Cognition differs entirely from that of Doubt. Then again, we have seen that a doubt arises from the remem-

brance, of the peculiar characters of the two objects, while there is none such in the case of 'Indistinct cognition,' which often arises from mere absence of a distinct cognition of peculiarities, and secondly, Doubt wavers between the two extremes, touching sometimes the one and sometimes the other, which is not the Case with Indistinct cognition Nor is this latter *Vidyā*, in as much as it is not found to give rise to any activity.

---

*Text (97) When the sense-organs have ceased to function, and the mind has retired, then there come about certain mental cognisings through the sense-organs, and it is these that constitute "Dream Cognition"*

*Beings tired by their exertions during the day caused by their conscious bodily actions, retire at night with a view either to rest or to enable their food to be digested, and then the connection of the self and the internal organ, brought about by an effort due to the force of certain unseen agencies, causes certain functionings in the mind, and then the mind retires peacefully into the heart which is the organless region of the self, and then it is said to have "retired" The mind having thus "retired," the organs of the man cease to function. In this state the processes of inbreathings and outbreathings going on profusely, from such causes as, (1) "sleep" which is the name of a particular state of contact of the self with the mind and (2) impressions of previous cognitions,—there appears, through the sense-organs, a dream-cognition, resembling direct sense-cognition, with regard to objects that have no real existence.*

[Page 184] *This dream cognition is of three kinds. (1) Due to the strength of impressions left by previous cognitions, (2) Due to the disorders of bodily humours, and (3) Due to unseen forces*

*(1) As for that due to the strength of impressions, it often happens that when a man, having a strong desire for something and thinking constantly of that thing, goes off to sleep, that same series of thoughts and mental images appear again in the form of sense-cognition*

*(2) As regards that due to the disorders of bodily humours, we find that a man in whose constitution, wind is the predominating humour, or in whose body wind has become disordered, he often sees (in a dream) that he is flying in the sky, and so forth Similarly a man whose constitution abounds in bile, or whose bile is disordered feels as if he were entering into the fire, and sees mountains of gold and such other things And one in whom phlegm predominates or is deranged, sees such things as crossing rivers and oceans, and mountains of snow and so forth*

*(3) That due to unseen forces Very often there appear in dreams certain cognitions—of objects previously perceived and also those never perceived before, those known as well as those that are not known, and among these there are some, such as the riding on an elepnant, the obtaining of an umbrella and such other things—which betoken the coming of some thing desirable, and these proceed from previous impressions and Dharma Of the opposite kinds are the rubbing of oil and the riding of asses and camels &c, and these proceed from previous impressions and Adharma.*

दन्ता अस्येति वा तृणजम्भा । एवं सोमजम्भा । स्वादिभ्यः किम् । पतितजम्भः ॥

**दक्षिणेर्मा लुब्धयोगे । ५ । ४ । १२६ ॥**

दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः । लुब्धयोगे किम् । दक्षिणेर्मं शकटम् ॥

**इच् कर्मव्यतिहारे । ५ । ४ । १२७ ॥**

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः । केशाकेशि । मुसलामुसलि ॥

**द्विदण्ड्यादिभ्यश्च । ५ । ४ । १२८ ॥**

तादर्थ्ये चतुर्थी । एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात् ॥ द्वौ दण्डौ प्रहरणे यस्मिन् तत् द्विदण्डि । द्विमुसलि । उभहस्ति । उभयाहस्ति ।

**प्रसंभ्यां जानुनोर्ज्ञुः । ५ । ४ । १२९ ॥**

आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ ॥ प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः ॥

**ऊर्ध्वाद्विभाषा । ५ । ४ । १३० ॥**

ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥

**ऊधसो ऽनङ् । ५ । ४ । १३१ ॥**

स्त्रियामित्युपसंख्यानम् ॥ * ॥ ऊधोऽन्तस्य बहुव्रीहेरनङादेशः समासान्तः स्यात्स्त्रियाम् ॥ कुण्डोध्नी । स्त्रियां किम् । कुण्डोधो धैनुकम् ॥

**धनुषश्च । ५ । ४ । १३२ ॥**

धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् ॥ शार्ङ्गधन्वा ॥

**वा सञ्ज्ञायाम् । ५ । ४ । १३३ ॥**

शतधन्वा । शतधनुः ॥

**जायाया निङ् । ५ । ४ । १३४ ॥**

जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् ॥ लोपो व्योरिति यलोपः । पुंवद्भावः । युवतिर्जाया यस्य युवजानिः ॥

**गन्धस्येदुत्पूतिसुसुरभिभ्यः । ५ । ४ । १३५ ॥**

एभ्यो गन्धस्येकारोऽन्तादेशः स्यात् ॥ उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ॥ गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यम् ॥ * ॥ एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः । सुगन्धि पुष्पं सलिलञ्च । सुगन्धिर्वायुः । नेह । शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणिकः ॥

**अल्पाख्यायाम् । ५ । ४ । १३६ ॥**

सूपस्य लेशो गन्धो यस्मिन् सूपगन्धि भोजनम् । घृतगन्धि ॥ गन्धो गन्धक आमोदे लेशे सम्बधगर्वयोरिति विश्वः ॥

**उपमानाच्च । ५ । ४ । १३७ ॥**

पद्मस्येव गन्धो यस्य पद्मगन्धिः ॥

**पादस्य लोपोऽहस्त्यादिभ्यः । ५ । ४ । १३८ ॥**

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ ॥ स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् । हस्तिपादः । कुसूलपादः ॥

**कुम्भपदीषु च । ५ । ४ । १३९ ॥**

कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् ॥ पादः पत् । कुम्भपदी । स्त्रियां किम् । कुम्भपादः ॥

**संख्यासुपूर्वस्य । ५ । ४ । १४० ॥**

पादशब्दस्य लोपः स्यात्समासान्तो बहुव्रीहौ ॥ द्विपात् । सुपात् ॥

**वयसि दन्तस्य दतृ । ५ । ४ । १४१ ॥**

संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि ॥ द्विदन् । चतुर्दन् । षड् दन्ता अस्य षोडन् । सुदन् । सुदती । वयसि किम् । द्विदन्तः करी । सुदन्तः ॥

**छन्दसि च । ५ । ४ । १४२ ॥**

दन्तस्य दतृ स्याद्बहुव्रीहौ ॥ उभयतोदतः प्रतिगृह्णाति ॥

**स्त्रियां संज्ञायाम् । ५ । ४ । १४३ ॥**

दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ ॥ अयोदती । फालदती । संज्ञायां किम् । समदन्ती ॥

**विभाषा श्यावारोकाभ्याम् । ५ । ४ । १४४ ॥**

दन्तस्य दतृ बहुव्रीहौ ॥ श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः ॥

**अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ५ । ४ । १४५ ॥**

एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । शुद्धदन् । शुद्धदन्त इत्यादि ॥

**ककुदस्यावस्थायां लोपः । ५ । ४ । १४६ ॥**

अजातककुत् । पूर्णककुत् । अवस्थायां किम् । श्वेतककुदः । त्रिककुत्पर्वते । त्रिककुत् । सञ्ज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः ॥

**उद्विभ्यां काकुदस्य । ५ । ४ । १४७ ॥**

लोपः ॥ उत्काकुत् । विकाकुत् । काकुदन्तालु ॥

**पूर्णाद्विभाषा । ५ । ४ । १४८ ॥**

पूर्णकाकुत् । पूर्णकाकुदः ॥

**सुहृद्दुर्हृदौ मित्रामित्रयोः । ५ । ४ । १४९ ॥**

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते ॥ सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः दुर्हृदयः ॥

**उरःप्रभृतिभ्यः कप् । ५ । ४ । १५० ॥**

व्यूढोरस्कः । प्रियसर्पिष्कः । इह पुमान् । अनड्वान् । पयः । नौः । लक्ष्मीरित्येकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप् । द्विपुमान् । द्विपुंस्कः । अर्थान्नञः । अनर्थकम् । नञः किम् । अपार्थकम् । अपार्थम् ॥

**इनः स्त्रियाम् । ५ । ४ । १५१ ॥**

बहुदण्डिका नगरी । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । स्त्रियां किम् । बहुदण्डी । बहुदण्डिको ग्रामः ॥

**नद्यृतश्च । ५ । ४ । १५२ ॥**

नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात् ॥ बहुकुमारीको बहुब्रह्मबन्धूको देशः । बहुकर्तृकः ॥

## शेषाद्विभाषा । ५ । ४ । १५३ ॥

अनुक्तसमासान्ताच्छेषाधिकारस्थबहुव्रीहेः कप् वा स्यात् ॥ महायशस्कः । महायशाः । अनुक्तेत्यादि किम् । व्याघ्रपात् । सुगन्धिः । प्रियपथः । शेषाधिकारस्थात्किम् । उपबहवः । उत्तरपूर्वा । सपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः ॥

## न सञ्ज्ञायाम् । ५ । ४ । १५४ ॥

शेषादिति प्राप्तः कप् न स्यात् सञ्ज्ञायाम् । विश्वे देवा अस्य विश्वदेवः ॥

## ईयसश्च । ५ । ४ । १५५ ॥

ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । बह्व्यः श्रेयस्यो यस्य बहुश्रेयसी । अत्र लिङ्गविशिष्टपरिभाषया नद्यृतश्चेति नित्य कप् प्राप्तो निषिध्यते । ईयसो बहुव्रीहेर्नेति वचनात् गोस्त्रियोरित्युपसर्जनह्रस्वोऽपि न ॥

## वन्दिते भ्रातुः । ५ । ४ । १५६ ॥

पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् । प्रशस्तो भ्राता यस्य प्रशस्तभ्राता । सुभ्राता । न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवेत्युक्तम् । वन्दिते किम् । मूर्खभ्रातृकः ॥

## ऋतश्छन्दसि । ५ । ४ । १५७ ॥

ऋदन्ताद्बहुव्रीहेर्न कप् । हता माता यस्य हतमाता ॥

## नाडीतन्त्र्योः स्वाङ्गे । ५ । ४ । १५८ ॥

स्वाङ्गे यो नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात् ॥ बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । बहुतन्त्रीर्धमनी । स्त्रीप्रत्ययान्त-

त्वाभावाद् ह्रस्वो न । स्वाङ्गे किम् । बहुनाडीकस्तम्भः । बहुतन्त्रीका वीणा ॥

निष्प्रवाणिश्च । ५ । ४ । १५९ ॥

कबभावोऽत्र निपात्यते । प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः । समाप्तवानो नव इत्यर्थः ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ पञ्चमस्याध्यायस्य
चतुर्थः पादोऽध्यायश्च पञ्चमः समाप्तः ॥



# षष्ठाऽध्यायस्य प्रथमः पादः।

## एकाचो द्वे प्रथमस्य। ६। १। १॥

इत उत्तरं यद्वक्ष्यामः प्राक्सम्प्रसारणविधानात्तत्रैतदधिक्रियते। वक्ष्यति लिटि धातोरनभ्यासस्येति। लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य॥ जजागार। पपाच। पपाठ। इयाय। आर। एकाजिति तद्गुणसंविज्ञानबहुव्रीहिणा प्रथमविशेषणम्। धातुविशेषणत्वे तु जजागारेत्यत्र न स्यात्। पपाचेयायेत्यादौ प्रथमत्वैकाच्त्वधात्ववयवत्वानि व्यपदेशिवद्भावेन बोध्यानि। यद्यपि पपाचेत्यादावनेके एकाचः सन्ति। तथापि समुदायद्वित्वेनावयवानुग्रहसद्भावादवयवविषयकशास्त्राहानेः समुदायद्वित्वम्। द्विः प्रयोगश्चेदं द्विर्वचनम्। स्थाने द्विर्वचनत्वे तु आटिटदित्यादौ णिलोपो न स्यात्। अथात्र पक्षे सिषेधेत्यादौ सात्पदाद्योरिति षत्वनिषेधापत्तिः। सिधेरत्र तिङ् विहित इति द्वितीयोच्चारणविशिष्टस्य पदत्वात्पदादित्वस्योत्तरखण्डाद्यसकारे सत्वात्। नैष दोषः। तावेव सुप्तिङौ यौ ततः परौ सैव च प्रकृतिराद्या। आदिग्रहणं च कृतं समुदायपदत्वमेतेनेति भाष्येण समाधानात्। यौ ततो विधानावधेः परौ तावेवेमौ सुप्तिङौ यतो विहितौ सा प्रकृतिराद्यैव आगन्तूनामन्ते निवेश इति न्यायात्। द्वितीयोच्चारणस्यैव विधेयत्वात्। आद्या आद्योच्चारणविषया न तु द्वितीयोच्चारणेन व्यवधानमत आह। आदिग्रहणमिति। यस्मात्प्रत्ययविधिस्तदादीत्यस्यात्रानुवर्तनात्समुदायपदत्वमिति उच्चारणद्वयविषयत्वेन समुदायव्यवहार इति तदर्थः॥

## अजादेर्द्वितीयस्य। ६। १। २॥

प्रथमद्विर्वचनापवादोऽयम्। द्वितीयद्विर्वचनमधिक्रियते। अटिटिषति। अशिशिषति। अरिरिषति। इह रिस्शब्दस्य द्वित्वम्। इस इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगात् द्विर्वचनेऽचीति न प्रवर्तते। आट आटतुरित्यादावजादेर्धातोर्द्वितीयाभावे प्रथमवाक्येनैव प्रथमस्य द्वित्वम्। व्यपदेशिवद्भावेन तु न द्वितीयत्वम्। प्रथमस्येत्युक्त्योभयसत्तायामेवाजादेरित्यस्य प्रवृत्तेः। अत्र द्वितीयस्येति अजादेरिति बहुव्रीहेः षष्ठीत्यभिप्रायेण कृतं किन्तु तथात्वे गौरवादिन्दिद्रीयिषतीत्यत्र दकारस्य नन्द्रा इति द्वित्वनिषेधापत्तेश्चाजादेरिति कर्मधारयात्पञ्चमीति द्वितीयस्येति न कर्तव्यम्॥

## न न्द्राः संयोगादयः। ६। १। ३॥

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति॥ उन्दिदिषति। अड्डिडिषति। उपदेशे दोपधोऽयम्। तेन क्विपि अदिति भवति। अर्चिचिषति। ऊर्णुनाव। नुशब्दस्य द्वित्वम्। णत्वस्यासिद्धत्वात्। पूर्वत्रासिद्धीयमद्विर्वचन इति त्वनित्यम्। उभौ साभ्यासस्येति लिङ्गात्। न्द्रा इति किम्। ईचिक्षिषते। संयोगादय इति किम्। प्राणिणिषति। अचः परा इति किम्। दिद्रासति। नन्वदिद्रपदित्यादौ लावस्थायामडिति पक्षे आदेरचः परत्वमस्त्येव। किञ्च चङीति द्वित्वात्परत्वादपि प्रथममट् न्याय्य इति चेन्न। नन्द्रा इत्यस्याधिकारसूत्रत्वेन तत्तत्सूत्रे उपस्थितौ तत्र धातोरिति सत्वेन प्रत्यासत्त्या व्याख्यानेन च धातुसञ्ज्ञाकालिकादादेरचः परा नदरा इत्यर्थादित्याहुः॥ उब्जिरुपदेशे दोपधः। भुजन्युब्जौ पाण्युपतापयो-

रिति निपातनाद्दस्य बः । स चान्तरङ्गोऽपि द्वित्वविषये नन्द्रा इति निषेधाद्दकारात्परभागस्य द्वित्वे कृते प्रवर्तते न तु ततः प्राग् दका-रोच्चारणसामर्थ्यात् । अभ्युद्ग समुद्ग इत्येतन्नोब्जे र्घञन्तस्य रूपं किन्तूपसर्गद्वयपूर्वकाद्गमेरन्येष्वपीति डः । रूढिशब्दत्वाच्चावयवार्थवैचित्र्य न दोष. । तथा चामरम् । समुद्गकः संपुटक इति । उब्जिजिषति औब्जिजत् । यकारपररेफस्य न द्वित्वनिषेधः । अरार्यत इति भाष्योदाहरणात् ॥ ईर्ष्यतेस्तृतीयस्येति वाच्यम् ॥ * ॥ तृतीयव्यञ्जनस्य तृतीयस्यैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । ईर्ष्यियिषति । ऐर्ष्यियत् । द्वितीये तु अजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते एव प्रवर्तते । ईर्ष्यिषिषति । णिजन्ताच्चुङि च षकार एवाभ्यासे श्रूयते हलादिःशेषात् द्वित्वन्तु द्वितीयस्यैव तृतीयाभावेन प्रकृतवार्त्तिकाप्रवृत्तेः । ऐर्षिष्यत् ॥ कण्ड्वादेस्तृतीयस्येति वाच्यम् ।। * ।। कण्डूयियिषति । असूयियिषति । सन्यङोरिति प्रथमस्यैकाचोऽजादेस्तु द्वितीयस्य द्वित्वं प्राप्तम् ॥ यथेष्टं नामधातुषु ।। * ।। आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य न तु यथासम्भविनामन्यतमस्य नापि युगपत्सर्वेषां पूर्वत्र त्रयाणामेवोपस्थितेर्बाध्यबाधकभावस्य च निर्णयात् । पुपुत्रीयिषति । पुतुत्रीयषति । अशिश्वीयिषति । अश्वीयियिषति ।। नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सनि द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति । इन्द्रीयियिषति । चिचन्द्रीयिषति । चन्दिद्रीयिषति । अजादेरिति समुदितानुवृत्तिं कृत्वा आदिभूतादचः परस्यैव द्वित्वनिषेध इति मते तु चनिन्द्रीयिषति । चन्द्रीयियिषति । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति । पिप्रापयिषति । प्रापि-

यिषति । प्रापयियिषति । ऊढम् । विवारयिषति । वारिरयिषति वारयियिषति । बाढम् । सिसाधयिषतीत्यादि रूपत्रयम् । षत्वन्तु नास्ति । आदेशरूपत्वाभावात्सकारस्य ॥

## पूर्वोऽभ्यासः । ६ । १ । ४ ॥

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससञ्ज्ञः स्यात् ॥ पपाच । पिपक्षति । पापच्यते । अपीपचत् । अभ्यासप्रदेशा अत्र लोपोऽभ्यासस्येत्येवमादयः ॥

## उभे अभ्यस्तम् । ६ । १ । ५ ॥

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसञ्ज्ञे स्तः ॥ ददति । ददत् । दधति । दधत् । उभे समुदिते किम् । नेनिजतीत्यत्र अभ्यस्तानामादिरित्याद्युदात्तत्वं समुदाये यथा स्यात् । प्रत्येकं पर्यायेण वा मा भूत् । अभ्यस्तप्रदेशा अदभ्यस्तादित्येवमादयः ॥

## जक्षित्यादयः षट् । ६ । १ । ६ ॥

षट् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसञ्ज्ञाः स्युः ॥ जक्षत् । जक्षतौ । जक्षतः । जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीवेव्योर्ङित्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् । वेव्यत् ॥

## तुजादीनां दीर्घोऽभ्यासस्य । ६ । १ । ७ ॥

तुजादिराकृतिगणः । प्रभरा तूतुजानः । सूर्यं मामहानम् । दाधार यः पृथिवीं स तूताव । दीर्घश्चैषां छन्दसि प्रत्ययविशेषे एव दृश्यते । अतो ऽन्यत्र न भवति । तुतोज शबलान्हरीनिति ॥

## लिटि धातोरनभ्यासस्य । ६ । १ । ८ ॥

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य ॥ जजागार । पपाच । ऊर्णुनाव । इयाय । लिटीति किम् । कर्ता । हर्ता । धातोरिति किम् । लिटीति प्रथमैकाच एव विशेषण मा भूत् । तथा सति पपाचेत्यादावेव स्यान्न तु जजागारेत्यादौ । अनभ्यासस्येति किम् । अजुगुप्सत् । अलोलूयत् । चङीति द्वित्व मा भूत् ॥ द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् ॥ * ॥ यो जागार तमृचः कामयन्ते । दाति प्रियाणि ।

## सन्यङोः । ६ । १ । ९ ॥

सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य ॥ पिपक्षति । यियक्षति । अटिटिषति । उन्दिदिषति । न चोर्णुनविषतीत्यत्र परत्वाद् गुणावादेशयोः सतोः पश्चाद्द्वित्वे अभ्यासे उकारो न श्रूयेतेति वाच्यम् । द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा । न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम् । कार्यमनुभवन् हि कार्यो निमित्ततया नाश्रीयते नत्वननुभवन्नपि । नचेह सन् द्वित्वमनुभवति । शशिषिषतीत्यत्र तु नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम् । ओर्णोर्त्तेरिदित्करणस्य सामान्यापेक्षज्ञापकत्वात् । यङन्तस्य । पापच्यते । अटाट्यते । अरार्यते । अनभ्यासस्येत्येव । जुगुप्सिषते । लोलूयिषते ॥

## श्लौ । ६ । १ । १० ॥

धातोर्द्वे स्तः । जुहोति । बिभेति ॥

## चङि । ६ । १ । ११ ॥

चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजा-

देस्तु द्वितीयस्य ॥ अपीपचत् । अपीपठत् । आटिटत् । आशिशत् । आर्चिचत् । जनयतेश्चङि ओ:पुयण्ज्यपरे इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गम् । णिच्यच आदेशो न स्याद्द्वित्वे कार्ये इति । तेन न शब्दस्य द्वित्वं तत उत्तरखण्डे ऽल्लोपः । औननत् । मा भवानूननत् । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णौ लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदित्यादि सिद्धम् ॥

**दाश्वान्साह्वान्मीढ्वांश्च । ६ । १ । ११ ॥**

दाशेर्वसौ द्वित्वेट्प्रतिषेधौ सहेर्दीर्घत्वं च मिहेर्ढत्वं च निपात्यते ॥ दाश्वांसो दाशुषः । सुतं साह्वान् बलाहकः । मीढ्वस्तोकाय तनयाय मृडय । मतुवसो रुः संबुद्धाविति रुत्वम् ॥ द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् ॥ * ॥ चक्रं चिक्लिदं चक्नसः । घञर्थे कविधानमिति कः ॥ चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम् ॥ * ॥ आगमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिःशेषश्च न ॥ चराचरः । चलाचलः । पतापतः । वदावदः ॥ हन्तेर्घत्वं च ॥ * ॥ घत्वमागागमश्चाभ्यासस्य उत्तरस्य तु अभ्यासाच्चेति कुत्वम् । घनाघनः ॥ पाटेर्णिलुक् चोक्च दीर्घश्चाभ्यासस्य ॥ * ॥ पाटूपटः । पक्षे चरः । रात्रेःकृतीति वा मुम् । रात्रिञ्चरः । रात्रिचरः । चलः । पतः । वदः । हनः । पाटः ॥

**ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे । ६ । १ । १२ ॥**

इह तत्पुरुषे इत्यनेन पूर्वपदमुत्तरपदञ्चाक्षिप्यते । ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । ष्यङ इति किम् । क्षत्रियापुत्रः ।

अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य ष्यञो वृद्धेदिति ञ्यङश्च व्यावृत्त्यर्थम् । पुत्रपत्योः किम् । कारीषगन्ध्याकुलम् । तत्पुरुषे किम् । कारीषगन्ध्यापतिरयं ग्रामः । स्त्रीप्रत्यये चानुपसर्जनेनेति तदादिनियमप्रतिषेधात् । परमकारीषगन्धीपुत्रः । उपसर्जने तु अतिकारीषगन्ध्यापुत्रः । विशेषणविशेष्यभावे कामचारादिहोत्तर-पदेन पुत्रपती विशेष्येते । तेनेह न कारीषगन्ध्यापरमपुत्रः । निर्दिश्यमानपरिभाषया अप्रत्ययस्यष्यणो न । वाराहीपुत्रः ॥

## बन्धुनि बहुव्रीहौ । ६ । १ । १४ ॥

बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्याद्बहुव्रीहौ ॥ कारीष-गन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याबन्धुः । क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया ॥ मातच्मातृकमातृषु वा ॥ * ॥ कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कविकल्पश्च । बहुव्रीहावेवेदम् । नेह । कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते ॥

## वचिस्वपियजादीनां किति । ६ । १ । १५ ॥

वचिस्वप्योर्यजादीनां च प्रसम्प्रसारणं स्यात् किति । पुनः प्रसङ्गविज्ञानाद् द्वित्वम् । ऊचतुः । उच्यात् । सुषुपतुः । सुप्यात् । ईजतुः । इज्यात् । ऊपतुः । ऊहतुः । ऊषतुः । उयात् । विव्यतुः । वीयात् । ऊदतुः । शूयात् ॥ धातोः कार्यमुच्यमानमिति परिभाषया नेह । वाच्यति । वाचिकम् । यज् डुवप् वह वस वेञ् व्येञ् ह्वेञ् वद टुओश्वि एते यजादयः ॥

## ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ॥

एषां किति ङिति च संप्रसारणं स्यात् ॥ गृहीतः । गृह्णाति । जीनः । ल्वादिभ्य इति निष्ठानत्वम् । जिनाति । हल इति दीर्घत्वे प्वादीनां ह्रस्वः । वयिश्च वेञो वयिरेव परस्मैपदिग्रह्यादिसाहचर्यात् । नत्वयवयेति दण्डकपठितात्मनेपद्येव । तस्य च ङिदभावात्किदेवोदाह्रियते । ऊयतुः । एवं च वयिग्रहणमनर्थकमेव । यजादित्वात्सिद्धेः । न च वेञ इति प्रतिषेधः । लिटि वयो य इति यकारप्रतिषेधो हि ज्ञापकोऽप्रतिषेधस्य । न च यकारस्यैवेति नियमार्थः सः । एवमपि संप्रसारणसिद्धेर्निष्प्रत्यूहत्वात् । विद्धः । विध्यति । उशितः । उशन्ति । विचितः । विचति । वृक्णः । वृश्चति । पृष्टः । पृच्छति । नङि । प्रश्ने चासन्नकाले इति निपातनान्न भवति । प्रश्नः । भृष्टः । रम्भावान्नित्यत्वात्संप्रसारणम् । भृज्जति ॥

## लिट्यभ्यासस्योभयेषाम् । ६ । १ । १७ ॥

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि ॥ उवाच । सुष्वाप । इयाज । उवाय । उवाह । उवास । उवाय । विव्याय । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम् । उभयेषां ग्रहणसामर्थ्येन पुनर्विधानाद्विध्यन्तराणां बाधात् । अन्यथा वच्यादीनां गृह्यादीनां चानुवृत्त्यैव सिद्धे किन्तेन । इदमेव च सामान्यतो ज्ञापयति । अभ्यासलोपाभ्याससंप्रसारणविषयेऽभ्यासविकारे बाध्यबाधकभावो नेति न प्रवर्त्तत इति बोध्यम् । तेन व्यथो लि-

ठीत्यस्यापि लोपं बाधित्वा प्रवृत्तिः । संप्रसारणं तदाश्रयञ्च कार्यं बलवदिति तु उभयेषांग्रहणवैयर्थ्यापत्त्या भाष्ये प्रत्याख्यातमिति दिक् ॥ व्ह्यतेः सेत्स्यति । उवाद । श्वयतेः प्रतिषेत्स्यति । ग्रहेरविशेषः । जिज्यौ । वयियंजादिषूदाहृतः । विव्याध । उवाश । वव्याच । वव्रश्च । संप्रसारणमृकारः । उरदत्वम् । तस्य स्थानिवद्भावान्न संप्रसारण इति वस्योत्व न । पृच्छति भृज्जत्योरविशेषः । लिटि किम् । विवचति ॥ व्यचेः कुटादित्वमनसि वक्तव्यम् ॥ * ॥ उद्विचितुम् । उद्विचितव्यम् । अनसि किम् । उरुव्यचाः कण्टकः । उरु विचतीति मिथुनेऽसि. पूर्ववच्च सर्वमित्यौणादिकोऽसिः । धातूपपदयोगो मिथुनम् । अनसीति पर्युदासेन कृन्मात्रविषयञ्चैतत् । तेनेह न अव्याचीत् ॥

## स्वापेश्चङि । १ । ६ । १८ ॥

णयन्तस्य स्वापेश्चङि संप्रसारणं स्यात् । असूषुपत् । चङि किम् । स्वाप्यते । स्वापितः । क्तीति निवृत्तम् । ङितीति केवलमिहानुवर्तत इत्येतद् दुर्विज्ञानम् ॥

## स्वपिस्यमिव्येञां यङि । ६ । १ । १९ ॥

संप्रसारणं स्यात् । सोषुप्यते । सेसिम्यते । वेवीयते । यङि किम् । स्वप्नक् ॥

## न वशः । ६ । १ । २० ॥

वावश्यते । यङीत्येव । उशन्ति ॥

## चायः की । ६ । १ । २१ ॥

यङीति वर्तते । चेकीयते । दीर्घोच्चारणं यङ्लुगर्थम् । अत एव न लुमतेति निषेधेऽपि तत्र प्रवर्तते । चेकीतः ॥

तः । ततः कर्त्तरि मं द्रष्टव्यम् । यदि वा कर्त्तरि ञे इत्यतः कर्त्तरि इति वर्तते । तेनेह न भवति । गम्यते । रम्यते ।

परानुकृञः ॥ ७५ ॥

परा अनु इत्येवंपूर्वात् कृञो मं भवति । गन्धनादिषु दः प्राप्तस्तदपवादोऽयम् । पराकरोति । अनुकरोति । कर्त्राप्ये फले ममेव भवति । कस्मान्न नियमः । तत्रापूर्वो विधिरस्तु नियमो वास्त्वित्यपूर्व एव विधिर्भवति ॥

प्रत्यभ्यतिक्षिपः ॥ ७६ ॥

प्रति अभि अति इत्येवम्पूर्वात् क्षिपो मं भवति । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति । स्वरितेत्त्वाद्दः प्राप्तः । एतेभ्य इति किम् । आक्षिपते ।

प्रवहः ॥ ७७ ॥

प्रपूर्वाद्वहतेः कर्त्राप्ये फले मं भवति । प्रवहति ॥

मृषः परेः ॥ ७८ ॥

परिपूर्वान्मृषनेर्मं भवति । परिमृष्यति । परिमृष्यतः । परिमृष्यन्ति । वहिमपि केचिदनुवर्तयन्ति । परिवहति । परेरिति किम् । मृष्यते परीषहान् साधुः ॥

व्याङ्भ्य्च रमः ॥ ७९ ॥

वि आङ् इत्येवम्पूर्वात् परिपूर्वाच्च रमेर्मं भवति । विरमति । आरमति । परिरमति । अनुदात्तेत्त्वाद्दः प्राप्तः । एतेभ्य इति किम् । रमते । अभिरमते ॥

उपात् ॥ ८० ॥

उपपूर्वाच्च रमेर्मं भवति । भार्यामुपरमति । पृथग्योग उत्तरार्थः ॥

वा धेः ॥ ८१ ॥

उपपूर्वाद्रमेर्धेर्वा मं भवति । यावद्भुक्तमुपरमति । उपरमते । निर्वर्तत इत्यर्थः ॥ विरिरंसतीत्यत्र पूर्वस्य दनिमित्ताभावात् सनः पूर्ववदिति दो न भवति ॥

बुधयुधनशजनेङ्प्रुद्रुस्रोर्णेः ॥ ८२ ॥

कर्त्राप्ये फले णिच इति दे प्राप्ते ऽयमारम्भः । बुध युध नश जन इङ् प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेभ्यो मं भवति । येऽत्राकर्मकास्तेषामणौ धेः प्राणिकर्तृकादिति सिद्धे अप्राणिकर्तृकार्थं ग्रहणम् । प्रवत्यादीनामचल्याद्यर्थम् । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति पापम् । जनयति पुण्यम् । अध्यापयति शास्त्रम् । प्रावयति ग्रामम् । प्रापयतीत्यर्थः । द्रावयति लोहम् । विलापयतीत्यर्थः । स्रावयति तैलम् । स्यन्दयतीत्यर्थः ॥

चल्यद्यर्थात् ॥ ८३ ॥

णेरिति वर्तते । चलेरर्थः कम्पनम् । अदेरर्थोऽभ्यवहारः । चल्यर्थेभ्यो ऽद्यर्थेभ्यश्च धुभ्यो ण्यन्तेभ्यो मं भवति । चल्यर्थेभ्यः । चलयति । चोपयति । कम्पयति । कम्पने चलेरिति मित्सञ्ज्ञायां प्रादेशः । अद्यर्थेभ्यः । निगारयति । भोजयति । आशयति । सर्वत्राद्यर्थकादेर्नेष्यते । आदयन्ते देवदत्तेन । इह पय उपयोजयते देवदत्तेनेति भक्षणार्थाभावान्मं न भवति । सकर्मकार्थमप्राणिकर्तृकार्थञ्च सूत्रम् ॥

अणौ धेः प्राणिकर्तृकात् ॥ ८४ ॥

अण्यन्तावस्थायां यो धुर्धिः प्राणिकर्तृकस्तस्माण्ण्यन्तान्मं भवति । आस्ते देवदत्तः । आसयति देवदत्तम् । शेते देवदत्तः । शाययति देवदत्तम् । अणाविति किम् । चेतयमानं प्रयोजयति । चेतयते । ननु च णिच इत्यत्र हेतुमण्णिचो ग्रहणं व्याख्यातम् । अणाविति तस्यायं प्रतिषेधः । तेनात्र मं भवत्येव चेतयतीति । इदं तर्हि प्रत्युदाहरणम् । आरोहयमाणं प्रयोजयति आरोहयते । अथवा ऽणाविति धेर्विशेषणम् । अणौ यो धिस्तस्य ग्रहणं यथा स्यात् । अन्यथा धुग्रहणे ण्यन्तविशेषणे इहैव मं स्याच्चेतयमानं प्रयोजयति चेतयति । आसयति इत्यादौ न स्यात् । धेरिति किम् । कटं कुर्वाणं प्रयोजयति कारयते । प्राणिकर्तृकादिति किम् । शुष्यन्ति व्रीहयः । शोषयते व्रीहीनातपः । प्राण्यौषधिवृक्षेभ्योऽवयवे चेति पृथग्निर्देशादिह शब्दशास्त्रे वनस्पतिकायाः प्राणिग्रहणेन गृह्यन्ते ॥

क्यषो वा ॥ ८५ ॥

क्यषन्ताद्वा मं भवति । वावचनसामर्थ्यात् पक्षे दोऽपि भवति । अपटत्पटद्भवति पटपटायति । पटपटायते । अव्यक्तानुकरणादनेकाचोऽनितौ डाजिति डाच् । डाचीति द्वित्वम् । मौ डाचि नित्यमिति तकारस्य पररूपत्वम् । टिखम् । डाज्लोहितात्क्यषिति क्यष् । एवमलोहितो लोहितो भवति लोहितायति । लोहितायते ॥

द्युद्भ्यो लुङि ॥ ८६ ॥

कृपूपर्यन्ता द्युतादयः । वेति वर्तते । द्युतादिभ्यो वा मं भवति लुङि परतः । व्यद्युतत् । व्यद्योतिष्ट । अलु-

टत् । अलोटिष्ट । मविधिपक्षे द्युत्पुषादिलित्सर्त्तिशास्त्यर्तिभ्य इत्यङ् । यद्यपि मे अङ्विधानसामर्थ्यान्मविधिर्लब्धस्तथाप्यनुदात्तेत्करणं लुङोऽन्यत्र सावकाशमिति नित्यं मं स्यादिति विकल्पार्थं वचनम् । लुङीति किम् । द्योतते । द्युता सहचरिता इतरेऽपि तथोच्यन्त इति बहुवचननिर्देशः ।

## स्यसनोर्वृद्भ्यः ॥ ८७ ॥

द्युतादिष्वन्तर्भूता वृतादयः । वृतादिभ्यो वा मं भवति स्ये सनि च सति । वत्स्यति । अवत्स्यत् । विवृत्सति । वर्तिष्यते । अवर्तिष्यत । विवर्तिषते । एवं वृध् सृध स्यन्द इत्येते योज्याः । मविधौ न वृतादेरितीट्प्रतिषेधः ॥

## लुटि च क्लृपः ॥ ८८ ॥

क्लृपेर्लुटि स्यसनोश्च वा मं भवति । कल्प्ता । कल्प्तारौ । कल्प्तारः । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । कल्पितारः । कल्पिष्यते । अकल्पिष्यत । चिकल्पिषते । क्लृपेर्वृतादित्वादेव स्यसनोर्विकल्पे सिद्धे चकारेणानुकर्षणमसन्देहार्थम् । क्लृप इति लत्वं किमर्थम् । ऋकारस्थस्य रेफभागस्य रेफग्रहणेन ग्रहणं यथा स्यात् । क्लृप्तवान् । मातृणाम् । लत्वं णत्वञ्च सिद्धम् ॥

## स्पर्द्धे परम् ॥ ८९ ॥

स्पर्द्धे परं कार्यं भवति । द्वयोः प्रसङ्गयोरन्यार्थयोरेकस्मिन् युगपदुपनिपाते सङ्घर्षः स्पर्द्धः । यञ्यतो दीः सुपीति दीत्वस्यावकाशः । देवाभ्याम् । वृक्षाभ्याम् । बहौ झल्येदित्यस्यावकाशः । देवेषु । वृक्षेषु । इहोभयं

प्राप्नोति । देवेभ्य इति सूत्रविन्यासे परमेत्वं भवति । अप्रवृत्तौ पर्याये वा प्राप्ते वचनम् । कार्यकालं सञ्ज्ञापरिभाषमिति । यावन्ति कार्याणि तावद्धा सूत्रस्य भेद इति विधिर्नियमश्चेदं सूत्रम् । यत्र परस्मिन्कार्ये कृते पुनः प्रसङ्गविज्ञानात्पूर्वं तत्र विधिः । यत्र परमेव कार्यं दृश्यते सकृद्गते परनिर्णये बाधितो बाधित एवेति । तत्र नियमः । तद्यथा द्वित्वस्यावकाशः । बेभिद्यते । जेरवकाशः । विचति । वेविच्यते इति परत्वाज्जौ कृते पुनः प्रसङ्गाद् द्वित्वम् । जसिशसोः शिरित्यस्यावकाशः । कुण्डानि । ङेसुटोरमित्यस्यावकाशः । यूयं राजानः । इह यूयं गुरुकुलानि इति पर एवाम्भावः । अतुल्यबलयोः स्पर्द्धो न भवति । उत्सर्गादपवादः । परनित्यविचारणे भवेन्नित्यम् । नित्यात्तथान्तरङ्गम् । तस्मादप्यनवकाशं यत् । एकार्थयोरपि नास्ति विरोधः । धोर्विहितास्तव्यादयः पर्यायेण भवन्ति ॥

## नब्बाध्य आसम् ॥ ९० ॥

नपा निर्दिष्टो बाध्यो भवति आ साधिकारपरिसमाप्तेरित्येषोऽधिकारो वेदितव्यः । लोके संज्ञासमावेशो दृष्ट इन्द्रः शक्रः पुरन्दर इति । शास्त्रेऽपि त्यः कृद्य इति शेषोऽगएवेत्यवधारणाज्ज्ञापयति इहापि संज्ञासमावेशः स्यादिति यत्नः क्रियते । यत्र नपः समावेश इष्यते तत्र चशब्दोपादानमस्ति । यथा यश्चैकाश्रय इति । वक्ष्यति प्रो घि च । विदि । भिदि । स्फे रुः । शिक्षि । भिक्षि । नपा निर्दिष्टा घिसंज्ञा रुसंज्ञया बाध्यते । समावेशे हि अततक्षदित्यत्र धौ कचयनके सन्वदिति कच्परे धौ परतः

सन्वद्भावः प्रसज्येत । अविव्रजदित्यत्र घेर्दीत्वं स्यात् । नविति किम् । बाभ्रव्यः । पुल्लिङ्गा गुसंज्ञा पुल्लिङ्गया भसंज्ञया बाध्यते ॥

## य्वौ स्त्र्याख्यौ मुः ॥ ९१ ॥

स्त्रियमाचक्षाते इति स्त्र्याख्यौ । प्रे इति नियमादप्राप्तः सुपीति योगविभागात्कः । यावीकारोकारौ स्त्र्याख्यौ तदन्तं शब्दरूपं मुसंज्ञं भवति । सुम्मिङन्तं पदमित्यत्रान्तग्रहणमन्यत्र सञ्ज्ञाविधौ तदन्तविधिप्रतिषेधार्थमिह नाश्रीयते आमीयुवोरिति नियमारम्भात् । य्वाविति यणादेशादूकारो द्विमात्रस्तत्साहचर्यादीकारो द्विमात्रः । ईकारः । कुमारी । गौरी । लक्ष्मीः । ऊकारः । ब्रह्मबन्धूः । वामोरूः । यवागूः । अयमोरित्यादि मुसंज्ञाकार्यम् । य्वाविति किम् । मात्रे । दुहित्रे । स्त्र्याख्याविति किम् । हे ग्रामणीः । हे खलपूः । नैमौ स्त्रियमेवाचक्षाते । आख्याग्रहणं किम् । शब्दार्थे स्त्रीत्वे यथा स्यात् पदान्तरगम्ये मा भूत् । ग्रामण्ये स्त्रियै । खलप्वे स्त्रियै । उभयलिङ्गानामिष्वसनिप्रभृतीनां शब्दार्थ एव स्त्रीत्वम् । इष्वै असन्यै स्त्रियै । तथा गुणशब्दानां पट्व्यै स्त्रियै । इदञ्चाख्याग्रहणस्य प्रयोजनम् । कुमारीमिवात्मानमाचरति आचारे सर्वमृद्भ्यः क्विबिति क्विप् । कुमार्यै देवदत्ताय । लक्ष्मीमतिक्रान्ताय अतिलक्ष्म्यै । प्रागेव मुसंज्ञा कृत्वा तदन्तान्मुकार्यं भवति । इह अतिकुमारये देवदत्ताय । प्रादेशे कृते आमनलविधाविति प्रतिषेधान्मुकार्यं न भवति ।

## स्त्री ॥ ९२ ॥

स्त्रीशब्दश्च मुसंज्ञो भवति । आमीयुवोः वा ङिति प्रश्चेति नियमविकल्पयोः सामान्येन पुरस्तादयमपवादः । हे स्त्रि । स्त्रीणाम् । स्त्रियै । प्रादेशनुडागमाः सिद्धाः ॥

### आमीयुवोः ॥ ९३ ॥

आमि परत इयुवोः स्थानिनौ य्वौ स्त्र्याख्यौ मुसञ्ज्ञौ भवतः । सिद्धे सत्यारम्भो नियमार्थ आम्येव मुसंज्ञा नान्यत्र । हे श्रीः । हे भ्रूः । इयुवोरिति किम् । प्रध्यै । वर्षाभ्वै ॥

### वा ॥ ९४ ॥

वा मुसंज्ञा भवतीत्यामीयुवोः । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् ॥

### ङिति प्रश्च ॥ ९५ ॥

य्वोर्यः प्रः स्त्र्याख्य इयुवोश्च स्थानिनौ यौ य्वौ तेषां ङिति वा मुसंज्ञा भवति । कृत्यै । कृतये । धेन्वै । धेनवे । पक्षे स्वऽसखीति सुसंज्ञा । सोर्ङित्येप । इयुवौ । श्रियै । श्रिये । भ्रुवै । भ्रुवे । स्त्र्याख्यावित्येव । अग्नये । अतिकृतये । अतिश्रिये । अतिभ्रुवे देवदत्ताय । य्वौ य्वोः प्र इति किम् । मात्रे । दुहित्रे ।

### स्वसखि ॥ ९६ ॥

प्रो य्वोरिति वर्तते । य्वोः प्रस्सुसंज्ञो भवति सखिशब्दं वर्जयित्वा । असखीति प्रतिषेधात् सिद्धौ भेति निर्देश चास्त्र्याख्यस्य स्त्र्याख्यस्य च प्रस्येह ग्रहणम् । अग्नये । वायवे । स्त्र्याख्यश्च यो मुसंज्ञो न भवति तस्य ग्रहणम् । कृतये । धेनवे । मुसंज्ञाविषये नञ्बाध्य आस-

मिति सुसंज्ञा बाध्यते । कृत्याम् । धेन्वाम् । असखीति किम् । सख्युः । सख्यौ । असखीति पर्युदासोऽयम् । तेन शोभनः सखा सुसखा । अतिसखा । अतिसखेरागच्छति अतिसखेः । स्वसखिशब्दादन्यत्वमस्तीति सुसंज्ञा । मृद्ग्रहणेन तदन्तविधिरिति वा । य्वोः प्र इत्येव । पित्रे । मात्रे । सुप्रदेशाः सोर्ङितीत्येवमादयः ॥

पतिः से ॥ ९७ ॥

पतिशब्दः स एव सुसंज्ञो भवति । प्रजापतिना । प्रजापतये । पतिरेव स इति कस्मान्न नियमः । एवं हि द्वन्द्वे स्था इति पूर्वनिपातवचनमनर्थकं स्यात् द्वन्द्वे पतिरिति ब्रूयात् । नह्यन्यस्य से सुसंज्ञासम्भवः । अपि चानेकप्राप्तावेकस्य नियम इतिवचनमनर्थकं स्यात् । पटुमृदुगुप्तपटव इति । स इति किम् । पत्या । पत्ये ॥

प्रो धि च ॥ ९८ ॥

प्र इति मात्रिकस्य संज्ञा । प्रो धिसञ्ज्ञो भवति । भेत्ता । बोढा । धीति नपा निर्देशः किमर्थः । पुल्लिङ्गया सुसञ्ज्ञया बाधा यथा स्यात् । प्रयोजनमग्रे वक्ष्यते । चशब्दः सञ्ज्ञान्तरसमावेशार्थः । धि च भवति यच्चान्यत्प्राप्नोति तच्च भवति । इहाप्रविनश्य गत इति सुसंज्ञासमावेशः । विश्च ना च विनरौ तावाचष्टे णिच । णाविष्ठवन्मृद इति इष्ठवद्भावः । टिखम् । प्रशब्देन योगः । य्वो य्यादेशे णिखे प्राप्ते धिसंज्ञायां सत्यां य्वे धिपूर्वादिति णेरयादेशः सिद्धः । सुसंज्ञायाश्च पूर्वनिपातः । अन्यथेकारोकाराभ्यामन्यत्र सावकाशा धिसंज्ञा इकारोकारविषयत्वादनवकाशया सुसंज्ञया बाध्येत ॥

स्फे रुः ॥ ९९ ॥

प इति वर्तते । स्फसञ्ज्ञे परतः पो रुसञ्ज्ञो भवति । कुण्डा । हुण्डा । स्पर्द्धा । नुम्विधावुपदेशाश्रयणात्प्रागेव नुम् । सरोरुहस्त इति अस्त्यः । अजाद्यतष्टाप् ॥

दोः ॥ १०० ॥

दीरिति द्विमात्रस्य सञ्ज्ञा । दीश्च रुसञ्ज्ञो भवति । ईहाञ्चक्रे । लिटि परतः सरोरिजादेरित्याम् । शेषमाम्वत्त-त्कृञ इत्यत्रोक्तम् । रुरिति पुल्लिङ्गनिर्देशः किमर्थः । ईकारो-कारविषयया मुसञ्ज्ञया बाधा मा भूत् । द्वयोः समावेशे हे परमवाणीकइत्यत्र असमेरिति मुसञ्ज्ञाश्रयः कप् । रुसञ्ज्ञाश्रयोऽनृतानन्तस्याप्येकैकस्य रेरिति पविधिश्च सिद्धः ॥

यस्त्ये तदादि गुः ॥ १०१ ॥

यो हि यस्मात्त्यः स तस्येत्युच्यते यस्य धोर्मृदो वा त्यस्तस्मिन् परतस्तदादिशब्दरूपं गुसञ्ज्ञं भवति । केव-लायाः प्रकृतेर्व्यपदेशिवद्भावात्तदादित्वम् । देग्धि । जुहोति । करिष्यति । कुण्डानि । गुकार्यमेबडागमश्च । जसि नोङ इति दीत्वञ्च । यदिति सञ्ज्ञिनिर्देशार्थम् । अन्यथा तदादीति न लभ्येत तथाच त्ये सति पूर्वमात्रस्य गुसञ्ज्ञा स्यात् । तत्र को दोषः । इह न्यविशत प्राकरोदिति सगेरडागमः स्यात् यस्य इति यच्छब्देन त्यस्य विशेषणं किम् । अस्यापत्यमिः । देवदत्त इं पश्येत्यत्र आदरैप् स्यात् । अखस्य स्थानिवद्भाव व्यवधानमिति चेत् योऽनादिष्टादचः पूर्वस्तं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्वो निष्प-न्नस्य पदस्य पदान्तरेणाभिसम्बन्धात् । यस्य इति डा निर्देशः

किमर्थः । यत्र त्यस्तदादि गुरित्युच्यमाने यस्य त्यः सम्भवति तस्यान्यस्मिन्नपि शब्दे गुसंज्ञा स्यात् । तथा च स्त्रियै इदं स्त्र्यर्थं भुवे इदं भ्वर्थम् । इयुवौ प्रसज्येयाताम् । तदादिवचनं किमर्थम् । यत्रानेकस्त्यः सम्भवति तत्र तदादेर्गुसंज्ञा यथा स्यात् । करिष्यति । कुण्डानि । स्यान्तस्य सनुमकस्य च गुसंज्ञायां गम्यते दी घेकाविति दीत्वं सिद्धम् । गुरिति पुल्लिङ्गनिर्देशो भपदसंज्ञासमावेशार्थः । इह बाभ्रव्य इति गुसंज्ञाश्रय आदैरैप् । भसंज्ञाश्रयः कद्रोरेऽस्वयम्भुव इति ओकारः । इह च यजुःपण्यमस्य याजुष्कः । गुसंज्ञाश्रय आदैरैप् स्वादावघे इति पदत्वे पदसंज्ञाश्रयानि रित्वषत्वानि सिद्धानि । नपुंसकलिङ्गा हि गुसंज्ञा होतुरपत्यं हौत्र इत्यत्र सावकाशा सती पदसंज्ञया बाध्येत ।

## सुप्मिङन्तं पदम् ॥ १०२ ॥

नः क्य इति नियमारम्भात् सुबिति प्रत्याहारग्रहणं नेपो बहोः । मिङा साहचर्याद्वा । सुबन्तं मिङन्तं च शब्दरूपं पदसंज्ञं भवति । सूपकारः पचति । पदसंज्ञाश्रयो रित्वादिविधिः । वास्नसादेशविधिश्च भवति । ननु सुप्मिङौ त्यौ त्यग्रहणे यस्मात्स तदादेर्ग्रहणमित्यन्तग्रहणं किमर्थम् । अन्यत्र सञ्ज्ञाविधौ तदन्तविध्यभावज्ञापनार्थम् । तेन दृषत्तीर्णेत्यत्र क्तान्तस्य क्तक्तवतु इत्यनेन तसंज्ञा नास्तीति क्तान्तस्य तो न इत्येष विधिर्दृषद्दकारापेक्षया न भवति । इह च कुमारीगौरितरा तादीभ्रइत्यनेन तरान्तस्य भ्रसंज्ञा नास्तीति भ्ररूपेत्यादिना प्रादेशो न भवति । पदमिति नपा निर्देशो भसंज्ञया बाधा यथा स्यादित्येवमर्थः । अन्यथा राज्ञः राजन्य इत्यत्र भसंज्ञाश्रय-

मनो खं पदसंज्ञाश्रयं नखञ्च स्यात् । पदप्रदेशा पदस्येत्येवमादयः ॥

नः क्ये ॥ १०३ ॥

क्य इति क्यच्क्यङ्क्यषामविशेषग्रहणम् । क्ये परतो नान्तस्य पदसंज्ञा भवति । राजानमिच्छति राजीयति । राजेवाचरति राजायते । अचर्म चर्म भवति चर्मायते । पदत्वे सति नखं सिद्धम् । नखं सुविधिकृत्तुकीति नियमादन्यत्र सिद्धमिति क्यची तीत्वं दीरकृद्व इति दीत्वञ्च भवति। त्यखे त्याश्रयमिति पदत्वे सिद्धे नियमार्थमिदम् । नान्तमेव क्ये पदसंज्ञं भवति नान्यत् । वाच्यति । शुच्यति । कुत्वं न भवति । नान्तं क्य एवेति विपरीतो नियमो नाशङ्कनीयः । अकाविति कौ नखप्रतिषेधात् ज्ञायते पदत्वे हि नखप्राप्तिः ॥

सिति ॥ १०४ ॥

सिति त्ये परतः पूर्वं पदसंज्ञं भवति । भवतोऽयं भवदीयः । भवतष्ठसछसाविति छस् । यचिभइति पदसंज्ञायां बाधितायां पुनरारम्भः । एवमूर्णा अस्यास्तीति ऊर्णायुः । ऊर्णाहंशुभंभ्यश्च युसिति युस । यस्य ङ्याश्चेति खं न भवति । अहंय्युः । अहंयुः । शुभंय्युः । शुभंयुः । वा पदान्तस्येति परस्वविकल्पः ॥

स्वादावधे ॥ १०५ ॥

अध इति प्रतिषेधाद्वाया एकस्य सोर्ग्रहणम । स्वादौ धवर्जिते परतः पूर्वं पदसंज्ञं भवति। राजभ्याम् । राजभिः । राजत्वम । राजता । अध इति किम् । राजानौ राजानः ।

यद्येवं राजेत्यत्रापि प्रतिषेधः स्यात् । नैवं शङ्क्यम् । अघ इति पर्युदासोऽयं घादन्यत्र पदसंज्ञा विधीयते । घे तु पूर्वेण भविष्यति । यद्येवं सुवाचौ सुवाच इत्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वं प्राप्नोति । अस्तु तर्हि प्रसज्यप्रतिषेधः । राजेत्यत्र अकाविति प्रतिषेधात् ज्ञायते सौ पदसंज्ञा भवति । एवमप्यघ इति अनन्तरस्य स्वादौ विधेः प्रतिषेधोऽयं सुवाचौ सुवाच इत्यत्र पूर्वेण प्राप्तिरस्त्येव कर्तव्योऽत्र यत्न उत्तरपदत्वे चापदादिविधौ त्यलक्षणं न भवतीति ॥

## यचि भः ॥ १०६ ॥

स्वादावघ इति वर्तते । यकारादावजादौ च स्वादौ घवर्जिते पूर्वं भसंज्ञं भवति । गार्ग्यः । वात्स्यः । दाक्षिः । प्लाक्षिः । पूर्वेण पदसंज्ञा प्राप्ता भत्वाद्यस्य ङ्याश्चेत्यखम् । नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम ॥*॥ नभसा तुल्यं वर्तते इति नभस्वत् । अङ्गिरस्वत् । मनुष्वत् । वृष्णोवस्वश्वयोर्भसंज्ञेति केचित् । वृष्णो वसुः वृषण्वसुः । वृषणश्वः ।

## मत्वर्थे स्तौ ॥ १०७ ॥

मत्वर्थे त्ये परतः सकारान्तं तकारान्तञ्च भसंज्ञं भवति । तपस्वी । यशस्वी । विनस्मायामेधास्रज इति विन् । मतोर्विशेषणत्वेपि मत्वर्थग्रहणेन ग्रहणम् । यथा देवदत्तशालापण्डिता आनीयन्तामित्युक्ते देवदत्तो विशेषणभूतोऽपि यदि पण्डितः सोऽपि आनीयते । भास्वान् । विद्युत्वान् । मरुत्वान् । स्ताविति किम् । राजवद् गृहम् ॥

## कारके ॥ १०८ ॥

कारक इत्ययमधिकारः । यदित उर्ध्वमनुक्रमिष्यामः कारक इत्येवं तद्वेदितव्यम् । कारकं निर्वर्तकं हेतुर्वा । कस्य ? क्रियायाः । का च क्रिया । ध्वर्थः । कारक इति निर्द्धारणलक्षणेयमपि । जात्यपेक्षैकवचनम् । सौत्रो वा निर्देशः । कारकेषु यद्ध्रुवं तदपादानं यः कर्मणोपेयोऽर्थः स सम्प्रदानमित्यादि योज्यम् । वक्ष्यति ध्यपाये ध्रुवमपादानम् । ग्रामादागच्छति । स्वर्गादवरोहति । अपायक्रिययोर्ग्रामोऽपि निर्वर्त्तकः । देवदत्तोऽपि ध्रुवत्वाद् ग्रामोऽपादानम् । कारक इति किम् । वृक्षस्य पर्णं पतति । कुड्यस्य पिण्डः पतितः । अपायक्रियाया निर्वर्तकत्वेन वृक्षः कुड्यञ्च न विवक्षितम् । अकथितञ्च । आपादानादिभिरकथित च कारकं कर्मसंज्ञं भवति । आचार्यं धर्मं पृच्छति । कारक इति किम् । आचार्यस्य शिष्यं धर्मं पृच्छति । आचार्यस्य शिष्यविशेषणत्वादकारकत्वम् । यदा कारकञ्चारकञ्च सर्वमकथितमप्रतिपादितमित्यर्थस्तदेदं प्रत्युदाहरणम् । असङ्कीर्तितमिति व्याख्याने कारकमेव लभ्यते । प्रदेशेषु कारकाभिधानेऽपादानादीनां ग्रहणम् ॥

## ध्यपाये ध्रुवमपादानम् ॥ १०९ ॥

धीर्बुद्धिः । प्राप्तिपूर्वको विश्लेषोऽपायः । धिया कृतो अपायो ध्यपायः । धीप्राप्तिपूर्वको विभाग इत्यर्थः । धीग्रहणे ह्यसति कायप्राप्तिपूर्वक एवापायः प्रतीयेत धीग्रहणेन सर्वः प्रतीयते । ध्रुवमविचलं अवधिभूतं वा । ध्यपाये साध्ये यद् ध्रुवं तदपादानसंज्ञं भवति । ग्रामादागच्छति । ग्रामो देवदत्तं नानुपतति इति ध्रुवः । अथवा अपायात्प्रागपि ग्रामः । अपायेऽपि ग्राम एव । देवदत्त-

स्त्वपाये ग्रामग्रहणेन न गृह्यन इति ग्रामो ध्रुवः । एवम् श्वाद्धावतः पतितः । गच्छतः सार्थादवहीनः । देवदत्तो जिनदत्तादागतः । मेषौ परस्परतोऽपसर्पतः । शृङ्गाच्छरो जायते । गङ्गा हिमवतः प्रभवति । इह ग्रामान्नागच्छतीति पूर्वमपादानसंज्ञा पश्चात्प्रतिषेधः । धियाऽपायस्य विशेषणं किम् । अधर्माज्जुगुप्सते । प्रेक्षापूर्वकारी दुःखहेतुरधर्म इति बुध्या संप्राप्य ततो निवर्तत इति अपादनत्वम् । एवमधर्माद्विरमति प्रमाद्यति । व्याघ्राद्बिभेति । चौरेभ्यस्त्रायते । अध्ययनात् पराजयते । न शक्नोतीत्यर्थः । यवेभ्यो गां वारयति । अकार्यात्सुतं वारयति । कूपादन्धं वारयति।उपाध्यायादन्तर्धत्ते। भयं सञ्चिन्त्य निवर्तत इत्यर्थः । विवक्षातः कारकाणि भवन्ति । उपाध्यायादधीते । उपाध्यायाच्छृणोति । अविवक्षायां नटस्य शृणोति । ग्रन्थिकस्य शृणोति । ध्रुवमिति किम् । अरण्ये बिभेति । नात्र भयावधिभूतमरण्यं किं तर्हि चौराः । नपा निर्देशः किमर्थः । वक्ष्यमाणाभिः संज्ञाभिर्बाधा यथा स्यात् । धनुषा विध्यति । पुलिङ्गया करणसंज्ञया बाधात् । कांस्यपात्र्यां भुङ्क्ते । पुलिङ्गाधिकरणसंज्ञैव । धनुर्विध्यतीति कर्तृसंज्ञा । इह गां दोग्धि पय इति परत्वात्कर्मसंज्ञा । अपादानप्रदेशाः कापादाने इत्येवमादयः ॥

## कर्मणोपेयः सम्प्रदानम् ॥ ११० ॥

उपपूर्वादिणो घे कृते उपेय इति भवति । कर्मणा य उपेयोऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । उपाध्यायाय गां ददाति । देवाय बलिं प्रयच्छति । कर्मणेति किम् । गवा उपाध्यायमुपैति । सम्प्रदानमित्यन्वर्थसंज्ञाकरणात् ददा-

त्यर्थानां धूनां द्रव्येण कर्मणा उपेयेोऽर्थः सम्प्रदानमिति । तेनेह न भवति । देवदत्तस्य वस्त्रं दर्शयति । मित्रस्य कार्यं कथयति । अजां नयति ग्रामम् । सम्यक् प्रदानं सम्प्रदानमिति चाश्रितम । तेनेह न भवति । घ्नतः पृष्ठं ददाति । रजकस्य वस्त्रं ददाति । राज्ञो दण्डं ददाति । इह नहिं कथं श्राद्धाय निगृण्हते । युद्धाय सन्नह्यति । तिष्ठते ब्राह्मणो छात्रेभ्यः । तादर्थ्यात् सिद्धम् । अथवा कथंचिद्विवक्षितभेदाभिः सन्दर्शनप्रार्थनाध्यवसायक्रियाभिः क्रियापि व्याप्या सती कर्मतयोपेयत्वात् सम्प्रदानत्वम् । तेनेहापि भवति । रोचते देवदत्ताय मोदकः । स्वदते देवदत्ताय मोदकः । पुष्पेभ्यः स्पृहयति । मित्राय कथयति । मित्राय क्रुध्यति । मित्राय द्रुह्यति । मित्राय ईर्ष्यति । मित्रायासूयति । मित्राय कुप्यति । कोपादन्यत्र क्रुधादीनां प्रार्थनादिभिः क्रियाविशेषैर्भेदो न विवक्षितः इति क्रियायाः कर्मव्यपदेशो नास्ति । भार्यामीर्ष्यति । औषधं द्वेष्टि । शप उपलम्भनेऽर्थे भेदः । देवदत्ताय शपते । न्हुङ आत्मनि न्हवे भेदः । मित्राय न्हुते । अन्यत्र मित्रं न्हुते । राधीक्ष्योर्दैवालोचने । पुत्राय राध्यति । पुत्राय ईक्षते । अन्यत्र पुत्रस्य राध्यति । पुत्रमीक्षते । यत्र च प्रत्याङ्पूर्वः श्रृणोतिरभ्युपगमे वर्तते । देवदत्ताय प्रतिश्रृणोति । अनुप्रतिपूर्वश्च गृणातिर्यदि कथयितुः प्रोत्साहने वर्तते । आचार्याय अनुगृणाति । आचार्याय प्रतिगृणाति । इह भेदाभेदविवक्षा । देवदत्ताय श्लाघते । देवाय प्रणमति । देवं प्रणमति । गत्यर्थानां चेष्टायामसम्प्राप्तावुभे । यथा ग्रामाय गच्छति । ग्रामं गच्छति । ग्रामाय व्रजति । ग्रामं व्रजति चेष्टायामिति

किम् । मनसा पाटलिपुत्रं गच्छति । असम्प्राप्ताविति किम् । पन्थानं गच्छति । भार्यां गच्छति । अन्यत्राभेदविवक्षैव । कटं करोति । ओदनं पचति शास्त्रं पठति । सख्योश्च क्रुधिद्रुह्योः । मित्रमभिक्रुध्यति । मित्रमभिद्रुह्यति । सिद्धिरनेकान्तादित्यतो भेदाभेदोभयविवक्षा प्रत्येतव्या । परेषामपि प्रतिपत्तिगौरवं तुल्यम् । क्व क्रियाया व्याप्यत्वमिष्टं क्व च नेति दुर्बोधम् ॥

धारेरुत्तमर्णः ॥ १११ ॥

ऋणे उत्तम उत्तमर्णः । निपातनात् सविधिः । धारयतेरुत्तमर्णो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय गां धारयति । उत्तमर्ण इति किम् । देवदत्ताय शतं धारयति दरिद्रः ॥

परिक्रयणम् ॥ ११२ ॥

परिक्रीयतेऽनेनेति परिक्रयणं तत्कारकं सम्प्रदानसंज्ञं भवति । शताय परिक्रीतः । सहस्राय परिक्रीतः । साधकतमत्वात् करणसंज्ञा प्राप्ता ॥

साधकतमं करणम् ॥ ११३ ॥

क्रियायामतिशयेन साधकं साधकतमं तत्कारकं करणसंज्ञं भवति ।

दानेन भोगं दयया सुरूपं
ध्यानेन मोक्षं तपसेष्टसिद्धिम् ।
सत्येन वाक्यं प्रशमेन पूजां
वृत्तेन जन्माग्र्यमुपैति मर्त्यः ॥

तमग्रहणं किमर्थम् । यथा रूपप्रस्तावे अभिरूपाय कन्या देयेत्युक्ते ऽभिरूपतमायेति गम्यते । एवमिहापि कारकाधिकारादकारके संज्ञावृत्तिर्नास्तीति साधकं कर-